

श्री महर्षिव्यासप्रणीतम् ।

# महाभारतम् ।

## ८ कर्णपर्व ।

॥ श्रीगणेशाय नमः ॥ ॥ श्रीवेदव्यासाय नमः ॥

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं चैव ततो जयमुदीरयेत ॥ १ ॥

वैशम्पायन उवाच-ततो द्रोणे हते राजन्दुर्योधनमुखा नृपाः ।
भृशमुद्विग्नमनसो द्रोणपुत्रमुपागमन् ॥ १ ॥
ते द्रोणमनुशोचन्तः कश्मलाभिहतौजसः ।
पर्युपासन्त शोकार्तास्ततः शारद्वतीसुतम् ॥ २ ॥
ते मुहूर्तं समाश्वस्य हेतुभिः शास्त्रसंमितैः ।
रात्र्यागमे महीपालाः स्वानि वेश्मानि भेजिरे ॥ ३ ॥
ते वेश्मस्वपि कौरव्य पृथ्वीशा नाप्नुवन्सुखम् ।

कर्णपर्वमें पहला अध्याय ।

नारायण, नरश्रेष्ठ नर, और सरस्वती देवीको नमस्कार करके जयका प्रारम्भ करे ॥ ( १ )

श्रीवैशम्पायन मुनि बोले, हे राजन् जनमेजय ! जब द्रोणाचार्य मारे गये, तब दुर्योधन आदि राजा लोग अत्यन्त दुःखित मन होके द्रोणाचार्यके पुत्रके पास गये ॥ वे सब राजा लोग जिनका बल शोकसे नष्ट होगया था, द्रोणाचार्यको सोचते हुए, अश्वत्थामाके पास गये ॥ वे राजा लोग दो घडी तक शास्त्रकी रीतिसे अश्वत्थामाको समझाते रहे और सन्ध्याके समय सब अपने अपने डेरोंको चले गये ॥ (१-३)

हे कुरु नन्दन ! उन महीपति लोगोंको अपने डेरोंमें भी सुख प्राप्त न हुआ, वह लोग दुःख और शोकसे युक्त

चिन्तयन्तः क्षयं तीव्रं दुःखशोकसमन्विताः ॥ ४ ॥
विशेषतः सूतपुत्रो राजा चैव सुयोधनः ।
दुःशासनश्च शकुनिः सौबलश्च महाबलः ॥ ५ ॥
उषितास्ते निशां तां तु दुर्योधननिवेशने ।
चिन्तयन्तः परिक्लेशान्पाण्डवानां महात्मनाम् ॥ ६ ॥
यत्तद्द्यूते परिक्लिष्टा कृष्णा चानायिता सभाम् ।
तत्स्मरन्तोऽनुशोचन्तो भृशमुद्विग्नचेतसः ॥ ७ ॥
तथा तु सञ्चिन्तयतां तान्क्लेशान्द्यूतकारितान् ।
दुःखेन क्षणदा राजञ्जगामाब्दशतोपमा ॥ ८ ॥
ततः प्रभाते विमले स्थिता दिष्टस्य शासने ।
चक्रुरावश्यकं सर्वे विधिदृष्टेन कर्मणा ॥ ९ ॥
ते कृत्वावश्यकार्याणि समाश्वस्य च भारत ।
योगमाज्ञापयामासुर्युद्धाय च विनिर्ययुः ॥ १० ॥
कर्णं सेनापतिं कृत्वा कृतकौतुकमङ्गलाः ।
पूजयित्वा द्विजश्रेष्ठान्दधिपात्रघृताक्षतैः ॥ ११ ॥
गोभिरश्वैश्च निष्कैश्च वासोभिश्च महाधनैः ।
वन्द्यमाना जयाशीर्भिः सूतमागधबन्दिभिः ॥ १२ ॥

होकर मरे हुए वीरोंकी चिन्ता करने लगे ॥ विशेष करके राजा दुर्योधन, कर्ण, दुःशासन और महाबल सुबलपुत्र उस दिन रात्रि भर दुर्योधनके डेरेमें बैठे हुए सोचते रहे और पाण्डवोंके पुराने दुःखोंका स्मरण करते रहे ॥ जैसे जुएमें पाण्डवोंको दुःख दिया था, जैसे द्रौपदीको सभामें लाये थे उसको स्मरण करके वे बहुत घबडाते थे ॥ (४–७)

हे राजन् जनमेजय ! इस प्रकारसे उनके द्यूतसे उत्पन्न हुए क्लेशोंको सोच करते वह रात्रि ऐसे कटी जैसे सौ वर्ष कटे ॥ इसके पश्चात् विमल भोर होने पर दैवकी आज्ञामें रहनेवाले उन राजा लोगोंने शास्त्रकी रीतिसे प्रातःकाल के करने योग्य कर्मोंको किया ॥ हे भारत! उन राजा लोगोंने नित्य कर्मोंको करके सवारियोंको जोडनेकी आज्ञा दी और युद्ध करनेके वास्ते चले ॥ (८–१०)

कर्णको सेनापति बना कर, आनन्दके साथ मङ्गलाचरण करके, और दही के पात्र घी और अक्षतोंसे उत्तम ब्राह्मणोंकी पूजा करके युद्ध करनेको चले ॥ गाय, घोडे, सुवर्ण इत्यादि महाधनको

तथैव पाण्डवा राजन्कृतपूर्वाह्लिकाक्रियाः ।
शिविराान्निर्ययुस्तूर्णं युद्धाय कृतनिश्चयाः ॥ १३ ॥
ततः प्रववृते युद्धं तुमुलं लोमहर्षणम् ।
कुरूणां पाण्डवानां च परस्परजयैषिणाम् ॥ १४ ॥
तयोर्द्वौ दिवसौ युद्धं कुरुपाण्डवसेनयोः ।
कर्णे सेनापतौ राजन्बभूवाद्भुतदर्शनम् ॥ १५ ॥
ततः शत्रुक्षयं कृत्वा सुमहान्तं रणे वृषः ।
पश्यतां धार्त्तराष्ट्राणां फाल्गुनेन निपातितः ॥ १६ ॥
ततस्तु सञ्जयः सर्वं गत्वा नागपुरं द्रुतम् ।
आचष्ट धृतराष्ट्राय यद्वृत्तं कुरुजाङ्गले ॥ १७ ॥
जनमेजय उवाच–आपगेयं हतं श्रुत्वा द्रोणं चापि महारथम् ।
आजगाम परामार्तिं वृद्धो राजाम्बिकासुतः ॥ १८ ॥
स श्रुत्वा निहतं कर्णं दुर्योधनहितैषिणम् ।
कथं द्विजवर प्राणानधारयत दुःखितः ॥ १९ ॥
यस्मिञ्जयाशां पुत्राणां सममन्यत पार्थिवः ।

पाकर सूत, मागध और भाट प्रसन्न हुए, उनसे जय जयकार और आशीर्वाद सुनते हुए दुर्योधन आदि राजा लोग युद्ध करनेको चले ॥ हे राजन् ! ऐसे ही पाण्डव लोग प्रातःकालकी नित्य क्रिया करके शीघ्रताके साथ युद्ध करनेका निश्चय करके अपने डेरोंसे चले॥ ११-१३

इसके पश्चात् एक दूसरेको मारनेकी इच्छा रखनेवाले कौरव और पाण्डवोंका ऐसा भयानक युद्ध हुआ। । जिसको देख कर रोएं खडे होजायं ॥ हे राजन् ! कर्ण के सेनापति रहते कौरव और पाण्डवोंकी सेनाका युद्ध दो दिन तक ऐसा हुआ जिसको देखकर आश्चर्य होता था॥ इसके पश्चात् अर्जुनने शत्रुकी महासेनाको नाश करके धृतराष्ट्रके पुत्रोंके देखते देखते कर्णको मार डाला ॥ इसके अनन्तर सञ्जयने शीघ्रताके साथ हास्तिनापुरमें जाके धृतराष्ट्रसे कुरुक्षेत्र का सब वृत्तान्त वर्णन करना आरम्भ किया ॥ ( १४—१७ )

राजा जनमेजय बोले, हे मुनिवर ! जो अम्बिकानन्दन वृद्ध राजा धृतराष्ट्र गङ्गापुत्र भीष्मको और महारथी द्रोणाचार्यको मरा हुआ सुनके महा दुःखको प्राप्त हुए थे ॥ हे ब्राह्मणश्रेष्ठ ! वही राजा धृतराष्ट्र दुर्योधनके हितकारी कर्ण की मृत्युको सुनके किस प्रकारसे जीते

तस्मिन्हते स कौरव्यः कथं प्राणानधारयत् ॥ २० ॥
दुर्मरं तदहं मन्ये नृणां कृच्छ्रेऽपि वर्त्तताम् ।
यत्र कर्णं हतं श्रुत्वा नात्यजज्जीवितं नृपः ॥ २१ ॥
तथा शान्तनवं वृद्धं ब्रह्मन्बाह्लीकमेव च ।
द्रोणं च सोमदत्तं च भूरिश्रवसमेव च ॥ २२ ॥
तथैव चाऽन्यान्सुहृदः पुत्रान्पौत्रांश्च पातितान् ।
श्रुत्वा यन्नाजहात्प्राणांस्तन्मन्ये दुष्करं द्विज ॥ २३ ॥
एतन्मे सर्वमाचक्ष्व विस्तरेण महामुने ।
न हि तृप्यामि पूर्वेषां शृण्वानश्चरितं महत् ॥ २४ ॥ [२४]

इति श्रीमहाभारते शतसाहस्त्र्यां संहितायां वैयासिक्यां कर्णपर्वणि जनमेजयवाक्य नाम प्रथमोऽध्यायः ॥ १ ॥

वैशम्पायन उवाच-हते कर्णे महाराज निशि गावल्गणिस्तदा ।
दीनो ययौ नागपुरमश्वैर्वातसमैर्जवे ॥ १ ॥
स हास्तिनपुरं गत्वा भृशमुद्विग्नचेतनः ।
जगाम धृतराष्ट्रस्य क्षयं प्रक्षीणबान्धवम् ॥ २ ॥

रहे ? कुरुनन्दन पृथ्वीनाथ धृतराष्ट्र जिसके द्वारा अपने पुत्रोंके विजयकी आशा लगाये थे. उस कर्णके मर जाने पर उन्होंने अपने प्राणको कैसे रक्खा? कर्णकी मृत्यु को सुनके जो राजा धृतराष्ट्र जीते रहे इससे मैं जानता हूं कि मनुष्यको कैसाही दुःख पडे किन्तु वह अपनी इच्छासे नहीं मर सकता है ॥ ( १८—२१ )

हे वैशम्पायनमुने! शान्तनुपुत्र भीष्म, बूढे बाह्लिक, द्रोणाचार्य, सोमदत्त और भूरिश्रवा ऐसेही और और मित्र तथा पुत्र और पौत्रोंको मरा हुआ सुनकर जो धृतराष्ट्रने अपने प्राणको त्याग नहीं किया इसे मै बहुत ही कठिन काम समझता हूं॥ हे महामुनि वैशम्पायन! इस सब कथाको आप विस्तार पूर्वक कहिये मैं अपने पुरुखोंके चरित्रको सुनता हुआ तृप्त नहीं होता हूं॥ (२२–२४) [२४]

कर्णपर्वमें पहला अध्याय समाप्त।

कर्णपर्वमें दूसरा अध्याय।

श्रीवैशम्पायन मुनि बोले, हे जनमेजय! कर्णके मारे जानेपर गावलगणके पुत्र सञ्जय बहुत दीन होकर वायुके समान चलनेवाले घोडोंके रथपर बैठकर रात्रिमें हस्तिनापुरको चले॥ बहुत घबडाये हुए सञ्जय हस्तिनापुरमें पहुंचके बन्धु बान्धवहीन धृतराष्ट्रके राजभवनमें

स तमुद्वीक्ष्य राजानं कश्मलाभिहतौजसम् ।
ववन्दे प्राञ्जलिर्भूत्वा मूर्ध्ना पादौ नृपस्य ह ॥ ३ ॥
सम्पूज्य च यथान्यायं धृतराष्ट्रं महीपतिम् ।
हा कष्टमिति चोक्त्वा स ततो वचनमाददे ॥ ४ ॥
सञ्जयोऽहं क्षितिपते कच्चिदास्ते सुखं भवान् ।
स्वदोषैरापदं प्राप्य कच्चिन्नाद्य विमुह्यति ॥ ५ ॥
हितान्युक्तानि विदुरद्रोणगाङ्गेयकेशवैः ।
अगृहीतान्यनुस्मृत्य कच्चिन्न कुरुषे व्यथाम् ॥ ६ ॥
रामनारदकण्वाद्यैर्हितमुक्तं सभातले ।
न गृहीतमनुस्मृत्य कच्चिन्न कुरुषे व्यथाम् ॥ ७ ॥
सुहृदस्त्वद्धिते युक्तान्भीष्मद्रोणमुखान्परैः ।
निहतान्युधि संस्मृत्य कच्चिन्न कुरुषे व्यथाम् ॥ ८ ॥
तमेवंवादिनं राजा सूतपुत्रं कृताञ्जलिम् ।
सुदीर्घमथ निःश्वस्य दुःखार्त इदमब्रवीत ॥ ९ ॥
धृतराष्ट्र उवाच–आपगेये हते शूरे दिव्यास्त्रवति सञ्जय ।

गये ॥ सञ्जयने राजाको दुःखसे मलिन देखके हाथ जोडके और अपने सिरको राजाके चरणोंमें रखके प्रणाम किया ॥ सञ्जयने राजा धृतराष्ट्रका यथायोग्य संमान करके और हा कष्ट! कहके यों बोलना आरम्भ किया ॥ ( १–४ )

हे पृथ्वीनाथ! मै सञ्जय हूं, आप सुखी तो हैं? अपनेही अपराधोंसे आपत्तिमें फंसकर अब आप मोहको प्राप्त तो नहीं होते हैं? विदुर,द्रोण,भीष्म और श्री कृष्णने आपसे हितकी वातें कहीं थीं पर आपने उनकी वातोंको ग्रहण नहीं किया था, अब उनको स्मरण करके आपको दुःख तो नहीं होता है? वलराम, नारद और कण्वआदिओंने जो सभामें हितकारी वचन कहे थे, आपने उनको ग्रहण नहीं किया था, अब उन्हें स्मरण करके आपको दुःख तो नहीं होता है? जो भीष्म और द्रोणाचार्य आदि मित्र आपके हितकारी थे उनको संग्राममें मरा हुआ सुनके आप दुःखी तो नहीं हैं? (५–८)

हे राजन् जनमेजय! राजा धृतराष्ट्र सूतपुत्र सञ्जयको हाथ जोडे ऐसे वचन कहते हुए देखके दुःखसे पीडित होकर दीर्घ निःश्वास छोडके सञ्जयसे यह वचन कहने लगे ॥ (९)

राजा धृतराष्ट्र बोले, हे सञ्जय! दिव्य अस्त्रोंको जाननेवाले शूर गङ्गानन्दन

द्रोणे च परमेष्वासे भृशं मे व्यथितं मनः ॥ १० ॥
यो रथानां सहस्राणि दंशितानां दशैव तु।
अहन्यहनि तेजस्वी निजघ्ने वसुसम्भवः ॥ ११ ॥
तं हतं यज्ञसेनस्य पुत्रेणेह शिखण्डिना।
पाण्डवेयाभिगुप्तेन श्रुत्वा मे व्यथितं मनः ॥ १२ ॥
भार्गवः प्रददौ यस्मै परमास्त्रं महाहवे।
साक्षाद्रामेण यो बाल्ये धनुर्वेद उपाकृतः ॥ १३ ॥
यस्य प्रसादात्कौन्तेया राजपुत्रा महारथाः।
महारथत्वं संप्राप्तास्तथान्ये वसुधाधिपाः ॥ १४ ॥
तं द्रोणं निहतं श्रुत्वा धृष्टद्युम्नेन संयुगे।
सत्यसन्धं महेष्वासं भृशं मे व्यथितं मनः ॥ १५ ॥
ययोर्लोके पुमानस्त्रे न समोऽस्ति चतुर्विधे।
तौ द्रोणभीष्मौ श्रुत्वा तु हतौ मे व्यथितं मनः॥ १६ ॥
त्रैलोक्ये यस्य चाऽस्त्रेषु न पुमान्विद्यते समः।
तं द्रोणं निहतं श्रुत्वा किमकुर्वत मामकाः ॥ १७ ॥
संशप्तकानां च बले पाण्डवेन महात्मना।
धनञ्जयेन विक्रम्य गमिते यमसादनम्।

---

भीष्म और महाधनुर्द्धारी द्रोणाचार्यके मरनेसे मेरा मन बहुत ही दुःखी है ॥ वसुका अवतार तेजस्वी भीष्म शस्त्रादिसे सजे हुए दश हजार रथोंको प्रतिदिन मारते थे; उन भीष्मको द्रुपदके पुत्र शिखण्डीने पाण्डवोंकी सहायतासे मार डाला, इस वृत्तान्तको सुनके मेरा मन बडा दुःखी होता है ॥ (१०—१२)

जिसने बालकपन मेंपरशुरामसे धनुर्वेद सीखा था, जिसे परशुरामने महासंग्राममें दिव्य अस्त्र दिये थे ॥ जिसकी दयासे कुन्तीपुत्र राजकुमार तथा और और राजा लोग महारथी बने थे, उन सत्य प्रतिज्ञा करनेवाले द्रोणाचार्यको युद्धमें धृष्टद्युम्नने मार डाला, यह सुनके मेरा मन बडा दुःखी होता है ॥ जिन दोनोंके समान चार प्रकारके अस्त्रोंको जगत्में कोई भी नहीं जानता, उन द्रोणाचार्य और भीष्मको मरा हुआ सुनके मेरा मन बडा दुःखी होता है ॥ १३-१६

जिन द्रोणाचार्यके समान अस्त्र विद्याका जाननेवाला तीनों लोकोंमें कोई पुरुष नहीं है, उस द्रोणाचार्यकी मृत्युको सुनके हमारे पुत्रोंने क्या किया? सो

नारायणास्त्रे च हते द्रोणपुत्रस्य धीमतः ॥ १८ ॥
विप्रद्रुतेष्वनीकेषु किमकुर्वत मामकाः ।
विप्रद्रुतानहं मन्ये निमग्नाञ्शोकसागरे ॥ १९ ॥
प्लवमानान्हते द्रोणे सन्ननौकानिवार्णवे ।
दुर्योधनस्य कर्णस्य भोजस्य कृतवर्मणः ॥ २० ॥
मद्रराजस्य शल्यस्य द्रौणेश्चैव कृपस्य च ।
मत्पुत्रस्य च शेषस्य तथान्येषां च सञ्जय ॥ २१ ॥
विप्रद्रुतेष्वनीकेषु मुखवर्णोऽभवत्कथम् ।
एतत्सर्वं यथा वृत्तं तथा गावल्गणे मम ॥ २२ ॥
आचक्ष्व पाण्डवेयानां मामकानां च विक्रमम् ।
सञ्जय उवाच— तवापराधाद्यद्वृत्तं कौरवेयेषु मारिष ॥ २३ ॥
तच्छ्रुत्वा मा व्यथां कार्षीर्दिष्टे न व्यथते बुधः ।
यस्माद्भावी भावी वा भवेदर्थो नरं प्रति ।
अप्राप्तौ तस्य वा प्राप्तौ न कश्चिद्व्यथते बुधः ॥ २४ ॥
धृतराष्ट्र उवाच—न व्यथाभ्यधिका काचिद्विद्यते मम सञ्जय ।
दिष्टमेतत्पुरा मन्ये कथयस्व यथेच्छकम् ॥ २५ ॥ [ ४९ ]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां कर्णपर्वणि धृतराष्ट्रसञ्जयसंवादे द्वितीयोऽध्यायः ॥२॥

तुम कहो। पाण्डुपुत्र महात्मा अर्जुनसे युद्ध करके संशप्तकगण जब मारे गये, और बुद्धिमान अश्वत्थामाका नारायण अस्त्र जब विध्वंस होगया, तथा जब सेना इधर उधरको भाग गई तब मेरे पुत्रोंने क्या किया? मुझे जान पडता है कि उस समय मेरे पुत्र शोकसागरमें ऐसे डूबे होंगे जैसे नावके टूट जानेसे समुद्रमें मनुष्य डूबते हैं। उस समय मेरे पुत्र भाग गये होंगे। (१७-२०)

दुर्योधन, कर्ण, कृतवर्मा, मद्रराज शल्य, अश्वत्थामा, कृपाचार्य और मेरे बचे हुए पुत्रोंके मुखका रङ्ग अपनी सेनाको भागती देखके कैसा होगया? हे गावल्गणपुत्र सञ्जय! वह सब वृत्तान्त तथा मेरे पुत्रों और पाण्डवोंके पराक्रमको तुम वर्णन करो। (२०-२३)

सञ्जय बोले, हे महाराज! तुम्हारे अपराधसे जो कुछ हुआ उसको सुनके दुःख मत करो क्योंकि होनेवाले और न होनेवाले कार्य अवश्य ही होते हैं, उसकी प्राप्ति और अप्राप्तिसे पण्डित लोग दुःखी नहीं होते॥ (२३-२४)

धृतराष्ट्र बोले, हे सञ्जय! मुझे अधिक

सञ्जय उवाच— हते द्रोणे महेष्वासे तव पुत्रा महारथाः ।
बभूवुरस्वस्थमुखा विषण्णा गतचेतसः ॥ १ ॥
अवाङ्मुखाः शस्त्रभृतः सर्व एव विशाम्पते ।
अवेक्षमाणाः शोकार्त्ता नाभ्यभाषन्परस्परम् ॥ २ ॥
तान्दृष्ट्वा व्यथिताकारान्सैन्यानि तव भारत ।
ऊर्ध्वमेव निरैक्षन्त दुःखत्रस्तान्यनेकशः ॥ ३ ॥
शस्त्राण्येषां तु राजेन्द्र शोणिताक्तानि सर्वशः ।
प्राभ्रश्यन्त कराग्रेभ्यो दृष्ट्वा द्रोणं हतं युधि ॥ ४ ॥
तानि बद्धान्यरिष्टानि लम्बमानानि भारत ।
अदृश्यन्त महाराज नक्षत्राणि यथा दिवि ॥ ५ ॥
तथा तु स्तिमितं दृष्ट्वा गतसत्त्वमवस्थितम् ।
बलं तव महाराज राजा दुर्योधनोऽब्रवीत् ॥ ६ ॥
भवतां बाहुवीर्यं हि समाश्रित्य मया युधि ।
पाण्डवेयाः समाहूता युद्धं चेदं प्रवर्तितम् ॥ ७ ॥
तदिदं निहते द्रोणे विषण्णमिव लक्ष्यते ।

दुःख नहीं है, मैंने पहलेसे ही जानलिया है, कि यह सब दैवसे ही होरहा है। इससे तुम अपनी इच्छाके अनुसार वर्णन करो॥ (२५) [४९]

कर्णपर्वमें दूसरा अध्याय समाप्त।

कर्णपर्वमें तीसरा अध्याय।

सञ्जय बोले, हे महाराज! जब महाधनुर्द्धारी द्रोणाचार्य मारे गये, तब महारथ तुम्हारे पुत्रोंका मुख मलिन होगया और चित्त व्याकुल होगया॥ हे राजन्! सब शस्त्रधारी शोकसे व्याकुल नीचामुख किये एक दूसरेको खडे देखते थे। कोई भी आपसमें बात नहीं करते थे॥ इन सबको दुःखी देखकर आपकी सेना दुःखसे त्रस्त होकर ऊपरको देखने लगी॥ (१—३)

हे राजेन्द्र! युद्धमें द्रोणाचार्यको मरा हुआ देखकर रक्तमें भरे हुए इन लोगोंके हाथोंसे शस्त्र छूट छूट गिरने लगे॥ और बंधे हुए शस्त्र शिथिल होकर आकाशसे गिरनेवाले नक्षत्रोंकी भान्ति भूमिपर गिरने लगे। हे भारत! उस समय इसी भांति अनेक कुशकुन होने लगे। हे महाराज! अपनी सेनाको रुकी हुई और बलहीन देखकर राजा दुर्योधन बोले, आप लोगोंके भुजबलके आश्रयसे ही मैंने पाण्डवोंको युद्ध करनेको बुलाया है और यह संग्राम रचा है। परन्तु

युध्यमानाश्च समरे योधा वध्यन्ति सर्वशः ॥ ८ ॥
जयो वापि वधो वापि युध्यमानस्य संयुगे ।
भवेत्किमत्र चित्रं वै युध्यध्वं सर्वतोमुखाः ॥ ९ ॥
पश्यध्वं च महात्मानं कर्णं वैकर्त्तनं युधि ।
प्रचरन्तं महेष्वासं दिव्यैरस्त्रैर्महाबलम् ॥ १० ॥
यस्य वै युधि सन्त्रासात्कुन्तीपुत्रो धनञ्जयः ।
निवर्त्तते सदा मन्दः सिंहात्क्षुद्रमृगो यथा ॥ ११ ॥
येन नागायुतप्राणो भीमसेनो महाबलः ।
मानुषेणैव युद्धेन तामवस्थां प्रवेशितः ॥ १२ ॥
येन दिव्यास्त्रविच्छूरो मायावी स घटोत्कचः ।
अमोघया रणे शक्त्या निहतो भैरवं नदन् ॥ १३ ॥
तस्य दुर्वारवीर्यस्य सत्यसन्धस्य धीमतः ।
बाह्वोर्द्रविणमक्षय्यमद्य द्रक्ष्यथ संयुगे ॥ १४ ॥
द्रोणपुत्रस्य विक्रान्तं राधेयस्यैव चोभयोः ।
पश्यन्तु पाण्डुपुत्रास्ते विष्णुवासवयोरिव ॥ १५ ॥
सर्व एव भवन्तश्च शक्ताः प्रत्येकशोऽपि वा ।
पाण्डुपुत्रान्रणे हन्तुं ससैन्यान्किमु संहताः ।

द्रोणाचार्यके मरनेसे सब व्याकुल दीखते हैं और शत्रु लोग हमारे योद्धाओंको मार रहे है ॥ (४-८)

संग्राममें लडनेवालोंकी विजय होती है वा मृत्यु होती है, इसमें आश्चर्यही क्या है ? सब लोग युद्ध करो ॥ और दिव्य अस्त्रोंके सहित युद्धमें विचरते हुए विकर्त्तनपुत्र महाधनुर्द्धारी, महावली महात्मा कर्णको देखो ॥ जिसके भयसे मन्द कुन्तीनन्दन अर्जुन युद्धसे ऐसा भागता है जैसे छोटा मृग सिंहको देख कर भागे ॥ जिस कर्णने मनुष्य रीतिके युद्धमें ही दस हजार हाथीके वलवाले भीमसेनकी बुरी दशा कर दी थी ॥९-१२

जिस कर्णने दिव्य अस्त्रोंके जानने-वाले मायावी घटोत्कचको अमोघ शक्तिसे मारा था, उस महावली, सत्यप्रतिज्ञ बुद्धिमान् कर्णके वलको आज युद्धमें देखो ॥ आज पाण्डुपुत्र विष्णु और इंद्र के समान अश्वत्थामाके और कर्णके वलको देखो ॥ आप लोगोंमेंसे एक एक ही पाण्डवोंको सेनाके सहित जीतनेमें समर्थ हैं, तो सब मिलकर लडनेकी कथा ही क्या है ? आप सब वलवान्

वीर्यवन्तः कृतास्त्राश्च द्रक्ष्यथाऽद्य परस्परम् ॥ १६ ॥

सञ्जय उवाच--- एवमुक्त्वा ततः कर्णं चक्रे सेनापतिं तदा।

तव पुत्रो महावीर्यो भ्रातृभिः सहितोऽनघ ॥ १७ ॥

सैनापत्यमथाऽवाप्य कर्णो राजन्महारथः।

सिंहनादं विनद्योच्चैः प्रायुध्यत रणोत्कटः ॥ १८ ॥

स सृञ्जयानां सर्वेषां पञ्चालानां च मारिष।

केकयानां विदेहानां चकार कदनं महत् ॥ १९ ॥

तस्येषुधाराः शतशः प्रादुरासञ्छरासनात्।

अग्रे पुङ्खेषु संसक्ता यथा भ्रमरपंक्तयः ॥ २० ॥

स पीडयित्वा पञ्चालान्पाण्डवांश्च तरस्विनः।

हत्वा सहस्रशो योधानर्जुनेन निपातितः ॥ २१ ॥ [ ७० ]

इति श्रीमहाभारते शतसाहस्त्र्यां संहितायां वैयासिक्यां कर्णपर्वणि सञ्जयवाक्यं नाम तृतीयोऽध्यायः ॥ ३ ॥

वैशम्पायन उवाच एतच्छ्रुत्वा महाराज धृतराष्ट्रोऽम्बिकासुतः।

शोकस्यान्तमपश्यन्वै हतं मेने सुयोधनम् ॥ १ ॥

विह्वलः पतितो भूमौ नष्टचेता इव द्विपः।

तस्मिन्निपतिते भूमौ विह्वले राजसत्तमे ॥ २ ॥

आर्त्तनादो महानासीत्स्त्रीणां भरतसत्तम।

---

परस्पर बलको दिखावे॥ (१३-१६)

सञ्जय बोले, हे पापरहित! ऐसा कहके आपके महाबली पुत्रने अपने भाइयोंके सहित कर्णको सेनापति बनाया॥ हे राजन्! सेनापति बनके महारथी कर्ण सिंहके समान गर्जकर, मतवाला होके युद्ध करने लगा॥ कर्णने सृञ्जय, पाञ्चाल, केकय और विदेहवंशी वीरोंको व्याकुल कर दिया, कर्णकी धनुषसे पङ्ख लगे बाणोंकी सैकडों धारा ऐसी निकलने लगीं, जैसी भौरोंकी पंक्ति॥ कर्ण पाञ्चाल और प्रतापी पाण्डवोंको पीडा देकर और सहस्रों वीरोंको मारकर पीछे रणभूमिमें अर्जुनके हाथसे मारा गया॥ (१७-२१) [७०]

कर्णपर्वमें तीसरा अध्याय समाप्त।

कर्णपर्वमें चौथा अध्याय।

श्रीवैशम्पायन मुनि बोले, हे महाराज! अम्बिकापुत्र धृतराष्ट्र इस कथाको सुनकर और अपार शोकसे दुखी होकर समझे कि दुर्योधन अब मारा गया॥ धृतराष्ट्र व्याकुल और निःशक्त होके हाथीके समान भूमिमें गिर पडे। राजा धृतराष्ट्रके व्याकुल होके भूमिमें गिरते ही

स शब्दः पृथिवीं कृत्स्नां पूरयामास सर्वशः ॥ ३ ॥
शोकार्णवे महाघोरे निमग्ना भरतस्त्रियः ।
रुरुदुर्दुःखशोकार्त्ता भृशमुद्विग्नचेतसः ॥ ४ ॥
राजानं च समासाद्य गान्धारी भरतर्षभ ।
निःसंज्ञा पतिता भूमौ सर्वाण्यन्तःपुराणि च ॥ ५ ॥
ततस्ताः सञ्जयो राजन्समाश्वासयदातुराः ।
मुह्यमानाः सुबहुशो मुञ्चन्त्यो वारि नेत्रजम् ॥ ६ ॥
समाश्वस्ताः स्त्रियस्तास्तु वेपमाना मुहुर्मुहुः ।
कदल्य इव वातेन धूयमानाः समन्ततः ॥ ७ ॥
राजानं विदुरश्चापि प्रज्ञाचक्षुषमीश्वरम् ।
आश्वासयामास तदा सिञ्चंस्तोयेन कौरवम् ॥ ८ ॥
स लब्ध्वा शनकैः संज्ञां ताश्च दृष्ट्वा स्त्रियो नृपः ।
उन्मत्त इव राजेन्द्र स्थितस्तूष्णीं विशाम्पते ॥ ९ ॥
ततो ध्यात्वा चिरं काले निःश्वस्य च पुनः पुनः ।
स्वान्पुत्रान्गर्हयामास बहु मेने च पाण्डवान् ॥ १० ॥
गर्हयंश्चात्मनो बुद्धिं शकुनेः सौबलस्य च ।

स्त्रियोंके रोनेका दुःखदाई शब्द होने लगा। हे भरतनन्दन! स्त्रियोंके शब्दसे सम्पूर्ण पृथ्वी भर गई ॥ कुरुकुलकी सम्पूर्ण स्त्रियां महा शोकसागरमें डूब गई और व्याकुलचित्त होकर रोने लगीं ॥ (१-४)

हे भरतश्रेष्ठ! गान्धारी तथा सब अन्तःपुरकी स्त्रियां राजा धृतराष्ट्रके पास जाके चेतनाहीन होकर भूमिमें गिर पड़ीं॥ हे राजन्! तब सञ्जयने अपने नेत्रोंसे आंसू गिरानेवाली महाव्याकुल हुई स्त्रियोंको समझाया और वे स्त्रियां वारवार शोकके साथ रोती हुई चिन्ता करने लगीं, उन स्त्रियोंकी उस समय ऐसी दशा थी जैसी कदलीकी दशा आंधीमें होती है ॥ तब कुरुकुलनाथ प्रज्ञाचक्षु राजा धृतराष्ट्रके ऊपर जल छींटकर विदुरने उनको समझाया ॥ (५-८)

हे पृथ्वीनाथ! राजा धृतराष्ट्र धीरे धीरे चेतन हुए और स्त्रियोंको देखकर उन्मत्तके समान चुप होके बैठ गये ॥ बहुत देरतक ध्यान करके और वारवार सांस लेकर अपने पुत्रोंकी निन्दा करने लगे और पाण्डवोंको उत्तम समझा ॥ राजा धृतराष्ट्र अपनी और शकुनिकी बुद्धिकी निन्दा करने लगे ॥ और बहुत

ध्यात्वा तु सुचिरं कालं वेपमानो मुहुर्मुहुः ॥ ११ ॥
संस्तभ्य च मनो भूयो राजा धैर्यसमन्वितः ।
पुनर्गावल्गणिं सूतं पर्यपृच्छत सञ्जयम् ॥ १२ ॥
यत्त्वया कथितं वाक्यं श्रुतं सञ्जय तन्मया ।
कच्चिद्दुर्योधनः सूत न गतो वै यमक्षयम् ॥ १३ ॥
जये निराशः पुत्रो मे सततं जयकामुकः ।
ब्रूहि सञ्जय तत्त्वेन पुनरुक्तां कथामिमाम् ॥ १४ ॥
एवमुक्तोऽब्रवीत्सूतो राजानं जनमेजय ।
हतो वैकर्त्तनो राजन्सह पुत्रैर्महारथः ॥ १५ ॥
भ्रातृभिश्च महेष्वासैः सूतपुत्रैस्तनुत्यजैः ।
दुःशासनश्च निहतः पाण्डवेन यशस्विना ।
पीतं च रुधिरं कोपाद्भीमसेनेन संयुगे ॥ १६ ॥ [ ८६ ]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां कर्णपर्वणि धृतराष्ट्रशोको नाम चतुर्थोऽध्यायः ॥ ४ ॥

वैशम्पायन उवाच इति श्रुत्वा महाराज धृतराष्ट्रोऽम्बिकासुतः ।
अब्रवीत्सञ्जयं सूतं शोकसंविग्नमानसः ॥ १ ॥
दुष्प्रणीतेन मे तात पुत्रस्याऽदीर्घजीविनः ।

देरतक विचार करके बार बार कंपित होने लगे ॥ राजा धृतराष्ट्र अपने मनको थामकर और धैर्य धारण करके गाव-ल्गणके पुत्र सञ्जयसे फिर ऐसा पूछने लगे ॥ ( ९-१२ )

महाराज धृतराष्ट्र बोले, हे सञ्जय ! जो वचन तुमने कहे वह मैंने सुने, हे सूत ! जयकी इच्छा रखनेवाला दुर्योधन जयसे निराश होकर मर तो नहीं गया? हे सञ्जय ! अपनी कही हुई इस कथाको फिर कहो ? (१३—१४)

श्रीवैशम्पायन मुनि बोले, हे राजन् जनमेजय ! राजा धृतराष्ट्रके वचन सुनके सूत सञ्जय बोले, हे राजन् धृतराष्ट्र ! विकर्त्तनपुत्र महारथ कर्ण अपने पुत्रोंके तथा अपने महाधनुर्द्धारी भाइओंके सहित मारा गया । ऐसे ही यशस्वी मध्यम पाण्डवने दुःशासनको मार डाला और उसके रुधिरको भीमसेनने संग्राममें पान किया ॥ (१५—१६ ) [८६]

कर्णपर्वमें चार अध्याय समाप्त ।

कर्णपर्वमें पांच अध्याय ।

महर्षि वैशम्पायन बोले, हे महाराज ! अम्बिकानन्दन धृतराष्ट्र सञ्जयके इस वचनको सुन और शोकसे व्याकुल चित्त होके सञ्जयसे कहने लगे । हे प्यारे !

हतं वैकर्त्तनं श्रुत्वा शोको मर्माणि कृन्तति ॥ २ ॥
तस्य मे संशयं छिन्धि दुःखपारं तितीर्षतः ।
कुरूणां सृञ्जयानां च के च जीवन्ति के मृताः ॥ ३ ॥

सञ्जय उवाच— हतः शान्तनवो राजन्दुराधर्षः प्रतापवान् ।
हत्वा पाण्डवयोधानामर्बुदं दशभिर्दिनैः ॥ ४ ॥
तथा द्रोणो महेष्वासः पञ्चालानां रथव्रजान् ।
निहत्य युधि दुर्धर्षः पश्चाद्रुक्मरथो हतः ॥ ५ ॥
हतशेषस्य भीष्मेण द्रोणेन च महात्मना ।
अर्धं निहत्य सैन्यस्य कर्णो वैकर्त्तनो हतः ॥ ६ ॥
विविंशतिर्महाराज राजपुत्रो महाबलः ।
आनर्त्तयोधाञ्शतशो निहत्य निहतो रणे ॥ ७ ॥
तथा पुत्रो विकर्णस्ते क्षत्रव्रतमनुस्मरन् ।
क्षीणवाहायुधः शूरः स्थितोऽभिमुखतः परान् ॥ ८ ॥
घोररूपान्परिक्लेशान्दुर्योधनकृतान्बहून् ।
प्रतिज्ञां स्मरता चैव भीमसेनेन पातितः ॥ ९ ॥

---

शीघ्र नष्ट होनेवाले मेरे पुत्रके पापसे जो कर्ण मारा गया इस कथाको सुनके मेरे शरीरके मर्म स्थानोंको शोक काटे डालता है ॥ मैं इस दुःखसे छूटना चाहता हूं, इस लिये तुम यह वर्णन करो कि कौरववंशी और सृञ्जय वंशियोंमें कौन कौन मरे और कौन कौन जीते है तुम मेरे इस सन्देहको दूर करो ॥ (१–३)

सञ्जय बोले, हे राजन् ! शान्तनुपुत्र शत्रुओंसे जीतनेके अयोग्य प्रतापी भीष्म पाण्डवोंके अरब वीरोंको दशदिनमें मार कर मारे गये ॥ ऐसे ही महाधनुर्द्धारी द्रोणाचार्य पाञ्चाल लोगोंके अनेक महारथोंको मारकर युद्धमें मारे गये ॥ फिर रुक्मरथ मारा गया ॥ महाराज ! भीष्म और द्रोणाचार्यके हाथसे मरनेसे जो पाण्डवोंकी सेना बच गई थी उनमेंसे आधीसेनाको मार कर सूर्यपुत्र कर्ण भी मारा गया ॥ (४–६)

हे महाराज ! महाबलवान् राजपुत्र विविंशति आनर्त्त देशके सैकडों वीरोंको मारकर संग्राममें मारा गया ॥ आपके पुत्र विकर्णके जब शस्त्र और रथ विनष्ट होगये तब उस वीरको क्षत्रियोंके धर्म स्मरण करते हुए शत्रुओंके सम्मुख दुर्योधनके दिये हुए महा दुःख और अपनी प्रतिज्ञाको याद करके भीमसेनने उसे मार डाला ॥ (७–९)

विन्दानुविन्दावावन्त्यौ राजपुत्रौ महारथौ ।
कृत्वा त्वसुकरं कर्म गतौ वैवस्वतक्षयम् ॥ १० ॥
सिन्धुराष्ट्रमुखानीह दश राष्ट्राणि यानि ह ।
वशे तिष्ठन्ति वीरस्य यः स्थितस्तव शासने ॥ ११ ॥
अक्षौहिणीर्दशैकां च विनिर्जित्य शितैः शरैः ।
अर्जुनेन हतो राजन्महावीर्यो जयद्रथः ॥ १२ ॥
तथा दुर्योधनसुतस्तरस्वी युद्धदुर्मदः ।
वर्त्तमानः पितुः शास्त्रे सौभद्रेण निपातितः ॥ १३ ॥
तथा दौःशासनिः शूरो बाहुशाली रणोत्कटः ।
द्रौपदेयेन सङ्गम्य गमितो यमसादनम् ॥ १४ ॥
किरातानामधिपतिः सागरानूपवासिनाम् ।
देवराजस्य धर्मात्मा प्रियो बहुमतः सखा ॥ १५ ॥
भगदत्तो महीपाल क्षत्रधर्मरतः सदा ।
धनञ्जयेन विक्रम्य गमितो यमसादनम् ॥ १६ ॥
तथा कौरवदायादो न्यस्तशस्त्रो महायशाः ।
हतो भूरिश्रवा राजञ्छूरः सात्यकिना युधि ॥ १७ ॥
श्रुतायुरपि चाम्बष्ठः क्षत्रियाणां धुरन्धरः ।

---

अवन्तिकापुरीके राजपुत्र विन्द और अनुविन्द कठिन कर्म करके यमराजके भवनको चले गये ॥ सिन्धुराष्ट्रको आदि लेके दश राष्ट्र जिस वीरके आधीन थे और जो सदा आपकी आज्ञामें रहता था, जिसने अपने तीक्ष्ण बाणोंसे ग्यारह अक्षौहिणी सेनाको जीता था उस महावीर जयद्रथको अर्जुनने मार डाला ॥ ऐसे ही तेजस्वी युद्धमें मत्त होनेवाले और अपने पिताकी आज्ञामें रहनेवाले दुर्योधनके पुत्रको सुभद्रानन्दन अभिमन्युने मार डाला ॥ ( १०—१३ )

ऐसे ही बडे बाहुशाली, रणोत्कट और शूर दुःशासनके पुत्रको द्रौपदीके पुत्रने मार डाला ॥ समुद्रके खादर अर्थात् अनूपदेशके किरातोंका स्वामी और देवराज इन्द्रका प्यारा मित्र,सदा क्षत्रियोंके धर्ममें स्थिर रहनेवाला राजा भगदत्त अर्जुनसे युद्ध करके यमराजके स्थानको चला गया ॥ ऐसेही कौरवोंका कुशल महायशस्वी शस्त्रहीन और शूर भूरिश्रवाको भी युद्धमें सात्यकीने मार डाला ॥ ( १४—१७ )

क्षत्रियोंमें धुरन्धर, युद्धमें निर्भय होके

चरन्नभीतवत्सङ्ख्ये निहतः सव्यसाचिना ॥ १८ ॥
तव पुत्रः सदामर्षी कृतास्त्रो युद्धदुर्मदः ।
दुःशासनो महाराज भीमसेनेन पातितः ॥ १९ ॥
यस्य राजन्गजानीकं बहुसाहस्रमद्भुतम् ।
सुदक्षिणः स संग्रामे निहतः सव्यसाचिना ॥ २० ॥
कोसलानामधिपतिर्हत्वा बहुमतान्परान् ।
सौभद्रेणेह विक्रम्य गमितो यमसादनम् ॥ २१ ॥
बहुशो योधयित्वा तु भीमसेनं महारथम् ।
चित्रसेनस्तव सुतो भीमसेनेन पातितः ॥ २२ ॥
मद्रराजात्मजः शूरः परेषां भयवर्द्धनः ।
असिचर्मधरः श्रीमान्सौभद्रेण निपातितः ॥ २३ ॥
समः कर्णस्य समरे यः स कर्णस्य पश्यतः ।
वृषसेनो महातेजाः शीघ्रास्त्रो दृढविक्रमः ॥ २४ ॥
अभिमन्योर्वधं श्रुत्वा प्रतिज्ञामपि चात्मनः ।
धनञ्जयेन विक्रम्य गमितो यमसादनम् ॥ २५ ॥
नित्यं प्रसक्तवैरो यः पाण्डवैः पृथिवीपतिः ।
विश्राव्य वैरं पार्थेन श्रुतायुः स निपातितः ॥ २६ ॥
शल्यपुत्रस्तु विक्रान्तः सहदेवेन मारिष ।

---

घूमनेवाले अम्बष्ठ श्रुतायुको भी अर्जुन ने मार डाला ॥ हे राजन् ! शस्त्रविद्याका अभ्यासी रणमत्त और सदाका क्रोधी तुम्हारा पुत्र दुःशासन भी भीमसेनके हाथोंसे मारा गया ॥ जिसके सङ्ग सहस्रों हाथी थे उस राजा सुदक्षिणको अर्जुनने मार डाला ॥ कोशलदेशका राजा बडे बडे शत्रुओंको मारकर अभिमन्युसे युद्ध करके मारा गया ॥ महारथी भीमसेनसे युद्ध करके आपका पुत्र चित्रसेन भी मारा गया ॥ ( १८—२२ )

शत्रुओंको भय देनेवाले खड्ग और ढालको रखनेवाले मद्रराजके पुत्रको सुभद्रानन्दन अभिमन्यु ने मार डाला ॥ दृढ पराक्रम, महातेजस्वी, युद्धमें कर्णके समान पराक्रमी वृषसेनको कर्णके संमुख ही अर्जुनने अभिमन्युकी मृत्युको सुनके और अपनी प्रतिज्ञाको याद करके मार डाला ॥ जो राजा सदा पाण्डवोंसे वैर रखता था, वह राजा श्रुतायु अर्जुनसे वैरके कारण मारा गया ॥ २३—२६

महापराक्रमी शल्यपुत्र रुक्मरथको

शोकार्णवे निमग्नोऽहं भिन्ना नौरिव सागरे ।
तं वृषं निहतं श्रुत्वा द्वैरथे रथिनां वरम् ॥ २८ ॥
शोकार्णवे निमग्नोऽहमप्लवः सागरे यथा ।
ईदृशैर्यद्यहं दुःखैर्न विनश्यामि सञ्जय ॥ २९ ॥
वज्राद् दृढतरं मन्ये हृदयं मम दुर्भिदम् ।
ज्ञातिसम्बन्धिमित्राणामिमं श्रुत्वा पराभवम् ॥ ३० ॥
को मदन्यः पुमाँल्लोके न जह्यात्सूत जीवितम् ।
विषमग्निं प्रपातं च पर्वताग्रादहं वृणे ॥
नहि शक्ष्यामि दुःखानि सोढुं कष्टानि सञ्जय ॥३१॥ [२४४]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां कर्णपर्वणि धृतराष्ट्रवाक्येऽष्टमोऽध्यायः ॥ ८ ॥

सञ्जय उवाच— श्रिया कुलेन यशसा तपसा च श्रुतेन च ।
त्वामद्य सन्तो मन्यन्ते ययातिमिव नाहुषम् ॥ १ ॥
श्रुते महर्षिप्रतिमः कृतकृत्योऽसि पार्थिव ।
पर्यवस्थापयात्मानं मा विषादे मनः कृथाः ॥ २ ॥
धृतराष्ट्र उवाच—दैवमेव परं मन्ये धिक् पौरुषमनर्थकम् ।

छोडके सब राजोंको घेर लिया था, उस कर्णको अर्जुनने मारडाला इस बातको सुनके मैं शोकसागरमें ऐसा डूबा हूं, जैसे टूटी हुई नाव डूबती है। उस दानी कर्ण को अर्जुनके हाथसे मरा हुआ सुनके मैं शोकसागरमें ऐसा डूबा हूं जैसे विना नावके मनुष्य समुद्रमें डूबता है।(२३-२९)

हे सञ्जय ! ऐसे दुःखोंसे जो मैं नहीं मरता हूं इससे मैं अपने हृदयको वज्रसे भी कठोर समझता हूं । मेरे सिवाय कौन ऐसा मनुष्य होगा जो अपने जातिवाले, बान्धव और मित्रोंकी हारको सुनके जीता रहे ? हे संजय ! मैं चाहता हूं, कि विष खाके, अग्निमें जलके वा पहाडसे गिरके मर जाऊं क्योंकि मुझसे यह कष्ट और दुःख नहीं सहा जाता है ॥ (२९-३१) [२४४]

कर्णपर्वमें आठ अध्याय समाप्त ।

कर्णपर्वमें नौ अध्याय ।

संजय बोले, हे राजन् धृतराष्ट्र ! आजकल महात्मा लोग लक्ष्मी, कुल, यश, तपस्या और विद्यासे आपको नहुषपुत्र ययातिके समान मानते हैं ॥ हे राजन् ! आप विद्यामें महाऋषियोंके तुल्य और कृतकृत्य है, इस लिये अपने मनको स्थिर कीजिये और किसी प्रकारका हृदयमें दुःख न कीजिये ॥ (१-२)

धृतराष्ट्र बोले, सालवृक्षके समान

यत्र शालप्रतीकाशः कर्णोऽहन्यत संयुगे ॥ ३ ॥
हत्वा युधिष्ठिरानीकं पञ्चालानां रथव्रजान् ।
प्रताप्य शरवर्षेण दिशः सर्वा महारथः ॥ ४ ॥
मोहयित्वा रणे पार्थान्वज्रहस्त इवासुरान् ।
स कथं निहतः शेते वायुरुग्ण इव द्रुमः ॥ ५ ॥
शोकस्यान्तं न पश्यामि पारं जलनिधेरिव ।
चिन्ता मे वर्धतेऽतीव मुमूर्षा चापि जायते ॥ ६ ॥
कर्णस्य निधनं श्रुत्वा विजयं फाल्गुनस्य ।
अश्रद्धेयमहं मन्ये वधं कर्णस्य सञ्जय ॥ ७ ॥
वज्रसारमयं नूनं हृदयं दुर्भिदं मम ।
यच्छ्रुत्वा पुरुषव्याघ्रं हतं कर्णं न दीर्यते ॥ ८ ॥
आयुर्नूनं सुदीर्घं मे विहितं दैवतैः पुरा ।
यत्र कर्णं हतं श्रुत्वा जीवामीह सुदुःखितः ॥ ९ ॥
धिग्जीवितमिदं चैव सुहृद्धीनस्य सञ्जय ।
अद्य चाऽहं दशामेतां गतः सञ्जय गर्हिताम् ॥ १० ॥
कृपणं वर्त्तयिष्यामि शोच्यः सर्वस्य मन्दधीः ।

शरीरवाले कर्ण युद्धमें मारे गये इस बातको सुन हमें निश्चय है कि प्रारब्ध ही बडी बलवान है; निरर्थक पौरुषको धिक्कार है ॥ महारथ कर्ण युधिष्ठिरकी सेना और पाञ्चालदलके अनेक महारथोंको मारकर और बाणोंकी वर्षासे सब दिशाओंको पीडित करके तथा सब पाण्डवोंको व्याकुल करके किस प्रकार मर गये ? हा वीर कर्णने इस प्रकार पाण्डवोंको पीडित किया जैसे वज्रधारी इन्द्र दानवोंको युद्धमें दुःख देते है । सो वही महारथ आज वायुसे टूटे हुए वृक्षके समान पृथ्वीमें पडे है ॥ मैं अपने शोकसमुद्रका पार नहीं देखता । मुझे बहुत चिन्ता बढती जाती है और मूर्च्छा आयी जाती है ॥ (३-६)

हे सञ्जय ! कर्णका मरना और अर्जुनकी विजय सुनकर हमें निश्चय नहीं होता कि कर्ण मर गया ॥ मेरा हृदय वज्रसे भी अधिक कठोर है जो कर्णकी मृत्यु सुनकर भी नहीं फटा ॥ कर्णकी मृत्यु सुनने पर भी मैं अभीतक जीता हूं इससे निश्चय होता है कि देवताओंने मेरी आयु बहुत बनायी है ॥ हे सञ्जय! हमारे जीनेको धिक्कार है, जिसके सब मित्र मरते चले जाते है, अब मै बहुत

अहमेव पुरा भूत्वा सर्वलोकस्य सत्कृतः ॥ ११ ॥
परिभूतः कथं सूत परैः शक्ष्यामि जीवितुम् ।
दुःखात्सुदुःखव्यसनं प्राप्तवानस्मि सञ्जय ॥ १२ ॥
भीष्मद्रोणवधेनैव कर्णस्य च महात्मनः ।
नावशेषं प्रपश्यामि सूतपुत्रे हते युधि ॥ १३ ॥
सहि पार्यं महानासीत्पुत्राणां मम सञ्जय ।
युद्धे हि निहतः शूरो विसृजन्सायकान्बहून् ॥ १४ ॥
को हि मे जीवितेनार्थस्तमृते पुरुषर्षभम् ।
रथादाधिरथिर्नूनं न्यपतत्सायकार्दितः ॥ १५ ॥
पर्वतस्येव शिखरं वज्रपाताद्विदारितम् ।
स शेते पृथिवीं नूनं शोभयन्रुधिरोक्षितः ॥ १६ ॥
मातङ्ग इव मत्तेन द्विपेन्द्रेण निपातितः ।
यो बलं धार्त्तराष्ट्राणां पाण्डवानां यतो भयम् ॥ १७ ॥
सोऽर्जुनेन हतः कर्णः प्रतिमानं धनुष्मताम् ।
स हि वीरो महेष्वासो मित्राणामभयङ्करः ॥ १८ ॥
शेते विनिहतो वीरो देवेन्द्रेण इवाचलः ।

दुर्दशामें पड गया हूं ॥ (७-१०)

पहले मैं सब लोकसे श्रेष्ठ था, परन्तु वही मूर्ख मैं अब सबलोकसे नीच होगया ॥ हे सञ्जय ! कर्णको शत्रुओंने मार डाला यह सुनकर मुझे घोर दुःख हुआ है, परन्तु न जाने कौनसा दुःख भोगनेके लिये मेरा जीव निकलता नहीं? भीष्म, द्रोणाचार्य और सूतपुत्र महात्मा कर्णके मरनेमे अपनी ओर किसीको योद्धा नहीं देखता हूं॥ रे सञ्जय! शूर कर्ण तो मेरे पुत्रोंको पार लेने वाली नौकाके समान था, परन्तु वही कर्ण अनेक बाणोंको छोडता हुआ आज युद्ध में मारा गया ! (११-१४)

हे सूत ! जहां अधिरथपुत्र कर्ण बाणोंसे पीडित होकर पृथ्वीपर गिर गये तहां मै जीता रहकर क्या करूंगा ? अब रुधिर भरे कर्ण अपने तेजसे पृथ्वीको इस प्रकार प्रकाशित कर रहे हैं, जैसे वज्रसे कटा पर्वतका शिखर॥ जो हमारे पुत्रोंका बल और पाण्डवोंके लिये महाभय था, उसही कर्णको अर्जुनने आज इस प्रकार मारडाला, जैसे मतवारा हाथी हाथीको मार डालता है ॥ जो कर्ण धनुषधारीको उपमा थे और जो सब मित्रोंको अभय देते थे, उन्हींको

पङ्गोरिवाध्वगमनं दरिद्रस्येव कामितम् ॥ १९ ॥
दुर्योधनस्य चाकूतं तृषितस्येव विप्रुषः ।
अन्यथा चिन्तितं कार्यमन्यथा तत्तु जायते ॥ २० ॥
अहो नु बलवद्दैवं कालश्च दुरतिक्रमः ।
पलायमानः कृपणो दीनात्मा दीनपौरुषः ॥ २१ ॥
कच्चिद्विनिहतः सूत पुत्रो दुःशासनो मम ।
कच्चिन्न दीनाचरितं कृतवांस्तात संयुगे ॥ २२ ॥
कच्चिन्न निहतः शूरो यथान्ये क्षत्रियर्षभाः ।
युधिष्ठिरस्य वचनं मा युध्यस्वेति सर्वदा ॥ २३ ॥
दुर्योधनो नाभ्यगृह्णान्मूढः पथ्यमिवौषधम् ।
शरतल्पे शयानेन भीष्मेण सुमहात्मना ॥ २४ ॥
पानीयं याचितः पार्थः सोऽविध्यन्मेदिनीतलम् ।
जलस्य धारां जनितां दृष्ट्वा पाण्डुसुतेन च ॥ २५ ॥
अब्रवीत्स महाबाहुस्तात संशाम्य पाण्डवैः ।
प्रशमाद्धि भवेच्छान्तिर्मदन्तं युद्धमस्तु वः ॥ २६ ॥

आज अर्जुनने मारा ॥ (१५–१८)

इन्द्रके वज्रसे कटे हुए पर्वतके समान आज कर्ण पृथ्वीपर गिरे पडे है। जैसे पंगुका मार्ग चलना, दरिद्रीकी इच्छा और प्यासेकी तृपापूर्तिको जल बिंदु ऐसे ही कर्णके मरनेसे दुर्योधनके सब अभिप्राय हुए है ॥ प्रारब्ध बडी बलवान है और समय बडा कठिन है। मनुष्य एक कामको विचारता है परन्तु होजाता है दूसरे प्रकारसे। (१९–२१)

हे तात! कर्णके मरनेके पश्चात् दीन बलहीन हमारा पुत्र दुःशासन भयसे पलायन करके शत्रुओंके हाथसे मारा तो नहीं गया? और उन्होंने युद्धमें कोई दीन के समान आचरण तो नहीं किया? उस पराक्रमी वीरको अन्य क्षत्रियोंके समान तो भीमने नहीं मारा? हाय युधिष्ठिरने जो कहा था कि युद्ध मत करो, वह वचन मुझे अब स्मरण होता है। मूर्ख दुर्योधनने उनके वचनोंको इस प्रकार नहीं माना जैसे मरनेवाला रोगी पथ्य औषधिका सेवन नहीं करता ॥ (२१—२४)

शरशय्यापर सोते हुए महात्मा भीष्मने जब पाण्डवोंसे जल माङ्गा, तब अर्जुनने पृथ्वी तोड कर जल धारा निकाल दी थी, उस जलधाराको देख महाबाहु भीष्मने कहा, हे दुर्योधन! तुम युधिष्ठिरके साथ सन्धि करलो, यह

भ्रातृभावेन पृथिवीं भुंक्ष्व पाण्डुसुतैः सह।
अकुर्वन्वचनं तस्य नूनं शोचति पुत्रकः ॥ २७ ॥
तदिदं समनुप्राप्तं वचनं दीर्घदर्शिनः।
अहं तु निहतामात्यो हतपुत्रश्च सञ्जय ॥ २८ ॥
द्यूततः कृच्छ्रमापन्नो लूनपक्ष इव द्विजः।
यथा हि शकुनिं गृह्य छित्त्वा पक्षौ च सञ्जय ॥ २९ ॥
विसर्जयन्ति संहृष्टास्ताड्यमानाः कुमारकाः।
लूनपक्षतया तस्य गमनं नोपपद्यते ॥ ३० ॥
तथाहमपि संप्राप्तो लूनपक्ष इव द्विजः।
क्षीणः सर्वार्थहीनश्च निर्ज्ञातिर्बन्धुवर्जितः।
कां दिशं प्रतिपत्स्यामि दीनः शत्रुवशं गतः ॥ ३१ ॥
वैशम्पायन उवाच-इत्येवं धृतराष्ट्रोऽथ विलप्य बहुदुःखितः।
प्रोवाच सञ्जयं भूयः शोकव्याकुलमानसः ॥ ३२ ॥
धृतराष्ट्र उवाच- योऽजयत्सर्वकाम्बोजानम्बष्ठान्केकयैः सह।
गान्धारांश्च विदेहांश्च जित्वा कार्यार्थमाहवे ॥ ३३ ॥
दुर्योधनस्य वृद्ध्यर्थं योऽजयत्पृथिवीं प्रभुः।

युद्ध मेरे अन्तसे ही समाप्त हो। इससे तुम्हारी और कुलकी वृद्धि होगी तुम पाण्डवोंके सहित भ्रातृभावसे पृथ्वीका राज्य करो। (२४—२७)

परन्तु मूर्ख दुर्योधनने उनका वचन न माना, इसीसे वह इस आपत्तिमें पडा है। हे सञ्जय! दीर्घदर्शी भीष्मके वचन अब दिखायी देते है; अमात्य और पुत्रोंके मरनेसे मैं भी मराही हुआ हूं। हे सञ्जय! यह उसी जुवेका फल है जो शकुनिने युधिष्ठिरके साथ खेला था। इस समय मै पंख कटे पक्षीके समान तडफ रहा हूं। जैसे बालक पक्षीको पकड कर उसके पङ्ख उखाड देते हैं और फिर वह उड नहीं सक्ता, वैसी ही मेरी दशा हो गयी है। मेरा धन जन और वंश भी नाश होगया। अब शत्रुओंके आधीन होकर मेरी बहुत दुर्दशा होगी॥ (२८-३१)

श्रीवैशम्पायन बोले, हे राजन् जनमेजय! राजा धृतराष्ट्र इस प्रकारसे बहुत रोए, फिर शोकसे व्याकुल होकर सञ्जयसे बोले, जिसने कार्यसिद्धिके लिए युद्धमें सब काम्बोज, अंबष्ठ, विदेह, कैकय और गान्धारोंको जीत लिया था॥ जिसने दुर्योधनकी वृद्धिके लिये सब पृथ्वीको

स जितः पाण्डवैः शूरः समरे बाहुशालिभिः ॥ ३४ ॥
तस्मिन्हते महेष्वासे कर्णे युधि किरीटिना ।
के वीराः पर्यतिष्ठन्त तन्ममाचक्ष्व सञ्जय ॥ ३५ ॥
कच्चिन्नैकः परित्यक्तः पाण्डवैर्निहतो रणे ।
उक्तं त्वया पुरा तात यथा वीरो निपातितः ॥ ३६ ॥
भीष्ममप्रतियुध्यन्तं शिखण्डी सायकोत्तमैः ।
पातयामास समरे सर्वशस्त्रभृतां वरम् ॥ ३७ ॥
तथा द्रौपदिना द्रोणो न्यस्तसर्वायुधो युधि ।
युक्तयोगो महेष्वासः शरैर्बहुभिराचितः ॥ ३८ ॥
निहतः खड्गमुद्यम्य धृष्टद्युम्नेन सञ्जय ।
अन्तरेण हतावेतौ छलेन च विशेषतः ॥ ३९ ॥
अश्रौषमहमेतद्वै भीष्मद्रोणौ निपातितौ ।
भीष्मद्रोणौ हि समरे न हन्याद्वज्रभृत्स्वयम् ॥ ४० ॥
न्यायेन युध्यमानौ हि तद्वै सत्यं ब्रवीमि ते ।
कर्णं त्वस्यन्तमस्त्राणि दिव्यानि च बहूनि च ॥ ४१ ॥
कथमिन्द्रोपमं वीरं मृत्युर्युद्धे समस्पृशत् ।
यस्य विद्युत्प्रभां शक्तिं दिव्यां कनकभूषणाम् ॥४२॥
प्रायच्छद् द्विषतां हन्त्रीं कुण्डलाभ्यां पुरन्दरः ।
यस्य सर्पमुखो दिव्यः शरः काञ्चनभूषणः ॥ ४३ ॥

---

जीत लिया था, वही पराक्रमी कर्ण आज पाण्डवोंके हाथसे मारा गया ॥ हे सञ्जय ! महाधनुषधारी कर्णके मरनेके पश्चात् कौन वीर युद्धमें खडे रहे ? सो हमसे कहो ॥ (३२–३५)

क्या पाण्डवोंने हमारे किसी वीरको जीता न छोडा ? जैसे शस्त्रधारियोंमें श्रेष्ठ शिखण्डीने भीष्मको मारा इसी प्रकार शस्त्रत्यागी योगरत द्रोणाचार्यको धृष्टद्युम्नने मारा। इन दोनों वीरोंको पाण्डवोंने छलसे मारा, हमें यह निश्चय था कि न्यायसे लडने वाले भीष्म और द्रोणाचार्यको इन्द्रभी नहीं मार सक्ते ॥ (३६—४०)

इसी प्रकार दिव्य अस्त्र चलाते हुए कर्णको भी न्यायसे कोई युद्धमें नहीं मार सक्ता। जिसको सब शत्रुओंको नाश करनेवाली सुवर्ण भूपित शक्ति इन्द्रने कुण्डलोंके बदलेमें दी थी उस इन्द्रके समान पराक्रमी कर्णकी मृत्यु कैसे होगयी ? जिसका बाण सुवर्ण भूपित

अशेत निहतः पत्री चन्दनेष्वरिसूदनः ।
भीष्मद्रोणमुखान्वीरान्योऽवमन्ये महारथान् ॥ ४४ ॥
जामदग्न्यान्महाघोरं ब्राह्ममस्त्रमशिक्षत ।
यश्च द्रोणमुखान्दृष्ट्वा विमुखानर्दिताञ्शरैः ॥ ४५ ॥
सौभद्रस्य महाबाहुर्व्यधमत्कार्मुकं शितैः ।
यश्च नागायुतप्राणं वज्ररंहसमच्युतम् ॥ ४६ ॥
विरथं सहसा कृत्वा भीमसेनमथाहसत् ।
सहदेवं च निर्जित्य शरैः सन्नतपर्वभिः ॥ ४७ ॥
कृपया विरथं कृत्वा नाहनद्धर्मचिन्तया ।
यश्च मायासहस्राणि विकुर्वाणं जयैषिणम् ॥ ४८ ॥
घटोत्कचं राक्षसेन्द्रं शक्रशक्त्या निजघ्निवान् ।
एतांश्च दिवसान्यस्य युद्धे भीतो धनञ्जयः ॥ ४९ ॥
नागमद् द्वैरथं वीरः स कथं निहतो रणे ।
संशप्तकानां योधा ये आह्वयन्त सदाऽन्यतः ॥ ५० ॥
एतान्हत्वा हनिष्यामि पश्चाद्वैकर्तनं रणे ।
इति व्यपदिशन्पार्थो वर्जयन्सूतजं रणे ॥ ५१ ॥

सर्पके समान मुखवाला भातेमें चंदनोंके चूर्णमें रक्षित था, वह शत्रुनाशन कर्ण आज हत होकर पृथ्वी पर पडा है ॥ (४१-४४)

जो महाराज भीष्म और द्रोणाचार्य आदि वीरोंका निरादर करते थे, जिन्होंने परशुरामसे महाघोर ब्रह्म अस्त्र सीखा था, वही कर्ण आज मरा हुआ पृथ्वीपर पडा है। जो अभिमन्युके बाणोंसे पीडित महात्मा द्रोणाचार्यको युद्धसे विरक्त देखकर स्वयं युद्ध करने लगे थे और उनके धनुषको काट दिया। जिसने दस हजार हाथीके समान बलवान् वज्रके समान पराक्रमी भीमसेनका रथ काट दिया था और उसकी हंसी की थी। जिसने तीक्ष्ण बाणोंसे सहदेवको जीता था और जिसने सहदेवको धर्म जानकर नहीं मारा था ॥ (४४-४८)

जिसने अनेक प्रकारकी मायासे युद्ध करनेवाले भीमपुत्र घटोत्कच राक्षसको इन्द्रकी शक्तिसे मारा था वही कर्ण मरकर आज पृथ्वीमें गिर गया। जिसके ये सब पराक्रम देखकर अर्जुन डरते रहते थे, यह कर्ण आज किसप्रकार अर्जुनके हाथसे मारा गया? अर्जुनने विचारा था कि संशप्तकोंको मारकर कर्णको मारेंगे

स कथं निहतो वीरः पार्थेन परवीरहा ।
रथभङ्गो न चेत्तस्य धनुर्वा न व्यशीर्यत ॥ ५२ ॥
न चास्त्राणि निर्णुः स कथं निहतः परैः ।
को हि शक्तो रणे कर्णं विधुन्वानं महद्धनुः ॥ ५३ ॥
विमुञ्चन्तं शरान्घोरान्दिव्यान्यस्त्राणि चाहवे ।
जेतुं पुरुषशार्दूलं शार्दूलमिव वेगिनम् ॥ ५४ ॥
ध्रुवं तस्य धनुश्छिन्नं रथो वापि महीं गतः ।
अस्त्राणि वा प्रणष्टानि यथा शंससि मे हतम्॥ ५५ ॥
न ह्यन्यदपि पश्यामि कारणं तस्य नाशने ।
न हन्मि फाल्गुनं यावत्तावत्पादौ न धावये ॥ ५६ ॥
इति यस्य महाघोरं व्रतमासीन्महात्मनः ।
यस्य भीतो रणे निद्रां धर्मराजो युधिष्ठिरः ॥ ५७ ॥
त्रयोदश समा नित्यं नाभजत्पुरुषर्षभः ।
यस्य वीर्यवतो वीर्यमुपाश्रित्य महात्मनः ॥ ५८ ॥
मम पुत्रः सभां भार्यां पाण्डूनां नीतवान्बलात् ।
तत्रापि च सभामध्ये पाण्डवानां च पश्यताम् ॥ ५९ ॥

परन्तु उनसे पहले ही कर्णसे क्यों लडे ? (४८–५२)

कर्णका न धनुष कटा, न रथ कटा, न अस्त्र विशीर्ण होगये, तब अर्जुनने उनको किस प्रकार मार डाला ? धनुष खींचते हुए कर्णको कौन मार सक्ता था ? अर्जुनने विना शस्त्र काटे कर्णको कैसे मारा ? शार्दूलके समान पराक्रमी दिव्य अस्त्र और घोर बाणोंको छोडते हुए कर्णको युद्धमें कौन मार सक्ता ? हमें निश्चय होता है कि कर्णका धनुष कट गया, रथ पृथ्वीमें घुस गया होगा और अस्त्र कट गये होंगे तभी कर्ण मरे होंगे, क्योंकि इन कारणोंके सिवाय कर्णके मरनेका कोई कारण नहीं दीखता । ( ५२–५६ )

कर्णने प्रतिज्ञा की थी, कि मैं विना अर्जुनके मारे पैर नहीं धोऊंगा वे कर्ण आज कैसे मारे गये ? जिनके डरके मारे धर्मराज युधिष्ठिरको निद्रा नहीं आती थी, जिनके डरसे धर्मराज युधिष्ठिर तेरह वर्ष सुखसे नहीं बैठे थे, वह कर्ण आज किसप्रकार मर गये ? (५६–५८)

जिन महात्माके वीर्यका आश्रय करके दुःशासन द्रौपदीको पकडकर खींच लाया था और द्रौपदीकी ओर देख पाण्डवोंके

दासभार्येति पाञ्चालीमब्रवीत्कुरुसन्निधौ ।
न सन्ति पतयः कृष्णे सर्वे षण्ढतिलैः समाः ॥ ६० ॥
उपतिष्ठस्व भर्त्तारमन्यं वा वरवर्णिनि ।
इत्येवं यः पुरा वाचो रूक्षाः संश्रावयन्रुपा ॥ ६१ ॥
सभायां सूतजः कृष्णां स कथं निहतः परैः ।
यदि भीष्मो रणश्लाघी द्रोणो वा युधि दुर्मदः॥ ६२॥
न हनिष्यति कौन्तेयान्पक्षपातात्सुयोधन ।
सर्वानेव हनिष्यामि व्येतु ते मानसो ज्वरः ॥ ६३ ॥
किं करिष्यति गाण्डीवमक्षय्यौ च महेषुधी ।
स्निग्धचन्दनदिग्धस्य मच्छरस्याभिधावतः ॥ ६४ ॥
स नूनमृषभस्कन्धो ह्यर्जुनेन कथं हतः ।
यश्च गाण्डीवमुक्तानां स्पर्शमुग्रमचिन्तयन् ॥ ६५ ॥
अपतिर्ह्यसि कृष्णेति ब्रुवन्पार्थानवैक्षत ।
यस्य नासीद्भयं पार्थैः सपुत्रैः सजनार्दनैः ॥ ६६ ॥
स्वबाहुबलमाश्रित्य मुहूर्त्तमपि सञ्जय ।
तस्य नाहं वधं मन्ये देवैरपि सवासवैः ॥ ६७ ॥

आगे ही हंसे थे; जिन्होंने सब राजोंके बीच द्रौपदीको दासस्त्री कहा था और यह भी कहा था कि हे द्रौपदी ! पाण्डव तेरे पति नहीं है ! हे सुन्दरी ! तुम किसी दूसरेको पति बनालो । इत्यादि रूखे वचन जिन्होंने सभामें कहे थे, वही सूतपुत्र आज शत्रुओंके हाथसे कैसे मारे गये ? ( ५८—६२)

जो वीर दुर्योधनसे कहा करते थे, कि आप लोग निःसन्देह होकर बैठिये यदि भीष्म और द्रोण पक्षपातसे पाण्डवोंको नहीं मारेंगे, तो हम पाचों पाण्ड वोंको मारेंगे, जो कहा करते थे कि स्निग्ध चदनसे चर्चित मेरे बाणोंके आगे गाण्डीव और अक्षय तूणीर क्या करेंगे! जो गाण्डीवसे छूटे हुए वज्रके समान बाणोंको कुछ भी नहीं समझते थे वह कर्ण आज किस प्रकार मारे गये ? जिसने सभामें पाण्डवोंकी ओर देखके द्रौपदीसे कहा था, कि तुम पति हीन है तथा जो पुत्र और कृष्णके सहित पाण्डुके पुत्रोंसे कुछ भी नहीं डरते थे वह कर्ण कैसे मारे गये ? (६२—६६)

जो अपने बाहुबलके आगे किसी वीरका आदर नहीं करते थे, जिसको इन्द्रादिक देवता भी नहीं जीत सक्ते

प्रतीपमभिधावद्भिः किं पुनस्तात पाण्डवैः।
न हि ज्यां संस्पृशानस्य तलत्रे वापि गृह्णतः॥ ६८॥
पुमानाधिरथेः स्थातुं कश्चित्प्रमुखतोऽर्हति।
अपि स्यान्मेदिनी हीना सोमसूर्यप्रभांशुभिः॥ ६९॥
न वधः पुरुषेन्द्रस्य संयुगेष्वपलायिनः।
येन मन्दः सहायेन भ्रात्रा दुःशासनेन च ॥ ७०॥
वासुदेवस्य दुर्बुद्धिः प्रत्याख्यानमरोचत।
स नूनं वृषभस्कन्धं कर्ण दृष्ट्वा निपातितम् ॥ ७१॥
दुःशासनं च निहतं मन्ये शोचति पुत्रकः।
हतं वैकर्त्तनं श्रुत्वा द्वैरथे सव्यसाचिना ॥ ७२॥
जयतः पाण्डवान्दृष्ट्वा किंस्विद्दुर्योधनोऽब्रवीत्।
दुर्मर्षणं हतं दृष्ट्वा वृषसेनं च संयुगे ॥ ७३॥
प्रभग्नं च बलं दृष्ट्वा वध्यमानं महारथैः।
पराङ्मुखांश्च राज्ञस्तु पलायनपरायणान् ॥ ७४॥
विद्रुतान्रथिनो दृष्ट्वा मन्ये शोचति पुत्रकः।
अनेयश्चाभिमानी च दुर्बुद्धिरजितेन्द्रियः ॥ ७५॥

थे, पाण्डवोंकी तो कथा ही क्या है। वे कर्ण मारे गये यह हमें निश्चय नहीं होता। शत्रुओंकी घोर सेनाकी ओर दौडते हुए और धनुषका शब्द करते हुए कर्णसे कौन युद्ध कर सकता है? सूर्य अग्नि और चन्द्रमाकी प्रभासे एक बारगी पृथ्वी रहित हो सकेगी परन्तु युद्ध में पीछे न हटनेवाले पुरुषश्रेष्ठ कर्णका वध मुझे संभवनीय नहीं प्रतीत होता है। (६६–७०)

जिस मूर्ख दुर्योधनने दुःशासनकी सहायतासे कृष्णके वचनको नहीं माना था, वह आज मतवाले बैलके कंधेके समान कंधेवाले कर्णको तथा अपने भाई दुःशासनको मरा देख निश्चयही सोच करता होगा। कर्णको अर्जुनसे मरा देख तथा दुर्मषण और वृषसेनको भीमसेन के हाथसे मरा और पाण्डवोंको विजय युक्त देख दुर्योधनने क्या कहा? अपनी सेनाको भागते, अपनी ओरके राजोंको उत्साह रहित और पाण्डवो को प्रबल देख दुर्योधनने क्या कहा? (७०–७५)

हमको निश्चय है कि मूर्ख, इन्द्रियों-को न जीतनेवाला दुर्योधन अपने महा रथोंको भागते देख बहुत ही सोच करता होगा? जो मित्रोंके मना करनेपर

हतोत्साहं बलं दृष्ट्वा किंस्विद्दुर्योधनोऽब्रवीत् ।
स्वयं वैरं महत्कृत्वा वार्यमाणः सुहृद्गणैः ॥ ७६ ॥
प्रधने हतभूयिष्ठैः किंस्विद्दुर्योधनोऽब्रवीत् ।
भ्रातरं निहतं दृष्ट्वा भीमसेनेन संयुगे ॥ ७७ ॥
रुधिरे पीयमाने च किंस्विद्दुर्योधनोऽब्रवीत् ।
सह गान्धारराजेन सभायां यदभाषत ॥ ७८ ॥
कर्णोऽर्जुनं रणे हन्ता हते तस्मिन्किमब्रवीत् ।
द्यूतं कृत्वा पुरा हृष्टो वञ्चयित्वा च पाण्डवान्॥ ७९ ॥
शकुनिः सौबलस्तात हते कर्णे किमब्रवीत् ।
कृतवर्मा महेष्वासः सात्वतानां महारथः ॥ ८० ॥
हतं वैकर्त्तनं दृष्ट्वा हार्दिक्यः किमभाषत ।
ब्राह्मणाः क्षत्रिया वैश्या यस्य शिक्षामुपासते ॥ ८१ ॥
धनुर्वेदं चिकीर्षन्तो द्रोणपुत्रस्य धीमतः ।
युवा रूपेण सम्पन्नो दर्शनीयो महायशाः ॥ ८२ ॥
अश्वत्थामा हते कर्णे किमभाषत सञ्जय ।
आचार्यो यो धनुर्वेदे गौतमो रथसत्तमः ॥ ८३ ॥
कृपः शारद्वतस्तात हते कर्णे किमब्रवीत् ।
मद्रराजो महेष्वासः शल्यः समितिशोभनः ॥ ८४ ॥

भी नहीं माना था ? उस दुर्योधनने अपनी सेनाको उत्साहहीन देख क्या कहा था ? जब भीमसेनने जीते हुए दुःशासनका रुधिर पिया तब दुर्योधनने क्या कहा ? दुर्योधनने जो शकुनीके सहित सभामें कहा था, कि कर्ण अर्जुन को युद्धमें मारेंगे सो कर्णके मरनेपर दुर्योधनने क्या कहा ? (७५-७९)

हे तात ! जिस सुबलपुत्र शकुनिने पाण्डवोंको छला था और जुआ खेलकर जो प्रसन्न हुआ था उसने कर्णको मरा देख क्या कहा था ? हृदीकपुत्र महारथ महाधनुषधारी कृतवर्माने कर्णको मरा देख क्या कहा ? हे सञ्जय ! ब्राह्मण, क्षत्री और वैश्य जिससे धनुर्विद्या सीखते है उस बुद्धिमान सुन्दर वीर महायशस्वी अश्वत्थामाने कर्णको मरा देख क्या कहा ? जो धनुर्वेदके आचार्य हैं उन महारथ गौतमवंशी शारद्वतपुत्र कृपाचार्यने कर्णको मरा देख क्या कहा ? ( ७९-८४ )

मद्र देशके राजा महारथोंमें श्रेष्ठ

दृष्ट्वा विनिहतं कर्णं सारथ्ये रथिनां वरः ।
किमभाषत सौवीरो मद्राणामधिपो बली ॥ ८५ ॥
दृष्ट्वा विनिहतं सर्वे योधा वा रणदुर्जयाः ।
ये च केचन राजानः पृथिव्यां योद्धुमागताः ।
वैकर्तनं हतं दृष्ट्वा कान्यभाषन्त सञ्जय ॥ ८६ ॥
द्रोणे तु निहते वीरे रथव्याघ्रे नरर्षभे ।
के वा मुखमनीकानामासन्सञ्जय भागशः ॥ ८७ ॥
मद्रराजः कथं शल्यो नियुक्तो रथिनां वरः ।
वैकर्त्तनस्य सारथ्ये तन्ममाचक्ष्व सञ्जय ॥ ८८ ॥
केऽरक्षन्दक्षिणं चक्रं सूतपुत्रस्य युध्यतः ।
वामं चक्रं ररक्षुर्वा के वा वीरस्य पृष्ठतः ॥ ८९ ॥
के कर्णं न जहुः शूराः के क्षुद्राः प्राद्रवंस्ततः ।
कथं च वः समेतानां हतः कर्णो महारथः ॥ ९० ॥
पाण्डवाश्च स्वयं शूराः प्रत्युदीयुर्महारथाः ।
सृजन्तः शरवर्षाणि वारिधारा इवाम्बुदाः ॥ ९१ ॥
स च सर्पमुखो दिव्यो महेषुप्रवरस्तदा ।
व्यर्थः कथं समभवत्तन्ममाचक्ष्व सञ्जय ॥ ९२ ॥
मामकस्यास्य सैन्यस्य हतोत्सेधस्य सञ्जय ।

कर्णके सारथी सभाको शोभित करनेवाले शल्यने कर्णको मरा देख क्या कहा ? हे सञ्जय ! और भी रणमें बचे हुए सब राजा और दुर्जय योद्धाओंने कर्णको मरा देख क्या कहा ? महारथ पुरुषसिंह द्रोणाचार्यके मरनेके पीछे हमारी सेनामें कौन कौन वीर प्रधान हुए ? मद्रराज शल्य किस प्रकार कर्णके सारथी बने ? सो हमसे कहो ॥ (८४—८८)

सूतपुत्र कर्णके दायें और बायें पहियोंकी कौन रक्षा करता था ? और उनके रथके पीछे कौन था ? किन किन वीरोंने कर्णको नहीं छोडा ? और कौन कादर छोड कर भाग गये और किस प्रकार अर्जुनने सेनाके बीच महारथ कर्णको मारा ? वीर पाण्डव मेघोंके समान बाण वर्षाते हुए आप ही किस प्रकार युद्धमें आये ? कर्णका वह सर्पमुख बाण किस प्रकार व्यर्थ होगया ? यह सब कथा हमसे कहो ॥ (८९–९२)

हमारी सेनाका कर्ण रूपी कंगूरा गिरनेसे उत्साह नष्ट होगया । अब कोई

हतोत्साहं बलं दृष्ट्वा किंस्विद्दुर्योधनोऽब्रवीत् ।
स्वयं वैरं महत्कृत्वा वार्यमाणः सुहृद्गणैः ॥ ७६ ॥
प्रधने हतभूयिष्ठैः किंस्विद्दुर्योधनोऽब्रवीत् ।
भ्रातरं निहतं दृष्ट्वा भीमसेनेन संयुगे ॥ ७७ ॥
रुधिरे पीयमाने च किंस्विद्दुर्योधनोऽब्रवीत् ।
सह गान्धारराजेन सभायां यद्भाषत ॥ ७८ ॥
कर्णोऽर्जुनं रणे हन्ता हते तस्मिन्किमब्रवीत् ।
द्यूतं कृत्वा पुरा हृष्टो वञ्चयित्वा च पाण्डवान्॥ ७९ ॥
शकुनिः सौबलस्तात हते कर्णे किमब्रवीत् ।
कृतवर्मा महेष्वासः सात्वतानां महारथः ॥ ८० ॥
हतं वैकर्त्तनं दृष्ट्वा हार्दिक्यः किमभाषत ।
ब्राह्मणाः क्षत्रिया वैश्या यस्य शिक्षामुपासते ॥ ८१ ॥
धनुर्वेदं चिकीर्षन्तो द्रोणपुत्रस्य धीमतः ।
युवा रूपेण सम्पन्नो दर्शनीयो महायशाः ॥ ८२ ॥
अश्वत्थामा हते कर्णे किमभाषत सञ्जय ।
आचार्यो यो धनुर्वेदे गौतमो रथसत्तमः ॥ ८३ ॥
कृपः शारद्वतस्तात हते कर्णे किमब्रवीत् ।
मद्रराजो महेष्वासः शल्यः समितिशोभनः ॥ ८४ ॥

भी नहीं माना था ? उस दुर्योधनने अपनी सेनाको उत्साहहीन देख क्या कहा था ? जब भीमसेनने जीते हुए दुःशासनका रुधिर पिया तब दुर्योधनने क्या कहा ? दुर्योधनने जो शकुनीके सहित सभामें कहा था, कि कर्ण अर्जुन को युद्धमें मारेंगे सो कर्णके मरनेपर दुर्योधनने क्या कहा ? (७५-७९)

हे तात ! जिस सुबलपुत्र शकुनिने पाण्डवोंको छला था और जुआ खेलकर जो प्रसन्न हुआ था उसने कर्णको मरा देख क्या कहा था ? हृदीकपुत्र महारथ महाधनुषधारी कृतवर्माने कर्णको मरा देख क्या कहा ? हे सञ्जय ! ब्राह्मण, क्षत्री और वैश्य जिससे धनुर्विद्या सीखते हैं उस बुद्धिमान सुन्दर वीर महायशस्वी अश्वत्थामाने कर्णको मरा देख क्या कहा ? जो धनुर्वेदके आचार्य हैं उन महारथ गौतमवंशी शारद्वतपुत्र कृपाचार्यने कर्णको मरा देख क्या कहा ? ( ७९-८४ )

मद्र देशके राजा महारथोंमें श्रेष्ठ

दृष्ट्वा विनिहतं कर्णं सारथ्ये रथिनां वरः।
किमभाषत सौवीरो मद्राणामधिपो बली ॥ ८५ ॥
दृष्ट्वा विनिहतं सर्वे योधा वा रणदुर्जयाः।
ये च केचन राजानः पृथिव्यां योद्धुमागताः।
वैकर्तनं हतं दृष्ट्वा कान्यभाषन्त सञ्जय ॥ ८६ ॥
द्रोणे तु निहते वीरे रथव्याघ्रे नरर्षभे।
के वा मुखमनीकानामासन्सञ्जय भागशः ॥ ८७ ॥
मद्रराजः कथं शल्यो नियुक्तो रथिनां वरः।
वैकर्त्तनस्य सारथ्ये तन्ममाचक्ष्व सञ्जय ॥ ८८ ॥
केऽरक्षन्दक्षिणं चक्रं सूतपुत्रस्य युध्यतः।
वामं चक्रं ररक्षुर्वा के वा वीरस्य पृष्ठतः ॥ ८९ ॥
के कर्णं न जहुः शूराः के क्षुद्राः प्राद्रवंस्ततः।
कथं च वः समेतानां हतः कर्णो महारथः ॥ ९० ॥
पाण्डवाश्च स्वयं शूराः प्रत्युदीयुर्महारथाः।
सृजन्तः शरवर्षाणि वारिधारा इवाम्बुदाः ॥ ९१ ॥
स च सर्पमुखो दिव्यो महेषुप्रवरस्तदा।
व्यर्थः कथं समभवत्तन्ममाचक्ष्व सञ्जय ॥ ९२ ॥
मामकस्यास्य सैन्यस्य हतोत्सेधस्य सञ्जय।

कर्णके सारथी सभाको शोभित करनेवाले शल्यने कर्णको मरा देख क्या कहा? हे सञ्जय! और भी रणमें बचे हुए सब राजा और दुर्जय योद्धाओंने कर्णको मरा देख क्या कहा? महारथ पुरुषसिंह द्रोणाचार्यके मरनेके पीछे हमारी सेनामें कौन कौन वीर प्रधान हुए? मद्रराज शल्य किस प्रकार कर्णके सारथी बने? सो हमसे कहो॥ (८४—८८)

सूतपुत्र कर्णके दायें और बायें पहियोंकी कौन रक्षा करता था? और उनके रथके पीछे कौन था? किन किन वीरोंने कर्णको नहीं छोडा? और कौन कादर छोड कर भाग गये और किस प्रकार अर्जुनने सेनाके बीच महारथ कर्णको मारा? वीर पाण्डव मेघोंके समान बाण वर्षाते हुए आप ही किस प्रकार युद्धमें आये? कर्णका वह सर्पमुख बाण किस प्रकार व्यर्थ होगया? यह सब कथा हमसे कहो॥ (८९-९२)

हमारी सेनाका कर्ण रूपी कंगूरा गिरनेसे उत्साह नष्ट होगया। अब कोई

अवशेषं न पश्यामि कुकदे मृदिते सति ॥ ९३ ॥
तौ हि वीरौ महेष्वासौ मदर्थे त्यक्तजीवितौ ।
भीष्मद्रोणौ हतौ श्रुत्वा को न्वर्थो जीवितेन मे ॥९४॥
पुनः पुनर्न मृष्यामि हतं कर्णं च पाण्डवैः ।
यस्य बाह्वोर्बलं तुल्यं कुञ्जराणां शतं शतैः ॥ ९५ ॥
द्रोणे हते च यद्वृत्तं कौरवाणां परैः सह ।
संग्रामे नरवीराणां तन्ममाचक्ष्व सञ्जय ॥ ९६ ॥
यथा कर्णश्च कौन्तेयैः सह युद्धमयोजयत् ।
तथा च द्विषतां हन्ता रणे शान्तस्तदुच्यताम् ॥९७॥ [३४१]

इति श्रीमहाभारते शतसाहस्र्यां सहितायां वैयासिक्यां कर्णपर्वणि धृतराष्ट्रप्रश्ने नवमोऽध्यायः ॥ ९ ॥

सञ्जय उवाच— हते द्रोणे महेष्वासे तस्मिन्नहनि भारत ।
कृते च मोघसङ्कल्पे द्रोणपुत्रे महारथे ॥ १ ॥
द्रवमाणे महाराज कौरवाणां बलार्णवे ।
व्यूह्य पार्थः स्वकं सैन्यमतिष्ठद्भ्रातृभिर्वृतः ॥ २ ॥
तमवस्थितमाज्ञाय पुत्रस्ते भरतर्षभ ।
विद्रुतं स्वबलं दृष्ट्वा पौरुषेण न्यवारयत् ॥ ३ ॥
स्वमनीकमवस्थाप्य बाहुवीर्यमुपाश्रितः ।

वीर नहीं रहा ॥ हमारे लिये भीष्म और द्रोणाचार्य मर गये अब हम जीकर क्या करेंगे ? अब हम सौ हाथियोंके समान बलवाले, कर्णका बार बार शोच नहीं करेंगे ॥ हे सञ्जय ! द्रोणाचार्यके मरनेके पश्चात् कौरवोंने क्या किया ? जैसे शत्रुनाशन कर्णने कुन्तीपुत्र पाण्डवों के साथ युद्ध किया और मर गये, सो कहो ॥ (९३—९७) [३४१]

कर्णपर्वमें नौ अध्याय समाप्त ।

कर्णपर्वमें दस अध्याय ।

सञ्जय बोले, हे राजन् धृतराष्ट्र ! जिसदिन महाधनुषधारी द्रोणाचार्य मारे गये और जब महारथ अश्वत्थामा घोर प्रतिज्ञा कर चुके, उस समय कौरवोंकी बडी सेना इधर उधर भागने लगी, तब महाराज युधिष्ठिर अपने भाइयोंके समेत अपनी सेनाका व्यूह बनाकर खडे होगये ॥ (१—२)

हे भारत ! जिस समय तुम्हारे पुत्र दुर्योधनने देखा, कि महाराज युधिष्ठिर अपनी सेनामें खडे है और हमारी सेना भागी जाती है। तब उन्होंने बहुत यत्न करके अपनी सेना को स्थिर

युद्ध्वा च सुचिरं कालं पाण्डवैः सह भारत ॥ ४ ॥
लब्धलक्षैः परैर्हृष्टैर्व्यायच्छद्भिश्चिरं तदा ।
सन्ध्याकालं समासाद्य प्रत्याहारमकारयत् ॥ ५ ॥
कृत्वावहारं सैन्यानां प्रविश्य शिबिरं स्वकम् ।
कुरवः सुहितं मन्त्रं मन्त्रयाञ्चक्रिरे मिथः ॥ ६ ॥
पर्यङ्केषु परार्ध्येषु स्पर्ध्यास्तरणवत्सु च ।
वरासनेषूपविष्टाः सुखशय्यास्विवामराः ॥ ७ ॥
ततो दुर्योधनो राजा साम्ना परमवल्गुना ।
तानाभाष्य महेष्वासान्प्राप्तकालमभाषत ॥ ८ ॥
मतं मतिमतां श्रेष्ठाः सर्वे प्रब्रूत मा चिरम् ।
एवङ्गते तु किं कार्यं किं च कार्यतरं नृपाः ॥ ९ ॥
सञ्जय उवाच— एवमुक्ते नरेन्द्रेण नरसिंहा युयुत्सवः ।
चक्रुर्नानाविधाश्चेष्टाः सिंहासनगतास्तदा ॥ १० ॥
तेषां निशाम्येङ्गितानि युद्धे प्राणाञ्जुहूषताम् ।
समुद्वीक्ष्य मुखं राज्ञो बालार्कसमवर्चसम् ॥ ११ ॥
आचार्यपुत्रो मेधावी वाक्यज्ञो वाक्यमाददे ।

किया ॥ उस समय राजा दुर्योधन आपनी सेनाको स्थिर करके अपने बाहुबलसे विजयसे हर्षित होनेसे उत्साहसे युद्ध करने वाले पाण्डवोंके साथ बहुत समय तक युद्ध करके सन्ध्या समय जान उन्होंने अपनी सेनाको लौटाया ॥ ( ३—५ )

अनन्तर राजा दुर्योधन सब सेनापतियोंको उनके डेरोंमें पहुंचाकर आप अपने डेरोंमें गये, वहां अपने मन्त्रियोंको बुलाकर विचार करने लगे, वे सब लोग कोई उत्तम पलङ्ग और कोई उत्तम आसनोंपर बैठे, उस समय उनकी शोभा ऐसी बढी जैसे स्वर्गमें देवतोंकी । तब राजा दुर्योधनने बहुत शान्तिके सहित उन धनुषधारियोंसे समयके अनुसार ऐसे वचन कहे ॥ (६—८)

महाराज दुर्योधन बोले, हे बुद्धिमानोंमें श्रेष्ठ राजा लोगो ! आप लोग शीघ्र अपनी अपनी सम्मतिके अनुसार कहिये, कि इस समय हमको कौनसा अवश्य काम करना चाहिये ? (९)

सञ्जय बोले, राजा दुर्योधनके ऐसे वचन सुन सिंहासनोंपर बैठे राजा लोग अनेक प्रकारकी चेष्टा करने लगे, उन युद्धमें प्राण देनेवालोंकी चेष्टा और प्रातःकालके सूर्यके समान राजा दुर्योधन

प्रस्नुतानां पयः षड्भिर्वदनैरपिबत्तदा ॥ १२ ॥
तं प्रभावं समालक्ष्य तस्य बालस्य कृत्तिकाः।
परं विस्मयमापन्ना देव्यो दिव्यवपुर्धराः ॥ १३ ॥
यत्रोत्सृष्टः स भगवान्गङ्गया गिरिमूर्द्धनि।
स शैलकाञ्चनः सर्वः सम्बभौ कुरुसत्तम ॥ १४ ॥
वर्धता चैव गर्भेण पृथिवी तेन रञ्जिता।
अतश्च सर्वे संवृत्ता गिरयः काञ्चनाकराः ॥ १५ ॥
कुमारः सुमहावीर्यः कार्तिकेय इति स्मृतः।
गाङ्गेयः पूर्वमभवन्महायोगबलान्वितः ॥ १६ ॥
शमेन तपसा चैव वीर्येण च समन्वितः।
ववृधेऽतीव राजेन्द्र चन्द्रवत्प्रियदर्शनः ॥ १७ ॥
स तस्मिन्काञ्चने दिव्ये शरस्तम्बे श्रिया वृतः।
स्तूयमानः सदा शेते गन्धर्वैर्मुनिभिस्तथा ॥ १८ ॥
तथैनमन्वनृत्यन्त देवकन्याः सहस्रशः।
दिव्यवादित्रनृत्यज्ञाः स्तुवन्त्यश्चारुदर्शनाः ॥ १९ ॥
अन्वास्ते च नदीदेवं गङ्गा वै सरितां वरा।
दधार पृथिवी चैनं बिभ्रती रूपमुत्तमम् ॥ २० ॥

उन छःहोंका दूध पीने लगे। दिव्य शरीर धारण करनेवाली कृत्तिका देवी उस बालकका प्रभाव देखकर विस्मित होगईं। हे कुरुकुल श्रेष्ठ! जहां पर गङ्गाने उस गर्भको गिराया था, वह पर्वत उत्तम सोनेके समान चमकने लगा, बढते बढ-ते वह तेज सब जगत्‌में फैल गया। इस लिये सब पर्वत भी भरगये और उनमेंसे सोना निकलने लगा॥ (१२—१५)

हे राजेन्द्र! गङ्गापुत्र महायोगी महा बलवान कार्त्तिकेय उसी दिनसे कार्तिकेय नामसे प्रसिद्ध हुए, तब वे अपने शम, तपस्या और वीर्यके बलसे चन्द्रमाके समान बढने लगे। और वैसे ही सुन्दर भी होगये उस ही सरकण्डेके वनमें उनकी स्तुती करनेके लिये गन्धर्व और मुनि आने लगे। सुन्दर रूपवाली सहस्रों गन्धर्व और देवतोंकी कन्या उनके पास आके नाचने गाने और दिव्य बाजे बजाकर उनकी स्तुती करने लगीं। नदियोंमें श्रेष्ठ गङ्गाभी उनके पास आती थी, जबसे पृथ्वीने उन्हें धारण किया था, तबसे पृथ्वीका भी तेज बहुत बढ गया था। अनन्तर बृहस्पतिने उनका जात-

विन्दानुविन्दावावन्त्यौ राजपुत्रौ महारथौ।
कृत्वा त्वसुकरं कर्म गतौ वैवस्वतक्षयम् ॥ १० ॥
सिन्धुराष्ट्रमुखानीह दश राष्ट्राणि यानि ह।
वशे तिष्ठन्ति वीरस्य यः स्थितस्तव शासने ॥ ११ ॥
अक्षौहिणीर्दशैकां च विनिर्जित्य शितैः शरैः।
अर्जुनेन हतो राजन्महावीर्यो जयद्रथः ॥ १२ ॥
तथा दुर्योधनसुतस्तरस्वी युद्धदुर्मदः।
वर्त्तमानः पितुः शास्त्रे सौभद्रेण निपातितः ॥ १३ ॥
तथा दौःशासनिः शूरो बाहुशाली रणोत्कटः।
द्रौपदेयेन सङ्गम्य गमितो यमसादनम् ॥ १४ ॥
किरातानामधिपतिः सागरानूपवासिनाम्।
देवराजस्य धर्मात्मा प्रियो बहुमतः सखा ॥ १५ ॥
भगदत्तो महीपाल क्षत्रधर्मरतः सदा।
धनञ्जयेन विक्रम्य गमितो यमसादनम् ॥ १६ ॥
तथा कौरवदायादो न्यस्तशस्त्रो महायशाः।
हतो भूरिश्रवा राजञ्शूरः सात्यकिना युधि ॥ १७ ॥
श्रुतायुरपि चाम्बष्ठः क्षत्रियाणां धुरन्धरः।

---

अवन्तिकापुरीके राजपुत्र विन्द और अनुविन्द कठिन कर्म करके यमराजके भवनको चले गये॥ सिन्धुराष्ट्रको आदि लेके दश राष्ट्र जिस वीरके आधीन थे और जो सदा आपकी आज्ञामें रहता था, जिसने अपने तीक्ष्ण बाणोंसे ग्यारह अक्षौहिणी सेनाको जीता था उस महावीर जयद्रथको अर्जुनने मार डाला॥ ऐसे ही तेजस्वी युद्धमें मत्त होनेवाले और अपने पिताकी आज्ञामें रहनेवाले दुर्योधनके पुत्रको सुभद्रानन्दन अभिमन्युने मार डाला॥ ( १०—१३ )

ऐसे ही बडे बाहुशाली, रणोत्कट और शूर दुःशासनके पुत्रको द्रौपदीके पुत्रने मार डाला॥ समुद्रके खादर अर्थात् अनूपदेशके किरातोंका स्वामी और देवराज इन्द्रका प्यारा मित्र, सदा क्षत्रियोंके धर्ममें स्थिर रहनेवाला राजा भगदत्त अर्जुनसे युद्ध करके यमराजके स्थानको चला गया॥ ऐसेही कौरवोंका कुशल महायशस्वी शस्त्रहीन और शूर भूरिश्रवाको भी युद्धमें सात्यकीने मार डाला। ( १४—१७ )

क्षत्रियोंमें धुरन्धर, युद्धमें निर्भय होके

जातकर्मादिकास्तत्र क्रियाश्चक्रे बृहस्पतिः ।
वेदश्चैनं चतुर्मूर्तिरुपतस्थे कृताञ्जलिः ॥ २१ ॥
धनुर्वेदश्चतुष्पादः शस्त्रग्रामः ससंग्रहः ।
तत्रैनं समुपातिष्ठत्साक्षाद्वाणी च केवला ॥ २२ ॥
स ददर्श महावीर्यं देवदेवमुमापतिम् ।
शैलपुत्र्यासमासीनं भूतसङ्घशतैर्वृतम् ॥ २३ ॥
निकाया भूतसङ्घानां परमाद्भुतदर्शनाः ।
विकृता विकृताकारा विकृताभरणध्वजाः ॥ २४ ॥
व्याघ्रसिंहर्क्षवदना बिडालमकराननाः ।
वृषदंशमुखाश्चान्ये गजोष्ट्रवदनास्तथा ॥ २५ ॥
उलूकवदनाः केचिद्गृध्रगोमायुदर्शनाः ।
क्रौञ्चपारावतनिभैर्वदनैराङ्कवैरपि ॥ २६ ॥
श्वाविच्छल्यकगोधानामजैडकगवां तथा ।
सदृशानि वपूंष्यन्ये तत्र तत्र व्यधारयन् ॥ २७ ॥
केचिच्छैलाम्बुदप्रख्याश्चक्रोद्यतगदायुधाः ।
केचिदञ्जनपुञ्जाभाः केचिच्छ्वेताचलप्रभाः ॥ २८ ॥
सप्त मातृगणाश्चैव समाजग्मुर्विशाम्पते ।

---

कर्म किया था। चारों वेद चारों उपवेद चरण शस्त्र और संग्रह ग्रन्थोंके सहित धनुर्वेद हाथ जोडकर उनके पास आये इसी प्रकार सरस्वती भी उनके पास पहुंच गई। (१६—२२)

समान मुंह, किसीका भेडिये, किसीका मगर, किसीका हाथी, किसीका ऊंट, किसीका उल्लू, किसीका गिद्ध, किसीका कुत्ते और किसीका कबूतरके समान हुआ था। (२३—२८)

यथैवाहं तथैव त्वं को वामाश्वासयिष्यति ।
ममैव ह्यपराधेन कुलमग्र्यं विनाशितम् ॥ ४४ ॥ [ ४२० ]

इति श्रीमहाभारते शतसाहस्त्र्यां संहितायां वैयासिक्यां स्त्रीपर्वणि जलप्रदानिकपर्वणि
पृथापुत्रदर्शने पचदशोऽध्यायः ॥ १५ ॥

समाप्तं जलप्रदानिकं पर्व ।

अथ स्त्रीविलापपर्व ।

वैशम्पायन उवाच-एवमुक्त्वा तु गान्धारी कुरूणामवकर्तनम् ।
अपश्यत्तत्र तिष्ठन्ती सर्वं दिव्येन चक्षुषा ॥ १ ॥
पतिव्रता महाभागा समानव्रतचारिणी ।
उग्रेण तपसा युक्ता सततं सत्यवादिनी ॥ २ ॥
वरदानेन कृष्णस्य महर्षेः पुण्यकर्मणः ।
दिव्यज्ञानबलोपेता विविधं पर्यदेवयत् ॥ ३ ॥
ददर्श सा बुद्धिमती दूरादपि यथान्तिके ।
रणाजिरं नृवीराणामद्भुतं लोमहर्षणम् ॥ ४ ॥
अस्थिकेशवसाकीर्णं शोणितौघपरिप्लुतम् ।
शरीरैर्बहुसाहस्रैर्विनिकीर्णं समन्ततः ॥ ५ ॥
गजाश्वरथयोधानामावृतं रुधिराविलैः ।

मुझमें कोई भेद नहीं है और अब तुम्हें हमें समझाने और कौन आवेगा । मेरे ही अपराधसे इस कुलका नाश हुआ । (४०-४४) [ ४२० ]

स्त्री पर्वमें पदरह अध्याय समाप्त । [ १५ ]
जलप्रदानिकपर्व समाप्त ।

( २ ) स्त्री विलाप पर्व ।

स्त्रीपर्वमें सोलह अध्याय ।

श्रीवैशम्पायन मुनि बोले, हे राजा जनमेजय ! ऐसा कहके गान्धारी चुप हो गई, फिर उसने वहीं बैठे बैठे अपनी ज्ञान दृष्टिसे उस युद्धभूमिको देखा, सदा सत्य बोलनेवाली पतिव्रता महाभाग्यवती तपस्विनी धर्मात्मा महामुनि व्यासकी कृपासे उस युद्ध भूमिको देखा। बुद्धिमती गान्धारीने उस वीरोंको युद्धभूमिको दूरसे इस प्रकार देखा जैसे कोई अपने घरकी वस्तुको देखता है, उस भयानक युद्धभूमिको देखकर वीरोंके भी रोये खडे होते थे, उस युद्धभूमिमें हड्डी, बाल, चर्वी, रुधिर, और शरीर भरे हुए थे, उस समय उस युद्धभूमिमें मरे हुए हाथी, घोडे, रथ और योद्धा रुधिरसे भरे हुए दिखाई देते थे, किसी-

समर्थं च तमैश्वर्ये महामतिरमन्यत ॥ ४८ ॥
ततो मुहूर्तं स ध्यात्वा देवानां श्रेयसि स्थितः।
सैनापत्यं ददौ तस्मै सर्वभूतेषु भारत ॥ ४९ ॥
सर्वदेवनिकायानां ये राजानः परिश्रुताः।
तान्सर्वान्व्यादिदेशास्मै सर्वभूतपितामहः ॥ ५० ॥
ततः कुमारमादाय देवा ब्रह्मपुरोगमाः।
अभिषेकार्थमाजग्मुः शैलेन्द्रसहितास्ततः ॥ ५१ ॥
पुण्यां हैमवतीं देवीं सरिच्छ्रेष्ठां सरस्वतीम्।
समन्तपञ्चके या वै त्रिषु लोकेषु विश्रुता ॥ ५२ ॥
तत्र तीरे सरस्वत्याः पुण्ये सर्वगुणान्विते।
निषेदुर्देवगंधर्वाः सर्वे सम्पूर्णमानसाः ॥ ५३ ॥ [२५६९]

इति श्रीमहा० शल्यपर्वांतर्गतगदापर्वणि बलदेवतीर्थ० सारस्वतो० कुमाराभिषेकोपक्रमे चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

वैशंपायन उवाच-ततोऽभिषेकसम्भारान् सर्वान् सम्भृत्य शास्त्रतः।
बृहस्पतिः समिद्धेऽग्नौ जुहावाग्निं यथाविधि ॥ १ ॥
ततो हिमवता दत्ते मणिप्रवरशोभिते।
दिव्यरत्नाचिते पुण्ये निषण्णं परमासने ॥ २ ॥
सर्वमङ्गलसंभारैर्विधिमन्त्रपुरस्कृतम्।

सब ऐश्वर्य भी सब पा चुके हैं। थोडे समयतक विचार करके ब्रह्माने उन्हे सब ऐश्वर्य भोगनेमें समर्थ समझा और देवतोंका सेनापति बना दिया, फिर देवतोंके सब राजोंको बुलाकर ब्रह्माने यह आज्ञा सुना दी। (४५-५०)

अनन्तर हिमाचलके सहित ब्रह्मादिक देवता कार्त्तिकेयको सङ्ग लेकर इनका अभिषेक करनेके लिये सब नदियोंमें श्रेष्ठ पवित्र सरस्वती देवीके तटपर तीनों लोक विख्यात समंतपञ्चक नामक तीर्थ-पर आये, वहां पवित्र सब गुणोंसे भरे सरस्वतीके तटपर सब देवता प्रसन्न होकर बैठे। (५१—५३) [२५६९]

शल्यपर्वमें चवालिस अध्याय समाप्त।

शल्यपर्वमें पैंतालीस अध्याय।

श्रीवैशम्पायन मुनि बोले, हे राजन्! जनमेजय! तब बृहस्पति अभिषेककी सब सामग्री इकट्ठी करके शास्त्रमें लिखी विधिके अनुसार होम करने लगे। (१)

अनन्तर हिमाचलके दिये उत्तम मणिजटित सिंहासनपर कार्त्तिकेयको

आभिषेचनिकं द्रव्यं गृहीत्वा देवतागणाः ॥ ३ ॥
इन्द्राविष्णू महावीर्यौ सूर्याचन्द्रमसौ तथा ।
धाता चैव विधाता च तथा चैवानिलानलौ ॥ ४ ॥
पूष्णा भगेनार्यम्णा च अंशेन च विवस्वता ।
रुद्रश्च सहितो धीमान्मित्रेण वरुणेन च ॥ ५ ॥
रुद्रैर्वसुभिरादित्यैरश्विभ्यां च वृतः प्रभुः ।
विश्वेदेवैर्मरुद्भिश्च साध्यैश्च पितृभिः सह ॥ ६ ॥
गन्धर्वैरप्सरोभिश्च यक्षराक्षसपन्नगैः ।
देवर्षिभिरसंख्यातैस्तथा ब्रह्मर्षिभिस्तथा ॥ ७ ॥
वैखानसैर्वालखिल्यैर्वाय्वाहारैर्मरीचिपैः ।
भृगुभिश्चाङ्गिरोभिश्च यतिभिश्च महात्मभिः ॥ ८ ॥
सर्पैर्विद्याधरैः पुण्यैर्योगसिद्धैस्तथावृतः ।
पितामहः पुलस्त्यश्च पुलहश्च महातपाः ॥ ९ ॥
अङ्गिराः कश्यपोऽत्रिश्च मरीचिर्भृगुरेव च ।
क्रतुर्हरः प्रचेताश्च मनुर्दक्षस्तथैव च ॥ १० ॥
ऋतवश्च ग्रहाश्चैव ज्योतींषि च विशाम्पते ।
मूर्तिमत्यश्च सरितो वेदाश्चैव सनातनाः ॥ ११ ॥
समुद्राश्च ह्रदाश्चैव तीर्थानि विविधानि च ।
पृथिवी द्यौर्दिशश्चैव पादपाश्च जनाधिप ॥ १२ ॥
अदितिर्देवमाता च ह्रीः श्रीः स्वाहा सरस्वती ।

श्रान्तानां चाप्यनाथानां नासीत्काचन चेतना ।
पाञ्चालकुरुयोषाणां कृपणं तदभून्महत्　　॥ १५ ॥
दुःखोपहतचित्ताभिः समन्तादनुनादितम् ।
दृष्ट्वाऽऽयोधनमत्युग्रं धर्मज्ञा सुबलात्मजा　　॥ १६ ॥
ततः सा पुण्डरीकाक्षमामन्त्र्य पुरुषोत्तमम् ।
कुरूणां वैशसं दृष्ट्वा इदं वचनमब्रवीत्　　॥ १७ ॥
पश्यैताः पुण्डरीकाक्ष स्नुषा मे निहतेश्वराः ।
प्रकीर्णकेशाः क्रोशन्तीः कुररीरिव माधव　　॥ १८ ॥
अमूस्त्वभिसमागम्य स्मरंत्यो भर्तृजान् गुणान् ।
पृथगेवाभिधावंत्यः पुत्रान्भ्रातॄन्पितॄन्पतीन्　　॥ १९ ॥
वीरसूभिर्महाराज हतपुत्राभिरावृतम् ।
क्वचिच्च वीरपत्नीभिर्हतवीराभिरावृतम्　　॥ २० ॥
शोभितं पुरुषव्याघ्रैः कर्णभीष्माभिमन्युभिः ।
द्रोणद्रुपदशल्यैश्च ज्वलद्भिरिव पावकैः　　॥ २१ ॥
काञ्चनैः कवचैर्निष्कैर्मणिभिश्च महात्मनाम् ।
अङ्गदैर्हस्तकेयूरैः स्रग्भिश्च समलंकृतम्　　॥ २२ ॥
वीरबाहुविसृष्टाभिः शक्तिभिः परिघैरपि ।

---

था, वे दुःखसे व्याकुल होकर पृथ्वीमें लोटने लगीं । (११—१४)

उस समय नाथ रहित, रोती हुई, चेतना रहित, दुःखसे व्याकुल, दुखित पांचाल और कौरवोंकी स्त्रियोंके शब्दसे वह युद्ध भूमि पूरित हो गई। उस युद्ध भूमिको देखकर धर्म जाननेवाली सुवल पुत्री गान्धारी महात्मा श्रीकृष्णको बुलाकर ऐसे वचन बोलीं। हे कमल नेत्र कृष्ण ! हे माधव ! देखो हमारे बेटोंकी स्त्री विधवा होकर बाल खोले कुररीके समान रो रही हैं, ये अपने अपने पति-योंके गुण स्मरण करके रो रही हैं, ये अपने अपने पति पुत्र और पिताको ढूंढ रही हैं। ये युद्धभूमिमें अनेक वीर माता और अनेक वीरोंकी स्त्री अपने अपने पुत्र और पतियोंको देख रो रही हैं। ( १५—२० )

ये देखो पुरुषसिंह कर्ण, भीष्म, अभिमन्यु, द्रोणाचार्य, महाराज द्रुपद और महाराज शल्य आदि वीर, जलती हुई अग्निके समान मरे हुवे पडे हैं। यह युद्धभूमिमें सोनेके कवच, निष्कमणि, वीरोंके बाजूबन्द, अङ्गूठी, माला, वीरों-

विपन्नास्तेऽद्य वसुधां विवृतामधिशेरते ॥ ३१ ॥
बन्दिभिः सततं काले स्तुवद्भिरभिनन्दिताः ।
शिवानामशिवा घोराः शृण्वन्ति विविधा गिरः॥३२॥
ये पुरा शेरते वीराः शयनेषु यशस्विनः ।
चन्दनागुरुदिग्धाङ्गास्तेऽद्य पांसुषु शेरते ॥ ३३ ॥
तेषामाभरणान्येते गृध्रगोमायुवायसाः ।
आक्षिपन्ति शिवा घोरा विनदन्त्यः पुनः पुनः ॥३४॥
बाणान्विनिशितान्पीतान्निस्त्रिंशान् विमला गदाः ।
युद्धाभिमानिनः सर्वे जीवन्त इव बिभ्रति ॥ ३५ ॥
सुरूपवर्णा बहवः क्रव्यादैरवघट्टिताः ।
ऋषभप्रतिरूपाश्च शेरते हरितस्रजः ॥ ३६ ॥
अपरे पुनरालिङ्ग्य गदाः परिघबाहवः ।
शेरतेऽभिमुखाः शूरा दयिता इव योषितः ॥ ३७ ॥
बिभ्रतः कवचान्यन्ये विमलान्यायुधानि च ।
न धर्षयन्ति क्रव्यादा जीवन्तीति जनार्दन ॥ ३८ ॥
क्रव्यादैः कृष्यमाणानामपरेषां महात्मनाम् ।
शातकौम्भ्यः स्रजश्चित्रा विप्रकीर्णाः समन्ततः ॥३९॥

थे सो आज पृथ्वीमें मुह फैलाये पडे हैं, पहिले जो सदा भाटोंके मुखसे स्तुति सुनकर प्रसन्न होते थे, वे आज अनेक प्रकारके भयानक सियारियोंके शब्द सुन रहे हैं। जो पहिले यशस्वी वीर शरीरमें चन्दन और अगर लगाकर पलङ्गपर सोते थे, सो आज धूलमें लोटते पृथ्वीमें पडे हैं। उनके भूषणोंको घोर शब्द करते युद्धमें सियार और कौवे इधर उधर खींच रहे हैं, ये अभिमानी वीर अब तक भी तेजवान खड्ग और निर्मल गदा इस प्रकार ले रहे हैं जैसे जीते हुए लिये रहते थे, अनेक सुन्दर वीरोंके हाथोंको मांस खानेवाले जन्तु इधर उधर लिये घूमते हैं, इस समय भी उनका तेज सूर्यके समान दिखाता है, कोई परिघके समान सुन्दर हाथवाले वीर गदाको छातीसे लगाये युद्धकी ओर मुख किये इस प्रकार सोते हैं, जैसे अपनी प्यारी स्त्रीके सङ्ग सोते थे। किसी वीर को कवच, विमल शस्त्र धारण किये देख और उन्हें जीता जान कोई मांस खानेवाला जन्तु उनके पास नहीं जाने सक्ता। किसी किसी महात्मा

निहताः सहिताश्चान्यैस्तच्च नास्त्यप्रियं मम ॥ १८ ॥
किं तु कर्माकरोद्भीमो वासुदेवस्य पश्यतः ।
दुर्योधनं समाहूय गदायुद्धे महामनाः ॥ १९ ॥
शिक्षयाऽभ्यधिकं ज्ञात्वा चरन्तं बहुधा रणे ।
अधो नाभ्याः प्रहृतवांस्तन्मे कोपमवर्धयत् ॥ २० ॥
कथं नु धर्मं धर्मज्ञैः समुद्दिष्टं महात्मभिः ।
त्यजेयुराहवे शूराः प्राणहेतोः कथञ्चन ॥ २१ ॥ [ ३७६ ]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां स्त्रीपर्वणि जलप्रदानिकपर्वणि गान्धारीसात्वनायां चतुर्दशोऽध्यायः ॥ १४ ॥

वैशम्पायन उवाच–तच्छ्रुत्वा वचनं तस्या भीमसेनोऽथ भीतवत् ।
गान्धारीं प्रत्युवाचेदं वचः सानुनयं तदा ॥ १ ॥
अधर्मो यदि वा धर्मस्त्रासात्तत्र मया कृतः ।
आत्मानं त्रातुकामेन तन्मे त्वं क्षन्तुमर्हसि ॥ २ ॥
न हि युद्धेन पुत्रस्ते धर्म्येण स महाबलः ।
न शक्यः केनचिद्धन्तुमतो विषममाचरम् ॥ ३ ॥
अधर्मेण जितः पूर्वं तेन चापि युधिष्ठिरः ।
निकृताश्च सदैव स्म ततो विषममाचरम् ॥ ४ ॥

सेनने दुर्योधनको गदायुद्धमें बुलाकर अनेक प्रकारसे युद्ध करते और अपनेसे अधिक विद्वान देखके उनकी नाभी के नीचे गदा मारी और श्रीकृष्ण भी उस अधर्मको देखते रहे, इसहीको स्मरण करके मुझे बहुत क्रोध आता है और यह भी शोच आता है, कि महात्मा धर्म जाननेवाले शूरवीर केवल प्राणके भयसे धर्मको कैसे छोड देते हैं।(१४-२१)

स्त्रीपर्वमें चौदह अध्याय समाप्त । [ ३७६ ]

स्त्रीपर्वमें पदरह अध्याय ।

श्रीवैशम्पायन मुनि बोले, हे राजन् जनमेजय ! गान्धारीके ऐसे वचन सुनकर डरते हुए भीमसेन उनके पास गये और कहने लगे कि मैंने यह कर्म चाहे धर्मसे किया, चाहे अधर्मसे किया, केवल दुर्योधनके डरसे अपनी रक्षा करनेके लिये ऐसा किया है; सो तुम क्षमा करो। दुर्योधन महाबलवान था, उसे युद्धमें धर्मसे कोई नहीं जीत सक्ता था, इस ही लिये यह अधर्म मैंने किया दुर्योधनने पहिले महाराज युधिष्ठिरको अधर्महीसे जीता था, और हम लोगोंको अनेक दुःख दिये थे, इसी लिये मैंने

खड्गैश्च विविधैस्तीक्ष्णैः सशरैश्च शरासनैः ॥ २३ ॥
क्रव्यादसङ्घैर्मुदितैस्तिष्ठद्भिः सहितैः क्वचित्।
क्वचिदाक्रीडमानैश्च शयानैश्चापरैः क्वचित् ॥ २४ ॥
एतदेवंविधं वीर सम्पश्यायोधनं विभो।
पश्यमाना हि दह्यामि शोकेनाहं जनार्दन ॥ २५ ॥
पञ्चालानां कुरूणां च विनाशे मधुसूदन।
पञ्चानामपि भूतानामहं वधमचिन्तयम् ॥ २६ ॥
तान्सुपर्णाश्च गृध्राश्च कर्षयंत्यसृगुक्षिताः।
विगृह्य चरणैर्गृध्रा भक्षयन्ति सहस्रशः ॥ २७ ॥
जयद्रथस्य कर्णस्य तथैव द्रोणभीष्मयोः।
अभिमन्योर्विनाशं च कश्चिन्तयितुमर्हति ॥ २८ ॥
अवध्यकल्पान्निहतान् गतसत्वानचेतसः।
गृध्रकङ्कवटश्येनश्वसृगालादनीकृतान् ॥ २९ ॥
अमर्षवशमापन्नान् दुर्योधनवशे स्थितान्।
पश्येमान्पुरुषव्याघ्रान् संशान्तान्पावकानिव ॥ ३० ॥
शयाना ये पुरा सर्वे मृदूनि शयनानि च।

के हाथसे टूटे हुये सांगी, परिघ, खड्ग अनेक प्रकारके बाणवान धनुष पडे हैं। (२१—२३)

कहीं मांस खानेवाले पक्षी प्रसन्न होकर बैठे है, कहीं खेल रहे हैं और कहीं सुखसे सो रहे हैं। हे वीर! हे भगवन्! हे जनार्दन! उनको देखकर मेरा हृदय शोकसे जला जाता है। इस पाञ्चाल और कुरुकुलके नाशसे हमें ऐसा ज्ञान पडता है, कि सब जगत्का नाश हो गया। देखो इन वीरोंके रुधिरमें भीगे शरीरोंको सहस्रों गिद्ध आदि पक्षी खा रहे हैं, कहीं कोई गिद्ध किसी वीरका पेट खींचे लिये जाते हैं।(२४—२७)

जयद्रथ, कर्ण, भीष्म और अभिमन्यु आदि वीरोंके मृत्यु देखकर किसे शोच न होगा। जिनको कोई नहीं मार सक्ता था, आज उनको चैतन्यरहित निरख-कर, मनुष्यके समान मरा हुआ देखकर कौवे, सियार और गिद्ध खा रहे हैं। ये सब वीर क्रोधके वशमें होकर दुर्योधनकी आज्ञासे युद्धमें मारे गये, ये पुरुषसिंह वीर इस समय जलती हुई अग्निके समान पृथ्वीमें पडे है। (२८-३०)

जो पहिले कोमल बिछौनोंपर सोते

संहृते परमास्त्रेऽस्मिन्सर्वानस्मानशेषतः।
पापकर्मा ध्रुवं द्रौणिः प्रधक्ष्यत्यस्त्रतेजसा ॥ ३ ॥
यदत्र हितमस्माकं लोकानां चैव सर्वथा।
भवन्तौ देवसङ्काशौ तथा संमन्तुमर्हतः ॥ ४ ॥
इत्युक्त्वा सञ्जहारास्त्रं पुनरेव धनञ्जयः।
संहारो दुष्करस्तस्य देवैरपि हि संयुगे ॥ ५ ॥
विसृष्टस्य रणे तस्य परमास्त्रस्य संग्रहे।
अशक्तः पाण्डवादन्यः साक्षादपि शतक्रतुः ॥ ६ ॥
ब्रह्मतेजोद्भवं तद्धि विसृष्टमकृतात्मना।
न शक्यमावर्त्तयितुं ब्रह्मचारिव्रतादृते ॥ ७ ॥
अचीर्णब्रम्हचर्यो यः सृष्ट्वाऽऽवर्त्तयते पुनः।
तदस्त्रं सानुबन्धस्य मूर्धानं तस्य कृन्तति ॥ ८ ॥
ब्रह्मचारी व्रती चापि दुरवापमवाप्य तत्।
परमव्यसनार्तोऽपि नार्जुनोऽस्त्रं व्यमुञ्चत ॥ ९ ॥
सत्यव्रतधरः शूरो ब्रह्मचारी च पाण्डवः।
गुरुवर्ती च तेनास्त्रं सञ्जहारार्जुनः पुनः ॥ १० ॥

छोडा कि, इसके तेजसे अश्वत्थामाके अस्त्रका तेज नष्ट होय, अब हम अस्त्रको लौटा लेयं, तो पापी अश्वत्थामा अपने अस्त्रके तेजसे निश्चय ही हम सबको भस्म कर देगा, इसलिये इस समय हमारे और जगत्के कल्याणके लिये उचित बात हमसे कहिए सो ही हम करें, क्यों कि आप दोनों देवतोंके समान ऋषी हैं। ऐसा कहकर अर्जुनने अपने अस्त्रको लौटा लिया। (१-४)

हे राजन्! उस अस्त्रका लौटाना बडा ही कठिन था, अर्जुनके शिवाय साक्षात् इन्द्र भी उसे नहीं लौटा सकते थे; वह ब्रह्माके तेजसे बना था, इस लिये छोडनेके पश्चात् ब्रह्मचारीके शिवाय कोई पापी उसे लौटा नहीं सक्ता, जो विना कार्य किये उस अस्त्रको छोडे और फिर लौटानेकी इच्छा करे, तो वह अस्त्र उसहीका शिर काट देता था। (५-८)

अर्जुन ब्रह्मचारी और व्रती होकर भी घोर आपत्तिमें पडनेसे भी उस घोर शस्त्रको कभी नहीं छोडते थे, ये व्रतको पालनेवाले वीर और ब्रह्मचारी तथा गुरुकी सेवा करनेवाले थे, इस लिये इस अस्त्रको लौटा सके। अनन्तर अश्व-

मर्मभेदिभिरत्युग्रैर्बाणैरग्निशिखोपमैः ।
स्मयन्नभ्यहनद् द्रौणिः पाण्ड्यमाचार्यसत्तमः ॥ २१ ॥
ततोऽपरान्सुतीक्ष्णाग्रान्नाराचान्मर्मभेदिनः ।
गत्या दशम्या संयुक्तानश्वत्थामाप्यवासृजत् ॥ २२ ॥
ताञ्शरानच्छिनत्पाण्ड्यो नवभिर्निशितैः शरैः ।
चतुर्भिरर्दयच्चाश्वानाशु ते व्यसवोऽभवन् ॥ २३ ॥
अथ द्रोणसुतस्येषूंस्तांश्छित्वा निशितैः शरैः ।
धनुर्ज्यां विततां पाण्ड्यश्चिच्छेदादित्यतेजसः ॥ २४ ॥
दिव्यं धनुरथाधिज्यं कृत्वा द्रौणिरमित्रहा ।
प्रेक्ष्य चाशु रथे युक्तान्नरैरन्यान्हयोत्तमान् ॥ २५ ॥
ततः शरसहस्राणि प्रेषयामास वै द्विजः ।
इषुसम्बाधमाकाशमकरोद्दिश एव च ॥ २६ ॥
ततस्तानस्यतः सर्वान्द्रौणेर्बाणान्महात्मनः ।
जानानोऽप्यक्षयान्पाण्ड्यो शातयत्पुरुषर्षभः ॥ २७ ॥
प्रयुक्तांस्तान्प्रयत्नेन च्छित्त्वा द्रौणेरिषूनरिः ।
चक्ररक्षौ रणे तस्य प्राणुदन्निशितैः शरैः ॥ २८ ॥

---

शरीरमें मारा ॥ अनन्तर पढाने वालोंमें श्रेष्ठ अश्वत्थामाने हंसकर मलयध्वजकी ओर मर्म काटनेवाले आगकी ज्वालाके समान तेज बाण चलाये फिर अश्वत्थामाने बहुत तेज धारावाले अनेक बाण दशवी गतिकी रीतिसे राजा मलयध्वजकी ओर चलाये ॥ (१९–२२)

तब पांड्यदेशके राजा मलयध्वजने बहुत शीघ्रतासे उन बाणोंको अपने नौ बाणोंसे काट दिया। और चार बाणोंसे अश्वत्थामाके घोडोंको मार डाला। फिर सूर्यके समान तेजस्वी अश्वत्थामाके बाणोंको काट कर अपने तेज बाणोंसे उनके सारथीको मार कर धनुष रोदेको काट दिया॥ फिर जब शत्रुनाशन अश्वत्थामाने अपने रथको दूसरे घोडे जुते हुए देखे तब दृढ धनुष लेकर फिर सहस्रों बाण मलयध्वजकी ओर चलाये उन बाणोंसे सब आकाश और दसों दिशाए पूरित हो गयीं ॥ (२३–२६)

अनन्तर महात्मा द्रोणपुत्र अश्वत्थामाके बाणोंका नाश नहीं हो सकता ऐसा जान कर भी राजा मलयध्वज अपने बाणोंसे उनके बाणोंको काटने लगे॥ बहुत यत्न करके राजा मलयध्वजने द्रोणपुत्र अश्वत्थामाके सब बाणोंको काट

अथारेर्लाघवं दृष्ट्वा मण्डलीकृतकार्मुकः ।
प्रास्य द्रोणसुतो बाणान्वृष्टिं पूषानुजो यथा ॥ २९ ॥
अष्टावष्टगवान्यूहुः शकटानि यदायुधम् ।
अह्नस्तदष्टभागेन द्रौणिश्चिक्षेप मारिष ॥ ३० ॥
तमन्तकमिव क्रुद्धमन्तकस्यान्तकोपमम् ।
ये ये ददृशिरे तत्र विसंज्ञाः प्रायशोऽभवन् ॥ ३१ ॥
पर्जन्य इव घर्मान्ते वृष्ट्या साद्रिद्रुमां महीम् ।
आचार्यपुत्रस्तां सेनां बाणवृष्ट्या व्यवीवृषत् ॥ ३२ ॥
द्रौणिपर्जन्यमुक्तां तां बाणवृष्टिं सुदुःसहाम् ।
वायव्यास्त्रेण संक्षिप्य मुदा पाण्ड्यानिलोऽनुदत् ॥ ३३ ॥
तस्य नानदतः केतुं चन्दनागुरुरूषितम् ।
मलयप्रतिमं द्रौणिश्छित्वाश्वांश्चतुरोऽहनत ॥ ३४ ॥
सूतमेकेषुणा हत्वा महाजलदनिःस्वनम् ।
धनुश्छित्वार्धचन्द्रेण तिलशो व्यधमद्रथम् ॥ ३५ ॥
अस्त्रैरस्त्राणि संवार्य छित्त्वा सर्वायुधानि च ।

दिया। फिर अश्वत्थामाके पहियोंकी रक्षा करनेवालोंको अपने तेज बाणोंसे मार डाला॥ अपने शत्रुकी ऐसी शीघ्रता देखकर अश्वत्थामाने अपने धनुष खींचकर इस प्रकार वाण वर्षाये जैसे मेघ जल वर्षाते है। आठ बैलों वाले आठ छकडे भरे हुए वाण अश्वत्थामाने आधे पहरमें चलाये उस समय अश्वत्थामाका शरीर महाकालके समान हो गया था। उनकी चेष्टा देखकर वीरोंको मूर्च्छा आती थी॥ (२७-३१)

जैसे वर्षाकालमें मेघ अपनी जलधाराओंसे पर्वत और वृक्षोंके सहित पृथ्वी को भिगो देता है, तैसे ही अश्वत्थामाने अपने बाणोंकी वर्षासे उस सब सेनाको पीडित कर दिया॥ अश्वत्थामा रूपी मेघसे छुटी हुई उस बाणवर्षाको मलयध्वज रूपी वायुने अपने वायव्य अस्त्रके वेगसे नष्ट कर दिया॥ अश्वत्थामाने चन्दन और अगर लगी हुई राजा मलयध्वजकी मलयके समान ध्वजाको काटकर गिरा दिया फिर उसके चारों घोडोंको मार डाला॥ फिर एक बाणसे सारथीको मारा और बडे मेघके समान शब्दवाले रथको तिलके समान काट दिया फिर राजा मलयध्वजके धनुषको काट दिया॥ (३२-३५)

अश्वत्थामाने अपने शस्त्रोंसे राजा

द्रौणिरप्यथ सम्प्रेक्ष्य तावृषी पुरतः स्थितौ ।
न शशाक पुनर्घोरमस्त्रं संहर्तुमोजसा ॥ ११ ॥
अशक्तः प्रतिसंहारे परमास्त्रस्य संयुगे ।
द्रौणिर्दीनमना राजन् द्वैपायनमभाषत ॥ १२ ॥
उत्तमव्यसनार्त्तेन प्राणत्राणमभीप्सुना ।
मयैतदस्त्रमुत्सृष्टं भीमसेनभयान्मुने ॥ १३ ॥
अधर्मश्च कृतोऽनेन धार्तराष्ट्रं जिघांसता ।
मिथ्याचारेण भगवन् भीमसेनेन संयुगे ॥ १४ ॥
अतः सृष्टमिदं ब्रह्मन्मयाऽस्त्रमकृतात्मना ।
तस्य भूयोऽद्य संहारं कर्तुं नाहमिहोत्सहे ॥ १५ ॥
निसृष्टं हि मया दिव्यमेतदस्त्रं दुरासदम् ।
अपाण्डवायेति मुने वह्नितेजोऽनुमन्त्र्य वै ॥ १६ ॥
तदिदं पाण्डवेयानामन्तकायाभिसंहितम् ।
अद्य पाण्डुसुतान्सर्वान् जीवितादभ्रंशयिष्यति॥ १७ ॥
कृतं पापमिदं ब्रह्मन् रोषाविष्टेन चेतसा ।
वधमाशास्य पार्थानां मयाऽस्त्रं सृजता रणे ॥ १८ ॥
व्यास उवाच— अस्त्रं ब्रह्मशिरस्तात विद्वान्पार्थो धनञ्जयः ।
उत्सृष्टवान् रोषेण न नाशाय तवाहवे ॥ १९ ॥

परिवार्य व्यतिष्ठन्त पाण्डवाः सहकेशवाः ॥ २५ ॥
ततो राज्ञाऽभ्यनुज्ञातो भीमसेनो महाबलः ।
प्रददौ तं मणिं दिव्यं वचनं चेदमब्रवीत् ॥ २६ ॥
अयं भद्रे तव मणिः पुत्रहन्तुर्जितः स ते ।
उत्तिष्ठ शोकमुत्सृज्य क्षात्रधर्ममनुस्मर ॥ २७ ॥
प्रयाणे वासुदेवस्य शमार्थमसिते क्षणे ।
यान्युक्तानि त्वया भीरु वाक्यानि मधुघातिनि॥२८॥
नैव मे पतयः सन्ति न पुत्रा भ्रातरो न च ।
न वै त्वमिति गोविन्द शममिच्छति राजनि ॥ २९ ॥
उक्तवत्यसि तीव्राणि वाक्यानि पुरुषोत्तमम् ।
क्षत्रधर्मानुरूपाणि तानि संस्मर्तुमर्हसि ॥ ३० ॥
हतो दुर्योधनः पापो राज्यस्य परिपन्थिकः ।
दुःशासनस्य रुधिरं पीतं विस्फुरतो मया ॥ ३१ ॥
वैरस्य गतमानृण्यं न स्म वाच्या विवक्षताम् ।
जित्वा मुक्तो द्रोणपुत्रो ब्राह्मण्याद्गौरवेण च ॥ ३२ ॥
यशोऽस्य पतितं देवि शरीरं त्ववशेषितम् ।

संहृते परमास्त्रेऽस्मिन्सर्वानस्मानशेषतः।
पापकर्मा ध्रुवं द्रौणिः प्रधक्ष्यत्यस्त्रतेजसा ॥ ३ ॥
यदत्र हितमस्माकं लोकानां चैव सर्वथा।
भवन्तौ देवसङ्काशौ तथा संमन्तुमर्हतः ॥ ४ ॥
इत्युक्त्वा सञ्जहारास्त्रं पुनरेव धनञ्जयः।
संहारो दुष्करस्तस्य देवैरपि हि संयुगे ॥ ५ ॥
विसृष्टस्य रणे तस्य परमास्त्रस्य संग्रहे।
अशक्तः पाण्डवादन्यः साक्षादपि शतक्रतुः ॥ ६ ॥
ब्रह्मतेजोद्भवं तद्धि विसृष्टमकृतात्मना।
न शक्यमावर्त्तयितुं ब्रह्मचारिव्रतादृते ॥ ७ ॥
अचीर्णब्रम्हचर्यो यः सृष्ट्वाऽऽवर्त्तयते पुनः।
तदस्त्रं सानुबन्धस्य मूर्धानं तस्य कृन्तति ॥ ८ ॥
ब्रह्मचारी व्रती चापि दुरवापमवाप्य तत्।
परमव्यसनार्तोऽपि नार्जुनोऽस्त्रं व्यमुञ्चत ॥ ९ ॥
सत्यव्रतधरः शूरो ब्रह्मचारी च पाण्डवः।
गुरुवर्ती च तेनास्त्रं सञ्जहारार्जुनः पुनः ॥ १० ॥

छोडा कि, इसके तेजसे अश्वत्थामाके अस्त्रका तेज नष्ट होय, अब हम अस्त्रको लौटा लेयं, तो पापी अश्वत्थामा अपने अस्त्रके तेजसे निश्चय ही हम सबको भस्म कर देगा, इसलिये इस समय हमारे और जगत्के कल्याणके लिये उचित बात हमसे कहिए सो ही हम करें, क्यों कि आप दोनों देवतोंके समान ऋषी हैं। ऐसा कहकर अर्जुनने अपने अस्त्रको लौटा लिया। (१-४)

हे राजन्! उस अस्त्रका लौटाना बडा ही कठिन था, अर्जुनके शिवाय साक्षात् इन्द्र भी उसे नहीं लौटा सकते थे; वह ब्रह्माके तेजसे बना था, इस लिये छोडनेके पश्चात् ब्रह्मचारीके शिवाय कोई पापी उसे लौटा नहीं सक्ता, जो विना कार्य किये उस अस्त्रको छोडे और फिर लौटानेकी इच्छा करे, तो वह अस्त्र उसहीका शिर काट देता था। (५—८)

अर्जुन ब्रह्मचारी और व्रती होकर भी घोर आपत्तिमें पडनेसे भी उस घोर शस्त्रको कभी नहीं छोडते थे, ये व्रतको पालनेवाले वीर और ब्रह्मचारी तथा गुरुकी सेवा करनेवाले थे, इस लिये इस अस्त्रको लौटा सके। अनन्तर अश्व

वियोजितश्च मणिना भ्रंशितश्चायुधं भुवि ॥ ३३ ॥

द्रौपद्युवाच— केवलानृण्यमाप्ताऽस्मि गुरुपुत्रो गुरुर्मम ।
शिरस्येतं मणिं राजा प्रतिबध्नातु भारत ॥ ३४ ॥
तं गृहीत्वा ततो राजा शिरस्येवाकरोत्तदा ।
गुरोरुच्छिष्टमित्येव द्रौपद्या वचनादपि ॥ ३५ ॥
ततो दिव्यं मणिवरं शिरसा धारयन्प्रभुः ।
शुशुभे स तदा राजा सचंद्र इव पर्वतः ॥ ३६ ॥
उत्तस्थौ पुत्रशोकार्त्ता ततः कृष्णा मनस्विनी ।
कृष्णं चापि महाबाहुः परिपप्रच्छ धर्मराट् ॥ ३७ ॥ [७५१]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां सौप्तिकपर्वान्तर्गतऐषीके पर्वणि द्रौपदीसांत्वनाया षोडशोऽध्यायः ॥ १६ ॥

वैशम्पायन उवाच— हतेषु सर्वसैन्येषु सौप्तिके तै रथैस्त्रिभिः ।
शोचन्युधिष्ठिरो राजा दाशार्हमिदमब्रवीत् ॥ १ ॥
कथं नु कृष्ण पापेन क्षुद्रेणाकृतकर्मणा ।
द्रौणिना निहताः सर्वे मम पुत्रा महारथाः ॥ २ ॥
तथा कृतास्त्रविक्रान्ता सहस्रशतयोधिनः ।
द्रुपदस्यात्मजाश्चैव द्रोणपुत्रेण पातिताः ॥ ३ ॥

होगया, केवल शरीरही बाकी रह गया है, उससे मणि और अस्त्र छीन लिये। ( २७—३३ )

द्रौपदी बोली, अब मैं अरिण होगई गुरुपुत्र तो हमारे गुरुही हैं, अब इस मणिको राजा अपने शिरमें बांधे। महाराज युधिष्ठिरने उस मणिको गुरुका प्रसाद मानकर द्रौपदीकी हठसे अपने शिरमें बांधा, उस समय उस मणिसे राजा ऐसे शोभित हुए, जैसे चन्द्रमाके सहित पर्वत, तब द्रौपदी शोकसे व्याकुल होकर उठीं और महाबाहु युधिष्ठिरने श्रीकृष्णसे कुशल पूंछी। ( ३४-३७ )

सौप्तिकपर्वमें सोलह अध्याय समाप्त। [७५१]

सौप्तिक पर्वमें सतरह अध्याय।

श्रीवैशम्पायन मुनि बोले, जब इस प्रकार तीनों वीरोंने रात्रिको सोते हुए युधिष्ठिरकी सब सेनाको मारडाला, तब शोच करते हुए राजा युधिष्ठिर कृष्णसे बोले, हे कृष्ण! पापी क्षुद्र दुरात्मा अश्वत्थामाने हमारे सब महारथ पुत्रोंको कैसे मारडाला? सब शस्त्रविद्याके जाननेवाले एकले ही सैकडों और सहस्रों वीरोंसे लडनेवाले द्रुपदके सब पुत्रोंको

यस्य द्रोणो महेष्वासो न प्रादादाहवे मुखम् ।
निजघ्ने रथिनां श्रेष्ठं धृष्टद्युम्नं कथं नु सः ॥ ४ ॥
किं नु तेन कृतं कर्म तथायुक्तं नरर्षभ ।
यदेकः समरे सर्वानवधीन्नो गुरोः सुतः ॥ ५ ॥
श्रीभगवानुवाच– नूनं स देवदेवानामीश्वरेश्वरमव्ययम् ।
जगाम शरणं द्रौणिरेकस्तेनावधीद्बहून् ॥ ६ ॥
प्रसन्नो हि महादेवो दद्यादमरतामपि ।
वीर्यं च गिरिशो दद्याद्येनेन्द्रमपि शातयेत् ॥ ७ ॥
वेदाहं हि महादेवं तत्त्वेन भरतर्षभ ।
यानि चास्य पुराणानि कर्माणि विविधानि च ॥ ८ ॥
आदिरेष हि भूतानां मध्यमन्तश्च भारत ।
विचेष्टते जगच्चेदं सर्वमस्यैव कर्मणा ॥ ९ ॥
एवं सिसृक्षुर्भूतानि ददर्श प्रथमं विभुः ।
पितामहोऽब्रवीच्चैनं भूतानि सृज माचिरम् ॥ १० ॥
हरिकेशस्तथेत्युक्त्वा भूतानां दोषदर्शिवान् ।
दीर्घकालं तपस्तेपे मग्नोऽम्भसि महातपाः ॥ ११ ॥

अस्त्रमस्त्रेण तु रणे तव संशमयिष्यता।
विसृष्टमर्जुनेनेदं पुनश्च प्रतिसंहृतम् ॥ २० ॥
ब्रह्मास्त्रमप्यवाप्यैतदुपदेशात्पितुस्तव।
क्षत्रधर्मान्महाबाहुर्नाकम्पत धनञ्जयः ॥ २१ ॥
एवं धृतिमतः साधोः सर्वास्त्रविदुषः सतः।
सभ्रातृबन्धोः कस्मात्त्वं वधमस्य चिकीर्षसि ॥ २२ ॥
अस्त्रं ब्रह्मशिरो यत्र परमास्त्रेण वध्यते।
समा द्वादश पर्जन्यस्तद्राष्ट्रं नाभिवर्षति ॥ २३ ॥
एतदर्थं महाबाहुः शक्तिमानपि पाण्डवः।
न विहन्यात्तदस्त्रं तु प्रजाहितचिकीर्षया ॥ २४ ॥
पाण्डवास्त्वं च राष्ट्रं च सदा संरक्ष्यमेव हि।
तस्मात्संहर दिव्यं त्वमस्त्रमेतन्महाभुज ॥ २५ ॥
अरोषस्तव चैवास्तु पार्थाः संतु निरामयाः।
न ह्यधर्मेण राजर्षिः पाण्डवो जेतुमिच्छति ॥ २६ ॥
मणिं चैव प्रयच्छाद्य यस्ते शिरसि तिष्ठति।
एतदादाय ते प्राणान्प्रतिदास्यन्ति पाण्डवाः ॥ २७ ॥

द्रौणिरुवाच— पाण्डवैर्यानि रत्नानि यच्चान्यत्कौरवैर्धनम्।

था तुम्हारा नाश करनेके लिये नहीं, वरन् केवल तुम्हारे अस्त्रका बल शान्त करनेहीके लिये छोडा था, और फिर उन्होंने उसे लौटा भी लिया, देखो तुम्हारे पिताहीसे उन्होंने भी सीखा था, महाबाहु अर्जुन क्षत्रियोंके धर्ममें स्थित हैं, बुद्धिमान साधु और सर्वशस्त्रविद्याके पण्डित हैं, तब तुम उन्हे बन्धुओंके सहित क्यों मारना चाहते हो? जहां ब्रह्मशिर इसी अस्त्रके तेजसे शान्त किया जाता है, उस देशमें बारह वर्षतक जल नहीं वर्षता, इसी लिये प्रजाका कल्याण चाहनेवाले महाबाहु अर्जुन समर्थ होनेपर भी इस अस्त्रको नहीं काटते (१९-२४)

हे महाबाहो! तुम्हे पाण्डव और राज्य इन सबहीकी रक्षा करनी चाहिये, इसलिये तुम इस अस्त्रको लौटा लो, तुम्हारा क्रोध शान्त हो, पाण्डवोंका कल्याण हो, क्यों कि राजऋषि युधिष्ठिर अधर्मसे किसीका जीतना नहीं चाहते, तुम अपने शिरकी मणी पाण्डवोंको दे दो, तब ये तुम्हारे प्राण छोड देंगे। (२५-२७)

अश्वत्थामा बोले, हे भगवन्! मैंने

सुमहान्तं ततः कालं प्रतीक्ष्यैनं पितामहः।
स्रष्टारं सर्वभूतानां ससर्ज मनसाऽपरम् ॥ १२ ॥
सोऽब्रवीत्पितरं दृष्ट्वा गिरिशं मग्नमंभसि।
यदि मे नाग्रजोऽस्त्यन्यस्ततः स्रक्ष्याम्यहं प्रजा॥१३॥
तमब्रवीत्पिता नास्ति त्वदन्यः पुरुषोऽग्रजः।
स्थाणुरेष जले मग्नो विस्रब्धः कुरु वैकृतम् ॥१४॥
भूतान्यन्वसृजत्सप्त दक्षादींस्तु प्रजापतीन्।
यैरिमं व्यकरोत्सर्वं भूतग्रामं चतुर्विधम् ॥ १५ ॥
ताः सृष्टमात्राः क्षुधिताः प्रजाः सर्वाः प्रजापतिम्।
विभक्षयिषवो राजन्सहसा प्राद्रवंस्तदा ॥ १६ ॥
स भक्ष्यमाणस्त्राणार्थी पितामहमुपाद्रवत्।
आभ्यो मां भगवांस्त्रातु वृत्तिरासां विधीयताम्॥१७॥
ततस्ताभ्यो ददावन्नमोषधीः स्थावराणि च।
जङ्गमानि च भूतानि दुर्बलानि बलीयसाम् ॥ १८ ॥
विहितान्नाः प्रजास्तास्तु जग्मुः सृष्टा यथागतम्।
ततो ववृधिरे राजन्प्रीतिमत्यः स्वयोनिषु ॥ १९ ॥

डूबकर तपस्या करी इस प्रकार बहुत दिनतक तपस्या करते करते ब्रम्हा जगत् कर्त्ता शिवका मार्ग देखते रहे, फिर उन्होंने अपने मनसे एक मनुष्य उत्पन्न किया। ( ६-१२ )

ब्रह्माने अपने पिता शिवको जलमें सोता हुआ देख उस पुरुषसे कहा यदि मुझमे पहिले कोई उत्पन्न न हुआ हो ता मैं सृष्टि रचूं, उस पुरुषने कहा कि, तुम विश्वास रक्खो तुमसे पहिले उत्पन्न हुआ कोई नहीं है, ये जो जलमें सोते हैं सो सनातन पुरुष हैं, अब तुम प्रजा उत्पन्न करो। ( १३-१४ )

तब ब्रह्माने दक्ष प्रजापति आदि लेकर सब जगत् बनाया, फिर स्वेदज, अण्डज, उद्भिज और जरायुज ये चार प्रकारकी सृष्टि रची, हे राजन्! यह सब प्रजा उत्पन्न होते ही भूखसे व्याकुल होकर दक्ष प्रजापतिको खाने दौडी। दक्ष प्रजापति अपनी रक्षाके लिये, ब्रह्माके पीछे दौडे और कहा कि, हे भगवन्! आप इनसे हमारी रक्षा कीजिये और इन्हें खानेको कुछ दीजिये, तब ब्रह्माने उन्हें अन्न और स्थावर औषधी दी,और चलनेवालेमें यह नियम कर दिया कि दुर्बलको बलवान् खाजाय। (१५-१८)

अवाप्तमिह तेभ्योऽयं मणिर्मम विशिष्यते ॥ २८ ॥
यमाबध्य भयं नास्ति शस्त्रव्याधिक्षुधाश्रयम् ।
देवेभ्यो दानवेभ्यो वा नागेभ्यो वा कथञ्चन ॥ २९ ॥
न च रक्षोगणभयं न तस्करभयं तथा ।
एवं वीर्यो मणिरयं न मे त्याज्यः कथञ्चन ॥ ३० ॥
यत्तु मे भगवानाह तन्मे कार्यमनन्तरम् ।
अयं मणिरयं चाहमीषिका तु पतिष्यति ॥ ३१ ॥
गर्भेषु पाण्डवेयानाममोघं चैतदुत्तमम् ।
न च शक्तोऽस्मि भगवन्संहर्तुं पुनरुद्यतम् ॥ ३२ ॥
एतदस्त्रमतश्चैव गर्भेषु विसृजाम्यहम् ।
न च वाक्यं भगवतो न करिष्ये महामुने ॥ ३३ ॥
व्यास उवाच— एवं कुरु न चान्या तु बुद्धिः कार्या त्वयाऽनघ ।
गर्भेषु पाण्डवेयानां विसृज्यैतदुपारम ॥ ३४ ॥
वैशम्पायन उवाच-ततः परममस्त्रं तु द्रौणिरुद्यतमाहवे ।
द्वैपायनवचः श्रुत्वा गर्भेषु प्रमुमोच ह ॥ ३५ ॥ [७१४]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां [illegible] पर्वणि
ब्रह्मशिरोऽस्त्रस्य पाण्डवेयगर्भप्रवेशने पञ्चदशोऽध्यायः ॥ १५ ॥

भूतग्रामे विवृद्धे तु तुष्टे लोकगुरावपि ।
उदतिष्ठज्जलाज्ज्येष्ठः प्रजाश्चेमा ददर्श सः ॥ २० ॥
बहुरूपाः प्रजा सृष्टा विवृद्धाश्च स्वतेजसा ।
चुक्रोध भगवान् रुद्रो लिङ्गं स्व चाप्यविध्यत ॥ २१ ॥
तत्प्रविद्धं तथा भूमौ तथैव प्रत्यतिष्ठत ।
तमुवाचाव्ययो ब्रह्मा वचोभिः शमयन्निव ॥ २२ ॥
किं कृतं सलिले शर्व चिरकालस्थितेन ते ।
किमर्थं चेदमुत्पाद्य लिङ्गं भूमौ प्रवेशितम् ॥ २३ ॥
सोऽब्रवीज्जातसंरम्भस्तथा लोकगुरुर्गुरुम् ।
प्रजाः सृष्टाः परेणमाः किं करिष्याम्यनेन वै ॥ २४ ॥
तपसाऽधिगतं चान्नं प्रजार्थं मे पितामह ।
ओषध्यः परिवर्त्तेरन्यथैवं सतत प्रजाः ॥ २५ ॥
एवमुक्त्वा स सक्रोधो जगाम विमना भवः ।
गिरेर्मुञ्जवतः पादं तपस्तप्तुं महातपाः ॥ २६ ॥ [७७७]

इति श्रीमहाभारते॰ संहितायां॰ सौप्तिकपर्वणि [illegible] सप्तदशोऽध्यायः ॥१७॥

श्रीभगवानुवाच—ततो देवयुगेऽतीते देवा वै समकल्पयन् ।

अस्त्रमस्त्रेण तु रणे तव संशमयिष्यता ।
विसृष्टमर्जुनेनेदं पुनश्च प्रतिसंहृतम् ॥ २० ॥
ब्रह्मास्त्रमप्यवाप्यैतदुपदेशात्पितुस्तव ।
क्षत्रधर्मान्महाबाहुर्नाकम्पत धनञ्जयः ॥ २१ ॥
एवं धृतिमतः साधोः सर्वास्त्रविदुषः सतः ।
सभ्रातृबन्धोः कस्मात्त्वं वधमस्य चिकीर्षसि ॥ २२ ॥
अस्त्रं ब्रह्मशिरो यत्र परमास्त्रेण वध्यते ।
समा द्वादश पर्जन्यस्तद्राष्ट्रं नाभिवर्षति ॥ २३ ॥
एतदर्थं महाबाहुः शक्तिमानपि पाण्डवः ।
न विहन्यात्तदस्त्रं तु प्रजाहितचिकीर्षया ॥ २४ ॥
पाण्डवास्त्वं च राष्ट्रं च सदा संरक्ष्यमेव हि ।
तस्मात्संहर दिव्यं त्वमस्त्रमेतन्महाभुज ॥ २५ ॥
अरोषस्तव चैवास्तु पार्थाः संतु निरामयाः ।
न ह्यधर्मेण राजर्षिः पाण्डवो जेतुमिच्छति ॥ २६ ॥
मणिं चैव प्रयच्छाद्य यस्ते शिरसि तिष्ठति ।
एतदादाय ते प्राणान्प्रतिदास्यन्ति पाण्डवाः ॥ २७ ॥

द्रौणिरुवाच— पाण्डवैर्यानि रत्नानि यच्चान्यत्कौरवैर्धनम् ।

---

था तुम्हारा नाश करनेके लिये नहीं, वरन् केवल तुम्हारे अस्त्रका बल शान्त करनेहीके लिये छोडा था, और फिर उन्होंने उसे लौटा भी लिया, देखो तुम्हारे पिताहीसे उन्होंने भी सीखा था, महाबाहु अर्जुन क्षत्रियोंके धर्ममें स्थित हैं, बुद्धिमान साधु और सर्वशस्त्रविद्याके पण्डित हैं, तब तुम उन्हे बन्धुओंके सहित क्यों मारना चाहते हो? जहां ब्रह्मशिर इसी अस्त्रके तेजसे शान्त किया जाता है, उस देशमें बारह वर्षतक जल नहीं वर्षता, इसी लिये प्रजाका कल्याण चाहनेवाले महाबाहु अर्जुन समर्थ होनेपर भी इस अस्त्रको नहीं काटते (१९-२४)

हे महाबाहो! तुम्हे पाण्डव और राज्य इन सबहीकी रक्षा करनी चाहिये, इसलिये तुम इस अस्त्रको लौटा लो, तुम्हारा क्रोध शान्त हो, पाण्डवोंका कल्याण हो, क्यों कि राजऋषि युधिष्ठिर अधर्मसे किसीका जीतना नहीं चाहते, तुम अपने शिरकी मणी पाण्डवोंको दे दो, तब ये तुम्हारे प्राण छोड देंगे। (२५-२७)

अश्वत्थामा बोले, हे भगवन्! मैने

यज्ञं वेदप्रमाणेन विधिवद्यष्टुमीप्सवः ॥ १ ॥
कल्पयामासुरथ ते साधनानि हवींषि च।
भागार्हा देवताश्चैव यज्ञियं द्रव्यमेव च ॥ २ ॥
ता वै रुद्रमजानन्त्यो याथातथ्येन देवताः।
नाकल्पयन्त देवस्य स्थाणोर्भागं नराधिप ॥ ३ ॥
सोऽकल्प्यमाने भागे तु कृत्तिवासा मखेऽमरैः।
ततः साधनमन्विच्छन्धनुरादौ ससर्ज ह ॥ ४ ॥
लोकयज्ञः क्रियायज्ञो गृहयज्ञः सनातनः।
पञ्चभूतनृयज्ञश्च जज्ञे सर्वमिदं जगत् ॥ ५ ॥
लोकयज्ञैर्नृयज्ञैश्च कपर्दी विदधे धनुः।
धनुः सृष्टमभूत्तस्य पञ्चकिष्कुप्रमाणतः ॥ ६ ॥
वषट्कारोऽभवज्ज्या तु धनुषस्तस्य भारत।
यज्ञाङ्गानि च चत्वारि तस्य संनहनेऽभवन् ॥ ७ ॥
ततः क्रुद्धो महादेवस्तदुपादाय कार्मुकम्।
आजगामाथ तत्रैव यत्र देवाः समीजिरे ॥ ८ ॥
तमात्तकार्मुकं दृष्ट्वा ब्रह्मचारिणमव्ययम्।
विव्यथे पृथिवी देवी पर्वताश्च चकम्पिरे ॥ ९ ॥
न ववौ पवनश्चैव नाग्निर्जज्वाल चैधितः।
व्यभ्रमच्चापि संविग्नं दिवि नक्षत्रमण्डलम् ॥ १० ॥

वेदोंके प्रमाणसे विधिपूर्वक यज्ञोंको बनाया, उनके अनुसार ही यज्ञकी सामग्री घी और भाग लेने योग्य देवतोंको बनाया, परन्तु वे यथार्थ रूपसे शिवको नहीं जानते थे, इसलिये उन्होंने भगवान शिवका भाग न दिया, तब शिवने क्रोध करके पहिले धनुष बनाया, फिर लोक यज्ञ, क्रियायज्ञ, सनातन गृहयज्ञ, पञ्चभूत यज्ञ और नृयज्ञ बनाया। और फिर जगत् बनाया, फिर लोकयज्ञ और नृयज्ञसे पांच हाथका धनुष बनाया। हे भारत उस धनुषका रोदा वट्षकार हुआ और सब यज्ञकी सामग्रीसे उसे पुष्ट किया, तब महादेव क्रोध करके उस धनुषको लेकर उस स्थानपर आये, जहां सब देवता यज्ञ कर रहे थे। ब्रह्मचारी सनातन शिवको धनुष लिये देख पृथ्वी और पर्वत कांपने लगे, वायु चलता चलता बन्द होगया, आग जलती जलती बुझ गई, आकाशमें तारे और

अवाप्तमिह तेभ्योऽयं मणिर्मम विशिष्यते ॥ २८ ॥
यमाबध्य भयं नास्ति शस्त्रव्याधिक्षुधाश्रयम् ।
देवेभ्यो दानवेभ्यो वा नागेभ्यो वा कथञ्चन ॥ २९ ॥
न च रक्षोगणभयं न तस्करभयं तथा ।
एवं वीर्यो मणिरयं न मे त्याज्यः कथञ्चन ॥ ३० ॥
यत्तु मे भगवानाह तन्मे कार्यमनन्तरम् ।
अयं मणिरयं चाहमीषिका तु पतिष्यति ॥ ३१ ॥
गर्भेषु पाण्डवेयानाममोघं चैतदुत्तमम् ।
न च शक्तोऽस्मि भगवन्संहर्तुं पुनरुद्यतम् ॥ ३२ ॥
एतदस्त्रमतश्चैव गर्भेषु विसृजाम्यहम् ।
न च वाक्यं भगवतो न करिष्ये महामुने ॥ ३३ ॥
व्यास उवाच— एवं कुरु न चान्या तु बुद्धिः कार्या त्वयाऽनघ ।
गर्भेषु पाण्डवेयानां विसृज्यैतदुपारम ॥ ३४ ॥
वैशम्पायन उवाच-ततः परममस्त्रं तु द्रौणिरुद्यतमाहवे ।
द्वैपायनवचः श्रुत्वा गर्भेषु प्रमुमोच ह ॥ ३५ ॥ [७१४]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां [illegible] पर्वणि
ब्रह्मशिरोऽस्त्रस्य पाण्डवेयगर्भप्रवेशने पञ्चदशोऽध्यायः ॥ १५ ॥

वैशम्पायन उवाच-तदाऽऽज्ञाय हृषीकेशो विसृष्टं पापकर्मणा।
हृष्यमाण इदं वाक्यं द्रौणिं प्रत्यब्रवीत्तदा ॥ १ ॥
विराटस्य सुतां पूर्वं स्नुषां गाण्डीवधन्वनः।
उपप्लव्यगतां दृष्ट्वा व्रतवान्ब्राह्मणोऽब्रवीत् ॥ २ ॥
परिक्षीणेषु कुरुषु पुत्रस्तव भविष्यति।
एतदस्य परिक्षित्त्वं गर्भस्थस्य भविष्यति ॥ ३ ॥
तस्य तद्वचनं साधोः सत्यमेतद्भविष्यति।
परिक्षिद्भविता ह्येषां पुनर्वंशकरः सुतः ॥ ४ ॥
एवं ब्रुवाणं गोविन्दं सात्वतां प्रवरं तदा।
द्रौणिः परमसंरब्धः प्रत्युवाचेदमुत्तरम् ॥ ५ ॥
नैतदेवं यथाऽऽत्थ त्वं पक्षपातेन केशव।
वचनं पुण्डरीकाक्ष न च मद्वाक्यमन्यथा ॥ ६ ॥
पतिष्यति तदस्त्रं हि गर्भे तस्या मयोद्यतम्।
विराटदुहितुः कृष्ण यं त्वं रक्षितुमिच्छसि ॥ ७ ॥
श्रीभगवानुवाच- अमोघः परमास्त्रस्य पातस्तस्य भविष्यति।
स तु गर्भो मृतो जातो दीर्घमायुरवाप्स्यति ॥ ८ ॥

---

सौप्तिकपर्वमें सोलह अध्याय।

श्रीवैशम्पायन मुनि बोले, हे राजन् जनमेजय! पापी अश्वत्थामाके अभिप्रायको जानकर श्रीकृष्ण प्रसन्न होकर अश्वत्थामासे बोले, एक दिन राजा विराटकी पुत्री अभिमन्युकी स्त्री उत्तरा अपने घरमें बैठी थी, तब उससे एक ब्राह्मणने आकर ऐसे वचन कहे, कि जब कुरुकुलका नाश हो चुकेगा, तब तुम्हारे पुत्र होगा, वह पहले गर्भमें नष्ट होजायगा, फिर उसका जन्म होगा। आज उस महात्माका वचन सत्य हुआ, अब कुरुकुलकी रक्षा करनेवाला परिक्षित नामक उत्तराका पुत्र होगा। ( १-४ )

यदुकुलश्रेष्ठ श्रीकृष्णके ऐसे वचन सुन अश्वत्थामा क्रोधमें भरकर बोले, हे कमलनेत्र कृष्ण! जो तुम पाण्डवोंके पक्षपातसे कह रहे हो, सो ऐसा नहीं होगा, क्यों कि हमारा वचन मिथ्या नहीं होता; जिस विराटपुत्रीके गर्भकी तुम रक्षा करना चाहते हो, यह हमारा छोडा हुआ अस्त्र उसी गर्भका नाश करेगा। ( ५-७ )

श्रीकृष्ण बोले, अरे क्षुद्र! यह अस्त्र वृथा नहीं होगा, वह गर्भ मर जायगा; परन्तु फिर जीकर दीर्घायु पावेगा, तुझे

ततः प्रसन्नो भगवान् स्थाप्य कोपं जलाशये।
सजलं पावको भूत्वा शोषयत्यनिशं प्रभो ॥ २१ ॥
भगस्य नयने चैव बाहू च सवितुस्तथा।
प्रादात्पूष्णश्च दशनान्पुनर्यज्ञांश्च पाण्डव ॥ २२ ॥
ततः सुस्थमिदं सर्वं बभूव पुनरेव हि।
सर्वाणि च हवींष्यस्य देवा भागमकल्पयन् ॥ २३ ॥
तस्मिन् क्रुद्धेऽभवत्सर्वमसुस्थं भुवनं प्रभो।
प्रसन्ने च पुनः सुस्थं प्रसन्नोऽस्य च वीर्यवान् ॥ २४ ॥
ततस्ते निहताः सर्वे तव पुत्रा महारथाः।
अन्ये च बहवः शूराः पांचालस्य पदानुगाः ॥ २५ ॥
न तन्मनसि कर्त्तव्यं न च तद् द्रौणिना कृतम्।
महादेवप्रसादेन कुरु कार्यमनन्तरम् ॥ २६ ॥ [ ८०३ ]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां सौप्तिकपर्वान्तर्गत ऐषीके पर्वणि अष्टादशोऽध्यायः॥ १८ ॥

ऐषीकं पर्व समाप्तम्।
सौप्तिकं ऐषीकं च पर्वद्वयमिदं संलग्नम्।

काट दिया तब सब देवता यज्ञको संगमें लेकर धनुपरहित शिवकी शरणमें गये। ( १—२० )

तब शिवने भी उनके ऊपर कृपाकर दी तब भगवान् शिवने अपने कोपको तलावमें गिराय दिया, वहीं क्रोध अब अग्निरूप होकर जलको सुखाता है, शिवने फिर प्रसन्न होकर भगको नेत्र, सविताको हाथ और पूषाका दांत दे दिये। और फिर जगतमें यज्ञ होने लगे। उसी दिनसे सब जगत् सावधान होगया, तभीसे देवतोंने सब यज्ञोंमें शिवका भाग दे दिया। ( २१—२३ )

हे राजन् शिवहीके क्रोधसे यह सब नाश हुआ और उनहीकी प्रसन्नतासे सुख होगा, इसीसे तुम्हारे सब महारथ पुत्र और साथियोंसहित धृष्टद्युम्न मारे गए। आप उस कर्मको अश्वत्थामाका किया न मानिये, यह सब शिवकी कृपासे हुआ है, अब आगे जो कुछ काम हो सो कीजिये। ( २४—२६ ) [ ८०३ ]

सौप्तिक पर्वमें अठारह अध्याय समाप्त।

ऐषीक और सौप्तिक पर्व समाप्त।

त्वां तु कापुरुषं पापं विदुः सर्वे मनीषिणः ।
असकृत्पापकर्माणं बालजीवितघातकम् ॥ ९ ॥
तस्मात्त्वमस्य पापस्य कर्मणः फलमाप्नुहि ।
त्रीणि वर्षसहस्राणि चरिष्यसि महीमिमाम् ॥ १० ॥
अप्राप्नुवन्क्वचित्कांचित्संविदं जातु केनचित् ।
निर्जनानसहायस्त्वं देशान्प्रविचरिष्यसि ॥ ११ ॥
भवित्री न हि ते क्षुद्र जनमध्येषु संस्थितिः ।
पूयशोणितगन्धी च दुर्गकान्तारसंश्रयः ॥ १२ ॥
विचरिष्यसि पापात्मा सर्वव्याधिसमन्वितः ।
वयः प्राप्य परिक्षित्तु वेदव्रतमवाप्य च ॥ १३ ॥
कृपाच्छारद्वताच्छूरः सर्वास्त्राण्युपपत्स्यते ।
विदित्वा परमास्त्राणि क्षत्रधर्मव्रते स्थितः ॥ १४ ॥
षष्टिं वर्षाणि धर्मात्मा वसुधां पालयिष्यति ।
इतश्चोर्ध्वं महाबाहुः कुरुराजो भविष्यति ॥ १५ ॥
परिक्षिन्नाम नृपतिर्मिषतस्ते सुदुर्मते ।
अहं तं जीवयिष्यामि दग्धं शस्त्राग्नितेजसा ।
पश्य मे तपसो वीर्यं सत्यस्य च नराधम ॥ १६ ॥
व्यास उवाच— यस्मादनादृत्य कृतं त्वयास्मान्कर्म दारुणम् ।

अस्यानन्तरं स्त्रीपर्व भविष्यति तस्यायमाद्यः श्लोकः ।

जनमेजय उवाच—हते दुर्योधने चैव हते सैन्ये च सर्वशः ।
धृतराष्ट्रो महाराज श्रुत्वा किमकरोन्मुने ॥ १ ॥



आदितः श्लोक संख्या—

| | |
|---|---|
| १ आदिपर्व | ८७०१ |
| २ सभापर्व | २७६२ |
| ३ वनपर्व | ११८९२ |
| ४ विराटपर्व | २३६२ |
| ५ उद्योगपर्व | ५५९० |
| ६ भीष्मपर्व | ५८७० |
| ७ द्रोणपर्व | ९६४८ |
| ८ कर्णपर्व | ५०१४ |
| ९ शल्यपर्व | ३६३८ |
| १० सौप्तिकपर्व | ८०३ |
| सर्वयोग | ५६३६४ |



ब्राह्मणस्य सतश्चैव यस्मात्ते वृत्तमीदृशम् ॥ १७ ॥
तस्माद्यद्देवकीपुत्र उक्तवानुत्तमं वचः ।
असंशयं ते तद्भावि क्षत्रधर्मस्त्वयाऽऽश्रितः ॥ १८ ॥
अश्वत्थामोवाच- सहैव भवता ब्रह्मन्स्थास्यामि पुरुषेष्विह ।
सत्यवागस्तु भगवानयं च पुरुषोत्तमः ॥ १९ ॥
वैशम्पायन उवाच-प्रदायाथ मणिं द्रौणिः पाण्डवानां महात्मनाम् ।
जगाम विमनास्तेषां सर्वेषां पश्यतां वनम् ॥ २० ॥
पाण्डवाश्चापि गोविन्दं पुरस्कृत्य हतद्विषः ।
कृष्णद्वैपायनं चैव नारदं च महामुनिम् ॥ २१ ॥
द्रोणपुत्रस्य सहजं मणिमादाय सत्वराः ।
द्रौपदीमभ्यधावन्त प्रायोपेतां मनस्विनीम् ॥ २२ ॥
वैशम्पायन उवाच-ततस्ते पुरुषव्याघ्राः सदश्वैरनिलोपमैः ।
अभ्ययुः सह दाशार्हाः शिबिरं पुनरेव हि ॥ २३ ॥
अवतीर्य रथेभ्यस्तु त्वरमाणा महारथाः ।
ददृशुर्द्रौपदीं कृष्णामार्त्तामार्त्ततराः स्वयम् ॥ २४ ॥
तामुपेत्य निरानन्दां दुःखशोकसमन्विताम् ।

---

हम जिला देंगे । (८-१६)

श्रीव्यास मुनि बोले, तुमने हमारे वचनोंका निरादर करके ऐसा घोर कर्म किया, तुम ब्राह्मण और विशेष कर पण्डित होके ऐसे ऐसे घोर कर्म करते हो और क्षत्रीधर्मका पालन करते हो, इसलिये देवकीपुत्रने जो कुछ तुम्हारे लिये कहा, सो सब सत्य होगा । (१७-१८)

अश्वत्थामा बोले, पुरुषश्रेष्ठ भगवान् कृष्णके वचन सत्य होय, मैं आजसे आपके संगही रहूंगा। वैशम्पायन मुनि बोले, ऐसा कहकर अश्वत्थामाने महात्मा पाण्डवोंकी मणि दे दयी और आप मलीन होकर सबके देखते देखते वनको चले गये । ( १९—२० )

पाण्डव लोग भी अश्वत्थामाके संग उत्पन्न हुई मणि लेकर श्रीकृष्ण, वेदव्यास और महामुनि नारदको आगे करके शीघ्रता सहित व्रतधारिणी, यशस्विनी द्रौपदीके पासको चले गए । ( २१—२२ )

श्रीवैशम्पायन मुनि बोले, तब पुरुषसिंह पाण्डव घोडोंको वायुके समान दौडते हुए कृष्णके सहित डेरोंको चले गए, वहां जाकर सब लोग रथसे उतरे और शोकसे भरी द्रौपदीको शोकसे

प्रासलघ्यहितं द्रौणिर्न जघान रणेप्सया ॥ ३६ ॥
एतस्मिन्नन्तरे कर्णो गजानीकमुपाद्रवत् ।
द्रावयामास स तदा पाण्डवानां महद्बलम् ॥ ३७ ॥
विरथान्रथिनश्चक्रे गजानश्वांश्च भारत ।
गजान्बहूनभिरानर्च्छच्छरैः सन्नतपर्वभिः ॥ ३८ ॥
अथ द्रौणिर्महेष्वासः पाण्ड्यं शत्रुनिबर्हणम् ।
विरथं रथिनां श्रेष्ठं नाहनद्युद्धकांक्षया ॥ ३९ ॥
हतेश्वरो दन्तिवरः सुकल्पितस्त्वराभिसृष्टः प्रतिशब्दगो बली ।
तमाद्रवद् द्रौणिशराहतस्त्वरञ्जवेन कृत्वा प्रतिहस्तिगर्जितम् ॥ ४० ॥
तं वारणं वारणयुद्धकोविदो द्विपोत्तमं पर्वतसानुसन्निभम् ।
समभ्यतिष्ठन्मलयध्वजस्त्वरन्यथाद्रिशृङ्गं हरिरुन्नदंस्तथा ॥ ४१ ॥
स तोमरं भास्कररश्मिवर्चसं बलास्त्रसर्गोत्तमयत्नमन्युभिः ।
ससर्ज शीघ्रं परिपीडयन्गजं गुरोः सुतायाद्रिपतीश्वरो नदन् ॥ ४२ ॥
मणिप्रवेकोत्तमवज्रहाटकैरलंकृतं चांशुकमाल्यमौक्तिकैः ।
हतो हतोऽसीत्यसकृन्मुदा नदन्पराहनद् द्रौणिवराङ्गभूषणम् ॥ ४३ ॥

मलयध्वजके सब शस्त्रोंको काट दिया;तब मलयध्वज मरनेके समीप पहुंचे, परन्तु अश्वत्थामाने युद्ध करनेकी इच्छासे उन्हें न मारा॥ उसी समय महाबलवान् कर्णने गजसेनाको नाश करके पाण्डवोंकी सेनाको दूर भगाया। उन्होंने अनेक वीरों के रथोंको काट दिया,तथा अनेक हाथी और घोडोंको अपने तीक्ष्ण बाणोंसे मार कर पृथ्वी पर गिरा दिया॥ (३६-३८)

उसी समय अश्वत्थामाने महारथ शत्रुनाशन मलयध्वजको रथहीन देखकर और युद्धकी इच्छा करके न मारा॥ उस समय एक मतवाला हाथी अपने स्वामीको अश्वत्थामाके बाणसे मरा हुआ देख गर्जता और वेगसे दौडता हुआ आया, उस पर्वतके समान हाथीको पास आया हुआ देख हाथीके युद्धको जाननेवाले राजा मलयध्वज गर्जकर उसकी पीठपर इस प्रकार चढ बैठे जैसे गर्जता हुआ सिंह पर्वतके शिखर पर चढ बैठे। ३९-४१

पर्वतदेशके राजा मलयध्वजने सूर्यकी किरणके समान प्रकाशमान एक तोमर हाथमें लेकर और गर्जकर द्रोणपुत्र अश्वत्थामाकी ओर चलाया॥ उत्तम रत्नोंसे जडे हुए, सुगन्धसे भूषित उस तोमरको चलाते समय राजा मलयध्वजने कहा कि अश्वत्थामा मारा गया। उस तोमरसे अश्वत्थामाका मुकुट गिर गया॥

तदर्कचन्द्रग्रहपावकत्विषं भृशातिपातात्पतितं विचूर्णितम् ।
महेन्द्रवज्राभिहतं महास्वनं यथाद्रिशृङ्गं धरणीतले तथा ॥ ४४ ॥
ततः प्रजज्वाल परेण मन्युना पादाहतो नागपतिर्यथा तथा ।
समाददे चान्तकदण्डसन्निभानिपूनमित्रार्तिकरांश्चतुर्दश ॥ ४५ ॥
द्विपस्य पादाग्रकरान्स पञ्चभिर्नृपस्य बाहू च शिरोऽथ च त्रिभिः ।
जघान षड्भिः षडनुत्तमत्विषः स पाण्ड्यराजानुचरान्महारथान् ॥४६॥
सुदीर्घवृत्तौ वरचन्दनोक्षितौ सुवर्णमुक्तामणिवज्रभूषणौ ।
भुजौ धरायां पतितौ नृपस्य तौ विचेष्टतुस्तार्क्ष्यहताविवोरगौ॥ ४७ ॥
शिरश्च तत्पूर्णशशिप्रभाननं सरोषताम्रायतनेत्रमुन्नसम् ।
क्षितावपि भ्राजति तत्सकुण्डलं विशाखयोर्मध्यगतः शशी यथा ॥४८॥
स तु द्विपः पञ्चभिरुत्तमेषुभिः कृतः षडंशश्चतुरो नृपस्त्रिभिः ।
कृतो दशांशः कुशलेन युध्यता यथा हविस्तद्दशदैवतं तथा ॥ ४९ ॥
स पादशो राक्षसभोजनान्बहून्प्रदाय पाण्डयोऽश्वमनुष्यकुञ्जरान् ।

वह सूर्य, चन्द्रमा, तारे और अग्निके समान सुन्दर मुकुट तोमरके लगनेसे इस प्रकार गिरकर टूट गया जैसे इन्द्र का वज्र लगनेसे पर्वतका शिखर पृथ्वीमें गिरता है ॥ ( ४२–४४ )

उसके गिरनेसे अश्वत्थामाको ऐसा क्रोध हुआ जैसे लातके लगनेसे सर्पको क्रोध होता है ! तब यमराजके दण्डके समान चौदह बाण ले पांच बाणोंसे हाथीके सूंड और पैरोंको, तीनसे राजा मलयध्वजके दोनों हाथ और शिरको काट दिया। शेष छः बाणोंसे राजा मलयध्वजके रक्षा करनेवाले छः महा तेजस्वी महारथोंको मार दिया ॥ रत्न मोती और सोनेके भूषणोंसे युक्त चन्दन लगे, मोटे और लम्बे राजा मलयध्वजके दोनों हाथ कटकर इस प्रकार पृथ्वीमें गिरे जैसे गरुडके मारे दो सांप ॥ पूर्ण चन्द्रमाके समान मुख और क्रोध भरे लालनेत्रवाला शिर कुण्डलोंके सहित कटकर इस प्रकार गिरा जैसे विशाखाके मध्यभागमें रहनेवाला चन्द्रमा गिरता है ॥ (४५—४८)

कुशलतासे युद्ध करने वाले अश्वत्था माने उस समय अपने पांच बाणोंसे उस हाथीके छः और तीन बाणोंसे पांड्यराजके चार टुकडे कर दिये। यह अश्वत्थामाका कर्म ऐसा हुआ कि जैसा दशविभागयुक्तहविवाली इष्टिमें ऋत्विज द्वारा पिष्टपिण्डपुरोडाशके दश विभाग किये जाते हैं। राजा मलयध्वज अपने बाणोंसे अनेक हाथी घोडे और मनुष्यों

# सौप्तिकपर्वकी विषयसूची ।

जहीहि मन्युं बुद्ध्या वै धारयात्मानमात्मना ॥ ४३ ॥

वैशम्पायन उवाच-एवमाश्वासितस्तेन संजयेन महात्मना ।
विदुरो भूय एवाह बुद्धिपूर्वं परंतप ॥ ४४ ॥

इति श्रीमहाभारते शतसाहस्त्र्यां संहितायां वैयासिक्यां स्त्रीपर्वणि जलप्रदानिकपर्वणि विशोककरणे प्रथमोऽध्यायः ॥ १ ॥

वैशम्पायन उवाच ततोऽमृतसमैर्वाक्यैर्ह्लादयन्पुरुषर्षभम् ।
वैचित्रवीर्यं विदुरो यदुवाच निबोध तत् ॥ १ ॥

विदुर उवाच- उत्तिष्ठ राजन्किं शेषे धारयात्मानमात्मना ।
एषा वै सर्वसत्वानां लोकेश्वर परा गतिः ॥ २ ॥
सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः ।
संयोगा विप्रयोगान्ता मरणान्तं च जीवितम् ॥ ३ ॥
यदा शूरं च भीरुं च यमः कर्षति भारत ।
तत्किं न योत्स्यन्ति हि ते क्षत्रियाः क्षत्रियर्षभ ॥ ४ ॥
अयुध्यमानो म्रियते युध्यमानश्च जीवति ।

कालं प्राप्य महाराज न कश्चिदतिवर्तते ॥ ५ ॥
अभावादीनि भूतानि भावमध्यानि भारत ।
अभावनिधनान्येव तत्र का परिदेवना ॥ ६ ॥
न शोचन्मृतमन्वेति न शोचन्म्रियते नरः ।
एवं सांसिद्धिके लोके किमर्थमनुशोचसि ॥ ७ ॥
कालः कर्षति भूतानि सर्वाणि विविधान्युत ।
न कालस्य प्रियः कश्चिन्न द्वेष्यः कुरुसत्तम ॥ ८ ॥
यथा वायुस्तृणाग्राणि संवर्तयति सर्वशः ।
तथा कालवशं यान्ति भूतानि भरतर्षभ ॥ ९ ॥
एकसार्थप्रयातानां सर्वेषां तत्र गामिनाम् ।
यस्य कालः प्रयात्यग्रे तत्र का परिदेवना ॥ १० ॥
न चाप्येतान्हतान्युद्धे राजन् शोचितुमर्हसि ।
प्रमाणं यदि शास्त्राणि गतास्ते परमां गतिम् ॥ ११ ॥
सर्वे स्वाध्यायवन्तो हि सर्वे च चरितव्रताः ।
सर्वे चाभिमुखाः क्षीणास्तत्र का परिदेवना ॥ १२ ॥

जीता रहे, क्यों कि काल आनेसे सब ही मर जाते हैं। जगत्के पहिले ब्रह्म था, अन्तमें ब्रह्म रहेगा, केवल बीचमें शरीर धारण करता है, इसलिये सब शरीर नष्ट होनेवाले हैं। इसमें रोनेसे क्या होगा? शोच करनेसे मरा हुआ नहीं मिलता और शोचनेसे कोई मर भी नहीं जाता, लोक इस ही प्रकार स्थित है, इसलिये आप शोच करने योग्य नहीं हैं। (४-७)

हे कुरुकुलश्रेष्ठ! काल जगत्में सब प्रकारके जीवोंका नाश करता है, उसका कोई भी मित्र और शत्रु नहीं है, जेसे वायु तिनकोंको इधर उधर उडाया करता है वैसेही कालभी जीवोंको इधर उधर घुमाया करता है, यद्यपि सब एक रीतिसे उत्पन्न होते है, परन्तु मरनेके समय जिस को काल पहिले आता है, वही मनुष्य पहिले मरता है। इसलिये रोनेसे क्या होगा? यदि आप शास्त्रोंको प्रमाण मानते हो, तो निश्चयही ये सब क्षत्री स्वर्गको गए इसलिये आप युद्धमें मरे हुए वीरों का शोक न कीजिये, वे सब क्षत्री वेद पाठी, व्रतधारी थे; और सब युद्धमें सन्मुख मरे उनके लिये रोनेसे क्या लाभ है? सब अज्ञानसे यहां आए थे, और अज्ञानसे नष्ट होगए, तुम उनके कोई नहीं हो और वे तुम्हारे कोई नहीं थे, इसलिये रोनेसे क्या होगा? क्षत्रियों



श्री-महर्षि-व्यास-प्रणीत

# महाभारत।

## (११) स्त्रीपर्व।

( भाषाभाष्य समेत )

संपादक और प्रकाशक
श्रीपाद दामोदर सातवलेकर
स्वाध्यायमण्डल, औंध (जि० सातारा)

संवत् १९८६

शक १८५१

सन १९२९

# उत्तम राजा !

राजा हि यः स्थितप्रज्ञः स्वयं दोषानवेक्षते ।
देशकालविभागं च परं श्रेयः स विन्दति ॥

स्त्रीपर्व अ० १३ । ६

" जो राजा अपनी बुद्धिको स्थिर करके देश और कालके अनुसार सब दोषोंको देखता है, जगत् में उसीका कल्याण होता है । "

मुद्रक तथा प्रकाशक — श्रीपाद दामोदर सातवळेकर,
स्वाध्याय मंडल, भारतमुद्रणालय औंध ( जि सातारा )

संसारेष्वनुभूतानि कस्य ते कस्य वा वयम् ॥ २१ ॥
शोकस्थानसहस्राणि भयस्थानशतानि च ।
दिवसे दिवसे मूढमाविशन्ति न पण्डितम् ॥ २२ ॥
न कालस्य प्रियः कश्चिन्न द्वेष्यः कुरुसत्तम ।
न मध्यस्थः क्वचित्कालः सर्वं कालः प्रकर्षति ॥ २३ ॥
कालः पचति भूतानि कालः संहरते प्रजाः ।
कालः सुप्तेषु जागर्ति कालो हि दुरतिक्रमः ॥ २४ ॥
अनित्यं यौवनं रूपं जीवितं द्रव्यसञ्चयः ।
आरोग्यं प्रियसंवासो गृद्ध्येदेषु न पण्डितः ॥ २५ ॥
न जानपदिकं दुःखमेकः शोचितुमर्हसि ।
अप्यभावेन युज्येत तच्चास्य न निवर्तते ॥ २६ ॥
अशोचन्प्रतिकुर्वीत यदि पश्येत्पराक्रमम् ।
भैषज्यमेतद्दुःखस्य यदेतन्नानुचिन्तयेत् ॥ २७ ॥
चिन्त्यमानं हि न व्येति भूयश्चापि प्रवर्धते ।
अनिष्टसम्प्रयोगाच्च विप्रयोगात्प्रियस्य च ॥ २८ ॥
मानुषा मानसैर्दुःखैर्दह्यन्ते चाल्पबुद्धयः ।

---

चुके । तुम किसके हुए और तुम्हारा कौन हुआ जगत्में शोकके सहस्रों और भयके सैकडों स्थान हैं, उनमें प्रतिदिन मूर्ख जाते है, पण्डित नहीं । (२०-२२)

हे कुरुकुलश्रेष्ठ ! कालका कोई मित्र, शत्रु और मध्यस्थ नहीं है, वह समान रूपसे सबका नाश करता है, काल जगतका नाश करता है, काल सब जगत्के सोनेपर भी जागता है, कालको कोई भी नहीं नांघ सक्ता, यौवन रूप, जीवन द्रव्य, सुख और मित्रोंके सङ्ग रहना सब अनित्य है, इसलिये पण्डित इनकी इच्छा न करे; सब जगत्के शोचको आप एकले अपने ऊपर न लीजिये । क्यों कि जो अभाव होनेवाला होता है, वह किसी के रोके रुकता नहीं । (२३-२६)

यदि मनुष्य अपना पराक्रम देखे तो विना शोक किये ही शोचका बदला लेय । शोकरूपी दुःखकी यही औषधी है, क्यों कि शोक करनेसे शोक नष्ट नहीं होता, वरन उलटा बढता ही है । बुरा कर्म करने और बन्धुओंके वियोगमे जो शोक उत्पन्न होता है, उससे मूर्ख मनुष्योंका हृदय जला करता है, आप जो शोच करते हैं, इससे धर्म, अर्थ और



श्रीमहर्षिव्यासप्रणीतम् ।

# म हा भा र त म् ।

## स्त्रीपर्व ।

श्रीगणेशाय नमः ।

श्रीवेदव्यासाय नमः ।

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं चैव ततो जयमुदीरयेत् ॥ १ ॥

जनमेजय उवाच-हते दुर्योधने चैव हते सैन्ये च सर्वशः ।
धृतराष्ट्रो महाराज श्रुत्वा किमकरोन्मुने ॥ २ ॥

तथैव कौरवो राजा धर्मपुत्रो महामनाः ।
कृपप्रभृतयश्चैव किमकुर्वत ते त्रयः ॥ २ ॥

अश्वत्थाम्नः श्रुतं कर्म शापादन्योन्यकारितात् ।
वृत्तान्तमुत्तरं ब्रूहि यदभाषत संजयः ॥ ३ ॥

नार्थो न धर्मो न सुखं यदेतदनुशोचसि ॥ २९ ॥
न च नापैति कार्यार्थो त्रिवर्गाचैव हीयते ।
अन्यामन्यां धनावस्थां प्राप्य वैशेषिकीं नराः ।
असंतुष्टाः प्रमुह्यन्ति सन्तोषं यान्ति पण्डिताः ॥३०॥
प्रज्ञया मानसं दुःखं हन्याच्छारीरमौषधैः ।
एतद्विज्ञानसामर्थ्यं न बालैः समतामियात ॥ ३१ ॥
शयानं चानुशेते हि तिष्ठन्तं चानुतिष्ठति ।
अनुधावति धावन्तं कर्म पूर्वकृतं नरम् ॥ ३२ ॥
यस्यां यस्यामवस्थायां यत्करोति शुभाशुभम् ।
तस्यां तस्यामवस्थायां तत्फलं समुपाश्नुते ॥ ३३ ॥
येन येन शरीरेण यद्यत्कर्म करोति यः ।
तेन तेन शरीरेण तत्फलं समुपाश्नुते ॥ ३४ ॥
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ।
आत्मैव ह्यात्मनः साक्षी कृतस्यापकृतस्य च ॥ ३५ ॥
शुभेन कर्मणा सौख्यं दुःखं पापेन कर्मणा ।
कृतं भवति सर्वत्र नाकृतं विद्यते क्वचित् ॥ ३६ ॥

---

कोई सुख भी सिद्ध नहीं होगा, इससे
जगत्‌के कार्य सिद्ध नहीं होते और स्वर्ग
भी नष्ट होजाता है । साधारण मनुष्य
जब किसी छोटी अवस्थासे बड़ी अव-

वैशम्पायन उवाच—हते पुत्रशते दीनं छिन्नशाखमिव द्रुमम्।
पुत्रशोकाभिसन्तप्तं धृतराष्ट्रं महीपतिम् ॥ ४ ॥
ध्यानमूकत्वमापन्नं चिन्तया समभिप्लुतम्।
अभिगम्य महाराज सञ्जयो वाक्यमब्रवीत् ॥ ५ ॥
किं शोचसि महाराज नास्ति शोके सहायता।
अक्षौहिण्यो हताश्चाष्टौ दशचैव विशाम्पते ॥ ६ ॥
निर्जनेयं वसुमती शून्या संप्रति केवला।
नानादिग्भ्यः समागम्य नानादेश्या नराधिपाः ॥ ७ ॥
सहैव तव पुत्रेण सर्वे वै निधनं गताः।
पितॄणां पुत्रपौत्राणां ज्ञातीनां सुहृदां तथा।
गुरूणां चानुपूर्व्येण प्रेतकार्याणि कारय ॥ ८ ॥
वैशम्पायन उवाच—तच्छ्रुत्वाऽकरुणं वाक्यं पुत्रपौत्रवधार्दितः।
पपात भुवि दुर्धर्षो वाताहत इव द्रुमः ॥ ९ ॥
धृतराष्ट्र उवाच—हतपुत्रो हतामात्यो हतसर्वसुहृज्जनः।
दुःखं नूनं भविष्यामि विचरन्पृथिवीमिमाम् ॥ १० ॥
किं नु बन्धुविहीनस्य जीवितेन ममाद्य वै।

---

श्रीवैशम्पायन मुनि बोले, हे महाराज! सौ पुत्रोंके मरनेसे राजा धृतराष्ट्रकी ऐसी दशा होगई जैसे शाखा कटनेसे वृक्षकी। उस समय पुत्रशोकसे व्याकुल, चिन्तासे भरे राजा धृतराष्ट्रके पास जाकर सञ्जय बोले, हे महाराज! शोक किसीकी सहायता नहीं करता, इसलिये आप क्यों शोक करते है? देखो अठारह अक्षौहिणी सेना मारी गई, इस समय पृथ्वी मनुष्योंसे रहित होगई है, अब किसी ओर कुछ उत्साह नहीं दीखता, अनेक देशोंसे आये हुये राजा तुम्हारे पुत्रोंके सहित मारे गये, आप उठिये, गुरु, बेटे, पोते, जाती और मित्रोंका प्रेतकर्म कीजिये। (६–८)

श्रीवैशम्पायन मुनि बोले, हे राजन् जनमेजय! सञ्जयके ऐसे दया भरे वचन सुनकर अपने पुत्र और पोतोंके शोकसे व्याकुल राजा धृतराष्ट्र मूर्च्छित होकर पृथ्वीमें गिर गये, उस समय राजाकी ऐसी दशा होगई, जैसे वायुसे उखडे हुए वृक्षकी। (९)

राजा धृतराष्ट्र बोले, हे सञ्जय! मेरे सब पुत्र, मन्त्री और मित्र मारे गये, अब मैं जीकर जगत्में केवल दुःख ही भोगूंगा। अब मैं बन्धुरहित होकर जी-

न हि ज्ञानविरुद्धेषु बह्वपायेषु कर्मसु।
मूलघातिषु सज्जन्ते बुद्धिमन्तो भवद्विधाः ॥ ३७ ॥ [८१]

इति श्रीमहाभारते० स्त्रीपर्वणि जलप्रदानिकपर्वणि धृतराष्ट्रविशोककरणे द्वितीयोऽध्याय ॥ २ ॥

धृतराष्ट्र उवाच—सुभाषितैर्महाप्राज्ञ शोकोऽयं विगतो मम।
भूय एव तु वाक्यानि श्रोतुमिच्छामि तत्वतः ॥ १ ॥
अनिष्टानां च संसर्गादिष्टानां च विसर्जनात्।
कथं हि मानसैर्दुःखैः प्रमुच्यन्ते तु पण्डिताः ॥ २ ॥

विदुर उवाच— यतो यतो मनो दुःखात्सुखाद्वा विप्रमुच्यते।
ततस्ततो नियम्यैतच्छान्ति विन्देत वै बुधः ॥ ३ ॥
अशाश्वतमिदं सर्वं चिंत्यमानं नरर्पभ।
कदलीसन्निभो लोकः सारो ह्यस्य न विद्यते ॥ ४ ॥
यदा प्राज्ञाश्च मूढाश्च धनवन्तोऽथ निर्धनाः।
सर्वे पितृवनं प्राप्य स्वपन्ति विगतज्वराः ॥ ५ ॥
निर्मांसैरस्थिभूयिष्ठैर्गात्रैः स्नायुनिबन्धिभिः।
किं विशेषं प्रपश्यंति तत्र तेषां परे जनाः ॥ ६ ॥

हुए कोई कर्मका फल नहीं भोगता, धर्मका सुख और पापका फल दुःख है, आपके समान बुद्धिमान लोग मूलनाश करनेवाले अज्ञानसे उत्पन्न हुये पापकर्म नहीं करते हैं। (३३–३७) [८१]

स्त्रीपर्वमें द्वितीय अध्याय समाप्त।

स्त्रीपर्वमें तृतीय अध्याय।

महाराज धृतराष्ट्र बोले, हे महाबुद्धिमान! तुम्हारे उत्तम वचन सुननेसे मेरा शोक नष्ट होगया। अब कुछ और सुननेकी इच्छा है, हम तुमसे प्रश्न करते हैं, कि प्यारी वस्तुओंके छूटने और अनिष्ट वस्तुओंके मिलनेसे पण्डितोंके मनमें दुःख क्यों नहीं होता? विदुर बोले, हे राजन्! जिस जिस वस्तुसे मनमें सुख वा दुःख होय, पण्डित उनहीसे दूर रहे और अपने मनको वशमें रक्खे तो शान्ति प्राप्ति होती है। (१–३)

हे पुरुपसिंह! आप अत्यन्त विचार कर देखिये तो यह अनित्य जगत् केलेके वृक्षके समान सारहीन मिलेगा, देखो सब पण्डित, मूर्ख, धनी और निर्धन श्मशानमें जाकर एक समान सो रहते हैं, देखो उस समय मांसरहित हड्डी और नाडियोंसे बन्धे हुए शरीरमें मनुष्यका भेद देखता है, अर्थात् मरे हुए दरिद्र और धनीके शरीरमें कुछ भेद नहीं रहता, जिससे कुल और रूप

लूनपक्षस्य इव मे जराजीर्णस्य पक्षिणः ॥ ११ ॥
हृतराज्यो हतबन्धुर्हतचक्षुश्च वै तथा ।
न भ्राजिष्ये महाप्राज्ञ क्षीणरश्मिरिवांशुमान् ॥ १२ ॥
न कृतं सुहृदां वाक्यं जामदग्न्यस्य जल्पतः ।
नारदस्य च देवर्षेः कृष्णद्वैपायनस्य च ॥ १३ ॥
सभामध्ये तु कृष्णेन यच्छ्रेयोऽभिहितं मम ।
अलं वैरेण ते राजन्पुत्रः सङ्गृह्यतामिति ॥ १४ ॥
तच्च वाक्यमकृत्वाऽहं भृशं तप्यामि दुर्मतिः ।
न हि श्रोताऽस्मि भीष्मस्य धर्मयुक्तं प्रभाषितम् ॥ १५ ॥
दुर्योधनस्य च तथा वृषभस्येव नर्दतः ।
दुःशासनवधं श्रुत्वा कर्णस्य च विपर्ययम् ॥ १६ ॥
द्रोणसूर्योपरागं च हृदयं मे विदीर्यते ।
न स्मराम्यात्मनः किञ्चित्पुरा सञ्जय दुष्कृतम् ॥ १७ ॥
यस्येदं फलमद्येह मया मूढेन भुज्यते ।
नूनं व्यपकृतं किञ्चिन्मया पूर्वेषु जन्मसु ॥ १८ ॥
येन मां दुःखभागेषु धाता कर्मसु युक्तवान् ।

येन प्रलयगच्छेयुः कुलरूपविशेषणम् ।
कस्मादन्योन्यमिच्छन्ति विप्रलब्धधियो नराः ॥ ७ ॥
गृहाणीव हि मर्त्यानामाहुर्देहानि पण्डिताः ।
कालेन विनियुज्यन्ते सत्वमेकं तु शाश्वतम् ॥ ८ ॥
यथा जीर्णमजीर्णं वा वस्त्रं त्यक्त्वा तु पूरुषः ।
अन्यद्रोचयते वस्त्रमेवं देहाः शरीरिणाम् ॥ ९ ॥
वैचित्रवीर्य साध्यं हि दुःखं वा यदि वा सुखम् ।
प्राप्नुवन्तीह भूतानि स्वकृतेनैव कर्मणा ॥ १० ॥
कर्मणा प्राप्यते स्वर्गः सुखं दुःखं च भारत ।
ततो वहति तं भारमवशः स्ववशोऽपि वा ॥ ११ ॥
यथा च मृन्मयं भाण्डं चक्रारूढं विपद्यते ।
किञ्चित्प्रक्रियमाणं वा कृतमात्रमथापि वा ॥ १२ ॥
छिन्नं वाप्यवरोप्यन्तमवतीर्णमथापि वा ।
आर्द्रं वाऽप्यथवा शुष्कं पच्यमानमथापि वा ॥ १३ ॥
उत्तार्यमाणमापाकादुद्धृतं चापि भारत ।

परिणामश्च वयसः सर्वबन्धुक्षयश्च मे ॥ १९ ॥
सुहृन्मित्रविनाशश्च दैवयोगादुपागतः।
कोऽन्योऽस्ति दुःखिततरो मत्तोऽन्यो हि पुमान्भुवि ॥२०॥
तन्ममाद्यैव पश्यन्तु पाण्डवाः संशितव्रताः।
विवृतं ब्रह्मलोकस्य दीर्घमध्वानमास्थितम् ॥ २१ ॥
वैशम्पायन उवाच-तस्य लालप्यमानस्य बहुशोकं वितन्वतः।
शोकापहं नरेन्द्रस्य सञ्जयो वाक्यमब्रवीत ॥ २२ ॥
शोकं राजन्व्यपनुद श्रुतास्ते वेदनिश्चयाः।
शास्त्रागमाश्च विविधा वृद्धेभ्यो नृपसत्तम ॥ २३ ॥
सृञ्जये पुत्रशोकार्ते यदूचुर्मुनयः पुरा।
यथा यौवनजं दर्पमास्थिते ते सुते नृप ॥ २४ ॥
न त्वया सुहृदां वाक्यं ब्रुवतामवधारितम्।
स्वार्थश्च न कृतः कश्चिल्लुब्धेन फलगृद्धिना ॥ २५ ॥
असिनैवैकधारेण स्वबुद्ध्या तु विचेष्टितम्।
प्रायशोऽवृत्तसम्पन्नाः सततं पर्युपासिताः ॥ २६ ॥
यस्य दुःशासनो मंत्री राधेयश्च दुरात्मवान्।

भोगना पडा। मुझे निश्चय है कि मैंने पहिले जन्मोंमें कुछ पाप किया था, उसीसे ब्रह्माने मुझे ऐसे ऐसे दुःख दिये। यह बुढापा, बन्धु और मित्रोंका नाश ये प्रारब्धहीसे सब दुःख इकट्ठे होगये हैं; अब इस जगतमें हमारे समान दुःखी और कौन है? इसलिये व्रतधारी पाण्डव आज ही हमें ब्रह्म लोकके बडे रास्तेमें जाते देखें, अर्थात् हम इसही समय प्राण त्याग करते हैं। (१८-२१)

श्रीवैशम्पायन मुनि बोले, इस प्रकारसे राजाको अनेक प्रकार रोते देख सञ्जय बोले, हे महाराज! आपने वृद्धोंके मुखसे वेद और अनेक शास्त्र सुने है, इसलिये आप शोकको छोड दीजिए, हे राजन्! जैसे पुत्रके मरनेसे राजा सृञ्जयको शोक हुआ था और उनको मुनियोंने समझाया था, जैसे उनके पुत्रोंको अभिमान हुआ था, ऐसे ही तुम्हारे पुत्रको भी अभिमान हुआ था, आपने पहिले किसीकी बात नहीं मानी, केवल लोभमें पडके अन्याय करने लगे और अपना भी प्रयोजन कुछ सिद्ध न कर सके, केवल अत्यन्त तेजधारवाली तलवारके समान अपनी महातेज बुद्धिसे काम करते रहे। ( २२-२६ )

अथवा परिभुज्जन्तमेवं देहाः शरीरिणाम् ॥ १४ ॥
गर्भस्थो वा प्रसूतो वाऽप्यथवा दिवसान्तरः ।
अर्धमासगतो वाऽपि मासमात्रगतोऽपि वा ॥ १५ ॥
संवत्सरगतो वापि द्विसंवत्सर एव वा ।
यौवनस्थोऽथ मध्यस्थो वृद्धो वाऽपि विपद्यते ॥ १६ ॥
प्राक्कर्मभिस्तु भूतानि भवन्ति न भवन्ति च ।
एवं सांसिद्धिके लोके किमर्थमनुतप्यसे ॥ १७ ॥
यथा तु सलिलं राजन् क्रीडार्थमनुसन्तरन् ।
उन्मज्जेच्च निमज्जेच्च किञ्चित्सत्वं नराधिप ॥ १८ ॥
एवं संसारगहने उन्मज्जननिमज्जने ।
कर्मभोगेन बध्यन्ते क्लिश्यन्ते चाल्पबुद्धयः ॥ १९ ॥
ते तु प्राज्ञाः स्थिताः सत्वे संसारेऽस्मिन् हितैषिणः ।
समागमज्ञा भूतानां ते यान्ति परमां गतिम् ॥ २० ॥

इति श्रीमहाभारते शतसाहस्त्र्या संहितायां वैयासिक्या स्त्रीपर्वणि जलप्रदानिकपर्वणि
विशोककरणे तृतीयोऽध्यायः ॥ ३ ॥ [ १०१ ]

धृतराष्ट्र उवाच—कथं संसारगहनं विज्ञेयं वदतां वर ।
एतदिच्छाम्यहं श्रोतुं तत्त्वमाख्याहि पृच्छतः ॥ १ ॥

---

चुल्हेपर चढी, कोई उतरी, कोई उतरती, कोई आधी पकी और पूरी पककर फूटती है, ऐसेही किसीका शरीर गर्भहीमें उत्पन्न होते ही, किसीका एक दिनमें, किसीका दूसरे दिन, किसीका एक पक्षमें, किसीका एक महीनेमें, किसीका एक वर्षमें, किसीका दो वर्षमें, किसीका जवानीमें, किसीका बुढापेमें नष्ट होजाता है, पहिले कर्मोंके वशमें होकर मनुष्य उत्पन्न होते हैं और मरते हैं, यह संसार अपने स्वभावसे ऐसे ही चलता है, जैसे कोई जन्तु खेलनेके लिये पानीमें तैरता है, उसमें कभी डूबता है और कभी उछलता है, ऐसे ही इस गम्भीर जगत्में मूर्ख कर्मके वशमें होकर बन्धते हैं और दुःख भोगते हैं, परन्तु कल्याण चाहनेवाले पण्डित इन सब दुःखोंसे छूटकर मोक्ष पदको पाते हैं। ( १२–२९) [ १०१ ]

स्त्री पर्वमें तीन अध्याय समाप्त।

स्त्री पर्वमें चार अध्याय।

महाराज धृतराष्ट्र बोले, हे कहनेवालोंमें श्रेष्ठ विदुर ! इस संसाररूपी वन को मनुष्यसे ही जान सक्ता है, हम

शकुनिश्चैव दुष्टात्मा चित्रसेनश्च दुर्मतिः ॥ २७ ॥
शल्यश्च येन वै सर्वं शल्यभूतं कृतं जगत् ।
कुरुवृद्धस्य भीष्मस्य गान्धार्या विदुरस्य च ॥ २८ ॥
द्रोणस्य च महाराज कृपस्य च शरद्वतः ।
कृष्णस्य च महाबाहो नारदस्य च धीमतः ॥ २९ ॥
ऋषीणां च तथाऽन्येषां व्यासस्यामिततेजसः ।
न कृतं तेन वचनं तव पुत्रेण भारत ।
न धर्मः सत्कृतः कश्चिन्नित्यं युद्धमभीप्सता ॥ ३० ॥
अल्पबुद्धिरहङ्कारी नित्यं युद्धमिति ब्रुवन् ।
क्रूरो दुर्मर्षणो नित्यमसन्तुष्टश्च वीर्यवान् ॥ ३१ ॥
श्रुतवानसि मेधावी सत्यवांश्चैव नित्यदा ।
न मुह्यन्तीदृशाः सन्तो बुद्धिमन्तो भवादृशाः ॥ ३२ ॥
न धर्मः सत्कृतः कश्चित्तव पुत्रेण मारिष ।
क्षपिताः क्षत्रियाः सर्वे शत्रूणां वर्धितं यशः ॥ ३३ ॥
मध्यस्थो हि त्वमप्यासीर्न क्षमं किञ्चिदुक्तवान् ।
दुर्धरेण त्वया भारस्तुलया न समं धृतः ॥ ३४ ॥

विदुर उवाच— जन्मप्रभृति भूतानां क्रिया सर्वोपलक्ष्यते ।
पूर्वमेवेह कलिले वसते किञ्चिदन्तरम् ॥ २ ॥
ततः स पञ्चमेऽतीते मासे वासमकल्पयत् ।
ततः सर्वाङ्गसम्पूर्णो गर्भो वै स तु जायते ॥ ३ ॥
अमेध्यमध्ये वसति मांसशोणितलेपने ।
ततस्तु वायुवेगेन ऊर्ध्वपादो ह्यधःशिराः ॥ ४ ॥
योनिद्वारमुपागम्य बहून् क्लेशान्स मृच्छति ।
योनिसम्पीडनाच्चैव पूर्वकर्मभिरन्वितः ॥ ५ ॥
तस्मान्मुक्तः स संसारादन्यान्पश्यत्युपद्रवान् ।
ग्रहास्तमनुगच्छन्ति सारमेया इवामिषम् ॥ ६ ॥
ततः प्राप्तोत्तरे काले व्याधयश्चापि तं तथा ।
उपसर्पन्ति जीवन्तं बध्यमानं स्वकर्मभिः ॥ ७ ॥
तं बद्धमिन्द्रियैः पाशैः सङ्गस्वादुभिरावृतम् ।
व्यसनान्यपि वर्तन्ते विविधानि नराधिप ॥ ८ ॥
बध्यमानश्च तैर्भूयो नैव तृप्तिमुपैति सः ।
तदा नावैति चैवायं प्रकुर्वन्साध्वसाधु वा ॥ ९ ॥

आदावेव मनुष्येण वर्तितव्यं यथाक्षमम्।
यथा नातीतमर्थं वै पश्चात्तापेन युज्यते ॥ ३५ ॥
पुत्रगृद्ध्या त्वया राजन् प्रियं तस्य चिकीर्षितम्।
पश्चात्तापमिमं प्राप्तो न त्वं शोचितुमर्हसि ॥ ३६ ॥
मधु यः केवलं दृष्ट्वा प्रपातं नानुपश्यति।
स भ्रष्टो मधुलोभेन शोचत्येवं यथा भवान् ॥ ३७ ॥
अर्थान्न शोचन्प्राप्नोति न शोचन्विन्दते फलम्।
न शोचन् श्रियमाप्नोति न शोचन्विन्दते परम् ॥३८॥
स्वयमुत्पादयित्वाऽग्निं वस्त्रेण परिवेष्टयन्।
दह्यमानो मनस्तापं भजते न स पण्डितः ॥ ३९ ॥
त्वयैव ससुतेनायं वाक्यवायुसमीरितः।
लोभाज्येन च संसिक्तो ज्वलितः पार्थपावकः ॥४० ॥
तस्मिन् समिद्धे पतिताः शलभा इव ते सुताः।
तान्वै शराग्निनिर्दग्धान्न त्वं शोचितुमर्हसि ॥ ४१ ॥
यच्चाश्रुपातात्कलिलं वदनं वहसे नृप।
अशास्त्रदृष्टमेतद्धि न प्रशंसन्ति पण्डिताः ॥ ४२ ॥
विस्फुलिङ्गा इव ह्येतान्दहन्ति किल मानवान्।

समान बोझ न रक्खा, मनुष्यको ऐसा उचित है कि पहिले ही शक्तिके अनुसार ऐसा विचारकरे, जिसमें आगे कोई दुःख न भोगना पडे। तुमने भी पुत्रके प्रेममें आकर दुर्योधनके अनुकूल ही वर्त्ताव किया, फिर अब आपत्ति पडनेसे क्यों शोक करते हो? (३२-३६)

जो केवल शहत देखकर वृक्षपर चढ जाता है और अपने गिरनेका भय नहीं करता, वह वृक्षपरसे गिरकर तुम्हारे ही समान आपत्ति भोगता है। शोचसे धन, बल, लक्ष्मी और मोक्ष सिद्ध नहीं होती। जो आप ही आग बनाकर पीछे कपडेसे ढकता है और पीछे जलनेसे शोच करता है, वह पण्डित नहीं कहाता तुमने अपने पुत्रको सङ्ग लेकर वचन रूपी वायुसे धौंककर और लोभरूपी घी डालकर युधिष्ठिररूपी अग्निको चैतन्य कर दिया, उस बढी हुई अग्निकी बाणरूपी ज्वालामें तुम्हारे पुत्र पतङ्गके समान जल गये, अब तुम उनका क्या शोच करते हो? अब जो तुम अपनी आंसुओंसे शरीरको भिगा रहे हो, यह व्यवहार शास्त्रसे विरुद्ध है, पण्डित ऐसा

तथैव परिरक्षन्ति ये ध्यानपरिनिष्ठिताः।
अयं न बुद्धयते तावद्यमलोकमथागतम् ॥ १० ॥
यमदूतैर्विकृष्यंश्च मृत्युं कालेन गच्छति।
वाग्घीनस्य च यन्मात्रमिष्टानिष्टं कृतं मुखे।
भूय एवात्मनाऽऽत्मानं वध्यमानमुपेक्षते ॥ ११ ॥
अहो विनिकृतो लोको लोभेन च वशीकृतः।
लोभक्रोधभयोन्मत्तो नात्मानमवबुध्यते ॥ १२ ॥
कुलीनत्वे च रमते दुष्कुलीनान्विकुत्सयन्।
धनदर्पेण दृप्तश्च दरिद्रान्परिकुत्सयन् ॥ १३ ॥
मूर्खानिति परानाह नात्मानं समवेक्षते।
दोषान्क्षिपति चान्येषां नात्मानं शास्तुमिच्छति॥१४॥
यदा प्राज्ञाश्च मूर्खाश्च धनवन्तश्च निर्धनाः।
कुलीनाश्चाकुलीनाश्च मानिनोऽथाप्यमानिनः ॥ १५ ॥
सर्वे पितृवनं प्राप्ताः स्वपन्ति विगतत्वचः।
निर्मांसैरस्थिभूयिष्ठैर्गात्रैः स्नायुनिबन्धनैः ॥ १६ ॥

भला काम करते करते आपत्तियोंसे तृप्त नहीं होता, तब महात्मा शास्त्र और ध्यानकी विधिसे अपने आत्माकी रक्षा करते हैं। परन्तु मूर्ख कुछ भी नहीं जान सक्ता, तब उसे यमदूत खींचकर मारडालते हैं और यमलोकको ले जाते हैं। तब सब इन्द्रिय नष्ट होनेपर भी जो पहिले पुण्य और पाप किया था, उसका फल देखकर भी अपने कल्याणका कोई उपाय नहीं करता, अर्थात् अपने आप ही बन्धन काटनेका उपाय नहीं करता। (९-११)

देखो कैसे आश्चर्यकी बात है, कि सब जगत् पागलके समान होकर लोभके वशमें पडा है, देखो मनुष्य लोभ, क्रोध और भयसे पागल होकर अपने आत्माका कुछ ज्ञान नहीं करता। "हम कुलीन है" इस अभिमानसे छोटे कुलवालोंका और धनके अभिमानसे दरिद्रियोंकी निन्दा करता है, मैं पण्डित हूं और सब मूर्ख है, यह जानकर दूसरोंके दोष देखाता है, परन्तु अपने दोषोंको दूर करनेकी इच्छा नहीं करता। (१२-१४)

देखो पण्डित, मूर्ख, धनी, निर्धन, कुलीन, अकुलीन, मानी और मानरहित सब ही श्मशानमें जाकर नङ्गे होकर सो जाते हैं, किसीका मांस हड्डी और वसा भी नहीं बचती, उस समय दूसरे

स्वधामिवाप्य ज्वलनः पितृप्रियस्ततः प्रशान्तः सलिलप्रवाहतः ॥५०॥
समाप्तविद्यं तु गुरोः सुतं नृपः समाप्तकर्माणमुपेत्य ते सुतः ।
सुहृद्वृतोऽत्यर्थमपूजयन्मुदा जिते बलौ विष्णुमिवामरेश्वरः ॥५१॥ [८१७]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां कर्णपर्वणि पाण्ड्यवधे विंशोऽध्यायः ॥ २० ॥

धृतराष्ट्र उवाच— पाण्ड्ये हते किमकरोदर्जुनो युधि सञ्जय ।
एकवीरेण कर्णेन द्रावितेषु परेषु च ॥ १ ॥
समाप्तविद्यो बलवान्युक्तो वीरः स पाण्डवः ।
सर्वभूतेष्वनुज्ञातः शङ्करेण महात्मना ॥ २ ॥
तस्मान्महद्भयं तीव्रममित्रघ्नाद्धनञ्जयात् ।
स यत्तत्राकरोत्पार्थस्तन्ममाचक्ष्व सञ्जय ॥ ३ ॥

सञ्जय उवाच— हते पाण्ड्येऽर्जुनं कृष्णस्त्वरन्नाह वचो हितम् ।
पश्यामि नाहं राजानमपयातांश्च पाण्डवान् ॥ ४ ॥
निवृत्तैश्च पुनः पार्थैर्भग्नं शत्रुबलं महत् ।
अश्वत्थाम्नश्च सङ्कल्पाद्धताः कर्णेन सृञ्जयाः ॥ ५ ॥

को मारकर और राक्षसोंको भोजन देकर प्रेतरूप हविको प्राप्त होकर अन्तमें जैसे सशानकी अग्नि जल प्रवाहसे शान्त होती है, वैसे ही वह पांड्यराज अश्वत्थामाके वाणोंसे शान्त हुए ॥ राजा मलयध्वजके मरनेके पश्चात् तुम्हारे पुत्र राजा दुर्योधनने समस्त विद्या जाननेवाले और समस्त कर्मको समाप्त करनेवाले अश्वत्थामाकी इसप्रकार स्तुति करी, जैसे बलिके जीतनेपर देवतोंके राजा इन्द्रने विष्णुकी की थी ॥ (४९-५१) [८१७]

कर्णपर्वमें वीस अध्याय समाप्त ।

कर्णपर्वमें इक्कीस अध्याय।

धृतराष्ट्र बोले,हे सञ्जय ! राजा मलयध्वजके मरनेके पश्चात् जब महावीर कर्णने पाण्डवोंकी सेनाको भगाया, तब अर्जुनने क्या कहा ? क्योंकि अर्जुनने समस्त धनुर्वेद पढा है, और साक्षात् शिवने उसे आशीर्वाद दिया है, कि तुम किसीसे युद्धमें नहीं हारोगे, इस लिये हम शत्रुनाशन अर्जुनसे बहुत डरते है । अतः कुन्तीपुत्र अर्जुनने जो कर्म किया हो सो हमसे कहो ॥ (१-३)

सञ्जय बोले, हे राजन् ! राजा मलयध्वजके मरनेके पश्चात् शीघ्रतामे कृष्णने अर्जुनसे हितका वचन कहा, हम राजा युधिष्ठिरको तथा अन्य पाण्डवोंको नहीं देखते हैं । निश्चयसे पाण्डव लोग युद्धसे पराङ्मुख हुए हैं, क्योंकि पाण्डव लोग युद्धके लिये खडे रहते तो शत्रुओंकी

तथाश्वरथनागानां कृतं च कदनं महत्।
सर्वमाख्यातवान्वीरो वासुदेवः किरीटिने ॥ ६ ॥
एतच्छ्रुत्वा च दृष्ट्वा च भ्रातुर्घोरं महद्भयम्।
वाहयाश्वान्हृषीकेश क्षिप्रमित्याह पाण्डवः ॥ ७ ॥
ततः प्रायाद्धृषीकेशो रथेनाप्रतियोधिना।
दारुणश्च पुनस्तत्र प्रादुरासीत्समागमः ॥ ८ ॥
ततः पुनः समाजग्मुरभीताः कुरुपाण्डवाः।
भीमसेनमुखाः पार्थाः सूतपुत्रमुखा वयम् ॥ ९ ॥
ततः प्रववृते भूयः संग्रामो राजसत्तम।
कर्णस्य पाण्डवानां च यमराष्ट्रविवर्धनः ॥ १० ॥
धनूंषि बाणान्परिघानसिपट्टिशतोमरान्।
मुसलानि भुशुण्डीश्च सशक्त्यृष्टिपरश्वधान् ॥ ११ ॥
गदाः प्रासाञ्शितान्कुन्तान्भिन्दिपालान्महांकुशान्।
प्रगृह्य क्षिप्रमापेतुः परस्परजिघांसया ॥ १२ ॥
बाणज्यातलशब्देन द्यां दिशः प्रदिशो वियत्।
पृथिवीं नेमिघोषेण नादयन्तोऽभ्ययुः परान् ॥ १३ ॥

सेनाका नाश होनेके विना नहीं रहता, देखो अश्वत्थामाके संकल्प के अनुसार कर्णने सृञ्जय वीरोंका नाश किया है, तथा देखो कर्ण सहस्रों हाथी, घोडे और रथोंको नाश कर रहे हैं, इत्यादि सब श्रीकृष्णने अर्जुनसे कहा॥ ( ४-६ )

श्रीकृष्णके ऐसे वचन सुन युद्धको देख और अपने भाईके दुःखको जानके अर्जुनने श्रीकृष्णसे कहा, हमारे घोडोंको शीघ्र चलाओ, अर्जुनके वचन सुन, श्रीकृष्णने बहुत वेगसे घोडोंको चलाया, तब दारुण युद्ध होने लगा॥ उसी समय भीमसेनको आगे करके युधिष्ठिर की सेना और कर्णको आगे करके हमारी सेना बेडर होकर युद्ध करने लगी, हे महाराज! अनन्तर यमराजकी पुरीको भरनेवाला कर्ण और पाण्डवोंका घोर युद्ध होने लगा॥ (७-१०)

योद्धा लोग धनुष, बाण, परिघ, खड्ग, पट्टिश, तोमर, मूसल, भुशुण्डी, शक्ति, कटार, फरश, गदा, भिन्दिपाल, प्रास, कुन्तल, और बडे अंकुश लेकर एक दूसरेको मारनेके लिये प्रहार करने लगे॥ वीरोंके धनुष, बाण और तालियोंके शब्दसे दिशा, कोने और आकाश पूरित होगए। तथा रथोंकी पहियोंके

विशेषं न प्रपश्यन्ति तत्र तेषां परे जनाः ।
येन प्रत्यवगच्छेयुः कुलरूपविशेषणम् ॥ १७ ॥
यदा सर्वे समं न्यस्ताः स्वपन्ति धरणीतले ।
कस्मादन्योन्यमिच्छन्ति प्रलब्धुमिह दुर्बुधाः ।
प्रत्यक्षं च परोक्षञ्च यो निशम्य श्रुतिं त्विमाम् ॥ १८ ॥
अध्रुवे जीवलोकेऽस्मिन् यो धर्ममनुपालयन् ।
जन्मप्रभृति वर्तेत प्राप्नुयात्परमां गतिम् ॥ १९ ॥
एवं सर्वं विदित्वा वै यस्तत्त्वमनुवर्तते ।
स प्रमोक्षयते सर्वान्पन्थानो मनुजेश्वर ॥ २० ॥ [ १२१ ]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां स्त्रीपर्वणि जलप्रदानिकपर्वणि
विशोककरणे चतुर्थोऽध्यायः ॥ ४ ॥

धृतराष्ट्र उवाच—यदिदं धर्मगहनं बुद्ध्या समनुगम्यते ।
तद्वि विस्तरतः सर्वं बुद्धिमार्गं प्रशंस मे ॥ १ ॥
विदुर उवाच— अत्र ते वर्तयिष्यामि नमस्कृत्वा स्वयंभुवे ।
यथा संसारगहनं वदन्ति परमर्षयः ॥ २ ॥
कश्चिन्महति कान्तारे वर्तमानो द्विजः किल ।

महद्दुर्गमनुप्राप्तो वनं क्रव्यादसंकुलम् ॥ ३ ॥
सिंहव्याघ्रगजर्क्षौघैरतिघोरं महास्वनैः ।
पिशितादैरतिभयैर्महोग्राकृतिभिस्तथा ॥ ४ ॥
समन्तात्सम्परिक्षिप्तं यत्स्म दृष्ट्वा त्रसेद्यमः ।
तदस्य दृष्ट्वा हृदयमुद्वेगमगमत्परम् ॥ ५ ॥
अभ्युच्छ्रयं च रोम्णां वै विक्रियाश्च परन्तप ।
स तद्वनं व्यनुसरन्संप्रधावन्नितस्ततः ॥ ६ ॥
वीक्षमाणो दिशः सर्वाः शरणं क्व भवेदिति ।
स तेषां छिद्रमन्विच्छन्प्रद्रुतो भयपीडितः ॥ ७ ॥
न च निर्याति वै दूरं न वातैर्विप्रमुच्यते ।
अथापश्यद्वनं घोरं समंताद्वागुरावृतम् ॥ ८ ॥
बाहुभ्यां सम्परिक्षिप्तं स्त्रिया परमघोरया ।
पञ्चशीर्षधरैर्नागैः शैलैरिव समुन्नतैः ॥ ९ ॥
नभःस्पृशैर्महावृक्षैः परिक्षिप्तं महावनम् ।
वनमध्ये च तत्राभूदुदपानः समावृतः ॥ १० ॥
वल्लीभिस्तृणछन्नाभिर्दृढाभिरभिसंवृतः ।
पपात स द्विजस्तत्र निगूढे सलिलाशये ॥ ११ ॥
विलग्नश्चाभवत्तस्मिँल्लतासन्तानसंकुले ।
पनसस्य यथा जातं वृन्तबद्धं महाफलम् ॥ १२ ॥

नेवाले, भयरूप महाशब्दवाले बाघ, हाथी और ऋच्छोंके झुण्डोंसे भरे, भयानक, गर्जने योग्य, वनमें पहुंच गया, जिस वनको देखकर साक्षात् यमराज भी डरे, वहां जाकर इस ब्राह्मणका हृदय कांपने लगा, रोएं खडे होगये और सब काम भूल गया। फिर चारों ओर देखता हुआ "मैं किधर जाऊं" ये विचारता हुआ, उन जन्तुवोंसे बचता हुआ भयसे व्याकुल होकर इधर उधर वनमें घूमने लगा।

उस वायुसे भरे वनसे विषयोंसे व्याकुल ब्राह्मण दूर न जा सका, फिर पर्वतोंके समान ऊंचे पांच शिरवाले सांपके सहित एक स्त्रीको देखा, फिर आकाशके समान वृक्षोंसे पूरित वेत और बडे बडे तिनकोंसे भरे एक तालावको देखा, फिर ब्राह्मण उस गहरे तलावमें गिर पडा, फिर एक तिनकेको पकडकर उस लता भरे तलावमें अभिमान सहित इस प्रकार लटकने लगा, जैसे कटहरका बडा फल।

यतितं सर्वयत्नेन शमं प्रति जनेश्वर ॥ १८ ॥
न च दैवकृतो मार्गः शक्यो भूतेन केनचित्।
घटताऽपि चिरं कालं नियन्तुमिति मे मतिः ॥ १९ ॥
देवतानां हि यत्कार्यं मया प्रत्यक्षतः श्रुतम्।
तत्तेऽहं सम्प्रवक्ष्यामि यथा स्थैर्यं भवेत्तव ॥ २० ॥
पुराऽहं त्वरितो यातः सभामैन्द्रीं जितक्लमः।
अपश्यं तत्र च तदा समवेतान्दिवौकसः ॥ २१ ॥
नारदप्रमुखाश्चापि सर्वे देवर्षयोऽनघ।
तत्र चापि मया दृष्टा पृथिवी पृथिवीपते ॥ २२ ॥
कार्यार्थमुपसम्प्राप्ता देवतानां समीपतः।
उपगम्य तदा धात्री देवानाह समागतान् ॥ २३ ॥
यत्कार्यं मम युष्माभिर्ब्रह्मणः सदने तदा।
प्रतिज्ञातं महाभागास्तच्छीघ्रं संविधीयताम् ॥ २४ ॥
तस्यास्तद्वचनं श्रुत्वा विष्णुर्लोकनमस्कृतः।
उवाच वाक्यं प्रहसन् पृथिवीं देवसंसदि ॥ २५ ॥
धृतराष्ट्रस्य पुत्राणां यस्तु ज्येष्ठः शतस्य वै।
दुर्योधन इति ख्यातः स ते कार्यं करिष्यति ॥ २६ ॥
तं च प्राप्य महीपालं कृतकृत्या भविष्यसि।

---

रने शान्तिके लिये बहुत यत्न भी किये, परन्तु कोई मनुष्य बहुत दिनतक बहुत यत्न करनेपर भी प्रारब्धको नहीं रोक सक्ता, हमने जो देवतोंकी बात अपने कानसे सुनी थी सो तुमसे कहते हैं, उसके सुननेसे तुम कुछ सावधान होगे। (१८–२०)

पहिले मैं एकदिन बहुत शीघ्रतासे सावधान होकर इन्द्रकी सभामें गया, वहां जाकर सब देवतोंको इकट्ठे देखा। हे पापरहित ! वहां नारद आदि सब देव ऋषि भी बैठे थे, मैंने वहां पृथ्वीको भी देखा, पृथ्वी कुछ कामके लिये देवतोंके यहां गई थी, उसने सब देवतोंसे कहा, तुम लोगोंने जो मेरे कामके लिये कहा था, और घरमें जो प्रतिज्ञा की थी, उसे सत्य करो। पृथ्वीके ऐसे वचन सुन देवतोंकी सभामें बैठे हुए जगत्वन्दित विष्णु हंसकर पृथ्वीसे बोले, हे पृथ्वी ! जो धृतराष्ट्रके सौ बेटोंमें बडा दुर्योधन है, वह तुम्हारे कामको सिद्ध करेगा, उस ही [illegible]

स तथा लम्बते तत्र ह्यूर्ध्वपादो ह्यधः शिराः ।
अथ तत्रापि चान्योऽस्य भूयो जात उपद्रवः ॥ १३ ॥
कूपमध्ये महानागमपश्यत महाबलम् ।
कूपवीनाहवेलायामपश्यत महागजम् ॥ १४ ॥
षड्वक्त्रं कृष्णशुक्लं च द्विषट्कपदचारिणम् ।
क्रमेण परिसर्पन्तं वल्लीवृक्षसमावृतम् ॥ १५ ॥
तस्य चापि प्रशाखासु वृक्षशाखावलम्बिनः ।
नानारूपा मधुकरा घोररूपा भयावहाः ॥ १६ ॥
आसते मधु संवृत्य पूर्वमेव निकेतजाः ।
भूयोभूयः समीहन्ते मधूनि भरतर्षभ ॥ १७ ॥
स्वादनीयानि भूतानां यैर्बालो विप्रकृष्यते ।
तेषां मधूनां बहुधा धारा प्रस्रवते तदा ॥ १८ ॥
आलम्बमानः स पुमान धारां पिबति सर्वदा ।
न चास्य तृष्णा विरता पिबमानस्य सङ्कटे ॥ १९ ॥
अभीप्सति तदा नित्यमतृप्तः स पुनः पुनः ।
न चास्य जीविते राजन्निर्वेदः समजायत ॥ २० ॥
तत्रैव च मनुष्यस्य जीविताशा प्रतिष्ठिता ।
कृष्णाः श्वेताश्च तं वृक्षं कुट्टयन्ति स्म मूषिकाः ॥ २१ ॥
व्यालैश्च वनदुर्गान्ते स्त्रिया च परमोग्रया ।

---

वह जिस डालमें लटकता था, वहां इसका शिर नीचेको पैर उपरको थे, तब वहां उसने फिर एक उपद्रव देखा कि कुएके बीचमें सांप बैठा है और उपर एक मतवाला हाथी खडा है, उस हाथीके छः मुख, सफेद और काला रङ्ग और बारह पैर है, और क्रमसे टहनियों और [illegible] चला आता है. उस कुएके ऊपर जो [illegible] था, उसकी डालियोंमें [illegible] अनेक रूपवाली, [illegible] हैं, उनसे बार बार थोडा मधु गिरता है, और उसीको खाकर वह मूर्ख ब्राह्मण उस सङ्कटमें प्रसन्न होरहा है और उसकी प्यास नहीं बुझती और उसकी नहीं इच्छा होती है, कि मैं सदा यहीं [illegible]। कभी उससे निराश नहीं होता, फिर उस ब्राह्मणने देखा कि कई सफेद और कई काले चूहे [illegible] रहे हैं, उस [illegible] रहे हैं [illegible] इस ब्राह्मणको [illegible]

कूपाधस्ताच्च नागेन पीनाहे कुञ्जरेण च ॥ २२ ॥
वृक्षप्रपाताच्च भयं मूषिकेभ्यश्च पञ्चमम् ।
मधुलोभान्मधुकरैः षष्ठमाहुर्महद्भयम् ॥ २३ ॥
एवं स वसते तत्र क्षिप्तः संसारसागरे ।
न चैव जीविताशायां निर्वेदमुपगच्छति ॥२४॥ [१४५]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां स्त्रीपर्वणि जलप्रदानिकपर्वणि
विशोककरणे पचमोऽध्यायः॥ ५ ॥

धृतराष्ट्र उवाच– अहो खलु महद्दुःखं कृच्छ्रवासश्च तस्य ह ।
कथं तस्य रतिस्तत्र तुष्टिर्वा वदतां वर ॥ १ ॥
स देशः क्व नु यत्रासौ वसते धर्मसङ्कटे ।
कथं वा स विमुच्येत नरस्तस्मान्महाभयात् ॥ २ ॥
एतन्मे सर्वमाचक्ष्व साधु चेष्टामहे तदा ।
कृपा मे महती जाता तस्याभ्युद्धरणेन हि ॥ ३ ॥
विदुर उवाच-- उपमानमिदं राजन्मोक्षविद्भिरुदाहृतम् ।
सुकृतं विन्दते येन परलोकेषु मानवः ॥ ४ ॥
उच्यते यत्तु कान्तारं महासंसार एव सः ।
वनं दुर्गं हि यच्चैतत्संसारगहनं हि तत् ॥ ५ ॥

आशा न छूटी, भयानक सांप, घोर स्त्री, वनके जन्तु, नीचेवाला सांप, ऊपर वाला हाथी, लता काटनेवाले दोनों मूसे और मधुमक्खी इन छह महाभयोंको भूलकर भी वह ब्राह्मण केवल शहतके स्वादको लेने लगा, और जीनेसे निराश न हुआ और इस ही प्रकार कूवेरूपी संसारमें पडा रहा। (३—२४) [१४५]

स्त्रीपर्वमें पांच अध्याय समाप्त ।

स्त्रीपर्वमें छः अध्याय ।

महाराज धृतराष्ट्र बोले, हे कहनेवालोंमें श्रेष्ठ विदुर ! कष्टकी बात है कि वह ब्राह्मण महाकष्टमें पडा कहो वह वहां कैसे प्रसन्न और तृप्त होता था, वह देश कहां है, जहां ब्राह्मण धर्मके सङ्कटमें पडा था, वह उस दुःखमे कैसे छूटेगा, मुझे उसके ऊपर बहुत कृपा आई है, तुम यह मुझसे सब वर्णन करो। (१–३)

विदुर बोले, हे महाराज ! मोक्ष जाननेवाले महात्माओंने यह वृत्तान्त कहा है, इससे मनुष्यका परलोकमें कल्याण होता है। हमने जो भयानक वन कहा, वहीं घोर संसार है। जङ्गली जन्तु

मा तान् शोचस्व राजेन्द्र न हि शोकेऽस्ति कारणम्॥३५॥
न हि ते पाण्डवाः स्वल्पमपराध्यन्ति भारत।
पुत्रास्तव दुरात्मानो यैरियं घातिता मही ॥ ३६ ॥
नारदेन च भद्रं ते पूर्वमेव न संशयः।
युधिष्ठिरस्य समितौ राजसूये निवेदितम् ॥ ३७ ॥
पाण्डवाः कौरवाः सर्वे समासाद्य परस्परम्।
न भविष्यन्ति कौन्तेय यत्ते कृत्यं तदाचर ॥ ३८ ॥
नारदस्य वचः श्रुत्वा तदाऽशोचन्त पाण्डवाः।
एवं ते सर्वमाख्यातं देवगुह्यं सनातनम् ॥ ३९ ॥
कथं ते शोकनाशः स्यात्प्राणेषु च दया प्रभो।
स्नेहश्च पाण्डुपुत्रेषु ज्ञात्वा दैवकृतं विधिम् ॥ ४० ॥
एष चार्थो महाबाहो पूर्वमेव मया श्रुतः।
कथितो धर्मराजस्य राजसूये क्रतूत्तमे ॥ ४१ ॥
यतितं धर्मपुत्रेण मया गुह्ये निवेदिते।
अविग्रहे कौरवाणां दैवं तु बलवत्तरम् ॥ ४२ ॥
अनतिक्रमणीयो हि विधी राजन्कथञ्चन।
कृतान्तस्य तु भूतेन स्थावरेण चरेण च ॥ ४३ ॥
भवान्धर्मपरो यत्र बुद्धिश्रेष्ठश्च भारत।

---

तुम्हारे पुत्रोंके ही देखते नाश हुआ, इसलिये तुम उनका शोक मत करो। क्यों कि शोकसे कुछ होता नहीं। (२३-३५)

हे भारत! तुम्हारे दुष्ट पुत्रोंने इस जगत्का नाश किया, अब भी पाण्डव तुम्हारा कुछ अपराध नहीं करेंगे। हे राजन्! तुम्हारा कल्याण हो। युधिष्ठिर-की राजसूय यज्ञमें नारदने ये सब पहिले ही कह दिया था, कि कौरव और पाण्डव परस्पर लडके मर जायेंगे, इसलिये जो तुम्हें करना होय सो कर-लो। नारदके ऐसे वचन सुन पाण्डवोंने उस ही समय बहुत शोच किया था, हमने ये सब गुप्त बात तुमसे कही। अब तुम ये सब प्रारब्धसे हुआ ऐसा विचार कर शोक छोड दो, सब पर कृपा करो। हे महाबाहो! हमने युधिष्ठिरके राजसूय यज्ञमें ये सब समाचार पहिले ही सुना था, जब मैने यह गुप्त बात युधिष्ठिरसे कही थी, तभीसे उन्होंने शान्तिके लिये बहुत यत्न किया, परन्तु प्रारब्ध बडा ही बलवान है; इसे कोई कभी टार नहीं

ये च ते कथिता व्याला व्याधयस्ते प्रकीर्तिताः ।
या सा नारी बृहत्काया अध्यतिष्ठत तत्र वै ॥ ६ ॥
तामाहुस्तु जरां प्राज्ञा रूपवर्णविनाशिनीम् ।
यस्तत्र कूपो नृपते स तु देहः शरीरिणाम् ॥ ७ ॥
यस्तत्र वसतेऽधस्तान्महाहिः काल एव सः ।
अन्तकः सर्वभूतानां देहिनां सर्वहार्यसौ ॥ ८ ॥
कूपमध्ये च या जाता वल्ली यत्र स मानवः ।
प्रताने लम्बते लग्नो जीविताशा शरीरिणाम् ॥ ९ ॥
स यस्तु कूपवीनाहे तं वृक्षं परिसर्पति ।
षड्वक्त्रः कुञ्जरो राजन्स तु संवत्सरः स्मृतः ॥ १० ॥
मुखानि ऋतवो मासाः पादा द्वादशकीर्तिताः ।
ये तु वृक्षं निकृन्तन्ति मूषिकाः पन्नगास्तथा ॥ ११ ॥
रात्र्यहानि तु तान्याहुर्भूतानां परिचिन्तकाः ।
ये ते मधुकरास्तत्र कामास्ते परिकीर्तिताः ॥ १२ ॥
यास्तु ता बहुशो धाराः स्रवन्ति मधुनिस्रवम् ।
तांस्तु कामरसान्विद्याद्यत्र मज्जन्ति मानवाः ॥ १३ ॥
एवं संसारचक्रस्य परिवृत्तिं विदुर्बुधाः ।
येन संसारचक्रस्य पाशांश्छिन्दन्ति वै बुधाः ॥ १४ ॥ [१५०]

धृतराष्ट्र उवाच—अहोऽभिहितमाख्यानं भवता तत्त्वदर्शिना ।
भूय एव तु मे हर्षः श्रुत्वा वागमृतं तव ॥ १ ॥
विदुर उवाच— शृणु भूयः प्रवक्ष्यामि मार्गस्यैतस्य विस्तरम् ।
यच्छ्रुत्वा विप्रमुच्यन्ते संसारेभ्यो विचक्षणाः ॥ २ ॥
यथा तु पुरुषो राजन्दीर्घमध्वानमास्थितः ।
क्वचित्क्वचिच्छ्रमाच्छ्रान्तः कुरुते वासमेव वा ॥ ३ ॥
एवं संसारपर्याये गर्भवासेषु भारत ।
कुर्वन्ति दुर्बुधा वासं मुच्यन्ते तत्र पण्डिताः ॥ ४ ॥
तस्मादध्वानमेवैतमाहुः शास्त्रविदो जनाः ।
यत्तु संसारगहनं वनमाहुर्मनीषिणः ॥ ५ ॥
सोऽयं लोकसमावर्त्तो मर्त्यानां भरतर्षभ ।
चराणां स्थावराणां च न गृध्येत्तत्र पण्डितः ॥ ६ ॥
शारीरा मानसाश्चैव मर्त्यानां ये तु व्याधयः ।
प्रत्यक्षाश्च परोक्षाश्च ते व्यालाः कथिता बुधैः ॥ ७ ॥
क्लिश्यमानाश्च तैर्नित्यं वार्यमाणाश्च भारत ।

ण्डित लोग संसारकी फांसी काटकर सुख पाते हैं। (४—१४) [ १५९ ]

स्त्रीपर्वमें छः अध्याय समाप्त।

स्त्रीपर्वमें सात अध्याय।

महाराज धृतराष्ट्र बोले, हे विदुर! तुम बहुत पण्डित हो, तुमने जो मित्रके समान वचन कहे इनको सुनकर मैं बहुत प्रसन्न हुआ, अब तुम कुछ और वर्णन करो। ( १ )

विदुर बोले, हे राजन्! अब हम इस ही विषयको फिर विस्तारसे वर्णन करते हैं, आप सुनिये इस ही तत्त्वको जानकर पण्डित लोग संसारबन्धनमें छूट जाते हैं, जैसे मनुष्य बहुत दूरके मार्गको चला जाता है और थक थककर कहीं कहीं बैठ जाता है। हे भारत! इसही प्रकार मनुष्य गर्भवासमें आकर मूर्ख फिर भी उसी बन्धनमें पडते हैं और पण्डित लोग उसी बन्धनको काटकर सुख भोगते हैं, जिस संसारको वनरूपसे वर्णन किया था; उसीको यहां पर मार्ग कहा है। (२—५)

हे भरतसिंह! चर और अचर जीवोंसे भरा हुआ यह लोक अनेक चक्रके समान है, पण्डित इस संसारकी कभी भी इच्छा नहीं करते, इस जगत्में जिन मनुष्योंको संसारमें मन और शरीरके रोग होते हैं, वेही सांप है। हे भारत!

एतच्छ्रुत्वा तु वचनं व्यासः सत्यवतीसुतः ।
धृतराष्ट्रस्य राजेन्द्र तत्रैवान्तरधीयत ॥ ५३ ॥ [ २४१ ]

इतिश्री महाभारते शतसाहस्र्यां संहितायां वैयासिक्यां स्त्रीपर्वणि जलप्रदानिकपर्वणि
धृतराष्ट्रविशोककरणे अष्टमोऽध्यायः ॥ ८ ॥

जनमेजय उवाच- गते भगवति व्यासे धृतराष्ट्रो महीपतिः ।
किमचेष्टत विप्रर्षे तन्मे व्याख्यातुमर्हसि ॥ १ ॥
तथैव कौरवो राजा धर्मपुत्रो महामनाः ।
कृपप्रभृतयश्चैव किमकुर्वत ते त्रयः । ॥ २ ॥
अश्वत्थाम्नः श्रुतं कर्म शापश्चान्योन्यकारितः ।
वृत्तान्तमुत्तरं ब्रूहि यदभाषत सञ्जयः ॥ ३ ॥
वैशम्पायन उवाच-हते दुर्योधने चैव हते सैन्ये च सर्वशः ।
सञ्जयो विगतप्रज्ञो धृतराष्ट्रमुपास्थितः ॥ ४ ॥
सञ्जय उवाच— आगम्य नानादेशेभ्यो नानाजनपदेश्वराः ।
पितृलोकगता राजन् सर्वे तव सुतैः सह ॥ ५ ॥
याचमानेन सततं तव पुत्रेण भारत ।
घातिता पृथिवी सर्वा वैरस्यान्तं विधित्सता ॥ ६ ॥

---

मैं शोक छोडने और मन सावधान करनेका यत्न करूंगा । राजा धृतराष्ट्रके ऐसे वचन सुन सत्यवतीके पुत्र व्यास मुनि वहीं अन्तर्धान होगये। (५०-५३)

स्त्री पर्वमें आठ अध्याय समाप्त । [ २४१ ]

स्त्री पर्वमें नौ अध्याय ।

महाराज जनमेजय बोले, हे ब्राह्मण श्रेष्ठ वैशम्पायन मुने, जब धृतराष्ट्रके पास भगवान वेदव्यास चले गये, तब उन्होंने क्या किया ? कुरुकुलश्रेष्ठ महात्मा धर्मराज युधिष्ठिरने तथा बचे हुए कृपाचार्य, अश्वत्थामा और कृतवर्माने क्या किया सो कहिये । हमने अश्वत्थामा और श्रीकृष्णके परस्पर शापकी कथा सुनी इसके पश्चात् सञ्जयने राजा धृतराष्ट्रसे क्या कहा सो कहिये। (१-३)

श्रीवैशम्पायन मुनि बोले, हे राजन जनमेजय ! जब राजा दुर्योधन मारे गये और सब सेनाका नाश हो चुका तब सञ्जय शोकसे व्याकुल होकर राजा धृतराष्ट्रके पास आकर कहने लगे। सञ्जय बोले, हे राजन ! अनेक देशोंके राजा कुरुक्षेत्रमें इकट्ठे होकर तुम्हारे पुत्रोंके सहित मारे गये। अनेक बार पाण्डवोंने पृथ्वी मांगी तो भी दुर्योधनने वैरका अन्त करनेके लिये ये सब जगत्का

संसारे भ्रमतां राजन् दुःखमेतद्धि जायते ।
तस्मादस्य निवृत्त्यर्थं यत्नमेवाचरेद् बुधः ।
उपेक्षा नात्र कर्तव्या शतशाखः प्रवर्धते ॥
यतेन्द्रियो नरो राजन् क्रोधलोभनिराकृतः ।
सन्तुष्टः सत्यवादी यः स शान्तिमधिगच्छति॥
याम्यमाहू रथं ह्येनं मुह्यन्ते येन दुर्बुधाः ।
स चैनत्प्राप्नुयाद्राजन्यत्त्वं प्राप्तो नराधिप ॥ १
अनुतर्षुलमेवैतद्दुःखं भवति मारिष ।
राज्यनाशं सुहृन्नाशं सुतनाशं च भारत ।
साधुः परमदुःखानां दुःखभैषज्यमाचरेत् ॥ २
ज्ञानौषधमवाप्येह दूरपारं महौषधम् ।
छिन्द्याद्दुःखमहाव्याधिं नरः संयतमानसः ॥ २
न विक्रमो न चाप्यर्थो न मित्रं न सुहृज्जनः ।
तथोन्मोचयते दुःखाद्यथाऽऽत्मा स्थिरसंयमः ॥ २२
तस्मान्मैत्रं समास्थाय शीलमापद्य भारत ।
दमस्त्यागोऽप्रमादश्च ते त्रयो ब्रह्मणो हयाः ॥ २३

---

घूमनेसे बचता है । (५-१५)

हे राजन् ! संसारमें घूमनेवालोंको बार बार यही दुःख भोगने पडते हैं, इसलिये पण्डित इनको छोडनेहीका उपाय करे, इसके छोडनेमें विलम्ब नहीं करना चाहिये, क्योंकि विलम्ब करनेमे यह वृक्ष बढता ही जाता है । हे राजन् ! जो मनुष्य इन्द्रियोंको वशमें करके क्रोध और लोभको छोड देता है, सन्तोष करके सत्य बोलता है, वही शान्ती और सुख पाता है। (१६-१८)

हे महाराज ! यह शरीर यमराजका रथ है, इसमें बैठकर मूर्ख लोग पागल

होजाते हैं और उनही दुःखों हैं, जिनमें आप पडे हैं । और मित्रोंका नाश होना ये उन्हें ही होते हैं । जो बहुत ले हैं, इसलिये पण्डितको उचित अपने दुःखोंकी औषधि करे, सं रोगकी औषधि मनुष्य अपने वशमें करके करे । इसकी औष ज्ञान ही है, मनुष्यको जैसे मन रता शक्ति उसको जैसे छुडा स तैसे बल, धन, मित्र और बन्धु, य नहीं छुडा सकते । इसलिये आप मनको स्थिर करके सावधान हो

यथा वायुस्तृणाग्राणि संवर्तयति सर्वतः।
तथा कालवशं यान्ति भूतानि भरतर्षभ ॥ १५ ॥
एकसार्थप्रयातानां सर्वेषां तत्र गामिनाम्।
यस्य कालः प्रयात्यग्रे तत्र का परिदेवना ॥ १६ ॥
यांश्चापि निहतान्युद्धे राजंस्त्वमनुशोचसि।
न शोच्या हि महात्मानः सर्वे ते त्रिदिवं गताः॥१७॥
न यज्ञैर्दक्षिणावद्भिर्न तपोभिर्न विद्यया।
तथा स्वर्गमुपायान्ति यथा शूरास्तनुत्यजः ॥ १८ ॥
सर्वे वेदविदः शूराः सर्वे सुचरितव्रताः।
सर्वे चाभिमुखाः क्षीणास्तत्र का परिदेवना ॥ १९ ॥
शरीराग्निषु शूराणां जुहुवुस्ते शराहुतीः।
ह्रियमानान् शरांश्चैव सेहुरुत्तमपूरुषाः ॥ २० ॥
एवं राजंस्तवाचक्षे स्वर्ग्यं पन्थानमुत्तमम्।
न युद्धादधिकं किञ्चित्क्षत्रियस्येह विद्यते ॥ २१ ॥
क्षत्रियास्ते महात्मानः शूराः समितिशोभनाः।
आशिषं परमां प्राप्ता न शोच्याः सर्व एव हि॥ २२ ॥
आत्मनाऽऽत्मानमाश्वास्य मा शुचः पुरुषर्षभ।
नाद्य शोकाभिभूतस्त्वं कार्यमुत्स्रष्टुमर्हसि ॥ २३ ॥ [२६४]

इति श्रीमहाभारते० वैयासिक्यां स्त्रीपर्वणि जलप्रदानिकपर्वणि विदुरवाक्ये नवमोऽध्याय ॥ ९ ॥

तिनकोंको उडाया करता है, ऐसे ही कालके वशमें होकर सब प्राणी घूमा करते हैं। सबको वहीं जाना है परन्तु जिसका काल पहिले आता है, वही पहिले जाता है इसमें शोचनेका क्या काम है? हे राजन्! जिन युद्धमें मरे हुए महात्माओंका आप शोच करते हैं वे शोचने योग्य नहीं थे. वे सब स्वर्गको गये। क्षत्रियोंको युद्धमें मरनेसे जो गति मिलती है सो दक्षिणा सहित यज्ञ, और अनेक तप करनेसे भी नहीं मिलती। उन वीरोंने शत्रुओंकी शरीररूपी अग्निमें बाणरूपी आहुती छोडी और तेज बाणों को सहा। हे राजन्! क्षत्रियोंके लिये युद्धसे बचकर और कोई स्वर्गका मार्ग नहीं है। सब महात्मा वीर क्षत्री उत्तम स्वर्गको गये इसलिये उनका शोच नहीं करना चाहिये। हे भरत-सिंह! आप अपनी बुद्धिसे अपना धीरज बांधिये क्यों कि शोचसे व्याकुल होकर

तं तथा पतितं भूमौ निःसंज्ञं प्रेक्ष्य बान्धवाः ।
कृष्णद्वैपायनश्चैव क्षत्ता च विदुरस्तथा ॥ २ ॥
सञ्जयः सुहृदश्चान्ये द्वाःस्था ये चास्य संमताः ।
जलेन सुखशीतेन तालवृन्तैश्च भारत ॥ ३ ॥
पस्पर्शुश्च करैर्गात्रं वीज्यमानश्च यत्नतः ।
आश्वास्य तु चिरं कालं धृतराष्ट्रं तथागतम् ॥ ४ ॥
अथ दीर्घस्य कालस्य लब्धसंज्ञो महीपतिः ।
विललाप चिरं कालं पुत्राधिभिरभिप्लुतः ॥ ५ ॥
धिगस्तु खलु मानुष्यं मानुषेषु परिग्रहे ।
यतो मूलानि दुःखानि सम्भवन्ति मुहुर्मुहुः ॥ ६ ॥
पुत्रनाशेऽर्थनाशे च ज्ञातिसम्बन्धिनामथ ।
प्राप्यते सुमहद्दुःखं विषाग्निप्रतिमं विभो ॥ ७ ॥
येन दह्यन्ति गात्राणि येन प्रज्ञा विनश्यति ।
येनाभिभूतः पुरुषो मरणं बहु मन्यते ॥ ८ ॥
तदिदं व्यसनं प्राप्तं मया भाग्यविपर्ययात् ।
तस्यान्तं नाधिगच्छामि ऋते प्राणविमोक्षणात् ॥ ९ ॥
तथैवाहं करिष्यामि अद्यैव द्विजसत्तम ।
इत्युक्त्वा तु महात्मानं पितरं ब्रह्मवित्तमम् ॥ १० ॥

न देखकर सब बान्धव, श्रीकृष्णद्वैपायन वेदव्यास, विदुर, और सञ्जय आदि सब मन्त्री उनके ऊपर ठंडा जल छिडकने लगे, बहुत देरमें बहुत यत्न करनेसे राजा धृतराष्ट्र चैतन्य होकर पुत्रोंके शोकसे व्याकुल होकर बहुत देर तक रोते रहे। फिर कहने लगे कि, मनुष्य जन्मको धिक्कार है, विशेष कर गृहस्थोंको; क्यों कि बार बार गृहस्थोंको दुःख ही भोगना होता है। देखो पुत्र, धन, ज्ञाति और संबन्धियोंका नाश होनेसे दुःख और विषाग्निके समान महादुःख भोगने पडते हैं। जिनको सहते सहते शरीर जलने लगते और बुद्धिका नाश होजाता है, उस समय जीनेसे मरना अच्छा समझते हैं। आज प्रारब्ध उलटी होनेसे मुझे भी वैसाही भयानक दुःख हुवा है। मुझे निश्चय होता है, कि, बिना प्राण छोडे इस दुःखके पार नहीं जा सकूंगा, हे ब्राह्मणश्रेष्ठ व्यास मुने! अब मैं अपना प्राण छोड दूंगा। (२-९)

महात्मा वेद जाननेवालोंमें श्रेष्ठ

प्रकीर्य केशान् सुशुभान् भूषणान्यवमुच्य च ।
एकवस्त्रधरा नार्यः परिपेतुरनाथवत् ॥ ९ ॥
श्वेतपर्वतरूपेभ्यो गृहेभ्यस्तास्त्वपाक्रमन् ।
गुहाभ्य इव शैलानां पृषत्यो हतयूथपाः ॥ १० ॥
तान्युदीर्णानि नारीणां तदा वृन्दान्यनेकशः ।
शोकार्तान्यद्रवन् राजन्किशोरीणामिवाङ्गने ॥ ११ ॥
प्रगृह्य बाहून् क्रोशन्त्यः पुत्रान् भ्रातॄन्पितॄनपि ।
दर्शयन्तीव ता ह स्म युगान्ते लोकसंक्षयम् ॥ १२ ॥
विलपन्त्यो रुदन्त्यश्च धावमानास्ततस्ततः ।
शोकेनोपहतज्ञानाः कर्तव्यं न प्रजज्ञिरे ॥ १३ ॥
व्रीडां जग्मुः पुरा याः स्म सखीनामपि योषितः ।
ता एकवस्त्रा निर्लज्जाः श्वश्रूणां पुरतोऽभवन् ॥ १४ ॥
परस्परं सुसूक्ष्मेषु शोकेष्वाश्वासयंस्तदा ।
ता शोकविह्वला राजन्नवैक्षन्त परस्परम् ॥ १५ ॥
ताभिः परिवृतो राजा रुदतीभिः सहस्रशः ।
निर्ययौ नगराद्दीनस्तूर्णमायोधनं प्रति ॥ १६ ॥

देखा था, वेही स्वामियोंके मरनेसे साधारण मनुष्योंके आगे कुरुक्षेत्रको चलीं, किन्हींने अपने बाल खोल दिये और कोई अपने गहने उतार उतार कर फेंकने लगीं, सब स्त्री एक एक धोती पहिन-कर अनाथके समान घरसे निकलीं जैसे हाथियोंके न रहनेसे उनकी हथनी रोती हुई गुफाओंसे निकलती है, ऐसे ही सब स्त्री सफेद पर्वतके शिखरके समान घरोंसे निकलीं। (८-९)

उस समय रोती हुई स्त्रियोंके झुण्ड चारों ओर नगरमें दौड़ते थे, कोई दूसरी का हाथ पकड़कर भाई, बेटे, पति आदिको रोती थी। उस समय ऐसा पड़ता था कि जगतमें प्रलय होग कोई रोती थी, कोई चिल्लाती थी, ज्ञानशून्य होकर इधर उधरको दौ थी। उस समय उन्हें यह नहीं पड़ता था कि हमें क्या करना चा जो स्त्री पहिले सखियोंसे भी ल होती थीं, सो निर्लज्ज होकर एक पहिनकर श्वशुरोंके आगे घूमने ल तब एक दूसरीको समझाने लगी एक दूसरीको देखने लगी। (१०-१५

राजा उन सहस्रों रोती हुई स्त्रि सङ्गमें लेकर शीघ्रसे नगरसे

तेन शब्देन महता संहृष्टाश्चक्रुराहवम् ।
वीरा वीरैर्महाघोरं कलहान्तं तितीर्षवः ॥ १४ ॥
ज्यातलत्रधनुःशब्दः कुञ्जराणां च बृंहताम् ।
पादातानां च पततां नृणां नादो महानभूत् ॥ १५ ॥
तालशब्दांश्च विविधाञ्शूराणां चाभिगर्जताम् ।
श्रुत्वा तत्र भृशं त्रेसुः पेतुर्मम्लुश्च सैनिकाः ॥ १६ ॥
तेषां निनदतां चैव शस्त्रवर्षं च मुञ्चताम् ।
बहूनाधिरथिर्वीरः प्रममाथेषुभिः परान् ॥ १७ ॥
पञ्च पञ्चालवीराणां रथान्दश च पञ्च च ।
साश्वसूतध्वजान्कर्णः शरैर्निन्ये यमक्षयम् ॥ १८ ॥
योधमुख्या महावीर्याः पाण्डूनां कर्णमाहवे ।
शीघ्रास्त्रास्तूर्णमावृत्य परिवव्रुः समन्ततः ॥ १९ ॥
ततः कर्णो द्विषत्सेनां शरवर्षैर्विलोडयन् ।
विजगाहाण्डजाकीर्णां पद्मिनीमिव यूथपः ॥ २० ॥
द्विषन्मध्यमवस्कन्द्य राधेयो धनुरुत्तमम् ।
विधुन्वानः शितैर्बाणैः शिरांस्युन्मथ्य पातयत् ॥२१॥

शब्दसे भूमिको नादित करते हुए शत्रुओंकी ओर चढने लगे ॥ उस बडे शब्दसे प्रसन्न होकर कलहका अन्त करनेके लिये वीर लोग दूसरे वीरोंसे बडा घोर युद्ध करने लगे ॥ (११-१४)

उस युद्धमें डोरी, तलत्राण और धनुष्यका शब्द, तथा गर्जते हुए हाथी और गिरनेवाले पैदलोंका घोर शब्द होने लगा ॥ शूरवीरोंकी गर्जना और तालोंके शब्दको सुनकर कादर मरने और डरने लगे ॥ इस प्रकार गर्जते हुए और शस्त्रोंकी वर्षा करते हुए वीरोंको महारथ कर्ण अपने शस्त्रोंसे मारने लगे ॥ ( १५-१७ )

कर्णने अपने बाणोंसे पाञ्चाल देशके वीस महारथोंको अश्व,सारथी और ध्वजाओंके सहित मार कर यमपुरी में भेज दिया ॥ तब पाण्डवोंकी सेनाके प्रधान सेनापति शीघ्र शस्त्र चलाते हुए कर्णके चारों ओर आ घिरे । तब कर्णने अपने बाणोंसे उस सेनाको इस प्रकार मथा, जैसे मछलीसे भरे हुए तालावको मतवाला यूथपति हाथी मथता है ॥ १८-२९

राधापुत्र कर्ण अपनी धनुषको घुमाते हुए युद्धमें घूमने लगे । अनेक शत्रुओंके शिरोंको काटकर पृथ्वीमें गिराते हुए

तथाश्वरथनागानां कृतं च कदनं महत् ।
सर्वमाख्यातवान्वीरो वासुदेवः किरीटिने ॥ ६ ॥
एतच्छ्रुत्वा च दृष्ट्वा च भ्रातुर्घोरं महद्भयम् ।
वाहयाश्वान्हृषीकेश क्षिप्रमित्याह पाण्डवः ॥ ७ ॥
ततः प्रायाद्धृषीकेशो रथेनाप्रतियोधिना ।
दारुणश्च पुनस्तत्र प्रादुरासीत्समागमः ॥ ८ ॥
ततः पुनः समाजग्मुरभीताः कुरुपाण्डवाः ।
भीमसेनमुखाः पार्थाः सूतपुत्रमुखा वयम् ॥ ९ ॥
ततः प्रववृते भूयः संग्रामो राजसत्तम ।
कर्णस्य पाण्डवानां च यमराष्ट्रविवर्धनः ॥ १० ॥
धनूंषि बाणान्परिघानसिपट्टिशतोमरान् ।
मुसलानि भुशुण्डीश्च सशक्त्यृष्टिपरश्वधान् ॥ ११ ॥
गदाः प्रासाञ्शितान्कुन्तान्भिन्दिपालान्महांकुशान् ।
प्रगृह्य क्षिप्रमापेतुः परस्परजिघांसया ॥ १२ ॥
बाणज्यातलशब्देन द्यां दिशः प्रदिशो वियत् ।
पृथिवीं नेमिघोषेण नादयन्तोऽभ्ययुः परान् ॥ १३ ॥

सेनाका नाश होनेके विना नहीं रहता, देखो अश्वत्थामाके सकल्प के अनुसार कर्णने सृञ्जय वीरोंका नाश किया है, तथा देखो कर्ण सहस्रों हाथी, घोडे और रथोंको नाश कर रहे हैं, इत्यादि सब श्रीकृष्णने अर्जुनसे कहा ॥ ( ४-६ )

श्रीकृष्णके ऐसे वचन सुन युद्धको देख और अपने भाईके दुःखको जानके अर्जुनने श्रीकृष्णसे कहा, हमारे घोडोंको शीघ्र चलाओ, अर्जुनके वचन सुन, श्रीकृष्णने बहुत वेगसे घोडोंको चलाया, तब दारुण युद्ध होने लगा ॥ उसी समय भीमसेनको आगे करके युधिष्ठिर की सेना और कर्णको आगे करके हमारी सेना बेडर होकर युद्ध करने लगी, हे महाराज ! अनन्तर यमराजकी पुरीको भरनेवाला कर्ण और पाण्डवोंका घोर युद्ध होने लगा ॥ (७–१०)

योद्धा लोग धनुष, बाण, परिघ, खड्ग, पट्टिश, तोमर, मूसल, भुशुण्डी, शक्ति, कटार, फरश, गदा, भिन्दिपाल, प्रास, कुन्तल, और बडे अंकुश लेकर एक दूसरेको मारनेके लिये प्रहार करने लगे ॥ वीरोंके धनुष, बाण और तालियोंके शब्दसे दिशा, कोने और आकाश पूरित होगए । तथा रथोंकी पहियोंके

सर्वमन्यत्परिक्षीणं सैन्यं ते भरतर्षभ ॥ ४ ॥
इत्येवमुक्त्वा राजानं कृपः शारद्वतस्ततः ।
गान्धारीं पुत्रशोकार्तामिदं वचनमब्रवीत् ॥ ५ ॥
अभीता युध्यमानास्ते घ्नन्तः शत्रुगणान्बहून् ।
वीरकर्माणि कुर्वाणाः पुत्रास्ते निधनं गताः ॥ ६ ॥
ध्रुवं संप्राप्य लोकांस्ते निर्मलान् शस्त्रनिर्जितान् ।
भास्वरं देहमास्थाय विहरन्त्यमरा इव ॥ ७ ॥
न हि कश्चिद्धि शूराणां युद्ध्यमानः पराङ्मुखः ।
शस्त्रेण निधनं प्राप्तो न च कश्चित्कृताञ्जलिः ॥ ८ ॥
एवं तां क्षत्रियस्याहुः पुराणाः परमां गतिम् ।
शस्त्रेण निधनं संख्ये तन्न शोचितुमर्हसि ॥ ९ ॥
न चापि शत्रवस्तेषामृद्ध्यन्ते राज्ञि पाण्डवाः ।
शृणु यत्कृतमस्माभिरश्वत्थामपुरोगमैः ॥ १० ॥
अधर्मेण हतं श्रुत्वा भीमसेनेन ते सुतम् ।
सुप्तं शिबिरमासाद्य पाण्डूनां कदनं कृतम् ॥ ११ ॥
पञ्चाला निहताः सर्वे धृष्टद्युम्नपुरोगमाः ।
द्रुपदस्यात्मजाश्चैव द्रौपदेयाश्च पातिताः ॥ १२ ॥

---

बचे हैं और आपकी सब सेना मर गई, राजा धृतराष्ट्रसे ऐसा कहकर पुत्रशोकसे व्याकुल गान्धारीसे कृपाचार्य ऐसे बोले। हे गान्धारी, तुम्हारे सब पुत्र निर्भय होकर शत्रुओंका नाश करके अपनी वीर कीर्तिको जगत्में स्थापन करके युद्धमें मारे गये। (१-६)

अपने निर्मल देह धारण करके अपने धर्मोंके बलसे उत्तम लोकमें देवताओंके समान विहार करते हैं, उन वीरोंमें ऐसा कोई न था, जो युद्धमें फिरा हो। सब शस्त्रोंसे मारे गये; किसीने शत्रुओंके आगे हाथ नहीं जोडे अर्थात् कोई ... होकर नहीं मरा, उन महात्माओंने ... योंके लिये यही गति कही है, मरना ही परम गति है, इसलिये इनका शोच मत करो। (७-९)

हे रानी, तुम्हारे पुत्रोंके शत्रु पा॰ की भी वृद्धि नहीं होगी; देखो स्थामाकी सहायतासे हम लोगोंने कुछ किया है सो सुनो; जब हम लो- ने सुना कि तुम्हारे पुत्र राजा धनको भीमसेनने अधर्मसे मारा हम लोगोंने डेरोंमें जाकर सबको

जगाम हास्तिनपुरं कृपः शारद्वतस्तदा ।
स्वमेव राष्ट्रं हार्दिक्यो द्रौणिर्व्यासाश्रमं ययौ॥ २१ ॥
एवं ते प्रययुर्वीरा वीक्षमाणाः परस्परम् ।
भयार्ताः पाण्डुपुत्राणामागस्कृत्वा महात्मनाम् ॥२२॥
समेत्य वीरा राजानं तदा त्वनुदिते रवौ ।
विप्रजग्मुर्महात्मानो यथेच्छकमरिन्दमाः ॥ २३ ॥
समासाद्याथ वै द्रौणिं पाण्डुपुत्रा महारथाः ।
व्यजयंस्ते रणे राजन् विक्रम्य तदनन्तरम् ॥ २४ ॥ [३०८]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां स्त्रीपर्वणि जलप्रदानिकपर्वणि कृपद्रौणिभोजदर्शने एकादशोऽध्यायः ॥ ११ ॥

वैशम्पायन उवाच-हतेषु सर्वसैन्येषु धर्मराजो युधिष्ठिरः ।
शुश्रुवे पितरं वृद्धं निर्यान्तं गजसाह्वयात् ॥ १ ॥
सोऽभ्ययात्पुत्रशोकार्तः पुत्रशोकपरिप्लुतम् ।
शोचमानं महाराज भ्रातृभिः सहितस्तदा ॥ २ ॥
अन्वीयमानो वीरेण दाशार्हेण महात्मना ।
युयुधानेन च तथा तथैव च युयुत्सुना ॥ ३ ॥

डरे और घबड़ाकर एक दूसरेसे सम्मति करने लगे फिर तीनों एक दूसरेसे छूटकर तीन ओरको चले गये, कृपाचार्य हस्तिनापुरको, हृदीकपुत्र कृतवर्मा अपने देश अर्थात् द्वारकाको और द्रोणाचार्यके पुत्र अश्वत्थामा व्यासमुनीके आश्रमको चले गये, इस प्रकार ये तीनों वीर महात्मा पाण्डवोंके डरसे व्याकुल होकर एक दूसरेको और देखते हुए तीन ओर को चले गए, जिस समय ये तीनों वीर राजा दुर्योधनसे मिले थे, उस समय सूर्य अस्त होना चाहते थे। तब महात्मा व्यासमुनिके आश्रम पर पहुंचे तब ही महारथ पाण्डवोंने अपने बलसे उनको जीत लिया।

ग्यारहवां अध्याय समाप्त। [३०८]

बारहवां अध्याय।

श्रीवैशम्पायन मुनि बोले, हे राजन् जनमेजय! जब सब सेना मारी गई तब अश्वत्थामाको जीतके धर्मराज युधिष्ठिरने सुना कि हमारे बूढ़े पिता हस्तिनापुरमें चले जाते हैं, तब पुत्र शोकसे व्याकुल राजा युधिष्ठिर, पुत्र शोकसे व्याकुल राजा धृतराष्ट्रके पास चले, उनके सङ्ग महावीर श्रीकृष्ण सात्यकि और युयुत्सु भी चले, उनके पीछे

निहताः सहिताश्चान्यैस्तच्च नास्त्यप्रियं मम ॥ १८ ॥
किं तु कर्माकरोद्भीमो वासुदेवस्य पश्यतः ।
दुर्योधनं समाहूय गदायुद्धे महामनाः ॥ १९ ॥
शिक्षयाऽभ्यधिकं ज्ञात्वा चरन्तं बहुधा रणे ।
अधो नाभ्याः प्रहृतवांस्तन्मे कोपमवर्धयत् ॥ २० ॥
कथं नु धर्मं धर्मज्ञैः समुद्दिष्टं महात्मभिः ।
त्यजेयुराहवे शूराः प्राणहेतोः कथञ्चन ॥ २१ ॥ [ ३७६ ]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां स्त्रीपर्वणि जलप्रदानिकपर्वणि गान्धारीसान्त्वनायां चतुर्दशोऽध्यायः ॥ १४ ॥

वैशम्पायन उवाच–तच्छ्रुत्वा वचनं तस्या भीमसेनोऽथ भीतवत् ।
गान्धारीं प्रत्युवाचेदं वचः सानुनयं तदा ॥ १ ॥
अधर्मो यदि वा धर्मस्त्रासात्तत्र मया कृतः ।
आत्मानं त्रातुकामेन तन्मे त्वं क्षन्तुमर्हसि ॥ २ ॥
न हि युद्धेन पुत्रस्ते धर्म्येण स महाबलः ।
न शक्यः केनचिद्धन्तुमतो विषममाचरम् ॥ ३ ॥
अधर्मेण जितः पूर्वं तेन चापि युधिष्ठिरः ।
निकृताश्च सदैव स्म ततो विषममाचरम् ॥ ४ ॥

सेनने दुर्योधनको गदायुद्धमें बुलाकर अनेक प्रकारसे युद्ध करते और अपनेसे अधिक विद्वान देखके उनकी नाभी के नीचे गदा मारी और श्रीकृष्ण भी उस अधर्मको देखते रहे, इसहीको स्मरण करके मुझे बहुत क्रोध आता है और यह भी शोच आता है, कि महात्मा धर्म जाननेवाले शूरवीर केवल प्राणके भयमे धर्मको कैसे छोड देते हैं।(१४ २१)

स्त्रीपर्वमें चौदह अध्याय समाप्त। [ ३५६ ]

स्त्रीपर्वमें पंद्रह अध्याय।

श्रीवैशम्पायन मुनि बोले, हे राजन् जनमेजय! गान्धारीके ऐसे वचन सुनकर डरते हुए भीमसेन उनके पास गये और कहने लगे कि मैने यह कर्म चाहे धर्मसे किया, चाहे अधर्मसे किया, केवल दुर्योधनके डरसे अपनी रक्षा करनेके लिये ऐसा किया है; सो तुम क्षमा करो। दुर्योधन महाबलवान था, उसे युद्धमें धर्मसे कोई नहीं जीत सक्ता था, इस ही लिये यह अधर्म मैंने किया दुर्योधनने पहिले महाराज युधिष्ठिरको अधर्महीसे जीता था, और हम लोगोंको अनेक दुःख दिये थे, इसी लिये मैंने

खङ्गैश्च विविधैस्तीक्ष्णैः सशरैश्च शरासनैः ॥ २३ ॥
क्रव्यादसङ्घैर्मुदितैस्तिष्ठद्भिः सहितैः क्वचित् ।
क्वचिदाक्रीडमानैश्च शयानैश्चापरैः क्वचित् ॥ २४ ॥
एतदेवंविधं वीर सम्पश्यायोधनं विभो ।
पश्यमाना हि दह्यामि शोकेनाहं जनार्दन ॥ २५ ॥
पञ्चालानां कुरूणां च विनाशे मधुसूदन ।
पञ्चानामपि भूतानामहं वधमचिन्तयम् ॥ २६ ॥
तान्सुपर्णाश्च गृध्राश्च कर्षयंत्यसृगुक्षिताः ।
विगृह्य चरणैर्गृध्रा भक्षयन्ति सहस्रशः ॥ २७ ॥
जयद्रथस्य कर्णस्य तथैव द्रोणभीष्मयोः ।
अभिमन्योर्विनाशं च कश्चिन्तयितुमर्हति ॥ २८ ॥
अवध्यकल्पान्निहतान् गतसत्वानचेतसः ।
गृध्रकङ्कवटश्येनश्वसृगालादनीकृतान् ॥ २९ ॥
अमर्षवशमापन्नान् दुर्योधनवशे स्थितान् ।
पश्येमान्पुरुषव्याघ्रान् संशान्तान्पावकानिव ॥ ३० ॥
शयाना ये पुरा सर्वे मृदूनि शयनानि च ।

के हाथमे टूटे हुये सांगी, परिघ, खड्ग अनेक प्रकारके बाणवान धनुष पडे है। (२१—२३)

कहीं मांस खानेवाले पक्षी प्रसन्न होकर बैठे है, कहीं खेल रहे हैं और कहीं सुखसे सो रहे हैं। हे वीर! हे भगवन्! हे जनार्दन! उनको देखकर मेरा हृदय शोकसे जला जाता है। इस पाञ्चाल और कुरुकुलके नाशसे हमें ऐसा ज्ञान पडता है, कि सब जगत्का नाश हो गया। देखो इन वीरोंके रुधिरमें सने हुए शरीरोंको सहस्रों गिद्ध आदि पक्षी खा रहे हैं, कहीं कोई गिद्ध किसी वीरका पेट खींचे लिये जाते हैं। (२४—२७)

जयद्रथ, कर्ण, भीष्म और अभिमन्यु आदि वीरोंके मृत्यु देखकर किसे शोच न होगा। जिनको कोई नहीं मार सक्ता था, आज उनको चैतन्यरहित निराकार, मनुष्यके समान मरा हुआ देखकर कौवे, सियार और गिद्ध खा रहे हैं। ये सब वीर क्रोधके वशमें होकर दुर्योधनकी आज्ञासे युद्धमें मारे गये, ये पुरुषसिंह वीर इस समय जलती हुई अग्निके समान पृथ्वीमें पडे हैं। (२८—३०)

जो पहिले कोमल बिछौनोंपर सोते

विपन्नास्तेऽद्य वसुधां विवृतामधिशेरते ॥ ३१ ॥
बन्दिभिः सततं काले स्तुवद्भिरभिनन्दिताः ।
शिवानामशिवा घोराः शृण्वन्ति विविधा गिरः॥३२॥
ये पुरा शेरते वीराः शयनेषु यशस्विनः ।
चन्दनागुरुदिग्धाङ्गास्तेऽद्य पांसुषु शेरते ॥ ३३ ॥
तेषामाभरणान्येते गृध्रगोमायुवायसाः ।
आक्षिपन्ति शिवा घोरा विनदंत्यः पुनः पुनः ॥३४॥
बाणान्विनिशितान्पीतान्निस्त्रिंशान् विमला गदाः ।
युद्धाभिमानिनः सर्वे जीवन्त इव बिभ्रति ॥ ३५ ॥
सुरूपवर्णा बहवः क्रव्यादैरवघट्टिताः ।
ऋषभप्रतिरूपाश्च शेरते हरितस्रजः ॥ ३६ ॥
अपरे पुनरालिङ्ग्य गदाः परिघबाहवः ।
शेरतेऽभिमुखाः शूरा दयिता इव योषितः ॥ ३७ ॥
बिभ्रतः कवचान्यन्ये विमलान्यायुधानि च ।
न धर्षयन्ति क्रव्यादा जीवन्तीति जनार्दन ॥ ३८ ॥
क्रव्यादैः कृष्यमाणानामपरेषां महात्मनाम् ।
शातकौम्भ्यः स्रजश्चित्रा विप्रकीर्णाः समन्ततः ॥३९॥

थे सो आज पृथ्वीमें मुह फैलाये पडे हैं, पहिले जो सदा भाटोंके मुखसे स्तुति सुनकर प्रसन्न होते थे, वे आज अनेक प्रकारके भयानक सियारियोंके शब्द सुन रहे है। जो पहिले यशस्वी वीर शरीरमें चन्दन और अगर लगाकर पलङ्गपर सोते थे, सो आज धूलमें लोटते पृथ्वीमें पडे हैं। उनके भूषणोंको घोर शब्द करते युद्धमें सियार और कौवे इधर उधर खींच रहे हैं, ये अभिमानी वीर अब तक भी तेजवान खड्ग और निर्मल गदा इस प्रकार ले रहे हैं जैसे जीते हुए लिये रहते थे, अनेक सुन्दर वीरोंके हाथोंको मांस खानेवाले जन्तु इधर उधर लिये घूमते हैं, इस समय भी उनका तेज सूर्यके समान दिखाता है, कोई परिघके समान सुन्दर हाथवाले वीर गदाको छातीसे लगाये युद्धकी ओर मुख किये इस प्रकार सोते हैं, जैसे अपनी प्यारी स्त्रीके सङ्ग सोते थे। किसी वीर को कवच, विमल शस्त्र धारण किये देख और उन्हें जीता जान कोई मांस खानेवाला जन्तु उनके पास नहीं जाने सक्ता। किसी किसी महात्मा

एते गोमायवो भीमा निहतानां यशस्विनाम्।
कण्ठान्तरगतान्हारानाक्षिपन्ति सहस्रशः ॥ ४० ॥
सर्वेष्वपररात्रेषु या ननन्दन्त बन्दिनः।
स्तुतिभिश्च परार्घ्याभिरुपचारैश्च शिक्षिताः ॥ ४१ ॥
तानिमाः परिदेवन्ति दुःखार्ताः परमाङ्गनाः।
कृपणं वृष्णिशार्दूल दुःखशोकार्दिता भृशम् ॥ ४२ ॥
रक्तोत्पलवनानीव विभान्ति रुचिराणि च।
मुखानि परमस्त्रीणां परिशुष्काणि केशव ॥ ४३ ॥
रुदिताद्विरता ह्येता ध्यायन्त्यः सपरिच्छदाः।
कुरुस्त्रियोऽभिगच्छन्ति तेन तेनैव दुःखिताः ॥ ४४ ॥
एतान्यादित्यवर्णानि तपनीयनिभानि च।
रोषरोदनताम्राणि वक्त्राणि कुरुयोषिताम् ॥ ४५ ॥
श्यामानां वरवर्णानां गौरीणामेकवाससाम्।
दुर्योधनवरस्त्रीणां पश्य वृन्दानि केशव ॥ ४६ ॥
आसामपरिपूर्णार्थं निशम्य परिदेवितम्।
इतरेतरसंक्रन्दान्न विजानन्ति योषितः ॥ ४७ ॥

वीरको मांसभक्षी वीर खिच रहे हैं और उनकी सोनेकी माला इधर उधर फैली जाती है। ये देखो, ये भयानक सियार महात्मा वीरोंके गलेमे हार निकालकर इधर उधर खींचे फिरते हैं। (३१-४०)

कोमल मुख इस समय लाल कमलके समान दीखते हैं, ये कुरुकुलकी स्त्री रोना बन्द करके अपने अपने पतियोंके पास बैठी हैं, ये दुःख और क्रोधमें व्याकुल कौरवोंकी स्त्रियोंके मुख प्रातः कालके सूर्यमें सोना और तांबेके

तेन शब्देन महता संहृष्टाश्चक्रुराहवम् ।
वीरा वीरैर्महाघोरं कलहान्तं तितीर्षवः ॥ १४ ॥
ज्यातलत्रधनुःशब्दः कुञ्जराणां च बृंहताम् ।
पादातानां च पततां नृणां नादो महानभूत् ॥ १५ ॥
तालशब्दांश्च विविधाञ्शूराणां चाभिगर्जताम् ।
श्रुत्वा तत्र भृशं त्रेसुः पेतुर्मम्लुश्च सैनिकाः ॥ १६ ॥
तेषां निनदतां चैव शस्त्रवर्षं च मुञ्चताम् ।
बहूनाधिरथिर्वीरः प्रममाथेषुभिः परान् ॥ १७ ॥
पञ्च पञ्चालवीराणां रथान्दश च पञ्च च ।
साश्वसूतध्वजान्कर्णः शरैर्निन्ये यमक्षयम् ॥ १८ ॥
योधमुख्या महावीर्याः पाण्डूनां कर्णमाहवे ।
शीघ्रास्त्रास्तूर्णमावृत्य परिवव्रुः समन्ततः ॥ १९ ॥
ततः कर्णो द्विषत्सेनां शरवर्षैर्विलोडयन् ।
विजगाहाण्डजाकीर्णां पद्मिनीमिव यूथपः ॥ २० ॥
द्विषन्मध्यमवस्कन्द्य राधेयो धनुरुत्तमम् ।
विधुन्वानः शितैर्बाणैः शिरांस्युन्मथ्य पातयत् ॥२१॥

शब्दसे भूमिको नादित करते हुए शत्रुओंकी ओर बढने लगे ॥ उस बडे शब्दसे प्रसन्न होकर कलहका अन्त करनेके लिये वीर लोग दूसरे वीरोंसे बडा घोर युद्ध करने लगे ॥ (११-१४)

उस युद्धमें डोरी, तलत्राण और धनुष्यका शब्द, तथा गर्जते हुए हाथी और गिरनेवाले पैदलोंका घोर शब्द होने लगा ॥ शूरवीरोंकी गर्जना और तालोंके शब्दको सुनकर कादर मरने और डरने लगे ॥ इस प्रकार गर्जते हुए और शस्त्रोंकी वर्षा करते हुए वीरोंको महारथ कर्ण अपने शस्त्रोंसे मारने लगे ॥ ( १५-१७ )

कर्णने अपने बाणोंसे पाञ्चाल देशके वीस महारथोंको अश्व,सारथी और ध्वजाओंके सहित मार कर यमपुरी में भेज दिया ॥ तब पाण्डवोंकी सेनाके प्रधान सेनापति शीघ्र शस्त्र चलाते हुए कर्णके चारों ओर आ घिरे । तब कर्णने अपने बाणोंसे उस सेनाको इस प्रकार मथा, जैसे मछलीसे भरे हुए तालावको मतवाला यूथपति हाथी मथता है ॥ १८-२९

राधापुत्र कर्ण अपनी धनुषको घुमाते हुए युद्धमें घूमने लगे । अनेक शत्रुओंके शिरोंको काटकर पृथ्वीमें गिराते हुए

चर्मवर्माणि संछिन्नान्यपतन्भुवि देहिनाम् ।
विषेहुर्नास्य संस्पर्शं द्वितीयस्य पतत्त्रिणः ॥ २२ ॥
वर्मदेहासुमथनैर्धनुषः प्रच्युतैः शरैः ।
मौर्व्या तलत्रे न्यहनत्कशया वाजिनो यथा ॥ २३ ॥
पाण्डुसृञ्जयपञ्चालाञ्शरगोचरमागतान् ।
ममर्द तरसा कर्णः सिंहो मृगगणानिव ॥ २४ ॥
ततः पाञ्चालराजश्च द्रौपदेयाश्च मारिष ।
यमौ च युयुधानश्च सहिताः कर्णमभ्ययुः ॥ २५ ॥
तेषु व्यायच्छमानेषु कुरुपञ्चालपाण्डुषु ।
प्रियानसून्रणे त्यक्त्वा योधा जग्मुः परस्परम् ॥ २६ ॥
सुसन्नद्धाः कवचिनः सशिरस्त्राणभूषणाः ।
गदाभिर्मुसलैश्चान्ये परिघैश्च महाबलाः ॥ २७ ॥
समभ्यधावन्त भृशं कालदण्डैरिवोद्यतैः ।
नर्दन्तश्चाह्वयन्तश्च प्रवल्गन्तश्च मारिष ॥ २८ ॥
ततो निजघ्नुरन्योन्यं पेतुश्चान्योन्यताडिताः ।
वमन्तो रुधिरं गात्रैर्विमस्तिष्केक्षणायुधाः ॥ २९ ॥

वीरोंकी ढाल और कवच फटकर पृथ्वी में गिर गये। वह सेना सूर्यके समान तेजस्वी कर्णके बाणोंको न सह सकी॥ कर्णने अपने बाणोंसे इस प्रकार सेनाके वीरोंको मारा जैसे सारथी घोडोंको कोडे मारता है। पाञ्चाल, सृञ्जय और जो पाण्डवोंकी सेनाका वीर कर्णके बाणोंके आगे आया वही सिंहके आगे आये हुए मृगके समान मर गया॥ ( २१–२४ )

तब कर्णसे युद्ध करनेके लिये पाञ्चालराज, द्रौपदीके पांच पुत्र, नकुल, सहदेव और युयुधान आये इस प्रकारसे कुरु पंचाल और पाण्डवोंके योद्धा यत्न करते थे, तब उनसे युद्ध करनेके लिए प्यारे प्राणोंका मोह छोड कर अनेक योद्धा आये और प्रहार करने लगे। महाबलवान् क्षत्री लोग कवच, शिरस्त्राण, भूषण, गदा, मुसल तथा परिघ आदि लेकर युद्ध करनेको आए; वीर लोग यमराजके दण्डके समान शस्त्र लिये, नाचते, कूदते, पुकारते और गर्जते हुए युद्ध करनेको आए॥ (२५–२८)

एक दूसरेको मारने लगा, कोई मर कर गिरने लगा। किसीके शरीरसे रुधिर बहने लगा, किसीका शिर फटगया। किसीकी आखें और शस्त्र निकलपडीं, किसी

आत्मना हन्ति चात्मानमाक्रोशन्ती च पाण्डवान् ॥१४॥
किं नु दुःखतरं कृष्ण परं मम भविष्यति।
यत्सुता विधवा बाला स्नुषाश्च निहतेश्वरा ॥ १५ ॥
हा हा धिग्दुःशलां पश्य वीतशोकभयामिव।
शिरो भर्तुरनासाद्य धावमानामितस्ततः ॥ १६ ॥
वारयामास यः सर्वान्पाण्डवान्पुत्रगृद्धिनः।
स हत्वा विपुलाः सेनाः स्वयं मृत्युवशं गतः ॥ १७ ॥
तं मत्तमिव मातङ्गं वीरं परमदुर्जयम्।
परिवार्य रुदन्त्येताः स्त्रियश्चन्द्रोपमाननाः ॥ १८ ॥ [६२९]

इति श्रीमहाभारते० स्त्रीपर्वणि स्त्रीविलापपर्वणि गान्धारीवाक्ये द्वाविंशोऽध्यायः ॥ २२ ॥

गान्धार्युवाच— एष शल्यो हतः शेते साक्षान्नकुलमातुलः।
धर्मज्ञेन हतस्तात धर्मराजेन संयुगे ॥ १ ॥
यस्त्वया स्पर्धते नित्यं सर्वत्र पुरुषर्षभ।
स एष निहतः शेते मद्रराजो महाबलः ॥ २ ॥
येन संगृह्णता तात रथमाधिरथेर्युधि।

---

आज दुःशलाको क्यों बिसरा दिया। आज वही हमारी पुत्री दुःशला अपने पतिको मरा हुआ देख पाण्डवोंको गाली देती है, अपना सिर और छाती पीटती है और रोती है। (५-१४)

हे कृष्ण! इससे अधिक मेरे लिये और क्या दुःख होगा जो मेरी पुत्री और बेटोंकी बहू विधवा होकर रो रही है। ये देखो दुःशला अपने पतिका सिर न पाकर शोक और भयसे रहित मनुष्यके समान चारों ओर दौडती है। जिस जयद्रथने अभिमन्युकी रक्षा करनेके लिये आये हुए सब पाण्डवोंको रोक दिया था, जिसने पाण्डवोंकी बहुत सेनाका नाश कर दिया था, सोई जयद्रथ आज मरे हुए पडे हैं उस महा योद्धा वीरके चारों ओर रोती हुई चन्द्रमाके समान मुखवाली स्त्री इस प्रकार बैठी हैं जैसे मतवाले हाथीके पास हथिनी। (१५-१८) [६२९]

स्त्रीपर्वमें बाईस अध्याय समाप्त।

स्त्रीपर्वमें तेईस अध्याय।

गान्धारी बोली, हे कृष्ण! ये सा-क्षात् नकुलके मामा शल्य धर्म जानने-वाले युधिष्ठिरके हाथसे मर कर पृथ्वीमें पडे हैं। ये मद्रदेशके महा बलवान राजा सदा अपनेको तुम्हारे समान मानते थे, इन्होंने ही कर्णका रथ हांकते समय पाण्डवोंकी

द्रोणेन समरे पश्य निकृत्तं बहुधा शरैः ॥ २५ ॥
पितरं नूनमाजिस्थं युध्यमानं परैः सह।
नाजहात्पितरं वीरमद्यापि मधुसूदन ॥ २६ ॥
एवं ममापि पुत्रस्य पुत्रः पितरमन्वगात्।
दुर्योधनं महाबाहो लक्ष्मणः परवीरहा ॥ २७ ॥
विन्दानुविन्दावावन्त्यौ पतितौ पश्य माधव।
हिमान्ते पुष्पितौ शालौ मरुता गलिताविव ॥ २८ ॥
काञ्चनाङ्गदवर्माणौ बाणखड्गधनुर्धरौ।
ऋषभप्रतिरूपाक्षौ शयानौ विमलस्रजौ ॥ २९ ॥
अवध्याः पाण्डवाः कृष्ण सर्व एव त्वया सह।
ये मुक्ता द्रोणभीष्माभ्यां कर्णाद्वैकर्तनात्कृपात् ॥३०॥
दुर्योधनाद् द्रोणसुतात्सैन्धवाच्च जयद्रथात्।
सोमदत्ताद्विकर्णाच्च शूराच्च कृतवर्मणः ॥ ३१ ॥
ये हन्युः शस्त्रवेगेन देवानपि नरर्षभाः।
त इमे निहताः संख्ये पश्य कालस्य पर्ययम् ॥ ३२ ॥
नातिभारोऽस्ति दैवस्य ध्रुवं माधव कश्चन।

जयार्थं पाण्डुपुत्राणां तदा तेजोवधः कृतः ॥ ३ ॥
अहो धिक्पश्य शल्यस्य पूर्णचन्द्रसुदर्शनम् ।
मुखं पद्मपलाशाक्षं काकैरादष्टमव्रणम् ॥ ४ ॥
अस्य चामीकराभस्य तप्तकाञ्चनसप्रभा ।
आस्याद्विनिःसृता जिह्वा भक्ष्यते कृष्णपक्षिभिः ॥५॥
युधिष्ठिरेण निहतं शल्यं समितिशोभनम् ।
रुदत्यः पर्युपासन्ते मद्रराजं कुलाङ्गनाः ॥ ६ ॥
एताः सुसूक्ष्मवसना मद्रराजं नरर्षभम् ।
क्रोशंत्योऽथ समासाद्य क्षत्रियाः क्षत्रियर्षभम् ॥७॥
शल्यं निपतितं नार्यः परिवार्याभितः स्थिताः ।
वासिता गृष्टयः पङ्के परिमग्नमिव द्विपम् ॥ ८ ॥
शल्यं शरणदं शूरं पश्येमं वृष्णिनन्दन ।
शयानं वीरशयने शरैर्विशकलीकृतम् ॥ ९ ॥
एष शैलालयो राजा भगदत्तः प्रतापवान् ।
गजांकुशधरः श्रीमान् शेते भुवि निपातितः ॥ १० ॥
यस्य रुक्ममयी माला शिरस्येषा विराजते ।
श्वापदैर्भक्ष्यमाणस्य शोभयन्तीव मूर्धजान् ॥ ११ ॥

विजयके लिये कर्णका तेज नाश किया था, आज उसही शल्यके पूरे चन्द्रमाके समान सुन्दर और कमलके समान नेत्र-युक्त मुखको कौवे खा रहे हैं। (१-४)

इसके मुखसे जो सोनेके समान जीभ निकल आई है उसे पक्षी खा रहे हैं। युधिष्ठिरके हाथसे मरे हुए मद्रराज शल्यके चारों ओर बैठी हुई स्त्री रो रही हैं। ये उत्तम क्षत्री कुलमें उत्पन्न हुए पतला कपडा पहिननेवाली स्त्री पुरुष सिंह क्षत्रिय श्रेष्ठ शल्यको देख रो रही हैं। शल्यके चारों ओर बैठी स्त्री इस प्रकार रोती है, जैसे कीचडमें फसे हाथीके चारों ओर खडी उसी समयकी ब्याई हाथिनी, ये ही शल्य शरण आयेको शरण देते थे, वही वीर शल्य बाणोंसे कटे पडे है। (५-९)

हे कृष्ण! ये पर्वत वासी महा प्रतापवान श्रीमान राजा भगदत्त हाथीका अंकुश हाथमें लिये हुए पृथ्वीमें पडे है। जिसके शिर पर ये सोनेकी माला विराजमान है उसे ये मांस खानेवाले खाय रहे है। इस समय राजा भगदत्तके बाल बहुत ही शोभित हो रहे हैं।

यदिमे निहताः शूराः क्षत्रियैः क्षत्रियर्षभाः ॥ ३३ ॥
तदैव निहताः कृष्ण मम पुत्रास्तरस्विनः ।
यदैवाकृतकामस्त्वमुपप्लव्यं गतः पुनः ॥ ३४ ॥
शान्तनोश्चैव पुत्रेण प्राज्ञेन विदुरेण च ।
तदैवोक्तास्मि मा स्नेहं कुरुष्वात्मसुतेष्विति ॥ ३५ ॥
तयोर्हि दर्शनं नैतन्मिथ्या भवितुमर्हति ।
अचिरेणैव मे पुत्रा भस्मीभूता जनार्दन ॥ ३६ ॥
वैशम्पायन उवाच-इत्युक्त्वा न्यपतद्भूमौ गान्धारी शोकमूर्छिता ।
दुःखोपहतविज्ञाना धैर्यमुत्सृज्य भारत ॥ ३७ ॥
ततः कोपपरीताङ्गी पुत्रशोकपरिप्लुता ।
जगाम शौरिं दोषेण गान्धारी व्यथितेन्द्रिया ॥ ३८ ॥
गान्धार्युवाच— पाण्डवा धार्त्तराष्ट्राश्च दग्धाः कृष्ण परस्परम् ।
उपेक्षिता विनश्यन्तस्त्वया कस्माज्जनार्दन ॥ ३९ ॥
शक्तेन बहुभृत्येन विपुले तिष्ठता बले ।
उभयत्र समर्थेन श्रुतवाक्येन चैव ह ॥ ४० ॥
इच्छतोपेक्षितो नाशः कुरूणां मधुसूदन ।
यस्मात्त्वया महाबाहो फलं तस्मादवाप्नुहि ॥ ४१ ॥
पतिशुश्रूषया यन्मे तपः किंचिदुपार्जितम् ।

कालके लिये कोई कर्म कठिन नहीं है देखो सब वीर मारे गये। हे कृष्ण! जिस समय तुम सन्धि करानेको आये थे, और विना काम सिद्ध हुये लौट गये थे, तब ही मेरे बलवान पुत्रोंका नाश हो चुका था, उसी दिन भीष्म और बुद्धिमान विदुरने मुझसे कहा था, कि "अब तुम अपने पुत्रोंसे प्रेम मत करो।" उनका ज्ञान झूटा नहीं हुआ, थोडे ही दिनमें मेरे महापराक्रमी पुत्र भस्म होगये। श्रीवैशम्पायन मुनि बोले, हे राजन् जनमेजय! ऐसा कहकर गान्धारी धीरजको छोड कर शोकसे व्याकुल होकर पृथ्वीमें गिर पडी। फिर पुत्रोंके शोकसे व्याकुल होकर उठी और क्रोधसे कृष्णको दोष लगाने लगी। (३३-३८)

गान्धारी बोली, हे कृष्ण! जब कौरव और पाण्डव दोनों परस्पर लडके नष्ट होते थे, तब तुमने उन्हें मना क्यों नहीं किया? तुमने सबके वचन सुने थे, तुम समर्थ बलवान और बहुत सेवकोंसे युक्त होनेपर भी कौरवोंका

यं पुरोधाय कुरव आह्वयन्ति स्म पाण्डवान्।
सोऽयं शस्त्रभृतां श्रेष्ठो द्रोणः शस्त्रैः परिक्षतः॥ २९॥
यस्य निर्दहतः सेनां गतिरग्नेरिवाभवत्।
स भूमौ निहतः शेते शांतार्चिरिव पावकः ॥ ३० ॥
धनुर्मुष्टिरशीर्णश्च हस्तावापश्च माधव।
द्रोणस्य निहतस्याजौ दृश्यते जीवतो यथा ॥ ३१ ॥
वेदा यस्माच्च चत्वारः सर्वाण्यस्त्राणि केशव।
अनपेतानि वै शूराद्यथैवादौ प्रजापतेः ॥ ३२ ॥
वन्दनार्हाविमौ तस्य वन्दिभिर्वन्दितौ शुभौ।
गोमायवो विकर्षन्ति पादौ शिष्यशतार्चितौ॥ ३३ ॥
द्रोणं द्रुपदपुत्रेण निहतं मधुसूदन।
कृपी कृपणमन्वास्ते दुःखोपहतचेतना ॥ ३४ ॥
तां पश्य रुदतीमार्तां मुक्तकेशीमधोमुखीम्।
हतं पतिमुपासन्तीं द्रोणं शस्त्रभृतां वरम् ॥ ३५ ॥
बाणैर्भिन्नतनुत्राणं धृष्टद्युम्नेन केशव।
उपास्ते वै मृधे द्रोणं जटिला ब्रह्मचारिणी ॥ ३६ ॥
प्रेतकृत्ये च यतते कृपी कृपणमातुरा।

है, शस्त्रोंने भी उनकी रक्षा नहीं करी। इन्हींके आश्रयसे कौरव लोग पाण्डवोंको युद्ध करनेके लिये ललकारते थे, वेही शस्त्र जाननेवालोंमें श्रेष्ठ द्रोणाचार्य आज शस्त्रोंसे कटे हुए पृथ्वीमें पड़े हैं। जिन्होंने अग्निके समान तेज धारण करके पाण्डवोंकी सेनाको भस्म किया था, वेही द्रोणाचार्य आज बुझी हुई अग्निके समान मरे हुए पृथ्वीमें पड़े हैं। इस समय भी इनके धनुषकी मूठि नहीं छूटी और हाथकी भी नहीं छूटी ये अबभी जीते हुएके समान दीखते हैं। ये ब्रह्माके समान चारों वेद और शस्त्र विद्याको जानते थे, देखो जिन द्रोणाचार्यके चरणोंमें सैकड़ों शिष्य प्रणाम करते थे उन्ही प्रणाम करने योग्य सुन्दर चरणोंको सियार खींचते फिरते हैं, ये देखो, धृष्टद्युम्नके हाथसे द्रोणाचार्यके पास दुःखसे भरी हुई कृपी बैठी है, देखो शस्त्रधारियोंमें श्रेष्ठ अपने पति मरे हुए द्रोणाचार्यके पास बाल खोले नीचा मुख करे रोती हुई कृपी बैठी है, धृष्टद्युम्नके बाणोंसे शरीरका कवच कट गया है अब जटाधारी ब्रह्मचारिणी, दुख

तेन त्वां दुरवापेन शप्स्ये चक्रगदाधरम् ॥ ४२ ॥
यस्मात्परस्परं घ्नन्तो ज्ञातयः कुरुपाण्डवाः ।
उपेक्षितास्ते गोविन्द तस्माज्ज्ञातीन्वधिष्यसि ॥ ४३ ॥
त्वमप्युपस्थिते वर्षे षट्त्रिंशे मधुसूदन ।
हतज्ञातिर्हतामात्यो हतपुत्रो वनेचरः ॥ ४४ ॥
अनाथवदविज्ञातो लोकेष्वनभिलक्षितः ।
कुत्सितेनाभ्युपायेन निधनं समवाप्स्यसि ॥ ४५ ॥
तवाप्येवं हतसुता निहतज्ञातिबान्धवाः ।
स्त्रियः परिपतिष्यन्ति यथैता भरतस्त्रियः ॥ ४६ ॥
वैशम्पायन उवाच तच्छ्रुत्वा वचनं घोरं वासुदेवो महामनाः ।
उवाच देवीं गान्धारीमीषदभ्युत्स्मयन्निव ॥ ४७ ॥
जानेऽहमेतदप्येवं चीर्णं चरामि क्षत्रिये ।
दैवादेव विनश्यन्ति वृष्णयो नात्र संशयः ॥ ४८ ॥
संहर्ता वृष्णिचक्रस्य नान्यो मद्विद्यते शुभे ।
अवध्यास्ते नरैरन्यैरपि वा देवदानवैः ॥ ४९ ॥
परस्परकृतं नाशं यतः प्राप्स्यन्ति यादवाः ।
इत्युक्तवति दाशार्हे पाण्डवास्त्रस्तचेतसः ॥
बभूवुर्भृशसंविग्ना निराशाश्चापि जीविते ॥ ५० ॥ [७०१]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां स्त्रीपर्वणि स्त्रीविलापपर्वणि गान्धारीशापे पञ्चविंशोऽध्यायः ॥२५॥ ॥ समाप्तं च स्त्रीविलापपर्व ॥

हतस्य समरे भर्तुः सुकुमारी यशस्विनी ॥ ३७ ॥
अग्नीनाधाय विधिवच्चितां प्रज्वाल्य सर्वतः ।
द्रोणमाधाय गायन्ति त्रीणि सामानि सामगाः ॥३८॥
कुर्वन्ति च चितामेते जटिला ब्रह्मचारिणः ।
धनुर्भिः शक्तिभिश्चैव रथनीडैश्च माधव ॥ ३९ ॥
शरैश्च विविधैरन्यैर्धक्ष्यते भूरितेजसम् ।
इति द्रोणं समाधाय शंसन्ति च रुदन्ति च ॥ ४० ॥
सामभिस्त्रिभिरन्तस्थैरनुशंसन्ति चापरे ।
अग्नावग्निं समाधाय द्रोणं हुत्वा हुताशने ॥ ४१ ॥
गच्छन्त्यभिमुखा गङ्गां द्रोणशिष्या द्विजातयः ।
अपसव्यां चितिं कृत्वा पुरस्कृत्य कृपीं च ते ॥ ४२ ॥ [६७१]

इति श्रीमहाभारते० स्त्रीपर्वणि स्त्रीविलापपर्वणि गान्धारीवचने त्रयोविंशोऽध्यायः ॥२३ ॥

गान्धार्युवाच— सोमदत्तसुतं पश्य युयुधानेन पातितम् ।
विद्यमानं विहगैर्बहुभिर्माधवान्तिके ॥ १ ॥
पुत्रशोकाभिसन्तप्तः सोमदत्तो जनार्दन ।
युयुधानं महेष्वासं गर्हयन्निव दृश्यते ॥ २ ॥
असौ हि भूरिश्रवसो माता शोकपरिप्लुता ।
आश्वासयति भर्तारं सोमदत्तमनिन्दिता ॥ ३ ॥

मारी, यशस्विनी कृपी अपने पतिका प्रेत कर्म करनेको कहती है, ये जटाधारी ब्रह्मचारी द्रोणाचार्यके ब्राह्मण शिष्य धनुष शक्ति रथोंके पहिले और अनेक प्रकारके बाणोंसे चिता बना रहे हैं, अब उन्होंने चितामें आग लगाकर द्रोणाचार्यको जला दिया । ये सामवेद जाननेवाले द्रोणाचार्यके शिष्य रो रहे हैं। और अपने गुरुकी प्रशंसा कर रहे हैं, अब ये चिताकी प्रदक्षिणा करके और कृपीको आगे करके गङ्गा स्नानको जाते है। ( २५–४२ ) [ ६७१ ]

स्त्रीपर्वमें तेईस अध्याय समाप्त।

स्त्रीपर्वमें चौवीस अध्याय।

गान्धारी बोली, हे कृष्ण ! ये सोमदत्त पुत्र भूरिश्रवा सात्यकीके हाथसे मरे हुए पडे हैं। देखो अनेक प्रकारके पक्षी इनका मांस खा रहे हैं, ये देखो पुत्रके शोकसे व्याकुल सोमदत्त महाधनुषधारी सात्यकीकी निन्दा कर रहे हैं, जो निन्दारहित भूरिश्रवाकी माता शोकसे व्याकुल होकर अपने पतिको

## अथ श्राद्धपर्व ।

श्रीभगवानुवाच– उत्तिष्ठोत्तिष्ठ गान्धारि मा च शोके मनः कृथाः ।
तवैव ह्यपराधेन कुरवो निधनं गताः ॥ १ ॥
यत्त्वं पुत्रं दुरात्मानमीर्षुमत्यन्तमानिनम् ।
दुर्योधनं पुरस्कृत्य दुष्कृतं साधु मन्यसे ॥ २ ॥
निष्ठुरं वैरपुरुषं वृद्धानां शासनातिगम् ।
कथमात्मकृतं दोषं मय्याधातुमिहेच्छसि ॥ ३ ॥
मृतं वा यदि वा नष्टं योऽतीतमनुशोचति ।
दुःखेन लभते दुःखं द्वावनर्थौ प्रपद्यते ॥ ४ ॥
तपोर्थीयं ब्राह्मणी धत्त गर्भं गौर्वोढारं धावितारं तुरङ्गी ।
शूद्रा दासं पशुपालं च वैश्या वधार्थीयं क्षत्रिया राजपुत्री॥५॥
वैशम्पायन उवाच तच्छ्रुत्वा वासुदेवस्य पुनरुक्तं वचोऽप्रियम् ।
तूष्णीं बभूव गान्धारी शोकव्याकुललोचना ॥ ६ ॥
धृतराष्ट्रस्तु राजर्षिर्निगृह्याबुद्धिजं तमः ।
पर्यपृच्छत धर्मज्ञो धर्मराजं युधिष्ठिरम् ॥ ७ ॥

---

मेरे सिवाय देवता और दानव भी नहीं मार सकते । वे परस्पर लडके नष्ट हो जांयगे । श्रीकृष्णके ऐसे वचन सुन पाण्डवोंने घबडाकर अपने जीनेकी आशा छोड दी। (४७—५०)[७५१]

स्त्रीपर्वमें पचीस अध्याय समाप्त ।

स्त्रीविलापपर्व समाप्त ।

स्त्रीपर्वमें छव्वीस अध्याय ।

### ( ३ ) श्राद्धपर्व ।

श्रीकृष्ण बोले, हे गान्धारी ! अब तुम उठो शोक मत करो; ये कुरुवंशका नाश तुम्हारे ही अपराधसे हुआ है, तुमने पहिले महाअभिमानी दुरात्मा निष्ठुर लडाईके प्यारे और बूढोंकी आज्ञा न माननेवाले दुर्योधनको न रोका, अब मुझे दोष क्यों देती हो, जो मरे हुए मनुष्य अथवा नष्ट हुए कामका शोच करता है, उसे कुछ लाभ नहीं होता और सदा दुःखहीमें पडा रहता है, ब्राह्मणी तपस्वी, गाय बोझ ले चलनेवाले, घोडी दौडानेवाले, शूद्रा दास, वैश्य पशुपालनेवाले और राजपुत्री क्षत्रियाणी मनुष्यको मारनेवाले पुत्रको उत्पन्न करती हैं । श्रीवैशम्पायन मुनि बोले, श्रीकृष्णके दूसरी बार ऐसे कठोर वचन सुनकर गान्धारी शोकसे व्याकुल होकर चुप होगई। ( १-६ )

धर्म जाननेवाले राजा धृतराष्ट्र

गान्धारराजः शकुनिर्बलवान् सत्यविक्रमः ।
निहतः सहदेवेन भागिनेयेन मातुलः ॥ २३ ॥
यः पुरा हेमदण्डाभ्यां व्यजनाभ्यां स्म वीज्यते ।
स एष पक्षिभिः पक्षैः शयान उपवीज्यते ॥ २४ ॥
यः स्वरूपाणि कुरुते शतशोऽथ सहस्रशः ।
तस्य मायाविनो माया दग्धाः पाण्डवतेजसा ॥२५॥
मायया निकृतिप्रज्ञो जितवान् यो युधिष्ठिरम् ।
सभायां विपुलं राज्यं स पुनर्जीवितं जितः ॥ २६ ॥
शकुन्ताः शकुनिं कृष्ण समन्तात्पर्युपासते ।
कैतवं मम पुत्राणां विनाशायोपशिक्षितम् ॥ २७ ॥
एतेनैतन्महद्वैरं प्रसक्तं पाण्डवैः सह ।
वधाय मम पुत्राणामात्मनः सगणस्य च ॥ २८ ॥
यथैव मम पुत्राणां लोकाः शस्त्रजिताः प्रभो ।
एवमस्यापि दुर्बुद्धेर्लोकाः शस्त्रेण वै जिताः ॥ २९ ॥
कथं च नायं तत्रापि पुत्रान्मे भ्रातृभिः सह ।
विरोधयेदृजुप्रज्ञाननृजुर्मधुसूदन ॥ ३० ॥ [७०१]

इति श्रीमहाभारते० स्त्रीपर्वणि स्त्रीविलापपर्वणि गान्धारीवाक्ये चतुर्विंशोऽध्यायः ॥ २४ ॥

ये सभी चुप होगई हैं, भूरिश्रवाकी स्त्री सह रोरही है। (११–२२)

पृथ्वीमें पडा है, जिस छलीने मेरे पुत्रों का नाश करनेहीके लिये छल सीखा

जीवतां परिमाणज्ञः सैन्यानामसि पाण्डव।
हतानां यदि जानीषे परिमाणं वदस्व मे ॥ ८ ॥

युधिष्ठिर उवाच—दशायुतानामयुतं सहस्राणि च विंशतिः।
कोट्यः षष्टिश्च षट् चैव ह्यस्मिन् राजन् मृधे हताः॥९॥
अलक्षितानां वीराणां सहस्राणि चतुर्दश।
दश चान्यानि राजेन्द्र शतं षष्टिश्च पञ्च च ॥ १० ॥

धृतराष्ट्र उवाच—युधिष्ठिर गतिं कां ते गताः पुरुषसत्तम।
आचक्ष्व मे महाबाहो सर्वज्ञो ह्यसि मे मतः ॥ ११ ॥

युधिष्ठिर उवाच- यैर्हुतानि शरीराणि हृष्टैः परमसंयुगे।
देवराजसमाँल्लोकान् गतास्ते सत्यविक्रमाः ॥ १२ ॥
ये त्वहृष्टेन मनसा मर्तव्यमिति भारत।
युध्यमाना हताः संख्ये गन्धर्वैः सह सङ्गताः ॥ १३ ॥
ये च संग्रामभूमिष्ठा याचमानाः पराङ्मुखाः।
शस्त्रेण निधनं प्राप्ता गतास्ते गुह्यकान्प्रति ॥ १४ ॥
पात्यमानाः परैर्ये तु हीयमाना निरायुधाः।
ह्रीनिषेवा महात्मानः परानभिमुखा रणे ॥ १५ ॥
छिद्यमानाः शितैः शस्त्रैः क्षत्रधर्मपरायणाः।
गतास्ते ब्रह्मसदनं न मेऽत्रास्ति विचारणा ॥ १६ ॥

एकैकं दशभिः षड्भिरष्टाभिरपि भारत ।
द्विरदानभिविव्याध क्षिप्तैर्गिरिनिभाञ्शरैः ॥ ६ ॥
प्रच्छाद्यमानं द्विरदैर्मेघैरिव दिवाकरम् ।
प्रययुः पाण्डुपञ्चाला नदन्तो निशितायुधाः ॥ ७ ॥
तान्नागानभिवर्षन्तो ज्यातन्त्रीतलनादितैः ।
वीरनृत्यं प्रनृत्यन्तः शूरतालप्रचोदितैः ।
नकुलः सहदेवश्च द्रौपदेयाः प्रभद्रकाः ॥ ८ ॥
सात्यकिश्च शिखण्डी च चेकितानश्च वीर्यवान् ।
समन्तात्सिषिचुर्वीरा मेघास्तोयैरिवाचलान् ॥ ९ ॥
ते म्लेच्छैः प्रेषिता नागा नरानश्वान्रथानपि ।
हस्तैराक्षिप्य ममृदुः पद्भिश्चाप्यतिमन्यवः ॥ १० ॥
बिभिदुश्च विषाणाग्रैः समाक्षिप्य च चिक्षिपुः ।
विषाणलग्नाश्चाप्यन्ये परिपेतुर्विभीषणाः ॥ ११ ॥
प्रमुखे वर्त्तमानं तु द्विपमङ्गस्य सात्यकिः ।
नाराचेनोग्रवेगेन भित्त्वा मर्माण्यपातयत् ॥ १२ ॥

---

प्रेरित होकर अपनेको मारनेकी इच्छासे आये हुए पर्वततुल्य शरीरवाले हाथियोंको एकेकको दस दस, छः छः और आठ आठ नाराच बाणोंसे विद्ध करने लगे। उस समय जैसे मेघ सूर्यको घेर लेते हैं; इस प्रकार हाथियोंने धृष्टद्युम्नको घेर लिया, तब गरजते हुए, तेज आयुध धारण करनेवाले पाण्डव और पाञ्चाल धृष्टद्युम्नकी रक्षाके लिये दौडे ॥ (५-७)

वे सब वीर अपने बाणोंसे हाथियोंको काटते हुए,धनुषकी डोरीरूपी वीणा और तालियोंके शब्दके नादमें नाचते कूदते और गर्जते कौरवोंकी सेनापर टूटे। नकुल, सहदेव,द्रौपदीके पांचों पुत्र, प्रभद्रक, सात्यकि, शिखण्डी, बलवान् चेकितान आदि वीरोंने उस हस्ती सेनाके ऊपर इस प्रकार बाण वर्षाये जैसे मेघ पर्वतोंके ऊपर जल वर्षाता है। तब म्लेच्छ वीरोंसे प्रेरित होकर उनके हाथियोंने सूण्डमें पकडकर अनेक घोडे,रथ और मनुष्योंको मारडाला उन हाथियोंने पैरोंसे वीरोंको पीस दिया, दांतोंसे पेट चीर दिये, और सूंडोंमे अनेक वीरोंको मार डाला। हाथियोंने किसीको सूंडसे उठाकर भूमिमर पटक दिया। कोई भयरहित वीर हाथियोंके दांतोंके बीचमें जाकर छूट गये॥८-११

सात्यकिने आगे खडे हुए अङ्गदेशके वीरके हाथीको मर्मस्थलमें तेज तीक्ष्ण

तस्यावर्जितकायस्य द्विरदादुत्पतिष्यतः ।
नाराचेनाहनद्वक्षः सात्यकिः सोऽपतद्भुवि ॥ १३ ॥
पुण्ड्रस्यापततो नागं चलन्तमिव पर्वतम् ।
सहदेवः प्रयत्नास्तैर्नाराचैरहनात्त्रिभिः ॥ १४ ॥
विपताकं वियन्तारं विवर्मध्वजजीवितम् ।
तं कृत्वा द्विरदं भूयः सहदेवोऽङ्गमभ्ययात् ॥ १५ ॥
सहदेवं तु नकुलो वारयित्वाङ्गमार्दयत् ।
नाराचैर्यमदण्डाभैस्त्रिभिर्नागं शतेन तम् ॥ १६ ॥
दिवाकरकरप्रख्यानङ्गश्चिक्षेप तोमरान् ।
नकुलाय शतान्यष्टौ त्रिधैकैकं तु सोऽच्छिनत् ॥१७॥
तथार्धचन्द्रेण शिरस्तस्य चिच्छेद पाण्डवः ।
स पपात हतो म्लेच्छस्तेनैव सह दन्तिना ॥ १८ ॥
अथाङ्गपुत्रे निहते हस्तिशिक्षाविशारदे ।
अङ्गाः क्रुद्धा महामात्रा नागैर्नकुलमभ्ययुः ॥ १९ ॥
चलत्पताकैः सुमुखैर्हेमकक्षातनुच्छदैः ।

वाणसे प्रहारकर उसे भूमिपर गिराया, जब अंग देशका वीर गिरनेवाले हाथीसे उतरनेलगा, तब सात्यकिने उसके हृदयमें एक वाण मारा तब वह मरकर हाथीसे गिर गया ॥ (१२—१३)

पुण्ड्रदेशके राजाके चलते हुए पर्वतके समान हाथीको सहदेवने तीन नाराच वाणोंसे व्याकुल कर दिया । पुण्ड्रदेशके राजाके हाथीको महावत, ध्वजा, पताका और कवचसे रहित करके सहदेव अङ्गदेशके राजासे लडनेको चले गये। नकुलने सहदेवको अङ्ग देशके राजासे लडनेको रोक दिया और आपही उससे लडने लगे। यमराजके दण्डके समान तीन वाणोंसे अंगराजके हाथीको और सौ वाणोंसे राजा अंगको पीडित किया ॥ (१४-१६)

अङ्गदेशके राजाने सूर्यकी किरणके समान एकसौ आठ तोमर नकुलकी ओर चलाये, परन्तु नकुलने वाणोंसे एकएकके तीन तीन टुकडे कर दिये ॥ एक अर्द्धचन्द्र वाणसे नकुलने उसका शिर काट दिया, तब म्लेच्छ हाथी समेत मरकर गिर गया ॥ जब हाथीके युद्धमें विशारद वह अंगराजका पुत्र मर गया, तब अङ्गदेशके वीर क्रोध करके अपने हाथियोंके ऊपर बैठकर नकुलसे युद्ध करनेको आये ॥ (१७-१९)

अङ्गदेशके वीर प्रकाशमान पताका

ये त्वत्र निहता राजन्नन्तरायोधनं प्रति ।
यथा कथञ्चित्पुरुषास्ते गतास्तूत्तरान् कुरून् ॥ १७ ॥

धृतराष्ट्र उवाच— केन ज्ञानबलेनैवं पुत्र पश्यसि सिद्धवत् ।
तन्मे वद महाबाहो श्रोतव्यं यदि वै मया ॥ १८ ॥

युधिष्ठिर उवाच— निदेशाद्भवतः पूर्वं वने विचरता मया ।
तीर्थयात्राप्रसङ्गेन संप्राप्तोऽयमनुग्रहः ॥ १९ ॥
देवर्षिर्लोमशो दृष्टस्ततः प्राप्तोऽस्म्यनुस्मृतिम् ।
दिव्यं चक्षुरपि प्राप्तं ज्ञानयोगेन वै पुरा ॥ २० ॥

धृतराष्ट्र उवाच— अनाथानां जनानां च सनाथानां च भारत ।
कच्चित्तेषां शरीराणि धक्ष्यसे विधिपूर्वकम् ॥ २१ ॥
न येषामस्ति संस्कर्ता न च येऽत्राहिताग्नयः ।
वयं च कस्य कुर्यामो बहुत्वात्तात कर्मणाम् ॥ २२ ॥
यान्सुपर्णाश्च गृध्राश्च विकर्षन्ति ततस्ततः ।
तेषां तु कर्मणा लोका भविष्यन्ति युधिष्ठिर ॥ २३ ॥

वैशम्पायन उवाच-एवमुक्तो महाराज कुन्तीपुत्रो युधिष्ठिरः ।
आदिदेश सुधर्माणं धौम्यं सूतं च सञ्जयम् ॥ २४ ॥
विदुरं च महाबुद्धिं युयुत्सुं चैव कौरवम् ।

---

मुख दिये वीर क्षत्री धर्मसे मरे हैं, वे निःसन्देह ब्रह्मलोकको गए, जो डरोंके भीतर मारे गए उनका जन्म उत्तर कुरूदेशमें होगा। (१२—१७)

राजा धृतराष्ट्र बोले, हे पुत्र ! तुम कौनसे ज्ञानके बलसे सिद्धके समान उन्हें देख रहे हो। महाराज युधिष्ठिर बोले, हे राजन् ! मैं जब आपकी आज्ञासे वनमें घूमता था, तब तीर्थयात्राके समय देवर्षि लोमश मेरे पास आये थे, उन्हींकी कृपा और योगसे यह शक्ति होगई है। महाराज धृतराष्ट्र बोले, हे युधिष्ठिर ! अब तुम विधिपूर्वक अनाथ और सनाथ क्षत्रियोंके शरीर जलावोगे ना ? जिनका संस्कार करनेवाला कोई नहीं है और जो आहिताग्नि नहीं हैं ऐसे ही बहुत हैं। जिन्हें गिद्ध और सियार खींच रहे हैं, उनकी गति कर्मके अनुसार होवे। ( १८-२३ )

श्रीवैशम्पायन मुनि बोले, हे महाराज ! धृतराष्ट्रकी ऐसी आज्ञा सुन कुन्तीपुत्र युधिष्ठिरने दुर्योधनके पुरोहित सुधर्मा, अपने पुरोहित धौम्य, सञ्जय, महाबुद्धिमान विदुर, युयुत्सु, इन्द्रसेन

और श्रीकृष्णको उनकी दुर्दशा दिखाके गान्धारीका विलाप करना तथा अभिमन्युको मरा हुआ देखके उत्तराका विलाप। ५७

१७-२५ क्रोधसे आर्त्त गान्धारीका कृष्णको शाप देना और कृष्णका उसे अनुमोदन करना। ६४

३ श्राद्धपर्व।

२६ कृष्णका गान्धारीकी निन्दा करना, धृतराष्ट्रके पूछनेपर युधिष्ठिरका मरी हुई सेनाकी गिनती स्वर्ग विशेषमें गये हुए वी[illegible] कहना तथा युद्धमें मरे हुए दाह करना।

२७ मरे हुए पुरुषोंका [illegible] तर्पण करनेके निमित्त कुन्ती पाण्डवोंको कर्णका परिचय [illegible] युधिष्ठिरका विलाप पूर्वक तर्पण करना, और स्त्री समाप्ति।

कर्णं वैकर्तनं चैव सहपुत्रममर्षणम्।
केकयांश्च महेष्वासांस्त्रिगर्तांश्च महारथान् ॥ ३६ ॥
घटोत्कचं राक्षसेन्द्रं बकभ्रातरमेव च।
अलम्बुषं राक्षसेन्द्रं जलसन्धं च पार्थिवम् ॥ ३७ ॥
एतांश्चान्यांश्च सुबहून्पार्थिवांश्च सहस्रशः।
घृतधाराहुतैर्दीप्तैः पावकैः समदाहयन् ॥ ३८ ॥
पितृमेधाश्च केषाञ्चित्प्रवर्तन्त महात्मनाम्।
सामभिश्चाप्यगायन्त तेऽन्वशोचन्त चापरैः ॥३९॥
साम्नामृचां च नादेन स्त्रीणां च रुदितस्वनैः।
कश्मलं सर्वभूतानां निशायां समपद्यत ॥ ४० ॥
ते विधूमाः प्रदीप्ताश्च दीप्यमानाश्च पावकाः।
नभसीवान्वदृश्यन्त ग्रहास्तन्वभ्रसंवृताः ॥ ४१ ॥
ये चाप्यनाथास्तत्रासन्नानादेशसमागताः।
तांश्च सर्वान्समानाय्य राशीन्कृत्वा सहस्रशः॥ ४२ ॥
चित्वा दारुभिरव्यग्रैः प्रभूतैः स्नेहपाचितैः।
दाहयामास तान्सर्वान्विदुरो राजशासनात् ॥ ४३ ॥
कारयित्वा क्रियास्तेषां कुरुराजो युधिष्ठिरः।
धृतराष्ट्रं पुरस्कृत्य गङ्गामभिमुखोऽगमत् ॥ ४४ ॥ [७९८]

इति श्रीमहाभारते० श्राद्धपर्वणि कुरूणामौर्ध्वदेहिके षड्विंशोऽध्यायः ॥ २६ ॥

उत्तमौजा, कौशल्य, द्रौपदीके पुत्र, शकुनी, अचल, वृषक, राजा भगदत्त, पुत्रोंके सहित कर्ण, महाधनुषधारी कैकेय, राक्षसराज घटोत्कच, वकासुरका भाई अलम्बुष और जलसिन्धु आदि सहस्रों राजोंको घीके धारासे जलती हुई अग्निमें फूक दिया, किसी महात्माका पिताके समान कर्म किया, ब्राह्मण साम और ऋगवेदकी ऋचा पढने लगे। उस रात्रीमें स्त्रियोंके रोनेके शब्दसे मिला हुआ वेदका शब्द भी भयानक हुआ, वे धूंआरहित जलती हुई चिता आकाशतक दिखाई देने लगी, और जो अनेक देशोंसे आये हुए अनाथ क्षत्री वहां मरे हुए पडे थे, विदुरने राजाकी आज्ञासे उन सबको इकट्ठा करके चितायोंमें घी डालकर जला दिया। इस प्रकार राजा युधिष्ठिर उनको फूककर राजा धृतराष्ट्रको आगे करके गङ्गाको चले। (२७-४४)

स्त्रीपर्वमें छब्बीस अध्याय समाप्त। [ ७९८ ]

वैशम्पायन उवाच ते समासाद्य गङ्गां तु शिवां पुण्यजलोचिताम्।
हृदिनीं च प्रसन्नां च महारूपां महाबलाम् ॥ १ ॥
भूषणान्युत्तरीयाणि वेष्टनान्यवमुच्य च।
ततः पितॄणां भ्रातॄणां पौत्राणां स्वजनस्य च ॥ २ ॥
पुत्राणामार्यकाणां च पतीनां च कुरुस्त्रियः।
उदकं चक्रिरे सर्वा रुदत्यो भृश दुःखिताः ॥ ३ ॥
सुहृदां चापि धर्मज्ञाः प्रचक्रुः सलिलक्रियाः।
उदके क्रियमाणे तु वीराणां वीरपत्निभिः ॥ ४ ॥
सुपतीर्थाभवद्गंगा भूयो विप्रससार च।
तन्महोदधिसङ्काशं निरानन्दमनुत्सवम् ॥ ५ ॥
वीरपत्नीभिराकीर्णं गंगातीरमशोभत।
ततः कुन्ती महाराज सहसा शोककर्शिता ॥ ६ ॥
रुदती मन्दया वाचा पुत्रान्वचनमब्रवीत्।
यः स शूरो महेष्वासो रथयूथपयूथपः ॥ ७ ॥
अर्जुनेन जितः संख्ये वीरलक्षणलक्षितः।
यं सूतपुत्रं मन्यध्वं राधेयमिति पाण्डवाः ॥ ८ ॥
यो व्यराजच्चमूमध्ये दिवाकर इव प्रभुः।
प्रत्ययुध्यत वः सर्वान्पुरा यः सपदानुगान् ॥ ९ ॥
दुर्योधनबलं सर्वं यः प्रकर्षन्व्यरोचत।

समर्थं च तमैश्वर्ये महामतिरमन्यत ॥ ४८ ॥
ततो मुहूर्तं स ध्यात्वा देवानां श्रेयसि स्थितः।
सैनापत्यं ददौ तस्मै सर्वभूतेषु भारत ॥ ४९ ॥
सर्वदेवनिकायानां ये राजानः परिश्रुताः।
तान्सर्वान्व्यादिदेशास्मै सर्वभूतपितामहः ॥ ५० ॥
ततः कुमारमादाय देवा ब्रह्मपुरोगमाः।
अभिषेकार्थमाजग्मुः शैलेन्द्रसहितास्ततः ॥ ५१ ॥
पुण्यां हैमवतीं देवीं सरिच्छ्रेष्ठां सरस्वतीम्।
समन्तपञ्चके या वै त्रिषु लोकेषु विश्रुता ॥ ५२ ॥
तत्र तीरे सरस्वत्याः पुण्ये सर्वगुणान्विते।
निषेदुर्देवगंधर्वाः सर्वे सम्पूर्णमानसाः ॥ ५३ ॥ [२५६९]

इति श्रीमहा० शल्यपर्वांतर्गतगदापर्वणि बलदेवतीर्थ० सारस्वतो० कुमाराभिषेकोपक्रमे चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

वैशंपायन उवाच–ततोऽभिषेकसम्भारान् सर्वान् सम्भृत्य शास्त्रतः।
बृहस्पतिः समिद्धेऽग्नौ जुहावाग्निं यथाविधि ॥ १ ॥
ततो हिमवता दत्ते मणिप्रवरशोभिते।
दिव्यरत्नाचिते पुण्ये निषण्णं परमासने ॥ २ ॥
सर्वमङ्गलसंभारैर्विधिमन्त्रपुरस्कृतम्।

सब ऐश्वर्य भी सब पा चुके हैं। थोडे समयतक विचार करके ब्रह्माने उन्हें सब ऐश्वर्य भोगनेमें समर्थ समझा और देवतोंका सेनापति बना दिया, फिर देवतोंके सब गणोंको बुलाकर ब्रह्माने यह आज्ञा सुना दी। (४९—५०)

पर आये, वहां पवित्र सब गुणोंसे भरे सरस्वतीके तटपर सब देवता प्रसन्न होकर बैठे। (५१—५३) [२५६०]

शल्यपर्वमें चवालिस अध्याय समाप्त।

शल्यपर्वमें पैतालीस अध्याय।

श्रीवैशम्पायन मुनि बोले, हे राजन्!

यस्य नास्ति समो वीर्ये पृथिव्यामपि पार्थिवः ॥१०॥
योऽवृणीत यशः शूरः प्राणैरपि सदा भुवि ।
कर्णस्य सत्यसन्धस्य संग्रामेष्वपलायिनः ॥ ११ ॥
कुरुध्वमुदकं तस्य भ्रातुरक्लिष्टकर्मणः ।
स हि वः पूर्वजो भ्राता भास्करान्मय्यजायत ॥ १२ ॥
कुण्डली कवची शूरो दिवाकरसमप्रभः ।
श्रुत्वा तु पाण्डवाः सर्वे मातुर्वचनमप्रियम् ॥ १३ ॥
कर्णमेवानुशोचन्तो भूयः क्लान्ततराऽभवन् ।
ततः स पुरुषव्याघ्रः कुन्तीपुत्रो युधिष्ठिरः ॥ १४ ॥
उवाच मातरं वीरो निःश्वसन्निव पन्नगः ।
यः शरोर्मिर्ध्वजावर्तो महाभुजमहाग्रहः ॥ १५ ॥
तलशब्दानुनदितो महारथमहाह्रदः ।
यस्येषुपातमासाद्य नान्यस्तिष्ठेद्धनञ्जयात् ॥ १६ ॥
कथं पुत्रो भवत्याः स देवगर्भः पुराऽभवत् ।
यस्य बाहुप्रतापेन तापिताः सर्वतो वयम् ॥ १७ ॥
तमग्निमिव वस्त्रेण कथं छादितवत्यसि ।

सब पाण्डवोंसे लडता था, जो दुर्योधनका सेनापति था, जिसके समान जगत्में कोई राजा बलवान नहीं था, जो कभी युद्धको छोडकर नहीं भागता था, जो जगत्में यशको प्राणोंसे भी अधिक प्यारा मानता था, वह कर्ण तुम्हारा बडा भाई था। पहिले सूर्यके तेजसे वही सूर्य समान तेजस्वी कवच और कुण्डल धारण किये मेरे गर्भसे उत्पन्न हुआ था, इसलिये तुम लोग उसे भी जल दो। ( ६–१३ )

अपनी माताके ऐसे कठोर वचन सुनकर सब पाण्डव कर्णके शोकसे व्याकुल होगये। तब पुरुषसिंह युधिष्ठिर सांपके समान लम्बा स्वांस लेकर अपनी मातासे बोले, ये बाणरूपी तरङ्ग ध्वजारूपी बडी बडी तरङ्ग, बडे बडे हाथरूपी ग्राहतालीके शब्दरूपी शब्द और रथरूपी भौंरसे युक्त कर्णरूपी समुद्र पहिले तुम्हारे देवरूपी गर्भसे कैसे उत्पन्न हुए थे, जिसके बाणोंको अर्जुनके सिवाय और कोई नहीं सह सक्ता था, जिसके बाहुबलसे हमलोग सदा डरते रहते थे, जिसके बाहुबलसे धृतराष्ट्रके पुत्र राज्य करते थे, उस अग्निरूपी वीर्यको तुमने कपडेसे कैसे छिपाया था, अर्जुनके

आभिषेचनिकं द्रव्यं गृहीत्वा देवतागणाः ॥ ३ ॥
इन्द्राविष्णू महावीर्यौ सूर्याचन्द्रमसौ तथा ।
धाता चैव विधाता च तथा चैवानिलानलौ ॥ ४ ॥
पूष्णा भगेनार्यम्णा च अंशेन च विवस्वता ।
रुद्रश्च सहितो धीमान्मित्रेण वरुणेन च ॥ ५ ॥
रुद्रैर्वसुभिरादित्यैरश्विभ्यां च वृतः प्रभुः ।
विश्वेदेवैर्मरुद्भिश्च साध्यैश्च पितृभिः सह ॥ ६ ॥
गन्धर्वैरप्सरोभिश्च यक्षराक्षसपन्नगैः ।
देवर्षिभिरसंख्यातैस्तथा ब्रह्मर्षिभिस्तथा ॥ ७ ॥
वैखानसैर्वालखिल्यैर्वाय्वाहारैर्मरीचिपैः ।
भृगुभिश्चाङ्गिरोभिश्च यतिभिश्च महात्मभिः ॥ ८ ॥
सर्पैर्विद्याधरैः पुण्यैर्योगसिद्धैस्तथावृतः ।
पितामहः पुलस्त्यश्च पुलहश्च महातपाः ॥ ९ ॥
अङ्गिराः कश्यपोऽत्रिश्च मरीचिर्भृगुरेव च ।
क्रतुर्हरः प्रचेताश्च मनुर्दक्षस्तथैव च ॥ १० ॥
ऋतवश्च ग्रहाश्चैव ज्योतींषि च विशाम्पते ।
मूर्तिमत्यश्च सरितो वेदाश्चैव सनातनाः ॥ ११ ॥
समुद्राश्च ह्रदाश्चैव तीर्थानि विविधानि च ।
पृथिवी द्यौर्दिशश्चैव पादपाश्च जनाधिप ॥ १२ ॥
अदितिर्देवमाता च ह्रीः श्रीः स्वाहा सरस्वती ।

---

बिठलाकर, सब मङ्गलकी सामग्री रखकर और सब अभिषेककी वस्तु इकट्ठी करके महाबलवान् इन्द्र, विष्णु, सूर्य, चन्द्रमा, धाता, विधाता अग्नि, वायु, पूषा, भग, अर्यमागण, अंश, विवस्वान, रुद्र, मित्र, वरुण, वसु, आदित्य, अश्विनीकुमार, मरुत, साध्य, गन्धर्व, पितर, अप्सरा, यक्ष, राक्षस, सांप, देवऋषि, ब्रह्मर्षि, वैखानस, वालखिल्य, वायुभक्षी, किरण भक्षी, भृगु, अङ्गिरादि, महात्मा यती, सर्प, विद्याधर, आदि पवित्र योगी, सिद्ध, ब्रह्मा, पुलस्त्य, महातपा पुलह, अङ्गिरा, कश्यप, अत्रि मरीचि, भृगु, क्रतु, हर, प्रचेता, मनु, दक्ष, ऋतु, तारे, ग्रह, मूर्त्तिमान सनातन वेद, समुद्र, तालाब, अनेक प्रकारके तीर्थ, पृथ्वी, आकाश, दिशा, वृक्ष, देवमाता अदिति, ह्री, श्री, स्वाहा, सरस्वती, सती, सिनी-

यस्य बाहुबलं नित्यं धार्तराष्ट्रैरुपासितम् ॥ १८ ॥
उपासितं यथाऽस्माभिर्बलं गाण्डीवधन्वनः।
भूमिपानां च सर्वेषां बलं बलवतां वरः ॥ १९ ॥
नान्यं कुन्तीसुतात्कर्णादगृह्णाद्रथिनां रथी।
स नः प्रथमजो भ्राता सर्वशस्त्रभृतां वरः ॥ २० ॥
असूत तं भवत्यग्रे कथमद्भुतविक्रमम्।
अहो भवत्या मंत्रस्य गूहनेन वयं हताः ॥ २१ ॥
निधनेन हि कर्णस्य पीडितास्तु सबान्धवाः।
अभिमन्योर्विनाशेन द्रौपदेयवधेन च ॥ २२ ॥
पाञ्चालानां विनाशेन कुरूणां पतनेन च।
ततः शतगुणं दुःखमिदं मामस्पृशद्भृशम् ॥ २२ ॥
कर्णमेवानुशोचामि दह्याम्यग्नाविवाहितः।
नेह स्म किंचिदप्राप्यं भवेदपि दिवि स्थितम् ॥ २४ ॥
न चेदं वैशसं घोरं कौरवान्तकरं भवेत्।
एवं विलप्य बहुलं धर्मराजो युधिष्ठिरः ॥ २५ ॥
व्यरुदच्छनकै राजंश्चकाराथोदकं प्रभुः।
ततो विनेदुः सहसा स्त्रियस्ताः खलु सर्वशः ॥ २६ ॥
अभितो याः स्थितास्तत्र तस्मिन्नुदककर्मणि।
तत आनाययामास कर्णस्य सपरिच्छदाः ॥ २७ ॥
स्त्रियः कुरुपतिर्धीमान भ्रातुः प्रेम्णा युधिष्ठिरः।

उमा शची सिनीवाली तथा चानुमतिः कुहूः ॥ १३ ॥
राका च धिषणा चैव पत्न्यश्चान्या दिवौकसाम् ।
हिमवांश्चैव विन्ध्यश्च मेरुश्चानेकशृङ्गवान् ॥ १४ ॥
ऐरावतः सानुचरः कलाः काष्ठास्तथैव च ।
मासार्धमासा ऋतवस्तथा रात्र्यहनी नृप ॥ १५ ॥
उच्चैःश्रवा हयश्रेष्ठो नागराजश्च वासुकिः ।
अरुणो गरुडश्चैव वृक्षाश्चौषधिभिः सह ॥ १६ ॥
धर्मश्च भगवान्देवः समाजग्मुर्हि सङ्गताः ।
कालो यमश्च मृत्युश्च यमस्यानुचराश्च ये ॥ १७ ॥
बहुलत्वाच नोक्ता ये विविधा देवतागणाः ।
ते कुमाराभिषेकार्थं समाजग्मुस्ततस्ततः ॥ १८ ॥
जगृहुस्ते तदा राजन्सर्व एव दिवौकसः ।
आभिषेचनिकं भाण्डं मङ्गलानि च सर्वशः ॥ १९ ॥
दिव्यसंभारसंयुक्तैः कलशैः काञ्चनैर्नृप ।
सरस्वतीभिः पुण्याभिर्दिव्यतोयाभिरेव तु ॥ २० ॥
अभ्यषिञ्चन्कुमारं वै संप्रहृष्टा दिवौकसः ।
सेनापतिं महात्मानमसुराणां भयङ्करम् ॥ २१ ॥
पुरा यथा महाराज वरुणं वै जलेश्वरम् ।
तथाऽभ्यषिञ्चद्भगवान्सर्वलोकपितामहः ॥ २२ ॥

स ताभिः सह धर्मात्मा प्रेतकृत्यमनन्तरम् ॥ २८ ॥
चकार विधिवद्धीमान्धर्मराजो युधिष्ठिरः ।
पापेनासौ मया श्रेष्ठो भ्राता ज्ञातिर्निपातितः ॥ २९ ॥
अतो मनसि यद्गुह्यं स्त्रीणां तन्न भविष्यति ।
इत्युक्त्वा स तु गङ्गाया उत्तताराकुलेन्द्रियः ।
भ्रातृभिः सहितः सर्वैर्गङ्गातीरमुपेयिवान् ॥ ३० ॥ [८२५ ]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां स्त्रीपर्वणि स्त्रीविलापपर्वणि

कर्णगूढजत्वकथने सप्तविंशोऽध्याय ॥ २७ ॥

समाप्तमिद स्त्रीपर्व ।

अत पर शातिपर्व भविष्यति ।

तस्यायमाद्यः श्लोकः ।

वैशम्पायन उवाच–कृतोदकास्ते सुहृदां सर्वेषां पाण्डुनन्दनाः ।
विदुरो धृतराष्ट्रश्च सर्वाश्च भरतस्त्रियः ॥ १ ॥

बुलाकर भाईके ओरसे उनका सब कर्म किया। फिर बोले कि " इस कुन्तीकी गुप्तता के कारण हमने अपने बडे भाई कर्ण को मारडाला, इस लिये हम शाप देते हैं कि स्त्रियोंके मनमें इसके बाद कोई बात गुप्त न रहेगी " ऐसा कहकर सब भाईयोंके समेत महाराज युधिष्ठिर व्याकुल होकर गङ्गासे निकले और तटपर बैठे । (२५–३०) [८२५ ]

स्त्रीपर्वमें सताईस अध्याय समाप्त ।

श्राद्धपर्व समाप्त ।

स्त्रीपर्व समाप्त ।

कश्यपश्च महातेजा ये चान्ये लोककीर्तिताः ।
तस्मै ब्रह्मा ददौ प्रीतो बलिनो वातरंहसः ॥ २३ ॥
कामवीर्यधरान्सिद्धान्महापारिषदान्प्रभुः ।
नन्दिसेनं लोहिताक्षं घंटाकर्णं च सम्मतम् ॥ २४ ॥
चतुर्थमस्यानुचरं ख्यातं कुमुदमालिनम् ।
तत्र स्थाणुर्महातेजा महापारिषदं प्रभुः ॥ २५ ॥
मायाशतधरं कामं कामवीर्यबलान्वितम् ।
ददौ स्कन्दाय राजेन्द्र सुरारिविनिबर्हणम् ॥ २६ ॥
स हि देवासुरे युद्धे दैत्यानां भीमकर्मणाम् ।
जघान दोर्भ्यां संक्रुद्धः प्रयुतानि चतुर्दश ॥ २७ ॥
तथा देवा ददुस्तस्मै सेनां नैर्ऋतसंकुलाम् ।
देवशत्रुक्षयकरीमजय्यां विष्णुरूपिणीम् ॥ २८ ॥
जय शब्दं तथा चक्रुर्देवाः सर्वे सवासवाः ।
गन्धर्वा यक्षरक्षांसि मुनयः पितरस्तथा ॥ २९ ॥
ततः प्रादादनुचरौ यमकालोपमावुभौ ।
उन्माथश्च प्रमाथश्च महावीर्यौ महाद्युती ॥ ३० ॥
सुभ्राजो भास्वरश्चैव यौ तौ सूर्यानुयायिनौ ।
तौ सूर्यः कार्तिकेयाय ददौ प्रीतः प्रतापवान् ॥ ३१ ॥

---

ब्रह्माने प्रसन्न होकर वायुके समान शीघ्र चलनेवाले इच्छानुसार बलधारी सिद्ध पार्षद दिये। ब्रह्माने कार्त्तिकेयको नन्दिसेन, लोहिताक्ष घण्टाकर्ण और विख्यात कुमुदमाली पारिषद दिये। (२०-२५)

भगवान महातेजस्वी शिवने अनेक माया जाननेवाले दानवोंका नाश करनेवाला महाबलवान एक पार्षद दिया, उसीने देवासुर संग्राममें क्रोध करके चौदह प्रयुत राक्षसोंको अपने पैरोंसे पीस दिया था। अनन्तर देवतोंने विष्णुरूपिणी दानवोंका नाश करनेवाली किसीसे न हारनेवाली नैर्ऋत सेना उनको दे दी। तब इन्द्रादिक सब देवता, गन्धर्व, यक्ष, राक्षस, मुनि और पितर उनकी जय जय पुकारने लगे। (२६-३०)

हे राजन ! अनन्तर प्रतापवान सूर्यने प्रसन्न होकर अपने संग रहने वाले काल और यमराजके समान बलवान अपने समान तेजस्वी सुभ्राज और भास्वर नामक दो अनुचर दिये। इन्होने भी महाबलवान प्रमाथ और उन्माथ

कैलासशृङ्गसङ्काशौ श्वेतमाल्यानुलेपनौ ।
सोमोऽप्यनुचरौ प्रादान्मणिं सुमणिमेव च ॥ ३२ ॥
ज्वालाजिह्वं तथा ज्योतिरात्मजाय हुताशनः ।
ददावनुचरौ शूरौ परसैन्यप्रमाथिनौ ॥ ३३ ॥
परिघं चवटं चैव भीमं च सुमहाबलम् ।
दहतिं दहनं चैव प्रचंडौ वीर्यसंमतौ ॥ ३४ ॥
अंशोऽप्यनुचरान्पंच ददौ स्कंदाय धीमते ।
उत्क्रोशं पंचकं चैव वज्रदंडधरावुभौ ॥ ३५ ॥
ददावनलपुत्राय वासवः परवीरहा ।
तौ हि शत्रून्महेन्द्रस्य जघ्नतुः समरे बहून् ॥ ३६ ॥
चक्रं विक्रमकं चैव संक्रमं च महाबलम् ।
स्कंदाय त्रीननुचरान् ददौ विष्णुर्महायशाः ॥ ३७ ॥
वर्धनं नंदनं चैव सर्वविद्याविशारदौ ।
स्कंदाय ददतुः प्रीतावश्विनौ भिषजां वरौ ॥ ३८ ॥
कुंदं च कुसुमं चैव कुमुदं च महायशाः ।
डंबराडंबरौ चैव ददौ धाता महात्मने ॥ ३९ ॥
चक्रानुचक्रौ बलिनौ मेषचक्रौ बलोत्कटौ ।
ददौ त्वष्टा महामायौ स्कंदायानुचरावुभौ ॥ ४० ॥

# स्त्रीपर्वकी विषयसूची ।

सुव्रतं सत्यसंधं च ददौ मित्रो महात्मने ।
कुमाराय महात्मानौ तपोविद्याधरौ प्रभुः ॥ ४१ ॥
सुदर्शनीयौ वरदौ त्रिषु लोकेषु विश्रुतौ ।
सुव्रतं च महात्मानं शुभकर्माणमेव च ॥ ४२ ॥
कार्त्तिकेयाय संप्रादाद्विधाता लोकविश्रुतौ ।
पाणीतकं कालिकं च महामायाविनावुभौ ॥ ४३ ॥
पूषा च पार्षदौ प्रादात्कार्तिकेयाय भारत ।
बलं चातिबलं चैव महावक्त्रौ महाबलौ ॥ ४४ ॥
प्रददौ कार्तिकेयाय वायुर्भरतसत्तम ।
यमं चातियमं चैव तिमिवक्त्रौ महाबलौ ॥ ४५ ॥
प्रददौ कार्तिकेयाय वरुणः सत्यसंगरः ।
सुवर्चसं महात्मानं तथैवाप्यतिवर्चसम् ॥ ४६ ॥
हिमवान्प्रददौ राजन् हुताशनसुताय वै ।
कांचनं च महात्मानं मेघमालिनमेव च ॥ ४७ ॥
ददावनुचरौ मेरुरग्निपुत्राय भारत ।
स्थिरं चातिस्थिरं चैव मेरुरेवापरौ ददौ ॥ ४८ ॥
महात्मा त्वग्निपुत्राय महाबलपराक्रमौ ।
उच्छृंगं चातिशृंगं च महापाषाणयोधिनौ ॥ ४९ ॥

बलवान मेघचक्र संज्ञक चक्र और अतिचक्र नामक दो अनुचर दिये । महात्मा कार्त्तिकेयको भगवान मित्रने सब माया जाननेवाले, महासुव्रत और सत्यसन्धा नामक दो बलवान पार्षद दिये, ये दोनोंपार्षद विद्या और तपसे भरे थे । विधाताने अत्यन्त सुन्दर तीन लोकोंमें विख्यात महात्मा सुव्रत और शुभकर्मा नामक दो सेवक दिये । (३७-४३)

पूषाने कार्त्तिकेयको सब माया जाननेवाले, पाणीतक और काली नामक दो पार्षद दिये । हे भरतकुल श्रेष्ठ ! वायुने कार्त्तिकेयको बडे मुख और बडे बलवाले बल और अतिबल नामक दो पार्षद दिये । सत्यवादी वरुणने बडे मुख और बडे बलवाले यम और अतियम नामक दो पार्षद दिये । अग्निके पुत्र कार्त्तिकेयको हिमाचलने सुवर्चा और अतिवर्चा नामक दो अनुचर दिये । मेरु पर्वतने अग्निपुत्रको महात्मा कांचन और मेघमाली नामक दो अनुचर दिये। फिर मेरुने स्थिर और अतिस्थिर नामक

प्रददावग्निपुत्राय विंध्यः पारिषदावुभौ ।
संग्रहं विग्रहं चैव समुद्रोऽपि गदाधरौ ॥ ५० ॥
प्रददावग्निपुत्राय महापारिषदावुभौ ।
उन्मादं शंकुकर्णं च पुष्पदंतं तथैव च ॥ ५१ ॥
प्रददावग्निपुत्राय पार्वती शुभदर्शना ।
जयं महाजयं चैव नागौ ज्वलनसूनवे ॥ ५२ ॥
प्रददौ पुरुषव्याघ्र वासुकिः पन्नगेश्वरः ।
एवं साध्याश्च रुद्राश्च वसवः पितरस्तथा ॥ ५३ ॥
सागराः सरितश्चैव गिरयश्च महाबलाः ।
ददुः सेना गणाध्यक्षान् शूलपट्टिशधारिणः ॥ ५४ ॥
दिव्यप्रहरणोपेतान्नानावेषविभूषितान् ।
शृणु नामानि चाप्येषां येऽन्ये स्कंदस्य सैनिकाः॥५५॥
विविधायुधसंपन्नाश्चित्राभरणभूषिताः ।
शंकुकर्णो निकुंभश्च पद्मः कुमुद एव च ॥ ५६ ॥
अनंतो द्वादशभुजस्तथा कृष्णोपकृष्णकौ ।
घ्राणश्रवाः कपिस्कंधः कांचनाक्षो जलंधमः ॥ ५७ ॥
अक्षः संतर्जनो राजन् कुनदीकस्तमान्तकृत् ।
एकाक्षो द्वादशाक्षश्च तथैवैकजटः प्रभुः ॥ ५८ ॥
सहस्रबाहुर्विकटो व्याघ्राक्षः क्षितिकंपनः ।

दो अनुचर और दिये । (४४-४८)

विन्ध्याचलने पत्थरोंसे युद्ध करनेवाले महापराक्रमी उच्छृङ्ग और अतिशृङ्ग नामक दो अनुचरे दिये। समुद्रने गदाधारी संग्रह और विग्रह नामक दो अनुचर दिये । सुन्दरी पार्वतीने उन्माद, शंकुकर्ण और पुष्पदन्त नामक सेवक दिये । सर्पराज वासुकीने अग्निपुत्र को जय और महाजय नामक दो सर्प दिये। इसी प्रकार साध्य, रुद्र, पितर, वसु, समुद्र, नदी, और पर्वतोंने कार्त्तिकेयको शूल और पट्टिश धारी अनेक सेनापति दिये ॥ (४९-५५)

हे राजन् ! अनेक प्रकारसे युद्ध करनेवाले, सब युद्ध विद्याके जाननेवाले विचित्र भूषणधारी इन गणोंके नाम भी तुम सुनो। शंकुकर्ण, निकुम्भ, पद्म, कुमुद, अनन्त, द्वादशभुजा, कृष्ण उपकृष्ण, घ्राणश्रवा, कपिस्कन्द, कांचनाक्ष, जलन्धर, अक्ष, सन्तर्पन, कुनदीक, तम, तमान्त

अभिमर्दिषन्तस्त्वरिताः प्रदीप्तैरिव पर्वतैः ॥ २० ॥
मेकलोत्कलकालिङ्गा निषधास्ताम्रलिप्तकाः ।
शरतोमरवर्षाणि विमुञ्चन्तो जिघांसवः ॥ २१ ॥
तैश्छाद्यमानं नकुलं दिवाकरमिवाम्बुदैः ।
परिपेतुः सुसंरब्धाः पाण्डुपञ्चालसोमकाः ॥ २२ ॥
ततस्तदभवद्युद्धं रथिनां हस्तिभिः सह ।
सृजतां शरवर्षाणि तोमरांश्च सहस्रशः ॥ २३ ॥
नागानां प्रास्फुटन्कुम्भा मर्माणि विविधानि च ।
दन्ताश्चैवातिविद्धानां नाराचैर्भूषणानि च ॥ २४ ॥
तेषामष्टौ महानागांश्चतुःषष्ट्या सुतेजनैः ।
सहदेवो जघानाशु तेऽपतन्सह सादिभिः ॥ २५ ॥
अञ्जोगतिभिरायम्य प्रयत्नाद्धनुरुत्तमम् ।
नाराचैरहनन्नागान्नकुलः कुलनन्दनः ॥ २६ ॥
ततः पाञ्चालशैनेयौ द्रौपदेयाः प्रभद्रकाः ।
शिखण्डी च महानागान्सिषिचुः शरवृष्टिभिः॥ २७॥

ओंके सहित अच्छे मुखवाले सुवर्णकी डोरी और कवचसे युक्त अपने हाथियोंको दौडाते हुए इस प्रकार नकुलसे युद्ध करनेको आये, जैसे जलते हुए पर्वत दौडते है ॥ मेकल, उत्कल, कालिङ्ग, निषध और ताम्रलिप्तदेशके वीर नकुलको मारनेकी इच्छासे उसके ऊपर वाण और तोमर वर्षाने लगे, उन सबसे नकुल इस प्रकार छिप गये, जैसे मेघोंसे सूर्य छिप जाते हैं । तब पाण्डव पाञ्चाल और सोमकवंशी क्षत्री क्रोध करके युद्ध करनेको आये ॥ (२०–२२)

तब रथियोंका हाथियोंके साथ घोर युद्ध हुआ । वीर लोग दोनों ओरसे सहस्रों तोमर और बाणोंकी वर्षा करने लगे । उस समय हाथियोंके गंडस्थल और अनेक मर्मस्थान भिन्न होने लगे, तथा नाराच बाणोंसे हाथियोंके दांत और अलंकार टूटने लगे ॥ अनन्तर सहदेवने अपने तेज बाणोंसे वीरोंके सहित आठ बडे हाथियोंको पृथ्वीपर गिरा दिया ॥ (२३–२५)

इसी प्रकार महाप्रतापी कुलनंदन नकुलने भी अपने तेज चलनेवाले नाराच बाणोंसे अनेक हाथियोंको काट डाला । तब धृष्टद्युम्न सात्यकि, शिखण्डी और द्रौपदीके पुत्रोंने उन अनेक हाथियोंके ऊपर बाणोंकी वर्षा की, तब पर्वतके

ते पाण्डुयोधाम्बुधरैः शत्रुद्विरदपर्वताः ।
बाणवर्षैर्हताः पेतुर्वज्रवर्षैरिवाचलाः ॥ २८ ॥
एवं हत्वा तव गजांस्ते पाण्डुरथकुञ्जराः ।
द्रुतां सेनामवैक्षन्त भिन्नकूलामिवापगाम् ॥ २९ ॥
तां ते सेनां समालोड्य पाण्डुपुत्रस्य सैनिकाः
विक्षोभयित्वा च पुनः कर्णं समभिदुद्रुवुः ॥ ३० ॥ [८८७]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां कर्णपर्वणि
सकुलयुद्धे द्वाविंशोऽध्यायः ॥ २२ ॥

सञ्जय उवाच- सहदेवं तथा क्रुद्धं दहन्तं तव वाहिनीम् ।
दुःशासनो महाराज भ्राता भ्रातरमभ्ययात् ॥ १ ॥
तौ समेतौ महायुद्धे दृष्ट्वा तत्र महारथाः ।
सिंहनादरवांश्चक्रुर्वासांस्याधुधुवुश्च ह ॥ २ ॥
ततो भारत क्रुद्धेन तव पुत्रेण धन्विना ।
पाण्डुपुत्रस्त्रिभिर्बाणैर्वक्षस्यभिहतो बली ॥ ३ ॥
सहदेवस्ततो राजन्नाराचेन तवात्मजम् ।
विद्ध्वा विव्याध सप्तत्या सारथिं च त्रिभिः शरैः ॥४॥
दुःशासनस्ततश्चापं छित्त्वा राजन्महाहवे ।

समान वे सब हाथी उन मेघके समान वीरोंके बाणोंसे इस प्रकार मरने लगे, जैसे वज्रसे पर्वत कटते है ॥ हे राजन्! जब तुम्हारी उस सब सेनाको इस प्रकार वीरोंने काट डाला, तब वह सेना बांध टूटी नदीके समान दीखने लगी। ये युधिष्ठिरके वीर तुम्हारी सेनाको इस प्रकार विक्षुब्ध कर कर्णसे युद्ध करनेके लिये चले गए। (२६-३०) [८८७]

कर्णपर्वमें बाईस अध्याय समाप्त ।

कर्णपर्वमें तेईस अध्याय ।

सञ्जय बोले, हे राजन् धृतराष्ट्र! जिस समय क्रोधी सहदेव तुम्हारी सेनाको नाश करने लगे, तब तुम्हारा पुत्र दुःशासन उनसे युद्ध करनेको चला॥ उन दोनों भाइयोंका घोर युद्ध देखकर सब वीर गर्जने और वस्त्र घुमाने लगे॥ हे भारत! तब तुम्हारे बलवान् पुत्रने क्रोध करके पाण्डुपुत्र सहदेवके हृदयमें तीन बाण मारे ॥ (१-३)

हे राजन्! तब सहदेवने तुम्हारे पुत्र के शरीरमें सत्तर बाण और तीन बाण सारथीके शरीरमें मारे ॥ हे राजन्! तब दुःशासनने सहदेवके धनुषको काट

पुण्यनामा सुनामा च सुचक्रः प्रियदर्शनः ॥ ५९ ॥
परिश्रुतः कोकनदः प्रियमाल्यानुलेपनः ।
अजोदरो गजशिराः स्कंधाक्षः शतलोचनः ॥ ६० ॥
ज्वालाजिह्वः करालाक्षः शितिकेशो जटी हरिः ।
परिश्रुतः कोकनदः कृष्णकेशो जटाधरः ॥ ६१ ॥
चतुर्दंष्ट्रोष्टजिह्वश्च मेघनादः पृथुश्रवाः ।
विद्युताक्षो धनुर्वक्त्रो जाठरो मारुताशनः ॥ ६२ ॥
उदाराक्षो रथाक्षश्च वज्रनाभो वसुप्रभः ।
समुद्रवेगो राजेन्द्र शैलकंपी तथैव च ॥ ६३ ॥
वृषो मेषः प्रवाहश्च तथा नंदोपनंदकौ ।
धूम्रः श्वेतः कलिंगश्च सिद्धार्थो वरदस्तथा ॥ ६४ ॥
प्रियकश्चैव नन्दश्च गोनन्दश्च प्रतापवान् ।
आनन्दश्च प्रमोदश्च स्वस्तिको ध्रुवकस्तथा ॥ ६५ ॥
क्षेमवाहः सुवाहश्च सिद्धपात्रश्च भारत ।
गोव्रजः कनकापीडो महापारिषदेश्वरः ॥ ६६ ॥
गायनो हसनश्चैव बाणः खड्गश्च वीर्यवान् ।
वैताली गतितालो च तथा कथकवातिकौ ॥ ६७ ॥
हंसजः पङ्कदिग्धाङ्गः समुद्रोन्मादनश्च ह ।
रणोत्कटः प्रहासश्च श्वेतसिद्धश्च नन्दनः ॥ ६८ ॥

---

कृत, एकाक्ष, द्वादशाक्ष, एकजट, सहस्र बाहु, विकट, व्याघ्राक्ष, क्षितिकम्पन, पुण्यनामा, सुनामा, सुचक्र, प्रियदर्शन, परिश्रुत, कोकनद, प्रियमाली, प्रियानुलेपन, अजोदर, गजशिरा, स्कन्धाक्ष, शतलोचन, ज्वालाजिह्व, करालाक्ष, शितिकेश, जटी, हरी, परिश्रुत, कोकनद, कृष्णकेश, जटाधर, चतुर्दंष्ट्र, अष्टजिह्व, मेघनाद पृथुश्रवा, विद्युताक्ष, धनुर्वक्र, मारुताशन, उदाराक्ष, रथाक्ष, वज्रनाभ, वसुप्रभ, समुद्रवेग, शैलकम्पी, वृषमेष, प्रवाह, नन्द, उपनन्द, धूम्र, श्वेत, कलिङ्ग, सिद्धार्थ, वरद, प्रियक, नन्द, प्रतापी, गोनन्द, आनन्द, प्रमोद, स्वस्तिक, ध्रुवक, क्षेमवाह, सुवाह, सिद्धपात्र, गोव्रज, कनकापीड, महापारिषदेश्वर । गायन, हसन, बाण, खड्गवान्, खड्ग, वैताली, गतितालो कथक, वातिक । हंसज, पङ्कदिग्धाङ्ग समुद्रोन्मादन, रणोत्कट, प्रहास, श्वेतसिद्ध,

दीर्घनख्यो दीर्घदन्त्यो दीर्घतुण्ड्यश्च भारत ॥ ३१ ॥
सबला मधुराश्चैव यौवनस्थाः स्वलंकृताः ।
माहात्म्येन च संयुक्ताः कामरूपधरास्तथा ॥ ३२ ॥
निर्मांसगात्र्यः श्वेताश्च तथा काञ्चनसन्निभाः ।
कृष्णमेघनिभाश्चान्या धूम्राश्च भरतर्षभ ॥ ३३ ॥
अरुणाभा महाभोगा दीर्घकेश्यः सिताम्बराः ।
ऊर्ध्ववेणीधराश्चैव पिङ्गाक्ष्यो लम्बमेखलाः ॥ ३४ ॥
लम्बोदर्यो लम्बकर्णास्तथा लम्बपयोधराः ।
ताम्राक्ष्यस्ताम्रवर्णाश्च हर्यक्ष्यश्च तथाऽपराः ॥ ३५ ॥
वरदाः कामचारिण्यो नित्यं प्रमुदितास्तथा ।
याम्या रौद्रास्तथा सौम्याः कौबेर्योऽथ महाबलाः ॥ ३६ ॥
वारुण्योऽथ च माहेन्द्र्यस्तथाऽऽग्नेय्यः परन्तप ।
वायव्यश्चाथ कौमार्यो ब्राह्म्यश्च भरतर्षभ ॥ ३७ ॥
वैष्णव्यश्च तथा सौर्यो वाराह्यश्च महाबलाः ।
रूपेणाप्सरसां तुल्या मनोहार्यो मनोरमाः ॥ ३८ ॥
परपुष्टोपमा वाक्ये तथर्ध्या धनदोपमाः ।
शक्रवीर्योपमा युद्धे दीप्त्या वह्निसमास्तथा ॥ ३९ ॥

और बडे बडे मुख है सब बल मधुरता, यौवन, भूषण और महात्म्यसे भरी है । इच्छानुसार रूप धारण करसक्ती है किसीकी के शरीर में मांस नही है, कोई सफेद है । किसीका सोनेके समान रङ्ग है । कोई मेघके समान काली, कोई धूएंके समान सुन्दर और कोई लाल रङ्गवाली है । ( २–३३ )

सब बडे बलवाली सफेद वस्त्र धारिणी, ऊपरको देखनेवाली, पिङ्गवर्ण नेत्रवाली, किसीके बडे बडे पेट लम्बे लम्बे कान, लम्बे लम्बे स्तन, और लालनेत्रवाली, किसीके बन्दरके समान नेत्र है. ये सब वरदान देनेमें समर्थ है और सदा प्रसन्न रहनेवाली है और सब इच्छानुसार घूमती है । कोई यम, रुद्र, चन्द्रमा, कुबेर, वरुण, इन्द्र, अग्नि, वायु कार्त्तिकेय, सूर्य और कोई वराहकी शक्तिसे बनी है । रूपमें अप्सराओंके तुल्य है; इनको देखने ही मन वशमें नहीं रहता, इनकी बडी मीठी वाणी है, धनमें कुबेरके समान युद्ध करने और बलमें इन्द्रके समान और तेजमें अग्निके समान है । इन्हें देखकर

कालकंठः प्रभासश्च तथा कुम्भाण्डकोदरः ।
कालकक्षः सितश्चैव भूतानां मथनस्तथा ॥ ६९ ॥
यज्ञवाहः सुवाहश्च देवयाजी च सोमपः ।
मज्जनश्च महातेजाः क्रथक्राथौ च भारत ॥ ७० ॥
तुहरश्च तुहारश्च चित्रदेवश्च वीर्यवान् ।
मधुरः सुप्रसादश्च किरीटी च महाबलः ॥ ७१ ॥
वत्सलो मधुवर्णश्च कलशोदर एव च ।
धर्मदो मन्मथकरः सूचीवक्त्रश्च वीर्यवान् ॥ ७२ ॥
श्वेतवक्त्रः सुवक्त्रश्च चारुवक्त्रश्च पाण्डुरः ।
दण्डवाहुः सुवाहुश्च रजः कोकिलकस्तथा ॥ ७३ ॥
अचलः कनकाक्षश्च बालानामपि यः प्रभुः ।
सञ्चारकः कोकनदो गृध्रपत्रश्च जम्बुकः ॥ ७४ ॥
लोहाजवक्त्रो जवनः कुम्भवक्त्रश्च कुम्भकः ।
स्वर्णग्रीवश्च कृष्णौजा हंसवक्त्रश्च चन्द्रभः ॥ ७५ ॥
पाणिकूर्चाश्च शम्बूकः पञ्चवक्त्रश्च शिक्षकः ।
चाषवक्त्रश्च जम्बूकः शाकवक्त्रश्च कुञ्जलः ॥ ७६ ॥
योगयुक्ता महात्मानः सततं ब्राह्मणप्रियाः ।
पैतामहा महात्मानो महापारिषदाश्च ये ॥ ७७ ॥
यौवनस्थाश्च बालाश्च वृद्धाश्च जनमेजय ।

---

नन्दन। कालकण्ठ, प्रभास, कुम्भाण्डोदर, कालकक्ष, शित, भूत, मथन। यज्ञबाहु, सुबाहु, देवयाजी, सोमप, मजन, महा, तेजा, कथ, क्राथ, तेजधर, तुहार, बलवान, चित्रदेव, सुप्रसाद, मधुर, महावलवान, किरीटी, वत्सल, मधुवर्ण, कलशोदर, धर्मद, मन्मथकर, बलवान् सूचीवेणु। सुवक्त्र, श्वेतवक्त्र, चारुवक्त्र, पांडुर, दण्डबाहु, रज, सुबाहु, कोकिल, अचल, कनकाक्ष, बालाप्रिय, सञ्चारक, कोकनद, गृध्र, पुत्र, जम्बुक, लोहवक्त्र, अज वक्त्र, जवन, कुम्भवक्त्र, कुम्भक, स्वर्णग्रीव कृष्णौजा, हंसवक्त्र, चन्द्रमा, पाणीकुक्ष, शम्बुक, पञ्चवक्त्र, शिक्षक, चाशवक्त्र, जम्बुक, शाकवक्त्र और कुञ्जल। आदि ब्रह्माके बनाये योगी महात्मा सदा ब्राह्मणोंके प्यारे सहस्रों पारिषद कार्त्तिकेयके पास आये। ( ५९-७७ )

हे जनमेजय! इनमेंसे कोई युवा, कोई बालक और कोई बूढेथे। अब उनके

शत्रूणां विग्रहे नित्यं भयदास्ता भवन्त्युत ।
कामरूपधराश्चैव जवे वायुसमास्तथा ॥ ४० ॥
अचिन्त्यबलवीर्याश्च तथाऽचिन्त्यपराक्रमाः ।
वृक्षचत्वरवासिन्यश्चतुष्पथनिकेतनाः ॥ ४१ ॥
गुहाश्मशानवासिन्यः शैलप्रस्रवणालयाः ।
नानाभरणधारिण्यो नानामाल्याम्बरास्तथा ॥ ४२ ॥
नानाविचित्रवेषाश्च नानाभाषास्तथैव च ।
एते चान्ये च बहवो गणाः शत्रुभयङ्कराः ॥ ४३ ॥
अनुजग्मुर्महात्मानं त्रिदशेन्द्रस्य संमते ।
ततः शक्त्यस्त्रमददद्भगवान्पाकशासनः ॥ ४४ ॥
गुहाय राजशार्दूल विनाशाय सुरद्विषाम् ।
महास्वनां महाघण्टां द्योतमानां सितप्रभाम् ॥ ४५ ॥
अरुणादित्यवर्णां च पताकां भरतर्षभ ।
ददौ पशुपतिस्तस्मै सर्वभूतमहाचमूम् ॥ ४६ ॥
उग्रां नानाप्रहरणां तपोवीर्यबलान्विताम् ।
अजेयां स्वगणैर्युक्तां नाम्ना सेनां धनंजयाम् ॥ ४७ ॥
रुद्रतुल्यबलैर्युक्तां योधानामयुतैस्त्रिभिः ।
न सा विजानाति रणात्कदाचिद्विनिवर्तितुम् ॥ ४८ ॥

युद्धमें शत्रु बहुत डरते हैं। ये सब इच्छानुसार रूप धारण कर सक्ती हैं। शीघ्र चलनेमें वायुके समान हैं इनका बल, वीर्य और पराक्रम अपार है। ये सब वृक्ष, चौराहे, गुफा, स्मशान, पर्वत और दुर्गोंमें रहती है। अनेक प्रकारके वस्त्र; आभूषण और माला धारण करती हैं। विचित्र वेष बनाती है और अनेक प्रकारकी भाषा बोलती हैं। (२४-४३)

हे राज शार्दूल ! इनको आदि लेकर और भी सहस्रों भयानक गण इन्द्रकी आज्ञासे कार्त्तिकेयके सङ्ग चले; फिर इन्द्रने दानवोंका नाश करनेके लिये बडे शब्दवाली घंटोंसे युक्त अपने तेजसे प्रकाश करती हुई एक शक्ति कार्त्तिकेयको दई और प्रातः कालके सूर्यके समान एक पताका तथा अनेक शस्त्र और बलसे भरी महा तेजस्वी शत्रुओंसे लडनेवाली रुद्रके समान पराक्रमी तीस सहस्र वीरोंसे भरी, धनञ्जय नामक सेना शिवने दी। यह सेना कभी युद्धसे लौटना नहीं जानती। ( ४३-४८ )

सहस्रशः पारिषदाः कुमारमवतस्थिरे　　॥ ७८ ॥
वक्त्रैर्नानाविधैर्ये तु शृणु तान्जनमेजय ।
कूर्मकुक्कुटवक्त्राश्च शशोलूकमुखास्तथा　　॥ ७९ ॥
खरोष्ट्रवदनाश्चान्ये वराहवदनास्तथा ।
मार्जारशशवक्त्राश्च दीर्घवक्त्राश्च भारत　　॥ ८० ॥
नकुलोलूकवक्त्राश्च काकवक्त्रास्तथाऽपरे ।
आखुबभ्रुकवक्त्राश्च मयूरवदनास्तथा　　॥ ८१ ॥
मत्स्यमेषाननाश्चान्ये अजाविमहिषाननाः ।
ऋक्षशार्दूलवक्त्राश्च द्वीपिसिंहाननास्तथा　　॥ ८२ ॥
भीमा गजाननाश्चैव तथा नक्रमुखाश्च ये ।
गरुडाननाः कङ्कमुखा वृककाकमुखास्तथा　　॥ ८३ ॥
गोखरोष्ट्रमुखाश्चान्ये वृषदंशमुखास्तथा ।
महाजठरपादाङ्गास्तारकाक्षाश्च भारत　　॥ ८४ ॥
पारावतमुखाश्चान्ये तथा वृषमुखाः परे ।
कोकिलाभाननाश्चान्ये श्येनतित्तिरिकाननाः॥ ८५ ॥
कृकलासमुखाश्चैव विरजोम्बरधारिणः ।
व्यालवक्त्राः शूलमुखाश्चण्डवक्त्राः शुभाननाः ॥ ८६ ॥
आशीविषाश्चीरधरा गोनासावदनास्तथा ।

अनेक प्रकारके मुखोंका वर्णन सुनो। कोई कछुवे, कोई भूसे, कोई खरहे, कोई उल्लू, कोई गधे, कोई सूअर, कोई बिलावके समान मुखवाले थे। किसीका लम्बा मुख था, कोई नौ उल्लू कौवे, मूंस, मोर, मछली, बकरी, मेढा, भेड, भैंस, रीछ, शार्दूल, गेंडा, सिंह, भयानक हाथी, नाको, गरुण, गिद्ध, कङ्क, भेडिया, गाय, गधा, और चीतेके समान मुखवाले थे। ( ७८-८४ )

किसीका बडा पेट किसीके बडे पैर और किसीके तारेके समान नेत्र थे किसीका मुख परे, वा किसीका बैल, किसीका कोकिला, किसीका बाज, किसीका तीतर, किसीका गिरगट, किसीका सांप, और किसीका शूलके समान भयानक मुख था, ये सब उस समय निर्मल वस्त्र धारण किये थे, और सांपोंके भूषण पहने थे । ( ८४-८६ )

किसीके नाक गायके ऐसी थी, और किसीका मुख नादके ऐसा था, और किसीका शरीर बहुत दुबला और पेट

विष्णुर्ददौ वैजयन्तीं मालां बलविवर्धिनीम् ।
उमा ददौ विरजसी वाससी रविसप्रभे　　॥ ४९ ॥
गंगा कमण्डलुं दिव्यममृतोद्भवमुत्तमम् ।
ददौ प्रीत्या कुमाराय दण्डं चैव बृहस्पतिः　　॥ ५० ॥
गरुडो दयितं पुत्रं मयूरं चित्रबर्हिणम् ।
अरुणस्ताम्रचूडं च प्रददौ चरणायुधम्　　॥ ५१ ॥
नागं तु वरुणो राजा बलवीर्यसमन्वितम् ।
कृष्णाजिनं ततो ब्रह्मा ब्रह्मण्याय ददौ प्रभुः ॥ ५२ ॥
समरेषु जयं चैव प्रददौ लोकभावनः ।
सैनापत्यमनुप्राप्य स्कन्दो देवगणस्य ह　　॥ ५३ ॥
शुशुभे ज्वलितोऽर्चिष्मान् द्वितीय इव पावकः ।
ततः पारिषदैश्चैव मातृभिश्च समन्वितः　　॥ ५४ ॥
ययौ दैत्यविनाशाय ह्लादयन्सुरपुङ्गवान् ।
सा सेना नैर्ऋती भीमा सघण्टोच्छ्रितकेतना ॥ ५५ ॥
सभेरीशङ्खमुरजा सायुधा सपताकिनी ।
शारदी द्यौरिवाभाति ज्योतिर्भिरिव शोभिता ॥५६॥
ततो देवनिकायास्ते नानाभूतगणास्तथा ।
वादयामासुरव्यग्रा भेरीः शङ्खांश्च पुष्कलान् ॥ ५७ ॥

स्थूलोदराः कृशाङ्गाश्च स्थूलाङ्गाश्च कृशोदराः॥८७॥
ह्रस्वग्रीवा महाकर्णा नानाव्यालविभूषणाः।
गजेन्द्रचर्मवसनास्तथा कृष्णाजिनाम्बराः ॥ ८८ ॥
स्कन्धेमुखा महाराज तथाऽप्युदरतो मुखाः।
पृष्ठे मुखा हनुमुखास्तथा जङ्घामुखा अपि ॥ ८९ ॥
पार्श्वाननाश्च बहवो नानादेशमुखास्तथा।
तथा कीटपतङ्गानां सदृशास्या गणेश्वराः ॥ ९० ॥
नानाव्यालमुखाश्चान्ये बहुबाहुशिरोधराः।
नानावृक्षभुजाः केचित्कटिशीर्षास्तथाऽपरे ॥ ९१ ॥
भुजङ्गभोगवदना नानागुल्मनिवासिनः।
चीरसंवृतगात्राश्च नानाकनकवाससः ॥ ९२ ॥
नानावेषधराश्चैव नानामाल्यानुलेपनाः।
नानावस्त्रधराश्चैव चर्मवासस एव च ॥ ९३ ॥
उष्णीषिणो मुकुटिनः सुग्रीवाश्च सुवर्चसः।
किरीटिनः पञ्चशिखास्तथा काञ्चनमूर्धजाः ॥ ९४ ॥
त्रिशिखा द्विशिखाश्चैव तथा सप्तशिखाः परे।

बहुत बडाथा, किसीका शरीर बहुत मोटा और पेट छोटा था। किसीकी गरदन छोटी थी, और कान भारी थे, कोई सांप लपेट रहा था, कोई हाथीका चमडा ओढ रहा था, और कोई मृग-छाला ओढ रहा था। (८७-८८)

किसीका मुख कंधेमें, किसीका पेटमें किसीका पीठमें, किसीका ठोडीमें कि-सीका जांघमें। और किसीका पसलीमें मु-ख था किसीके अनेक मुख थे, किसीके सब शरीरमें मुखी मुख थे, किसीके शरीरमें अनेक सांपोंके मुख लगे थे, किसीके अनेक हाथ और किसीके अनेक शिर थे, किसीके अनेक वृक्षोंके समान हाथ थे और किसीका कमरमें मुख था। किसीका मुख सांपके फणोंके समान था, ये सब अनेक देशोंके रहनेवाले थे, अनेक प्रकारके सोनेके भूषण धारण किये थे। अनेक प्रकारके वस्त्र और माला पहिरे थे, अनेक प्रकारके सुगन्ध लगाये थे, चमडा ओढे थे, कोई पगडी बांधे थे कोई मुकुट बांधे थे, कोई सु[illegible]ा सदा[illegible] वाले और कोई महातेजस्वी[illegible] कान्ति किरीट बांधे थे, किसीके पांच[illegible] किसीके सोनेके समान शि[illegible] किसीके तीन शिखा थी, किसीके दो

पटहान् झर्झरांश्चैव क्रकचान् गोविषाणिकान्।
आडम्बरान् गोमुखांश्च डिंडिमांश्च महास्वनान् ॥५८॥
तुष्टुवुस्ते कुमारं तु सर्वे देवाः सवासवाः।
जगुश्च देवगन्धर्वा ननृतुश्चाप्सरो गणाः ॥ ५९ ॥
ततः प्रीतो महासेनस्त्रिदशेभ्यो वरं ददौ।
रिपून् हन्ताऽस्मि समरे ये वो वधचिकीर्षवः ॥ ६० ॥
प्रतिगृह्य वरं देवास्तस्माद्विबुधसत्तमात्।
प्रीतात्मानो महात्मानो मेनिरे निहतान् रिपून् ॥६१॥
सर्वेषां भूतसङ्घानां हर्षान्नादः समुत्थितः।
अपूरयत लोकांस्त्रीन् वरे दत्ते महात्मना ॥ ६२ ॥
स निर्ययौ महासेनो महत्या सेनया वृतः।
वधाय युधि दैत्यानां रक्षार्थं च दिवौकसाम् ॥ ६३ ॥
व्यवसायो जयो धर्मः सिद्धिर्लक्ष्मीर्धृतिः स्मृतिः।
महासेनस्य सैन्यानामग्रे जग्मुर्नराधिप ॥ ६४ ॥
स तया भीमया देवः शूलमुद्गरहस्तया।
ज्वलितालातधारिण्या चित्राभरणवर्मया ॥ ६५ ॥
गदामुसलनाराचशक्तितोमरहस्तया।
दृप्तसिंहनिनादिन्या विनद्य प्रययौ गुहः ॥ ६६ ॥

वाले डिण्डिम आदि बाजे बजाये। फिर इन्द्रादिक देवता कार्त्तिकेयकी स्तुति करने लगे; गन्धर्व और देवता गाने लगे और अप्सरा नाचने लगीं। (५४-५९)

अनन्तर कार्त्तिकेयने प्रसन्न होकर वरदान दिया कि जो शत्रु तुम लोगोंको मारना चाहते हैं हम उनका नाश करेंगे। कार्त्तिकेयसे वरदान पाकर महात्मा देवता बहुत प्रसन्न हुए और उन्होंने अपने शत्रुओंको मरा हुवा जान लिया। कार्त्तिकेयका वरदान सुनकर सब प्राणी प्रसन्न होकर गर्जने लगे। यह शब्द तीनों लोकोंमें पूरित होगया। (६०-६२)

हे राजन्! उस शूल और मुशल धारियोंकी महासेनाको संग लेकर कार्त्तिकेय दैत्योंका नाश और देवतोंकी रक्षा करनेको चले। हे राजन्! उस अलात, गदा, मुशल, नाराच, सांगी और तोमर धारिणी कार्त्तिकेयकी सेनाके आगे पुरुषार्थ, विजय, धर्म, सिद्धि, लक्ष्मी, धारणाशक्ति और स्मरण शक्ति

शिखण्डिनो मुकुटिनो मुण्डाश्च जटिलास्तथा ॥ ९५॥
चित्रमालाधराः केचित् केचिद्रोमाननास्तथा ।
विग्रहैकरसानित्यमजेयाः सुरसत्तमैः ॥ ९६ ॥
कृष्णा निर्मांसवक्त्राश्च दीर्घपृष्ठास्तनूदराः ।
स्थूलपृष्ठा ह्रस्वपृष्ठाः प्रलम्बोदरमेहनाः ॥ ९७ ॥
महाभुजा ह्रस्वभुजा ह्रस्वगात्राश्च वामनाः ।
कुब्जाश्च ह्रस्वजंघाश्च हस्तिकर्णशिरोधराः ॥ ९८ ॥
हस्तिनासाः कूर्मनासा वृकनासास्तथाऽपरे ।
दीर्घोच्छ्वासा दीर्घजंघा विकराला ह्यधोमुखाः ॥९९॥
महादंष्ट्रा ह्रस्वदंष्ट्राश्चतुर्दंष्ट्रास्तथाऽपरे ।
वारणेन्द्रनिभाश्चान्ये भीमा राजन्सहस्रशः ॥ १०० ॥
सुविभक्तशरीराश्च दीप्तमंतः स्वलंकृताः ।
पिंगाक्षाः शंकुकर्णाश्च रक्तनासाश्च भारत ॥ १०१ ॥
पृथुदंष्ट्रा महादंष्ट्राः स्थूलौष्ठा हरिमूर्धजाः ।
नानापादौष्ठदंष्ट्राश्च नानाहस्तशिरोधराः ॥ १०२ ॥

---

शिखा थीं और किसीके सात शिखा थीं, किसीका शिर मुडा था और किसीकी जटा बढी थी। किसीके मुख-पर बडे बडे वाल थे, कोई विचित्र माला पहिने थे, ये सब वीररसके प्यारे और देवतोंको भी जीतनेवाले थे। (८९-९६)

सब कालमूखे, मुख बडे बडे कमर और पेटवाले थे, किसीकी कमर बडी भारी और किसीकी कमर छोटी थी, किसीका पेट वडा और किसीका लिङ्ग वडा भारी था; किसीका हाथ वडा और किसीके छोटे छोटे थे, कोई बहुत लम्बे और कोई वौने ही थे, कोई कुवडे और कोई छोटी जांघवाले थे। किसीका कान किसीकी नाक और किसीका शिर हाथीके समान था। किसीकी नाक कछवेके समान थी, किसीकी नाक भेडियेके समान थी, कोई लम्बे श्वांस लेता था, किसीकी जङ्घा वडी भारी थी, किसीका मुख बडा भयानक और नीचको था। (९७-९९)

हे राजन्! किसीके बडे बडे दांत, किसीके चार दांत और किसीके हाथीके समान दांत थे किसीका बडा सुन्दर। और तेजस्वी शरीर था! कोई उत्तम। आभूषण पहिने था. किसीके नेत्र चन्द्रके समान थे. किसीके कान छोटे छोटे थे. किसीकी नाक लाल थी. किसीके लम्बे और छोटे दांत थे। किसीके मोटे

चेष्टामकुर्वन् लभते यदि किंचिद्यदृच्छया ।
यो वा न लभते कृत्वा दुर्दशौ तावुभावपि ॥ १४ ॥
शक्नोति जीवितुं दक्षो नालसः सुखमेधते ।
दृश्यंते जीवलोकेऽस्मिन्दक्षाः प्रायो हितैषिणः ॥१५॥
यदि दक्षः समारंभात् कर्मणो नाश्नुते फलम् ।
नास्य वाच्यं भवेत्किंचिल्लब्धव्यं वाऽधिगच्छति ॥१६॥
अकृत्वा कर्म यो लोके फलं विंदति धिष्ठितः ।
स तु वक्तव्यतां याति द्वेष्यो भवति भूयशः ॥ १७ ॥
एवमेतदनादृत्य वर्तते यस्त्वतोऽन्यथा ।
स करोत्यात्मनोनर्थानेष बुद्धिमतां नयः ॥ १८ ॥
हीनं पुरुषकारेण यदि दैवेन वा पुनः ।
कारणाभ्यामथैताभ्यामुत्थानमफलं भवेत् ॥ १९ ॥
हीनं पुरुषकारेण कर्म त्विह न सिध्यति ।
दैवतेभ्यो नमस्कृत्य यस्त्वर्थान्सम्यगीहते ॥ २० ॥
दक्षो दाक्षिण्यसंपन्नो न स मोघैर्विहन्यते ।

किये प्रारब्धसे कुछ फल प्राप्त करे और जो परिश्रम करनेपर भी फल न पावे, तो इन दोनोंकी निन्दा करनी चाहिये । ( ८-१४ )

उद्योगी जगत्में सुखसे जीता है, और आलसीको सुख नहीं होता, क्यों कि जगत्में प्रायः. उद्योगी ही सुखी दीखते है, यदि परिश्रमी परिश्रम करनेपर भी कुछ फल न पावे, तो उसे पछताना नहीं पडता. अथवा परिश्रमका फल ही होजाता है. जो आलसी बिना कर्म किये फल पाते हैं, लोग उनके विषयमे अनेक प्रकारकी बात कहते है. और बहुत मनुष्य उनसे द्वेष भी करते है । ( १५-१७ )

इसलिये बुद्धिमानोंने यह निश्चय किया है, कि इन दोनों विषयोंको छोडकर जो भिन्न प्रकार कार्य करता है, वह अपने लिये अनर्थ बनाता है । यदि मनुष्य केवल प्रारब्ध या कर्महीको छोडकर कोई कर्मकी सिद्धि करना चाहे तो सिद्धी नहीं होती. अर्थात् दोनोंहीमे कर्म करनेमे सिद्ध होता है, जो मनुष्य उद्योगको छोडकर सिद्धी चाहता है, उसका फल सिद्ध नहीं होता. जो उद्योगी मनुष्य देवतोंको नमस्कार करके उत्तम विचार पूर्वक उद्योग करता है, उसके कार्य फिर भी नष्ट नहीं कर सकते

प्रेष्यभूतः प्रवर्त्तेयं पाण्डवेयस्य शासनात् ॥ १२ ॥
आज्ञाप्य पृथिवीं सर्वां स्थित्वा मूर्द्धनि सञ्जय ।
येन पुत्रशतं पूर्णमेकेन निहतं मम ॥ १३ ॥
कृतं सत्यं वचस्तस्य विदुरस्य महात्मनः ।
अकुर्वता वचस्तेन मम पुत्रेण सञ्जय ॥ १४ ॥
कथमस्य भविष्यामि प्रेष्यभूतो दुरन्तकृत् ।
कथं भीमस्य वाक्यानि श्रोतुं शक्ष्यामि संजय ॥१५॥
अधर्मेण हते तात पुत्रे दुर्योधने मम ।
कृतवर्मा कृपो द्रौणिः किमकुर्वत सञ्जय ॥ १६ ॥

सञ्जय उवाच— गत्वा तु तावका राजन्नातिदूरमवस्थिताः ।
अपश्यन्त वनं घोरं नानाद्रुमलतावृतम् ॥ १७ ॥
ते मुहूर्त्तं तु विश्रम्य लब्धतोयैर्हयोत्तमैः ।
सूर्यास्तमनवेलायां समासेदुर्महद्वनम् ॥ १८ ॥
नानामृगगणैर्जुष्टं नानापक्षिगणावृतम् ।
नानाद्रुमलताच्छन्नं नानाव्यालनिषेवितम् ॥ १९ ॥
नानातोयैः समाकीर्णं नानापुष्पोपशोभितम् ।
पद्मिनीशतसंछन्नं नीलोत्पलसमायुतम् ॥ २० ॥

---

कैसे रहूंगा ? हे सञ्जय ! सब पृथ्वीको अपनी आज्ञामें चलाकर राजोंके शिर पर रहकर अब युधिष्ठिरकी आज्ञामें कैसे चलूंगा ? ( १०-१३ )

महात्मा विदुरका वचन सत्य हुआ, दुर्योधनने विदुरकी बात कुछ न मानी इसीसे यह आपत्ति आई। हे सञ्जय ! जिसने मेरे सौ पुत्रोंको मारा उस भीमसेनके वचनोंको मैं कैसे सह सकूंगा ? हे सञ्जय ! जब भीमसेनने हमारे पुत्र दुर्योधनको अधर्मसे मारडाला तब कृपाचार्य, अश्वत्थामा और कृतवर्माने क्या किया। ( १४—१६ )

सञ्जय बोले, हे महाराज ! जब ये तीनों वीर वहांसे पूर्वकी ओर भागे, तब थोडी दूर जाकर अनेक वृक्ष लताओंसे भरा घोर वन देखा; तब रथोंसे उतरकर थोडे समयतक ठहरकर वहांपर विश्राम किया और घोडोंको पानी पिलाया, तब सूर्य भी अस्त होने लगे। तब ये तीनों दक्षिणकी ओर चलकर उस हरिन, पक्षी, वृक्ष, लता और सांपोंसे भरे वनमें घुसे। ( १७—१९ )

अनन्तर चारों ओर देखते हुए

बुद्धिश्चिंतयते किंचित् स्वं श्रेयो नावबुध्यते ।
मुह्यता तु मनुष्येण प्रष्टव्याः सुहृदो जनाः ॥ ३० ॥
तत्रास्य बुद्धिर्विनयस्तत्र श्रेयश्च पश्यति ।
ततोऽस्य मूलं कार्याणां बुद्ध्या निश्चित्य वै बुधाः ॥ ३१ ॥
तेऽत्र पृष्टा यथाब्रूयुस्तत्कर्तव्यं तथा भवेत् ।
ते वयं धृतराष्ट्रं च गान्धारीं च समेत्य ह ॥ ३२ ॥
उपपृच्छामहे गत्वा विदुरं च महामतिम् ।
ते पृष्टास्तु वदेयुर्यच्छ्रेयो नः समनंतरम् ॥ ३३ ॥
तदस्माभिः पुनः कार्यमिति मे नैष्ठिकी मतिः ।
अनारंभात्तु कार्याणां नार्थः संपद्यते क्वचित् ॥ ३४ ॥
कृते पुरुषकारे तु येषां कार्यं न सिद्ध्यति ।
दैवेनोपहतास्ते तु नात्र कार्या विचारणा ॥ ३५ ॥ [ १०४ ]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां सौप्तिके पर्वणि
द्रौणिकृपसंवादे द्वितीयोऽध्यायः ॥ २ ॥

संजय उवाच — कृपस्य वचनं श्रुत्वा धर्मार्थसहितं शुभम् ।
अश्वत्थामा महाराज दुःखशोकसमन्वितः ॥ १ ॥

भी महाअधर्मी और पापी होगये । मैं यही विचार रहा हूं और इसीसे मेरी बुद्धी इस समय नष्ट होगई है, क्या करना चाहिये यह कुछ नहीं जान पडता और यह भी नियम है कि जब मनुष्यकी बुद्धि नष्ट होजाय तब उसे अपने मित्रोंसे सम्मति पूछनी चाहिये, क्यों कि ऐसे समयमें वे ही उसका कल्याण कर सकते है, पण्डितों ने ऐसा कहा है, कि इस समय यथार्थ मित्र जैसा कहें वैसाही करना उचित है । इस लिये हमारी दृष्टिमें ऐसा आता है, कि हमलोग चलकर महाराज धृतराष्ट्र, गान्धारी और महात्मा विदुरसे यह वृत्तान्त कहैं, फिर वे लोग जैसा कहेंगे, वैसाही करनेमें हमारा कल्याण होगा, क्यों कि बिना उद्योग किये कहीं फल प्राप्त नहीं होता । यदि उद्योग करनेपर कार्य सिद्धि न होय तो उसमें मनुष्यका कुछ दोष नहीं और उसे ही प्रारब्ध कहते है । (३०—३५) [१०४]

सौप्तिकपर्वमें दूसरा अध्याय समाप्त ।

सौप्तिकपर्वमें तीसरा अध्याय ।

सञ्जय बोले, हे महाराज ! कृपाचार्यके धर्म और अर्थसे भरे उत्तम वचन सुनकर दुःखी हुए अग्निके समान

प्रविश्य तद्वनं घोरं वीक्षमाणाः समंततः।
शाखासहस्रसंछन्नं न्यग्रोधं ददृशुस्ततः ॥ २१ ॥
उपेत्य तु तदा राजन् न्यग्रोधं ते महारथाः।
ददृशुर्द्विपदां श्रेष्ठाः श्रेष्ठं तं वै वनस्पतिम् ॥ २२ ॥
तेऽवतीर्य रथेभ्यश्च विप्रमुच्य च वाजिनः।
उपस्पृश्य यथान्यायं संध्यामन्वासत प्रभो ॥ २३ ॥
ततोऽस्तं पर्वतश्रेष्ठमनुप्राप्ते दिवाकरे।
सर्वस्य जगतो धात्री शर्वरी समपद्यत ॥ २४ ॥
ग्रहनक्षत्रताराभिः संपूर्णाभिरलंकृतम्।
नभोंऽशुकमिवाभाति प्रेक्षणीयं समंततः ॥ २५ ॥
इच्छया ते प्रवल्गंति ये सत्वा रात्रिचारिणः।
दिवाचराश्च ये सत्वास्ते निद्रावशमागताः ॥ २६ ॥
रात्रिंचराणां सत्वानां निर्घोषोऽभूत्सुदारुणः।
क्रव्यादाश्च प्रमुदिता घोरा प्राप्ता च शर्वरी ॥ २७ ॥
तस्मिन्रात्रिमुखे घोरे दुःखशोकसमन्विताः।
कृतवर्मा कृपो द्रौणिरुपोपविविशुः समम् ॥ २८ ॥
तत्रोपविष्टाः शोचन्तो न्यग्रोधस्य समीपतः।
तमेवार्थमतिक्रान्तं कुरुपाण्डवयोः क्षयम् ॥ २९ ॥
निद्रया च परीताङ्गा निषेदुर्धरणीतले।

दह्यमानस्तु शोकेन प्रदीप्तेनाग्निना यथा।
क्रूरं मनस्ततः कृत्वा तावुभौ प्रत्यभाषत ॥ २ ॥
पुरुषे पुरुषे बुद्धिर्या या भवति शोभना।
तुष्यंति च पृथक् सर्वे प्रज्ञया ते स्वया स्वया ॥ ३ ॥
सर्वो हि मन्यते लोक आत्मानं बुद्धिमत्तरम्।
सर्वस्यात्मा बहुमतः सर्वाऽऽत्मानं प्रशंसति ॥ ४ ॥
सर्वस्य हि स्वका प्रज्ञा साधुवादे प्रतिष्ठिता।
परबुद्धिं च निन्दन्ति स्वां प्रशंसंति चासकृत् ॥ ५ ॥
कारणान्तरयोगेन योगे येषां समा गतिः।
अन्योन्येन च तुष्यन्ति बहु मन्यंति चासकृत् ॥ ६ ॥
तस्यैव तु मनुष्यस्य सा सा बुद्धिस्तदा तदा।
कालयोगे विपर्यासं प्राप्यान्योन्यं विपद्यते ॥ ७ ॥
विचित्रत्वात्तु चित्तानां मनुष्याणां विशेषतः।
चित्तवैक्लव्यमासाद्य सा सा बुद्धिः प्रजायते ॥ ८ ॥
यथा हि वैद्यः कुशलो ज्ञात्वा व्याधिं यथाविधि।
भैषज्यं कुरुते योगात्प्रशमार्थमिति प्रभो ॥ ९ ॥
एवं कार्यस्य योगार्थं बुद्धिं कुर्वन्ति मानवाः।

क्रोधमें भरकर मनको दूषित करके अश्वत्थामा, कृपाचार्य और कृतवर्मासे बोले। ( १—२ )

हम यह जानते है, कि जगत्में सब मनुष्योंकी बुद्धि अलग अलग होती है, और सब लोग अपने अपनेको महाबुद्धिमान जानकर अपनी अपनी प्रशंसा किया करते हैं। और अपने अपने को बडा समझते हैं सब लोग अपनी अपनी बुद्धिको साधु कहते हैं, परन्तु जो कारण और समयके अनुरोधसे अनेक प्रकारकी बुद्धियोंमेंसे एक बुद्धिको स्थिर करता है, और जो दूसरोंकी सम्मति सुनकर प्रसन्न होता है, उसहीका कार्य सिद्ध होता है, मनुष्योंके चित्तकी वृत्ति अलग अलग होती है,इसी लिये समय समयपर व्याकुल होकर अनेक अनेक प्रकारकी बुद्धि उत्पन्न होती है। जो अपनी स्थिर करी हुई बुद्धिको छोड कर दूसरेकी सम्मतियोंको स्वीकार करता है। उसकी बुद्धि अनेक प्रकारकी बुद्धियोंसे नष्ट होजाती है, (३—८)

जैसे वैद्य अत्यन्त सावधान होकर चिकित्सा करता है, और रोगको शान्त

श्रमेण सुदृढं युक्ता विक्षता विविधैः शरैः ॥ ३० ॥
ततो निद्रावशं प्राप्तौ कृपभोजौ महारथौ।
सुखोचितावदुःखार्हौ निषण्णौ धरणीतले ॥ ३१ ॥
तौ तु सुप्तौ महाराज श्रमशोकसमन्वितौ।
महार्हशयनोपेतौ भूमावेव ह्यनाथवत् ॥ ३२ ॥
क्रोधामर्षवशं प्राप्तो द्रोणपुत्रस्तु भारत।
न वै स्म स जगामाथ निद्रां सर्प इव श्वसन् ॥ ३३ ॥
न लेभे स तु निद्रां वै दह्यमानो हि मन्युना।
वीक्षांचक्रे महाबाहुस्तद्वनं घोरदर्शनम् ॥ ३४ ॥
वीक्षमाणो वनोद्देशं नानासत्त्वैर्निषेवितम्।
अपश्यत महाबाहुर्न्यग्रोधं वायसैर्युतम् ॥ ३५ ॥
तत्र काकसहस्राणि तां निशां पर्यणामयन्।
सुखं स्वपंति कौरव्य पृथक् पृथगुपाश्रयाः ॥ ३६ ॥
सुप्तेषु तेषु काकेषु विश्रब्धेषु समंततः।
सोऽपश्यत्सहसा यान्तमुलूकं घोरदर्शनम् ॥ ३७ ॥
महास्वनं महाकायं हर्यक्षं बभ्रुपिंगलम्।
सुदीर्घघोणानखरं सुपर्णमिव वेगिनम् ॥ ३८ ॥
सोऽथ शब्दं मृदुं कृत्वा लीयमान इवांडजः।
न्यग्रोधस्य ततः शाखां प्रार्थयामास भारत ॥ ३९ ॥

व्याकुल होगये। ( २०-२९ )

उस समय तीनों परिश्रम, घाव और निद्रासे व्याकुल थे, इसलिये पृथ्वीमें लोट गये, तब सदासे सुख भोगनेवाले, दुःख भोगनेमें असमर्थ, शोकसे व्याकुल, उत्तम शय्यामें सोने योग्य, महारथ कृपाचार्य और कृतवर्मा, अनाथके समान पृथ्वीहीमें सोगये; परन्तु क्रोध भरे अश्वत्थामाको निद्रा न आई और सर्पके समान सांस लेते रहे। फिर बार बार क्रोधसे भरकर महाबाहु, अश्वत्थामा उस अनेक जन्तुओंसे भरे घोर वनको देखने लगे। फिर उस बरगदके ऊपर को देखा। ( ३०—३५ )

हे महाराज! उस बरगद पर सहस्रों कौवे निःसन्देह सो रहे थे उसी समय एक भयानक शब्दवाला बडे शरीर नखों और बड़ी नाकवाला और गरुडके समान वेगवाला उल्लू आया तब उसने चुप होकर उन सोते हुए कौओं-

प्रज्ञया हि स्वया युक्तास्तांश्च निन्दन्ति मानवाः ॥१०॥
अन्यया यौवने मर्त्यो बुद्ध्या भवति मोहितः।
मध्येऽन्यया जरायां तु सोऽन्यां रोचयते मतिम् ॥११॥
व्यसनं वा महाघोरं समृद्धिं चापि तादृशीम्।
अवाप्य पुरुषो भोज कुरुते बुद्धिवैकृतम् ॥ १२ ॥
एकस्मिन्नेव पुरुषे सा सा बुद्धिस्तदा तदा।
भवत्यकृतधर्मत्वात्सा तस्यैव न रोचते ॥ १३ ॥
निश्चित्य तु यथाप्रज्ञं यां मतिं साधु पश्यति।
तया प्रकुरुते भावं सा तस्योद्योगकारिका ॥ १४ ॥
सर्वो हि पुरुषो भोज साध्वेतदिति निश्चितः।
कर्तुमारभते प्रीतो मरणादिषु कर्मसु ॥ १५ ॥
सर्वे हि बुद्धिमाज्ञाय प्रज्ञां वापि स्वकां नराः।
चेष्टन्ते विविधां चेष्टां हितमित्येव जानते ॥ १६ ॥
उपजाता व्यसनजा येयमद्य मतिर्मम।
युवयोस्तां प्रवक्ष्यामि मम शोकविनाशिनीम् ॥ १७॥

---

करता है, ऐसे ही जो बुद्धिमान मनुष्य कार्योंको जानकर भी केवल अपनी बुद्धिसे कार्योंको करता है, उसकी लोग निन्दा करते हैं। युवा अवस्थामें मनुष्य दूसरी ही बुद्धिसे मोहित रहता है मध्य अवस्थामें कुछ और ही बुद्धि हो जाती है, और बुढापेमें कुछ और बुद्धि अच्छी लगा करती है. हे कृतवर्मन्! जब मनुष्यको घोर आपत्ति आकर पडती है. अथवा बहुत अधिक धन प्राप्त हो-जाता है. तब उसकी बुद्धि नष्ट होजा-ती है, परन्तु जब एक ही मनुष्यको अधर्म करनेके कारण अनेक प्रकारकी बुद्धि होती है, तब वह बुद्धि [illegible] अच्छी नहीं लगती. जो अपनी बुद्धिके अनुसार अत्यन्त निश्चय करके कार्यका उद्योग करता है. तब वही बुद्धि उसके उद्योगकी सहायता करती है। ( ९–१४ )

हे कृतवर्मन्! मनुष्य मरणपर्यन्त कामोंको भी अच्छा ही समझकर करता है. क्यों कि मनुष्य जिस कामको करता है उसमें अपनी समस्त बुद्धिको लगा देता है. और उस ही कर्मको अपना कल्याणदायक समझ लेता है। १५–१६

इस समय इस घोर आपत्तिमें पडनेके कारण जो बुद्धि मुझे उत्पन्न हुई है उससे मेरा शोक नष्ट होगया। अब तुम दो-नोंसे वही कहता हूं सुनो, [illegible]

प्रजापतिः प्रजाः सृष्ट्वा कर्म तासु विधाय च ।
वर्णे वर्णे समाधत्ते ह्येकैकं गुणभाग्गुणम् ॥ १८ ॥
ब्राह्मणे वेदमग्र्यं तु क्षत्रिये तेज उत्तमम् ।
दाक्ष्यं वैश्ये च शूद्रे च सर्ववर्णानुकूलताम् ॥ १९ ॥
अदान्तो ब्राह्मणोऽसाधुर्निस्तेजाः क्षत्रियोऽधमः ।
अदक्षो निंद्यते वैश्यः शूद्रश्च प्रतिकूलवान् ॥ २० ॥
सोऽस्मि जातः कुले श्रेष्ठे ब्राह्मणानां सुपूजिते ।
मन्दभाग्यतयाऽस्म्येतं क्षत्रधर्ममनुष्ठितः ॥ २१ ॥
क्षत्रधर्मं विदित्वाऽहं यदि ब्राह्मण्यमाश्रितः ।
प्रकुर्यां सुमहत्कर्म न मे तत्साधुसंमतम् ॥ २२ ॥
धारयंश्च धनुर्दिव्यं दिव्यान्यस्त्राणि चाहवे ।
पितरं निहतं दृष्ट्वा किं नु वक्ष्यामि संसदि ॥ २३ ॥
सोऽहमद्य यथाकामं क्षत्रधर्ममुपास्य तम् ।
गन्ताऽस्मि पदवीं राज्ञः पितुश्चापि महात्मनः ॥२४ ॥
अद्य स्वप्स्यन्ति पाञ्चाला विश्वस्ता जितकाशिनः ।
विमुक्तयुग्यकवचा हर्षेण च समन्विताः ॥ २५ ॥

सृष्टि बनाई थी तब ही उन्होंने सब वर्णोंके कर्म भी अलग अलग बना दिये थे; और सबमें एक एक गुण भी दे दिया था। ब्राह्मणोंको वेद पढना, क्षत्रियोंको तेज बढाना, वैश्योंको धन कमाना और शूद्रोंको सबकी सेवा करनी। जो ब्राह्मण इन्द्री न जीत सके, जो क्षत्री तेजस्वी न हो, जो वैश्य धन न बढा सके और जो शूद्र इनकी सेवा न करे, तो इन सबकी निन्दा करनी चाहिये। यदि आप मै जगत्पूरित ब्राह्मण वंशमें उत्पन्न हुआ हूं, परन्तु अभाग्य होनेके कारण क्षत्रिय धर्मको धारण कर रहा हूं, सो आपत्तिमें इस क्षत्रिय ध[illegible] धारण करके भी अब छोड दूं, ब्राह्मणोंका धर्म करने लगूं तो अ- नहीं, यह दिव्य धनुष और इन दि[illegible] बाणोंको धारण करके भी यदि [illegible] मारनेका बदला न लं, तो महात्माअ[illegible] बैठकर क्या कहूंगा ? ( १७-२३ )

अब मैं क्षत्रिय धर्मका आश्रय ले अपने पिता और महाराजके पास [illegible] में जाऊंगा, इस समय विजयी पाञ्चा[illegible] सेना थककर विजय पाकर कवच [illegible] लकर अत्यन्त विश्वासपूर्वक सो रही[illegible] सो अभी मैं डेरोंमें घुमकर भूतके समा

छद्मना च भवेत्सिद्धिः शत्रूणां च क्षयो महान् ।
ततः संशयिताद्र्थाद्योऽर्थो निःसंशयो भवेत् ॥ ४९ ॥
तं जना बहु मन्यंते ये च शास्त्रविशारदाः ।
यच्चाप्यत्र भवेद्वाक्यं गर्हितं लोकनिन्दितम् ॥ ५० ॥
कर्तव्यं तन्मनुष्येण क्षत्रधर्मेण वर्तता ।
निन्दितानि च सर्वाणि कुत्सितानि पदे पदे ॥ ५१ ॥
सोपधानि कृतान्येव पाण्डवैरकृतात्मभिः ।
अस्मिन्नर्थे पुरा गीताः श्रूयंते धर्मचिन्तकैः ॥ ५२ ॥
श्लोका न्यायमवेक्षद्भिस्तत्त्वार्थास्तत्त्वदर्शिभिः ।
परिश्रान्ते विदीर्णे वा भुञ्जाने वाऽपि शत्रुभिः ॥५३॥
प्रस्थाने वा प्रवेशे वा प्रहर्तव्यं रिपोर्बलम् ।
निद्रार्तमर्धरात्रे च तथा नष्टप्रणायकम् ॥ ५४ ॥
भिन्नयोधं बलं यच्च द्विधायुक्तं च यद्भवेत् ।
इत्येवं निश्चयं चक्रे सुप्तानां निशि मारणे ॥ ५५ ॥
पाण्डूनां सहपाञ्चालैर्द्रोणपुत्रः प्रतापवान् ।
स क्रूरां मतिमास्थाय विनिश्चित्य मुहुर्मुहुः ॥ ५६ ॥
सुप्तौ प्राबोधयत्तौ तु मातुलं भोजमेव च ।

मेरा काम सिद्ध हो सक्ता है, यद्यपि यह नियम है कि संशयवाले कामोंसे निःसन्देह काम करना अच्छा है, महात्माओंने यह भी कहा है, कि जगत्में नीच काम करनेसे निन्दा होती है, परन्तु क्षत्रियधर्म करनेवालेको चरण चरणपर निन्दित और दुष्ट कर्म करने होते हैं, पाण्डवोंने भी इस युद्धमें अनेक अधर्म करे है. महात्माओंने भी ऐसा कहा है कि चाहे शत्रु थका हो. चाहे भागता हो, चाहे भोजन करता हो. चाहे चला जाता हो. और चाहे बैठा हो. इसे प्रकार मारना चाहिये । जिस सेनाका स्वामी मर गया हो. जिसके दो टुकडे होगये हो, जो सेना सोती हो उसे आधी रातमें मारना चाहिये । यही तत्त्व जाननेवाले महात्माओंका सिद्धान्त है । ( ४९—५५ )

ऐसा विचारकर प्रतापवान् अश्वत्थामाने पाञ्चाल और पाण्डवोंके मारनेके लिये दुष्ट बुद्धि करी. फिर सोते हुए अपने मामा कृपाचार्य और कृतवर्माको जगाया. तब महाबलवान् कृपाचार्य और कृतवर्मा उठे और लज्जित होकर न

जयं मत्वाऽऽत्मनश्चैव श्रान्ता व्यायामकर्शिताः ।
तेषां निशि प्रसुप्तानां सुस्थानां शिबिरे स्वके ॥ २६ ॥
अवस्कन्दं करिष्यामि शिबिरस्याद्य दुष्करम् ।
तानवस्कन्द्य शिबिरे प्रेतभूतानचेतसः ॥ २७ ॥
सूदयिष्यामि विक्रम्य मघवानिव दानवान् ।
अद्य तान्सहितान्सर्वान् धृष्टद्युम्नपुरोगमान् ॥ २८ ॥
सूदयिष्यामि विक्रम्य कक्षं दीप्त इवानलः ।
निहत्य चैव पाञ्चालान् शान्तिं लब्धाऽस्मि सत्तम ॥ २९ ॥
पाञ्चालेषु भविष्यामि सूदयन्नद्य संयुगे ।
पिनाकपाणिः संक्रुद्धः स्वयं रुद्रः पशुष्विव ॥ ३० ॥
अद्याहं सर्वपाञ्चालान्निहत्य च निकृत्य च ।
अर्दयिष्यामि संहृष्टो रणे पाण्डुसुतांस्तथा ॥ ३१ ॥
अद्याहं सर्वपञ्चालैः कृत्वा भूमिं शरीरिणीम् ।
प्रहृत्यैकैकशस्तेषु भविष्याम्यनृणः पितुः ॥ ३२ ॥
दुर्योधनस्य कर्णस्य भीष्मसैन्धवयोरपि ।
गमयिष्यामि पाञ्चालान्पदवीमद्य दुर्गमाम् ॥ ३३ ॥
अद्य पाञ्चालराजस्य धृष्टद्युम्नस्य वै निशि ।
न चिरात्प्रमथिष्यामि पशोरिव शिरो बलात् ॥ ३४ ॥
अद्य पाञ्चालपाण्डूनां शयितानात्मजान्निशि ।

खड्गेन निशितेनाजौ प्रमथिष्यामि गौतम ॥ ३५ ॥
अद्य पाञ्चालसेनां तां निहत्य निशि सौप्तिके।
कृतकृत्यः सुखी चैव भविष्यामि महामते ॥ ३६ ॥[१४०]

इति श्रीमहाभारते शतसाहस्त्र्यां संहितायां वैयासिक्यां सौप्तिके पर्वणि द्रौणि-मंत्रणायाम् तृतीयोऽध्यायः॥ ३ ॥

कृप उवाच— दिष्ट्या ते प्रतिकर्तव्ये मतिर्जातेयमच्युत।
न त्वां वारयितुं शक्तो वज्रपाणिरपि स्वयम् ॥ १ ॥
अनुयास्यावहे त्वां तु प्रभाते सहितावुभौ।
अद्य रात्रौ विश्रमस्व विमुक्तकवचध्वजः ॥ २ ॥
अहं त्वामनुयास्यामि कृतवर्मा च सात्वतः।
परानभिमुखं यातं रथावास्थाय दंशितौ ॥ ३ ॥
आवाभ्यां सहितः शत्रून् श्वो निहन्ता समागमे।
विक्रम्य रथिनां श्रेष्ठ पाञ्चालान्सपदानुगान् ॥ ४ ॥
शक्तस्त्वमसि विक्रम्य विश्रमस्व निशामिमाम्।
चिरं ते जाग्रतस्तात स्वप तावन्निशामिमाम् ॥ ५ ॥
विश्रान्तश्च विनिद्रश्च स्वस्थचित्तश्च मानद।
समेत्य समरे शत्रून्वधिष्यसि न संशयः ॥ ६ ॥

ञ्चाल और पाण्डवोंके बालकोंके शिर मेरे तेज धारवाले खड्गसे कटेंगे। हे महाबुद्धिमन्? आज समस्त सोते हुए पाञ्चालोंको रातमें मारकर मैं सुखी और कृतकृत्य हूंगा। ( ३५—३६ )

सौप्तिकपर्वमें तीसरा अध्याय समाप्त।

सौप्तिकपर्वमें चौथा अध्याय।

कृपाचार्य बोले, हे वीर! आज प्रारब्धहीसे तुम्हें ऐसी बुद्धि उत्पन्न हुई। तुम्हें साक्षात् वज्रधारी इन्द्र भी युद्धमें नहीं रोक सक्ता, परन्तु हमारी बुद्धिमें यह आता है कि इस समय तुम कवच खोलकर, रथसे ध्वजा उतारकर सो रहो। प्रातःकाल होते ही हम कृतवर्मा तुम्हारे सङ्ग चलेंगे और सब शत्रुओंका नाश करेंगे। ( १—३ )

हे महारथ! तुम हमारी सहायतासे सेना सहित पाञ्चालराजको मारियो, तुम सब कुछ करनेमें समर्थ हो, परन्तु कई दिनसे जाग रहे हो, इसलिये इस समय सो रहो। जब तुम्हारा परिश्रम दूर हो-जायगा और सोनेके कारण चित्त सावधान हो जायगा। तब हम लोगोंकी सहायतासे तुम निःसन्देह शत्रुवोंका

शकुनिं तु ततः षष्ट्या विव्याध भरतर्षभ ।
सारथिं त्रिभिरानर्छत्तं च भूयो व्यविध्यत ॥ ५ ॥
उलूकस्तं तु विंशत्या विद्ध्वा स्वर्णविभूषितैः ।
अथास्य समरे क्रुद्धो ध्वजं चिच्छेद काञ्चनम् ॥ ६ ॥
स च्छिन्नयष्टिः सुमहाञ्शीर्यमाणो महाध्वजः ।
पपात प्रमुखे राजन्युयुत्सोः काञ्चनध्वजः ॥ ७ ॥
ध्वजमुन्मथितं दृष्ट्वा युयुत्सुः क्रोधमूर्च्छितः ।
उलूकं पञ्चभिर्बाणैराजघान स्तनान्तरे ॥ ८ ॥
उलूकस्तस्य समरे तैलधौतेन मारिष ।
शिरश्चिच्छेद भल्लेन यन्तुर्भरतसत्तम ॥ ९ ॥
तच्छिन्नमपतद्भूमौ युयुत्सोः सारथेस्तदा ।
तारारूपं यथा चित्रं निपपात महीतले ॥ १० ॥
जघान चतुरोऽश्वांश्च तं च विव्याध पञ्चभिः ।
सोऽतिविद्धो बलवता प्रत्यपायाद्रथान्तरम् ॥ ११ ॥
तं निर्जित्य रणे राजन्नुलूकस्त्वरितो ययौ ।
पञ्चालान्सृञ्जयांश्चैव विनिघ्नन्निशितैः शरैः ॥ १२ ॥
शतानीकं महाराज श्रुतकर्मा सुतस्तव ।

तब शकुनिपुत्र उलूकको साठ तथा सारथीको तीन बाणोंसे विद्ध किया ॥ उलूकने भी क्रोधसे युयुत्सुको सुवर्णभूषित बीस बाणोंसे विद्ध करके उनकी सोनेकी ध्वजा काट दी ॥ वह भग्नध्वजा युयुत्सुके आगे ही गिर पडी॥ (४–७)

अपनी ध्वजाको कटी देख युयुत्सुको महाक्रोध हुआ और पांच बाण उलूककी छातीमें मारे ॥ हे भरतकुल श्रेष्ठ ! उलूकने भी एक तेलमें भीगे बाणसे युयुत्सुके सारथीका सिर काट लिया ॥ उस समय युयुत्सुके सारथीका शिर आकाशसे गिरनेवाली उल्काके समान कटकर पृथ्वीमें गिर पडा ॥ (७—१०)

फिर उलूकने युयुत्सुके चार घोडोंको मारकर उनके शरीरमें भी पांच बाण मारे, बलवान् युयुत्सु बाणोंसे पीडित हो कर दूसरे रथपर चढ गये ॥ हे राजन् ! युयुत्सुको युद्धमें जीतकर उलूक अपने तेज बाणोंसे पाण्डवोंकी सेनाको मारते हुए सृंजय और पाञ्चालदेशके क्षत्रियोंसे लडनेको चले गये ॥ (११–१२)

हे राजन् ! उसी समय तुम्हारे पुत्र श्रुतकर्माने क्षणमात्रमें शतानीकके सारथी

व्यश्वसूतरथं चक्रे निमेषार्धादसम्भ्रमः ॥ १३ ॥
हताश्वे तु रथे तिष्ठञ्शतानीको महारथः।
गदां चिक्षेप संक्रुद्धस्तव पुत्रस्य मारिष ॥ १४ ॥
सा कृत्वा स्यन्दनं भस्म हयांश्चैव ससारथीन्।
पपात धरणीं तूर्णं दारयन्तीव भारत ॥ १५ ॥
तावुभौ विरथौ वीरौ कुरूणां कीर्तिवर्धनौ।
व्यपाक्रमेतां युद्धात्तु प्रेक्षमाणौ परस्परम् ॥ १६ ॥
पुत्रस्तु तव सम्भ्रान्तो विविंशो रथमारुहत्।
शतानीकोऽपि त्वरितः प्रतिविन्ध्यरथं गतः ॥ १७ ॥
सुतसोमं तु शकुनिर्विद्ध्वा तु निशितैः शरैः।
नाकम्पयत संक्रुद्धो वार्योघ इव पर्वतम् ॥ १८ ॥
सुतसोमस्तु तं दृष्ट्वा पितुरत्यन्तवैरिणम्।
शरैरनेकसाहस्रैश्छादयामास भारत ॥ १९ ॥
ताञ्शराञ्शकुनिस्तूर्णं चिच्छेदान्यैः पतत्रिभिः।
लघ्वस्त्रश्चित्रयोधी च जितकाशी च संयुगे ॥ २० ॥
निवार्य समरे चापि शरांस्तान्निशितैः शरैः।
आजघान सुसंक्रुद्धः सुतसोमं त्रिभिः शरैः ॥ २१ ॥
तस्याश्वान्केतनं सूतं तिलशो व्यधमच्छरैः।

और घोडोंको मार डाला॥ तब महारथ शतानीकने अश्वरहित रथमें बैठके एक भारी गदा तुम्हारे पुत्रपर चलाई॥ वह गदा श्रुतकर्माके घोडे, सारथी और रथका चूरा करके पृथ्वीमें गिर गई॥ (१३—१५)

तब वे दोनों कुरुवंशी वीर पृथ्वीमें खडे होकर एक दूसरेको देखते हुए युद्धमें निवृत्त हुए॥ तब तुम्हारे पुत्र श्रुतकर्मा घबराकर विविंशतिके रथपर चढ गये, इसी प्रकार शतानीक भी प्रतिविन्ध्यके रथपर जा चढे॥ (१६-१७)

शकुनिने श्रुतसोमके शरीरमें अनेक बाण मारे, परन्तु सुतसोम इस प्रकार युद्धमें खडे रहे जैसे वर्षामें पर्वत॥ हे भारत! सुतसोमने अपने पिताके महाशत्रुको आगे खडा देख सहस्रों बाण उसकी ओर चलाये॥ शस्त्रविद्याके जाननेवाले विजयी चित्रयोधी शकुनिने सुतसोमके सब बाणोंको अपने तीक्ष्ण बाणोंसे काट दिया,और क्रोध करके सुतसोमको तीन बाणोंसे विद्ध किया॥ (१८—२०)

न हि त्वां रथिनां श्रेष्ठं प्रगृहीतवरायुधम् ।
जेतुमुत्सहते शश्वदपि देवेषु वासवः ॥ ७ ॥
कृपेण सहितं यान्तं गुप्तं च कृतवर्मणा ।
को द्रौणिं युधि संरब्धं योधयेदपि देवराट् ॥ ८ ॥
ते वयं निशि विश्रान्ता विनिद्रा विगतज्वराः ।
प्रभातायां रजन्यां वै निहनिष्याम शात्रवान् ॥ ९ ॥
तव ह्यस्त्राणि दिव्यानि मम चैव न संशयः ।
सात्वतोऽपि महेष्वासो नित्यं युद्धेषु कोविदः ॥ १० ॥
ते वयं सहितास्तात सर्वान् शत्रून्समागतान् ।
प्रसह्य समरे हत्वा प्रीतिं प्राप्स्याम पुष्कलाम् ॥ ११ ॥
विश्रमस्व त्वमव्यग्रः स्वप चेमां निशां सुखम् ।
अहं च कृतवर्मा च त्वां प्रयान्तं नरोत्तमम् ॥ १२ ॥
अनुयास्याव सहितौ धन्विनौ परतापनौ ।
रथिनं त्वरया यान्तं रथमास्थाय दंशितौ ॥ १३ ॥
स गत्वा शिबिरं तेषां नाम विश्राव्य चाहवे ।
ततः कर्ताऽसि शत्रूणां युध्यतां कदनं महत् ॥ १४ ॥
कृत्वा च कदनं तेषां प्रभाते विमलेऽहनि ।
विहरस्व यथा शक्रः सूदयित्वा महासुरान् ॥ १५ ॥

---

नाश करोगे, जब तुम रथपर बैठकर धनुष धारण करोगे, तब साक्षात् इन्द्र भी तुमको नहीं जीत सकेंगे, जब कृपाचार्य और कृतवर्मा तुम्हारी रक्षा करेंगे, तब साक्षात् इन्द्रकी क्या शक्ती है, जो तुमसे युद्ध कर सके ? ( ४–८ )

इसलिये अब हम लोग रात्रिभर सोवें और प्रातःकाल होते ही घोर युद्ध करेंगे, और इनको मारेंगे, इसमें सन्देह नहीं तुम्हारे पास सब दिव्य बाण हैं, और कृतवर्मा भी महाधनुषधारी और सब प्रकारकी युद्धविद्या जाननेवाले हैं, सो हम तीनों मिलकर प्रातःकाल शत्रुओंसे युद्ध करेंगे, और युद्धमें शत्रुओंको मारकर अत्यन्त प्रसन्न होंगे। ( ९–११ )

अब तुम सावधान होके इस समय सो रहो, प्रातःकाल होतेही हम और कृतवर्मा दोनों धनुष धारण करके उत्तम रथोंपर चढकर तुम्हारे सङ्ग चलेंगे, और युद्ध करते हुए शत्रुओंको अपना नाम सुनाकर मारेंगे, फिर उनको निर्जन दि-नोंमें मारकर तुम इस प्रकार सुख कीजि-

तमन्वगात्कृपो राजन् कृतवर्मा च सात्वतः ॥ ३८ ॥
ते प्रयाता व्यरोचन्त परानभिमुखास्त्रयः ।
हूयमाना यथा यज्ञे समिद्धा हव्यवाहनाः ॥ ३९ ॥
ययुश्च शिबिरं तेषां संप्रसुप्तजनं विभो ।
द्वारदेशं तु संप्राप्य द्रौणिस्तस्थौ महारथः ॥ ४० ॥ [२१४]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां सौप्तिके पर्वणि द्रौणिगमने पञ्चमोऽध्यायः ॥ ५ ॥

धृतराष्ट्र उवाच– द्वारदेशे ततो द्रौणिमवस्थितमवेक्ष्य तौ ।
अकुर्वतां भोजकृपौ किं सञ्जय वदस्व मे ॥ १ ॥
सञ्जय उवाच— कृतवर्माणमामंत्र्य कृपं च स महारथः ।
द्रौणिर्मन्युपरीतात्मा शिबिरद्वारमागमत् ॥ २ ॥
तत्र भूतं महाकायं चन्द्रार्कसदृशद्युतिम् ।
सोऽपश्यद्द्वारमाश्रित्य तिष्ठन्तं लोमहर्षणम् ॥ ३ ॥
वसानं चर्म वैयाघ्रं महारुधिरविस्रवम् ।
कृष्णाजिनोत्तरासङ्गं नागयज्ञोपवीतिनम् ॥ ४ ॥
बाहुभिः स्वायतैः पीनैर्नानाप्रहरणोद्यतैः ।
बद्धाङ्गदमहासर्पं ज्वालामालाकुलाननम् ॥ ५ ॥
दंष्ट्राकरालवदनं व्यादितास्यं भयानकम् ।

---

रथ हांका और शत्रुओंकी ओरको चले। उनके सङ्ग कृपाचार्य और कृतवर्मा भी चले, उस समय इन तीनों वीरोंका ऐसा तेज दीखता था, जैसे यज्ञमें जलती हुई अग्नि। चलते चलते ये तीनों वीर पाण्डवोंकी सेनाके पास पहुंचे, और देखा तो वहां सब वीर सोते हैं तब महारथ अश्वत्थामा रथसे उतरे और द्वारपर गये। ( ३८—४० )[२१४]

सौप्तिकपर्वमें पांच अध्याय समाप्त।

सौप्तिक पर्वमें ६ अध्याय।

महाराज धृतराष्ट्र बोले, हे सञ्जय! अश्वत्थामाको डेरोंके द्वारपर खड़े देख कृपाचार्य और कृतवर्माने क्या किया सो हमसे कहो! ( १ )

सञ्जय बोले, अश्वत्थामाको द्वारपर खड़े देख दोनों वीरोंने मंत्र सम्मति करी, तब क्रोध भरे अश्वत्थामा थोड़ा और आगे बढ़े, तब उन्होंने द्वारपर चन्द्रमा और सूर्यके समान तेजस्वी बड़े शरीरवाले, बाघका चमड़ा ओढे, काले हरिनका चमड़ा बिछाए, जनेऊ पहिने, अनेक मोटे मोटे हाथोंमें शस्त्र लिये, बाहोंमें बाजूबन्द पहिने जलती हुई

त्वं हि शक्तो रणे जेतुं पाञ्चालानां वरूथिनीम्।
दैत्यसेनामिव क्रुद्धः सर्वदानवसूदनः ॥ १६ ॥
मया त्वां सहितं संख्ये गुप्तं च कृतवर्मणा।
न सहेत विभुः साक्षाद्वज्रपाणिरपि स्वयम् ॥ १७ ॥
न चाहं समरे तात कृतवर्मा न चैव हि।
अनिर्जित्य रणे पांडून्न च यास्यामि कर्हिचित् ॥ १८ ॥
हत्वा च समरे क्रुद्धान्पञ्चालान्पांडुभिः सह।
निवर्तिष्यामहे सर्वे हता वा स्वर्गगा वयम् ॥ १९ ॥
सर्वोपायैः सहायास्ते प्रभाते वयमाहवे।
सत्यमेतन्महाबाहो प्रब्रवीमि तवानघ ॥ २० ॥
एवमुक्तस्ततो द्रौणिर्मातुलेन हितं वचः।
अब्रवीन्मातुलं राजन् क्रोधसंरक्तलोचनः ॥ २१ ॥
आतुरस्य कुतो निद्रा नरस्यामर्षितस्य च।
अर्थांश्चिंतयतश्चापि कामयानस्य वा पुनः।
तदिदं समनुप्राप्तं पश्य मेऽद्य चतुष्टयम् ॥ २२ ॥
पश्य भागचतुर्थो मे स्वप्नमह्नाय नाशयेत्।
किं नाम दुःखं लोकेऽस्मिन्पितुर्वधमनुस्मरन् ॥ २३ ॥

ए जैसे दानवोंको मारकर इन्द्र; जैसे इन्द्र क्रोध करके दानवोंके मारनेमें समर्थ हैं, ऐसेही तुम सब पाञ्चालोंको मारनेको समर्थ हो, हे वीर ! जब हम और कृतवर्मा तुम्हारी युद्धमें रक्षा करेंगे, तब साक्षात् इन्द्र भी तुम्हें नहीं जीत सके, हम तुमसे सत्य कहते हैं कि हम और कृतवर्मा शत्रुवोंको विना जीते युद्धसे न हटेंगे, अवश्य ही पाञ्चाल और पाण्डवोंको मारेंगे, अथवा उनके हाथसे मरकर स्वर्गको जायगे। (१२—१९)

हे महाबाहो ! अधिक क्या कहें हम सब प्रकारसे प्रातःकाल तुम्हारी सहायता करेंगे। अपने मामाके ऐसे कल्याण भरे वचन सुन अश्वत्थामाके नेत्र क्रोधसे लाल होगए, और ऐसा वचन बोले, रोगी और क्रोधभरे मनुष्यको, अर्थ चिन्ता न करनेवालेको और कामीको निद्रा कहां ? आज हमको भी वही समय आगया है, अब इस युद्धमें केवल मेरा ही चौथा भाग शेष है, इसीसे मेरी निद्रा नष्ट होगई। (२०—२३)

हाय ! द्रोणाचार्य मारे गये, मैंने प्रसन्न पाञ्चालोंके ये शब्द अपने कानोंसे सुने

नयनानां सहस्रैश्च विचित्रैरभिभूषितम् ॥ ६ ॥
नैव तस्य वपुः शक्यं प्रवक्तुं वेष एव च ।
सर्वथा तु तदालक्ष्य स्फुटेयुरपि पर्वताः ॥ ७ ॥
तस्यास्य नासिकाभ्यां च श्रवणाभ्यां च सर्वशः ।
तेभ्यश्चाक्षिसहस्रेभ्यः प्रादुरासन्महार्चिषः ॥ ८ ॥
तथा तेजो मरीचिभ्यः शङ्खचक्रगदाधराः ।
प्रादुरासन् हृषीकेशाः शतशोऽथ सहस्रशः ॥ ९ ॥
तदत्यद्भुतमालोक्य भूतं लोकभयङ्करम् ।
द्रौणिरव्यथितो दिव्यैरस्त्रवर्षैरवाकिरत् ॥ १० ॥
द्रौणिमुक्ताञ्छरांस्तांस्तु तद्भूतं महदग्रसत ।
उदधेरिव वार्योघान्पावको वडवामुखः ॥ ११ ॥
अग्रसत्तांस्तथा भूतं द्रौणिना प्रहितान् शरान् ।
अश्वत्थामा तु संप्रेक्ष्य शरौघांस्तान्निरर्थकान् ॥ १२ ॥
रथशक्तिं मुमोचासौ दीप्तामग्निशिखामिव ।
सा तमाहत्य दीप्ताग्रा रथशक्तिरदीर्यत ॥ १३ ॥
युगांते सूर्यमाहत्य महोल्केव दिवश्च्युता ।

अग्निरूपी नेत्रयुक्त, भयानक, बडी बडी दाढवाला मुख फैलाए, सहस्रों नेत्र खोले एक भूतको देखा। हम उस भूतके शरीरका वर्णन नहीं कर सक्ते, उसको देखकर पर्वतभी फटते थे। ( २-७ )

अश्वत्थामाको देखते ही उस भूतके आंख, कान और नाकसे आगकी सहस्रों भयानक ज्वाला निकलने लगीं, और उन ज्वालावोंसे सहस्रों शङ्ख, चक्र गदाधारी विष्णु उत्पन्न होगये। उस भयङ्कर भूतको देखकर अश्वत्थामा कुछ न डरे, और सावधान होकर सहस्रों दिव्य बाण उसके ऊपर चलाने लगे। अश्वत्थामाके सब दिव्य बाण उसके शरीरमें जाकर गुप्त होगए। अश्वत्थामा उस अद्भुत कर्मको देखकर विचारने लगे। जैसे वडवाग्नि समुद्रके जलका नाश कर देती है, ऐसे ही मेरे बाण इस भूतके शरीरमें गुप्त और निरर्थक होगये। ( ८—११ )

अनन्तर अश्वत्थामाने जलती हुई अग्निके समान तेजभरी एक सांगी लेकर मारी, तब वह शक्ती उसके शरीरमें लगकर इस प्रकार टूट गई, जैसे प्रलयकालकी बिजली सूर्यमें लगनेसे। अनन्तर चमकते हुए आकाश के

हृदयं निर्दहन्मेऽद्य रात्र्यहानि न शाम्यति ।
यथा च निहतः पापैः पिता मम विशेषतः ॥ २४ ॥
प्रत्यक्षमपि ते सर्वं तन्मे मर्माणि कृन्तति ।
कथं हि मादृशो लोके मुहूर्त्तमपि जीवति ॥ २५ ॥
द्रोणो हतेति यद्वाचः पञ्चालानां शृणोम्यहम् ।
धृष्टद्युम्नमहत्वा तु नाहं जीवितुमुत्सहे ॥ २६ ॥
स मे पितुर्वधाद्वध्यः पाञ्चाला ये च संगताः ।
विलापो भग्नसक्थस्य यस्तु राज्ञो मया श्रुतः ॥ २७ ॥
स पुनर्हृदयं कस्य क्रूरस्यापि न निर्दहेत् ।
कस्य ह्यकरुणस्यापि नेत्राभ्यामश्रु नाव्रजेत् ॥ २८ ॥
नृपतेर्भग्नसक्थस्य श्रुत्वा तादृग्वचः पुनः ।
यश्चायं मित्रपक्षो मे मयि जीवति निर्जितः ॥ २९ ॥
शोकं मे वर्धयत्येष वारिवेग इवार्णवम् ।
एकाग्रमनसो मेऽद्य कुतो निद्रा कुतः सुखम् ॥ ३० ॥
वासुदेवार्जुनाभ्यां च तानहं परिरक्षितान् ।
अविषह्यतमान्मन्ये महेन्द्रेणापि सत्तम ॥ ३१ ॥
न चापि शक्ताः संयन्तुं कोपमेतं समुत्थितम् ।

---

इससे अधिक दुःख और जगत्में क्या होगा? आपके देखते देखते इन पापियोंने मेरे पिताको कैसे मारा? यह स्मरण करके मेरा हृदय रातदिन जला करता है, आपके देखते देखते हमारे पिताका जैसा निरादर हुआ, सो स्मरण करके मेरे शरीरके मर्मस्थान फटे जाते हैं, मुझ ऐसे मनुष्यको एक मुहूर्त्तभर भी जीना उचित नहीं। मैं बिना धृष्टद्युम्नके मारे जी नहीं सकता। (२३-२६)

इसने मेरे पिताको मारा है, इसलिये मैं भी इसे मारूंगा और इसके सहायियोंको भी मारूंगा देखो जङ्घा टूटे राजा हमारे आगे कैसे रोते थे, जगत्में ऐसा कौन कठोर होगा, कि राजाके वचन सुनकर, जिसका हृदय न जलने लगे? आंखोंमें आंसू न आजाय? मेरे जीते जी मित्रका नाश होगया, यह स्मरण करके मेरा शोक ऐसे बढता है, जैसे अधिक जल होनेसे समुद्रकी तरङ्ग। मेरा चित्त इस समय एकाग्र है, तब निद्रा और सुख कहां? (२८-३०)

इनकी कृष्ण और अर्जुन रक्षा करते हैं इसलिये इनके मारनेमें इन्द्र भी नहीं

अथ हेमत्सरुं दिव्यं खड्गमाकाशवर्चसम् ॥ १४ ॥
कोशात्समुद्बबर्हाशु बिलाद्दीप्तमिवोरगम् ।
ततः खड्गवरं धीमान् भूताय प्राहिणोत्तदा ॥ १५ ॥
स तदासाद्य भूतं वै बिलं नकुलवद्ययौ ।
ततः स कुपितो द्रौणिरिन्द्रकेतुनिभां गदाम् ॥ १६ ॥
ज्वलन्तीं प्राहिणोत्तस्मै भूतं तामपि चाग्रसत् ।
ततः सर्वायुधाभावे वीक्षमाणस्ततस्ततः ॥ १७ ॥
अपश्यत्कृतमाकाशमनाकाशं जनार्दनैः ।
तदद्भुततमं दृष्ट्वा द्रोणपुत्रो निरायुधः ॥ १८ ॥
अब्रवीदतिसन्तप्तः कृपवाक्यमनुस्मरन् ।
ब्रुवतामप्रियं पथ्यं सुहृदां न शृणोति यः ॥ १९ ॥
स शोचत्यापदं प्राप्य यथाऽहमतिवर्त्य तौ ।
शास्त्रदृष्टानविद्वान्यः समतीत्य जिघांसति ॥ २० ॥
स पथः प्रच्युतो धर्मात्कुपथे प्रतिहन्यते ।
गोब्राह्मणनृपस्त्रीषु सख्युर्मातुर्गुरोस्तथा ॥ २१ ॥
हीनप्राणजडान्धेषु सुप्तभीतोत्थितेषु च ।

तं न पश्यामि लोकेऽस्मिन्यो मां कोपान्निवर्त्तयेत् ॥३२॥
तथैव निश्चिता बुद्धिरेषा साधु मता मम।
वार्तिकैः कथ्यमानस्तु मित्राणां मे पराभवः ॥ ३३ ॥
पाण्डवानां च विजयो हृदयं दहतीव मे।
अहं तु कदनं कृत्वा शत्रूणामद्य सौप्तिके ॥
ततो विश्रमिता चैव स्वप्ता च विगतज्वरः ॥ ३४ ॥ [१७४]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां सौप्तिके पर्वणि द्रौणिमन्त्रणायां चतुर्थोऽध्यायः ॥४॥

कृप उवाच— शुश्रूषुरपि दुर्मेधाः पुरुषोऽनियतेन्द्रियः।
नालं वेदयितुं कृत्स्नौ धर्मार्थाविति मे मतिः ॥ १ ॥
तथैव तावन्मेधावी विनयं यो न शिक्षते।
न च किञ्चन जानाति सोऽपि धर्मार्थनिश्चयम् ॥ २ ॥
चिरं ह्यपि जडः शूरः पंडितं पर्युपास्य हि।
न स धर्मान्विजानाति दर्वी सूपरसानिव ॥ ३ ॥
मुहूर्त्तमपि तं प्राज्ञः पंडितं पर्युपास्य हि।
क्षिप्रं धर्मान्विजानाति जिह्वा सूपरसानिव ॥ ४ ॥
शुश्रूषुस्त्वेव मेधावी पुरुषो नियतेन्द्रियः।
जानीयादागमान्सर्वान् ग्राह्यं च न विरोधयेत् ॥ ५ ॥

जीत सक्ता, मैं इससे अपने क्रोधको रोक नहीं सकता और जगत्में किसीको ऐसा भी नहीं देखता जो इसे शान्त कर सके। मैंने उस समय मनुष्योंके मुखसे यह सुना है कि मेरे मित्र दुर्योधनका निरादर हुआ इसलिये मैंने आपसे जो कुछ कहा वही निश्चय है, पाण्डवोंकी विजय ही सुनकर मेरा हृदय जला जाता है, अब मैं शत्रुओंका नाश करके ही सावधान होकर सुखसे सोऊंगा। (३०-३४)

सौप्तिकपर्वमें चतुर्थ अध्याय समाप्त।

सौप्तिक पर्वमें पञ्चम अध्याय।

कृपाचार्य बोले, मूर्खको कितना ही समुझाओ तौ भी वह नहीं समझता, हमारी बुद्धिमें ऐसा आता है, कि जिस मनुष्यके वशमें इन्द्री नहीं होती, वह पूरी रीतिसे अर्थ और धर्मके जाननेमें समर्थ नहीं होता, इसी प्रकार महाबुद्धिमान भी नम्रताके मारे, दूसरे प्रकारकी शिक्षा ही नहीं सुनता। इसी लिये यह भी पूर्ण रीतिसे धर्म और अर्थके विषयोंको नहीं जान सक्ता। यदि मूर्ख वीर बहुत दिनतक भी पण्डितोंकी सेवा

मत्तोन्मत्तप्रमत्तेषु न शस्त्राणि च पातयेत् ॥ २२ ॥
इत्येवं गुरुभिः पूर्वमुपदिष्टं नृणां सदा।
सोऽहमुत्क्रम्य पन्थानं शास्त्रदृष्टं सनातनम् ॥ २३ ॥
अमार्गेणैवमारभ्य घोरामापदमागतः।
तां चापदं घोरतरां प्रवदन्ति मनीषिणः ॥ २४ ॥
यदुद्यम्य महत्कृत्यं भयादपि निवर्तते।
अशक्तश्चैव तत्कर्तुं कर्मशक्तिबलादिह ॥ २५ ॥
न हि दैवाद्गरीयो वै मानुषं कर्म कथ्यते।
मानुष्यं कुर्वतः कर्म यदि दैवान्न सिध्यति ॥ २६ ॥
स पथः प्रच्युतो धर्माद्विपदं प्रतिपद्यते।
प्रतिज्ञानं ह्यविज्ञानं प्रवदन्ति मनीषिणः ॥ २७ ॥
यदारभ्य क्रियां काञ्चिद्भयादिह निवर्त्तते।
तदिदं दुष्प्रणीतेन भयं मां समुपास्थितम् ॥ २८ ॥
न हि द्रोणसुतः संख्ये निवर्त्तेत कथञ्चन।
इदं च सुमहद्भूतं दैवदंडमिवोद्यतम् ॥ २९ ॥
न चैतदभिजानामि चिन्तयन्नपि सर्वथा।

डरे और सोकर उसी समय उठे तथा पागल, मतवाले और प्रमत्त मनुष्यपर शस्त्र न चलावे। परन्तु मैं सनातन शास्त्र में लिखे धर्मको छोडकर अधर्म करना चाहता था। इसी लिये इस घोर आपत्तिमें पडा। महात्मा उसे ही घोर आपत्ति कहते हैं, कि जो मनुष्य जिस कामको करना चाहे और भयसे उस कामको विना करे लौट आवे। जैसे असमर्थ कर्म नहीं कर सक्ता, वैसेही उद्योगी मनुष्य जब लौटता है, तब वह भी उसीके समान होजाता है। जगत्में प्रारब्धके आगे मनुष्यका कर्म नहीं चलता परन्तु यदि मनुष्य परिश्रम करके अपने कार्यको समाप्त न कर सके और धर्मसे भी नष्ट होजाय, तब आपत्तिमें अवश्य ही पडता है। (२१-२७)

पण्डित मनुष्यको उचित है, कि कामके आरम्भसे पहिले ही उसके बिगडने और सुधरनेके विषयोंको देख ले, नहीं तो पीछे मेरे समान दुःखमें पडकर भयसे कार्य छोडकर निवृत्त होना पडता है, मैंने विना विचारे यह काम किया था, जो हो द्रोणाचार्यका पुत्र युद्धसे नहीं लौटेगा, परन्तु यह भूत ... समान खडा है मैं अत्यन्त विचारने .

अनेयस्त्ववमानीयो दुरात्मा पापपूरुषः ।
दिष्टमुत्सृज्य कल्याणं करोति बहुपापकम् ॥ ६ ॥
नाथवन्तं तु सुहृदः प्रतिषेधन्ति पातकात् ।
निवर्त्तते तु लक्ष्मीवान्नालक्ष्मीवान्निवर्तते ॥ ७ ॥
यथा सुच्चावचैर्वाक्यैः क्षिप्तचित्तो नियम्यते ।
तथैव सुहृदा शक्यो न शक्यस्त्ववसीदति ॥ ८ ॥
तथैव सुहृदं प्राज्ञं कुर्वाणं कर्म पापकम् ।
प्राज्ञाः संप्रतिषेधन्ति यथाशक्ति पुनः पुनः ॥ ९ ॥
स कल्याणे मनः कृत्वा नियम्यात्मानमात्मना ।
कुरु मे वचनं तात येन पश्चान्न तप्स्यसे ॥ १० ॥
न वधः पूज्यते लोके सुप्तानामिह धर्मतः ।
तथैवापास्तशस्त्राणां विमुक्तरथवाजिनाम् ॥ ११ ॥
ये च ब्रूयुस्तवास्मीति ये च स्युः शरणागताः ।
विमुक्तमूर्धजा ये च ये चापि हतवाहनाः ॥ १२ ॥

---

चोर, तो भी धर्मको इस प्रकार नहीं जान सकता, जैसे करछी भोजनके रसको। और बुद्धिमान उन्हीं पंडितोंके पास क्षणमात्र बैठनेसे भी धर्मको इस प्रकार जान लेता है, जैसे जीभ अनेक रसोंको। जो धर्म सुननेकी इच्छावाला मनुष्य इन्द्रियोंको वशमें कर लेता है, वह कर पापसे बचते है, और पापी नहीं। जैसे मित्र अनेक प्रकारके वचन कहकर पागलको समझाते है। ऐसे ही साधारण मनुष्यको भी समयपर समझाना चाहिये। जब देखे कि हमारा कोई बुद्धिमान मित्र पाप करता है, तब पहिले उसको उचित है, कि अपनी शक्तिभर

ध्रुवं येयमधर्मे मे प्रवृत्ता कलुषा मतिः ॥ ३० ॥
तस्याः फलमिदं घोरं प्रतिघाताय कल्पते ।
तदिदं दैवविहितं मम संख्ये निवर्त्तनम् ॥ ३१ ॥
नान्यत्र दैवादुद्यंतमिह शक्यं कथञ्चन ।
सोऽहमद्य महादेवं प्रपद्ये शरणं विभुम् ॥ ३२ ॥
दैवदंडमिमं घोरं स हि मे नाशयिष्यति ।
कपर्दिनं देवदेवमुमापतिमनामयम् ॥ ३३ ॥
कपालमालिनं रुद्रं भगनेत्रहरं हरम् ।
स हि देवोऽत्यगाद्देवांस्तपसा विक्रमेण च ।
तस्माच्छरणमभ्येमि गिरिशं शूलपाणिनम् ॥ ३४ ॥ [२४८]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां सौप्तिके पर्वणि
द्रौणिचिन्तायां षष्ठोऽध्यायः ॥ ६ ॥

सञ्जय उवाच — एवं सञ्चिन्तयित्वा तु द्रोणपुत्रो विशाम्पते ।
अवतीर्य रथोपस्थाद्देवेशं प्रणतः स्थितः ॥ १ ॥
द्रौणि उवाच — उग्रं स्थाणुं शिवं रुद्रं शर्वमीशानमीश्वरम् ।
गिरिशं वरदं देवं भवभावनमीश्वरम् ॥ २ ॥
शितिकण्ठमजं शुक्रं दक्षक्रतुहरं हरम् ।

अद्य स्वप्स्यन्ति पञ्चाला विमुक्तकवचा विभो।
विश्वस्ता रजनीं सर्वे प्रेता इव विचेतसः ॥ १३ ॥
यस्तेषां तदवस्थानां द्रुह्येत पुरुषोऽनृजुः।
व्यक्तं स नरके मज्जेदगाधे विपुलेऽप्लवे ॥ १४ ॥
सर्वास्त्रविदुषां लोके श्रेष्ठस्त्वमसि विश्रुतः।
न च ते जातु लोकेऽस्मिन्सुसूक्ष्ममपि किल्बिषम् ॥१५॥
त्वं पुनः सूर्यसङ्काशः श्वोभूत उदिते रवौ।
प्रकाशे सर्वभूतानां विजेता युधि शात्रवान् ॥ १६ ॥
असम्भावितरूपं हि त्वयि कर्म विगर्हितम्।
शुक्ले रक्तमिव न्यस्तं भवेदिति मतिर्मम ॥ १७ ॥
अश्वत्थामोवाच—एवमेव यथाऽऽत्थ त्वं मातुलेह न संशयः।
तैस्तु पूर्वमयं सेतुः शतधा विदलीकृतः ॥ १८ ॥
प्रत्यक्षं भूमिपालानां भवतां चापि सन्निधौ।
न्यस्तशस्त्रो मम पिता धृष्टद्युम्नेन पातितः ॥ १९ ॥
कर्णश्च पतिते चक्रे रथस्य रथिनां वरः।
उत्तमे व्यसने मग्नो हतो गाण्डीवधन्वना ॥ २० ॥

---

ऐसे मनुष्योंको मारना धर्म नहीं। इस समय सब पाञ्चाल विश्वास सहित कवच खोलकर प्रेतके समान अचेत सो रहे हैं, जो पापी मूर्ख इस समय उनसे द्रोह करेगा वह अवश्य ही अपार घोर नरकमें जायगा। (७-१४)

हमारी यह इच्छा है कि तुम सब शस्त्र जाननेवाले और प्रसिद्ध वीर हो, तुम्हे जगतमें थोडा भी कलङ्क न लगने पावे। प्रातःकाल होते ही तुम सूर्य के समान तेज धारण करके सब शत्रुओंको जीतियो, यदि तुम सेते पाञ्चालोंको मारोगे तो तुम्हारे जीवनमें ऐसा कलङ्क लग जायगा, जैसे सफेद वस्त्रमें लाल रङ्गका धब्बा। (१५—१७)

अश्वत्थामा बोले, हे मामा! आपने जो कहा वह सब वैसे ही है, इसमें कुछ सन्देह नहीं, परन्तु पाण्डवोंहीने पहिले इस धर्मरूपी पुलको काटकर सैकडों टुकडे कर दिये हैं, अनेक राजा और आपके देखते देखते शस्त्ररहित हमारे पिताको धृष्टद्युम्नने मार डाला। जिस समय महारथ कर्णका पहिया पृथ्वीमें घुस गया था और वे उसके निकालनेमें महापरिश्रम कर रहे थे उसी समय अर्जुनने उन्हें मारडाला, शिखण्डीको आगे

विश्वरूपं विरूपाक्षं बहुरूपमुमापतिम् ॥ ३ ॥
श्मशानवासिनं दृप्तं महागणपतिं विभुम्।
खट्वाङ्गधारिणं रुद्रं जटिलं ब्रह्मचारिणम् ॥ ४ ॥
मनसा सुविशुद्धेन दुष्करेणाल्पचेतसा।
सोऽहमात्मोपहारेण यक्ष्ये त्रिपुरघातिनम् ॥ ५ ॥
स्तुतं स्तुत्यं स्तूयमानममोघं कृत्तिवाससम्।
विलोहितं नीलकण्ठमसह्यं दुर्निवारणम् ॥ ६ ॥
शक्रं ब्रह्मसृजं ब्रह्म ब्रह्मचारिणमेव च।
व्रतवन्तं तपोनिष्ठमनन्तं तपतां गतिम् ॥ ७ ॥
बहुरूपं गणाध्यक्षं त्र्यक्षं पारिषदप्रियम्।
धनाध्यक्षं क्षितिमुखं गौरीहृदयवल्लभम् ॥ ८ ॥
कुमारपितरं पिङ्गं गोवृषोत्तमवाहनम्।
तनुवाससमत्युग्रमुमाभूषणतत्परम् ॥ ९ ॥
परं परेभ्यः परमं परं यस्मान्न विद्यते।
इष्वस्त्रोत्तमभर्त्तारं दिगन्तं देशरक्षिणम् ॥ १० ॥
हिरण्यकवचं देवं चंद्रमौलिविभूषणम्।
प्रपद्ये शरणं देवं परमेण समाधिना ॥ ११ ॥

---

देनेवाले, विहार और प्रकाश करनेवाले, जगत्पावन ईश्वर, नीलकण्ठ, सनातन, व्यापक, दक्षयज्ञविनाशक, भक्तदुःखनाशक, जगद्रूप, विरूपाक्ष, अनेक रूपधारी, पार्वतीपति, स्मशानवासी, महाबलवान गणोंके स्वामी, सर्व व्यापक, नरपञ्जरधारी, रुद्र, जटाधारी, ब्रह्मचारी, त्रिपुरासुरनाशक, स्तुतिकरने योग्य, स्तुति किये हुये देवतोंमें स्तुतियोग्य, अनन्त, कृत्तिवासा, विलोहित, नीलकण्ठ, न सहनेयोग्य, दुःख निवारण करने योग्य, इन्द्र, ब्रह्माको बनानेवाले, ब्रह्म, ब्रह्मचारी, व्रतधारी, तपस्वी, अपार, तपस्वियोंको फल देनेवाले, अनेक रूपधारी, त्रिनेत्रगणोंके प्यारे, धनके स्वामी जगतके मुख, पार्वतीके हृदयके प्यारे, कार्त्तिकेयके पिता, उत्तम बैलपर चढनेवाले, सूक्ष्म वस्त्रधारी, पार्वतीको भूषण पहिरानेवाले, उत्तमसे उत्तम, अत्यन्त उत्तम, सबसे उत्तम, उत्तम शस्त्रधारी, सब जगतके स्वामी, सब दिशा और देशोंके रक्षक, सुवर्ण कवचधारी, और चन्द्रमाको माथेमें धारण करनेवाले भगवान शिवको मैं अत्यन्त श्रद्धापूर्वक

तथा शांतनवो भीष्मो न्यस्तशस्त्रो निरायुधः ।
शिखण्डिनं पुरस्कृत्य हतो गाण्डीवधन्वना ॥ २१ ॥
भूरिश्रवा महेष्वासस्तथाप्रायगतो रणे ।
क्रोशतां भूमिपालानां युयुधानेन पातितः ॥ २२ ॥
दुर्योधनश्च भीमेन समेत्य गदया रणे ।
पश्यतां भूमिपालानामधर्मेण निपातितः ॥ २३ ॥
एकाकी बहुभिस्तत्र परिवार्य महारथैः ।
अधर्मेण नरव्याघ्रो भीमसेनेन पातितः ॥ २४ ॥
विलापो भग्नसक्थस्य यो मे राज्ञः परिश्रुतः ।
वार्तिकाणां कथयतां स मे मर्माणि कृन्तति ॥ २५ ॥
एवं चाधार्मिकाः पापाः पाञ्चाला भिन्नसेतवः ।
तानेवं भिन्नमर्यादान्किं भवान्न विगर्हति ॥ २६ ॥
पितृहन्तॄनहं हत्वा पाञ्चालान्निशि सौप्तिके ।
कामं कीटः पतङ्गो वा जन्म प्राप्य भवामि वै ॥ २७ ॥
त्वरे चाहमनेनाद्य यदिदं मे चिकीर्षितम् ।
तस्य मे त्वरमाणस्य कुतो निद्रा कुतः सुखम् ॥ २८ ॥
न स जातः पुमाँल्लोके कश्चिन्न स भविष्यति ।
यो मे व्यावर्तयेदेतां वधे तेषां कृतां मतिम् ॥ २९ ॥

सञ्जय उवाच — एवमुक्त्वा महाराज द्रोणपुत्रः प्रतापवान् ।

इमां चेदापदं घोरां तराम्यद्य सुदुष्कराम् ।
सर्वभूतोपहारेण यक्ष्येऽहं शुचिना शुचिम् ॥ १२ ॥
इति तस्य व्यवसितं ज्ञात्वा योगात्सुकर्मणः ।
पुरस्तात्काञ्चनी वेदी प्रादुरासीन्महात्मनः ॥ १३ ॥
तस्यां वेद्यां तदा राजंश्चित्रभानुरजायत ।
स दिशो विदिशः खं च ज्वालाभिरिव पूरयन् ॥ १४ ॥
दीप्तास्यनयनाश्चात्र नैकपादशिरोभुजाः ।
रत्नचित्राङ्गदधराः समुद्यतकरास्तथा ॥ १५ ॥
द्वीपशैलप्रतीकाशाः प्रादुरासन्महागणाः ।
श्ववराहोष्ट्ररूपाश्च हयगोमायुगोमुखाः ॥ १६ ॥
ऋक्षमार्जारवदना व्याघ्रद्वीपिमुखास्तथा ।
काकवक्त्राः प्लवमुखाः शुकवक्त्रास्तथैव च ॥ १७ ॥
महाजगरवक्त्राश्च हंसवक्त्राः सितप्रभाः ।
दार्वाघाटमुखाश्चापि चाषवक्त्राश्च भारत ॥ १८ ॥
कूर्मनक्रमुखाश्चैव शिशुमारमुखास्तथा ।
महामकरवक्त्राश्च तिमिवक्त्रास्तथैव च ॥ १९ ॥
हरिवक्त्राः क्रौञ्चमुखाः कपोतेभमुखास्तथा ।

एकान्ते योजयित्वाश्वान्प्रायादभिमुखः परान्॥ ३० ॥
तमब्रूतां महात्मानौ भोजशारद्वतावुभौ ।
किमर्थं स्यन्दनो युक्तः किं च कार्यं चिकीर्षितम्॥३१॥
एकसार्थप्रयातौस्वस्त्वया सह नरर्षभ ।
समदुःखसुखौ चापि नावां शङ्कितुमर्हसि ॥ ३२ ॥
अश्वत्थामा तु संक्रुद्धः पितुर्वधमनुस्मरन् ।
ताभ्यां तथ्यं तथाऽऽचख्यौ यदस्यात्मचिकीर्षितम्॥३३॥
हत्वा शतसहस्राणि योधानां निशितैः शरैः ।
न्यस्तशस्त्रो मम पिता धृष्टद्युम्नेन पातितः ॥ ३४ ॥
तं तथैव हनिष्यामि न्यस्तधर्माणमद्य वै ।
पुत्रं पाञ्चालराजस्य पापं पापेन कर्मणा ॥ ३५ ॥
कथं च निहतः पापः पाञ्चाल्यः पशुवन्मया ।
शस्त्रेण विजिताँल्लोकान्नाप्नुयादिति मे मतिः ॥ ३६ ॥
क्षिप्रं सन्नद्धकवचौ सखड्गावात्तकार्मुकौ ।
मामास्थाय प्रतीक्षेतां रथवर्यौ परन्तपौ ॥ ३७ ॥
इत्युक्त्वा रथमास्थाय प्रायादभिमुखः परान् ।

अश्वत्थामा उठे और अपने रथमें घोडे जोडकर एकलेही शत्रुवोंकी ओर चल दिये, तब महात्मा कृपाचार्य और कृतवर्मा बोले, हे पुरुषसिंह ! आपने अपने रथमें घोडे क्यों जोडे ? आपके चित्तमें क्या आया है ? हम लोग प्रातःकाल होते ही आपके सङ्ग युद्ध करनेको चलेंगे, और आपके समान ही सुखदुःख भोगेंगे, परन्तु इस समय आप कहां जाते सो कहिये ? (३०-३२)

उनके वचन सुन क्रोध भरे अश्वत्थामा अपने पिताके मरनेका स्मरण करके अपनी इच्छा प्रकाशित करने लगे। आप लोग जानते हैं, कि हमारे पिताने अपने तेज बाणोंसे लक्षों वीरोंको मारा था, और पीछे शस्त्र त्यागनेपर धृष्टद्युम्नने उन्हें मार डाला, अब मैं भी उस पापी, अधर्मी, शस्त्ररहित, धृष्टद्युम्नको वैसे ही पाप कर्मसे मारूंगा, मैं उस पापीको विना शस्त्र ही पशुके समान मारूंगा, जिसमे उसे स्वर्ग न हो। आप दोनों महारथ शीघ्र कवच पहिनकर खड्ग और धनुष धारण करके यहीं खडे खडे हमारे लौटनेका मार्ग देखो। (३३—३७)

ऐसा कहकर अश्वत्थामाने अपना

पारावतमुखाश्चैव मद्गुवक्त्रास्तथैव च ॥ २० ॥
पाणिकर्णाः सहस्राक्षास्तथैव च महोदराः।
निर्मांसाः काकवक्त्राश्च श्येनवक्त्राश्च भारत ॥२१ ॥
तथैवाशिरसो राजन् ऋक्षवक्त्राश्च भारत।
प्रदीप्तनेत्रजिह्वाश्च ज्वालावर्णास्तथैव च ॥ २२ ॥
ज्वालाकेशाश्च राजेन्द्र ज्वलद्रोमचतुर्भुजाः।
मेषवक्त्रास्तथैवान्ये तथा छागमुखा नृप ॥ २३ ॥
शङ्खाभाः शङ्खवक्त्राश्च शङ्खवर्णास्तथैव च।
शङ्खमालापरिकराः शङ्खध्वनिसमस्वनाः ॥ २४ ॥
जटाधराः पञ्चशिखास्तथा मुण्डाः कृशोदराः।
चतुर्दंष्ट्राश्चतुर्जिह्वाः शंकुकर्णाः किरीटिनः ॥ २५ ॥
मौञ्जीधराश्च राजेन्द्र तथाऽऽकुञ्चितमूर्धजाः।
उष्णीषिणो मुकुटिनश्चारुवक्त्राः स्वलंकृताः ॥२६ ॥
पद्मोत्पलापीडधरास्तथा मुकुटधारिणः।

मगर, मछली, कछवे, कबूतर, परेवा, मजुनामक मछलीके समान मुख था। (१६—२०)

किसीके हाथमें कान था, किसीके हजारों नेत्र थे, किसीके बडाभारी पेट था, किसीके शरीरमें मांसही नहीं था, किसीके कौवेका, किसीका गृद्धका मुख था, किसीके शिर ही नहीं था, किसीके रीछका ऐसा मुख था, किसीके नेत्र अग्निके समान थे, किसीकी बडी भारी जिह्वा थी, किसीका अग्निके समान रङ्ग था, किसीके नेत्र और बाल अग्निके समान थे, सबके चार चार हाथ थे, किसीका बकरेके समान मुख था, किसीका मेढेके समान मुख था, किसीका मुख शङ्खके समान था, किसीका शरीर शङ्खके समान था, कोई शङ्खकी माला पहिरे था, कोई शङ्ख बजा रहा था, और कोई खड्ग हाथमें लिये था, किसीके जटा थी, किसीके पांच शिखा थीं। कोई शिर मुडाये था, किसीका पतला पेट था, किसीके चार दांत थे, किसीके चार जीभ थीं, किसीके कान छोटे छोटे थे, कोई मूंजकी करधनी पहिरे था, और कोई पगडी बांधे था। (२१–२६)

किसीका बडा सुन्दर मुख था, और कोई सुन्दर आभूषण पहिरे था, किसीके गलेमें कमलकी माला और किसीके गलेमें नीले कमलकी माला थी, कोई मुकुट धारण किये थे, कोई उत्तम महा-

माहात्म्येन च संयुक्ताः शतशोऽथ सहस्रशः॥ २७ ॥
शतघ्नीवज्रहस्ताश्च तथा मुसलपाणयः ।
भुशुण्डीपाशहस्ताश्च दण्डहस्ताश्च भारत ॥ २८ ॥
पृष्ठेषु बद्धेषुधयश्चित्रबाणोत्कटास्तथा ।
सध्वजाः सपताकाश्च सघण्टाः सपरश्वधाः ॥ २९ ॥
महापाशोद्यतकरास्तथा लगुडपाणयः ।
स्थूणाहस्ताः खड्गहस्ताः सर्पोच्छ्रितकिरीटिनः॥ ३० ॥
महासर्पाङ्गदधराश्चित्राभरणधारिणः ।
रजोध्वजाः पङ्कदिग्धा सर्वे शुक्लाम्बरस्रजः ॥ ३१ ॥
नीलाङ्गाः पिङ्गलाङ्गाश्च मुण्डवक्त्रास्तथैव च ।
भेरीशङ्खमृदङ्गांश्च झर्झरानकगोमुखान् ॥ ३२ ॥
अवादयन्पारिषदाः प्रहृष्टाः कनकप्रभाः ।
गायमानास्तथैवान्ये नृत्यमानास्तथाऽपरे ॥ ३३ ॥
लङ्घयन्तः प्लवन्तश्च वल्गन्तश्च महारथाः ।
धावन्तो जवना मुण्डाः पवनोद्धतमूर्धजाः ॥ ३४ ॥
मत्ता इव महानागा विनदन्तो मुहुर्मुहुः ।
सुभीमा घोररूपाश्च शूलपट्टिशपाणयः ॥ ३५ ॥
नानाविरागवसनाश्चित्रमाल्यानुलेपनाः ।

---

तपसे भरे थे, ऐसे सहस्रों गण अश्व-त्थामाको दिखाई दिये, किसीके हाथमें शतघ्नी, किसीके हाथमें लाठी, किसीके हाथमें डण्डा, किसीके हाथमें भुशुण्डी, किसीके हाथमें परिघ, किसीके हातमें बाण, किसीके घण्टा, किसीके परश्वध, किसीके [illegible] और किसीके सांप था, हाथमें सबके पास ध्वजा और पताका थी, कोई सांपका बाजूबन्द पहिरे था, और कोई उत्तम विचित्र आभूषण पहिरे था। किसीके शरीरमें धूलि लगी थी, सब धूल और मिट्टीसे भरे सफेद वस्त्र और माला पहिने नीले और पीले वस्त्रवाले थे. कोई मृदङ्ग, कोई घण्टा, कोई गो-मुख बजाते थे. कोई सोनेके समान रङ्ग वाला गण नाचता था, कोई कूदता था, कोई उछलता था. कोई गाता था, कोई वेगसे दौडता था. किसीके बाल [illegible] थे, कोई मतवाले हाथीके समान गर्जकर इधर उधर घूमते थे, कोई शूल और पट्टिश हाथमें लेकर भयानक रूप धारण करके दौडते थे.

रत्नचित्राङ्गदधराः समुद्यतकरास्तथा ॥ ३६ ॥
हन्तारो द्विषतां शूराः प्रसह्यासह्यविक्रमाः ।
पातारोऽसृग्वसौघानां मांसांत्रकृतभोजनाः ॥ ३७ ॥
चूडालाः कर्णिकाराश्च प्रहृष्टाः पिठरोदराः ।
अतिह्रस्वातिदीर्घाश्च प्रलम्बाश्चातिभैरवाः ॥ ३८ ॥
विकटाः काललम्बोष्ठा बृहच्छेफाण्डपिण्डिकाः ।
महार्हनानाविकटा मुण्डाश्च जटिलाः परे ॥ ३९ ॥
सार्केन्दुग्रहनक्षत्रां द्यां कुर्युस्ते महीतले ।
उत्सहेरंश्च ये हन्तुं भूतग्रामं चतुर्विधम् ॥ ४० ॥
ये च वीतभया नित्यं हरस्य भ्रुकुटीसहाः ।
कामकारकरा नित्यं त्रैलोक्यस्येश्वरेश्वराः ॥ ४१ ॥
नित्यानन्दप्रमुदिता वागीशा वीतमत्सराः ।
प्राप्याष्टगुणमैश्वर्यं येन यास्यन्ति वै स्मयम् ॥ ४२ ॥
येषां विस्मयते नित्यं भगवान्कर्मभिर्हरः ।
मनोवाक्कर्मभिर्युक्तैर्नित्यमाराधितश्च यैः ॥ ४३ ॥
मनोवाक्कर्मभिर्भक्तान्पाति पुत्रानिवौरसान् ।
पिबन्तोऽसृग्वसाश्चान्ये क्रुद्धा ब्रह्मद्विषां सदा ॥ ४४॥

कोई अनेक प्रकारके रङ्गे वस्त्र, अनेक प्रकारकी माला, कोई अनेक प्रकारकी गन्धि और रत्नोंके आभूषण किये था, वे सब शत्रुनाशन महापराक्रमी भक्तोंकी रक्षा करनेवाले और मांस तथा आन्तका भोजन करनेवाले थे, कोई चुडेल, कोई कर्णिकार और पिटरोदर नामक भूत थे, किसीके बडे बडे लिङ्ग थे और किसीके बडे बडे अण्डकोश थे, किसीके बडे बडे दांत और किसीकी भयानक जटा थीं. उस समय इन्होंने नक्षत्र तारा, ग्रह, सूर्य, चन्द्रमाके समान पृथ्वी कर दई। ( २८–३९ )

येही सब गण चारों प्रकारके जगत्का नाश कर सकते हैं, इन्हें कहीं भय नहीं होता, यही शिवकी भौंहको देख सकते हैं। येही जगत्के स्वामी और सब काम करनेमें समर्थ हैं, सब विद्याओंको जाननेवाले हैं, किसीका द्वेष नहीं करते। आठों प्रकारकी ऋद्धी प्राप्त होने पर भी अभिमान नहीं करते, इनका कर्म देखकर शिव भी आश्चर्य करते हैं, यह भी शिवकी सदा आराधना करते हैं, ब्राह्मणोंके वैरियोंका रुधिर पीते हैं।

स्यालस्तव महाराज तत उच्चुक्रुशुर्जनाः ॥ २२ ॥
हताश्वो विरथश्चैव च्छिन्नकेतुश्च मारिष ।
धन्वी धनुर्वरं गृह्य रथाद्भूमावतिष्ठत ॥ २३ ॥
व्यसृजत्सायकांश्चैव स्वर्णपुङ्खाञ्शिलाशितान् ।
छादयामास समरे तव स्यालस्य तं रथम् ॥ २४ ॥
शलभानामिव व्राताञ्शरव्रातान्महारथः ।
रथोपगान्समीक्ष्यैवं विव्यथे नैव सौबलः ॥ २५ ॥
प्रममाथ शरांस्तस्य शरव्रातैर्महायशाः ।
तत्रातुष्यन्त योधाश्च सिद्धाश्चापि दिवि स्थिताः ॥२६॥
सुतसोमस्य तत्कर्म दृष्ट्वाश्रद्धेयमद्भुतम् ।
रथस्थं शकुनिं यस्तु पदातिः समयोधयत् ॥ २७ ॥
तस्य तीक्ष्णैर्महावेगैर्भल्लैः सन्नतपर्वभिः ।
व्यहनत्कार्मुकं राजन्तूणीरांश्चैव सर्वशः ॥ २८ ॥
स च्छिन्नधन्वा विरथः खङ्गमुद्यम्य चानदत् ।
वैदूर्योत्पलवर्णाभं दन्तिदन्तमयत्सरुम् ॥ २९ ॥
भ्राम्यमाणं ततस्तं तु विमलाम्बरवर्चसम् ।

हे महाराज ! अनन्तर तुम्हारे साले शकुनिने सुतसोमके घोडे सारथी और रथको काट डाला, तब सब हाहाकार करने लगे ॥ परन्तु महावीर सुतसोम रथ, सारथी और ध्वजा कटनेपर भी धनुष लेकर पृथ्वीपर खडा होगया ॥ श्रुतसोमने पृथ्वीपर खडे होकर तुम्हारे सालेके रथको सुवर्णपङ्खवाले बाणोंसे छा दिया ॥ (२२-२४)

टीडीदलके समान सुतसोमके बाणोंको देखकर भी सुबलपुत्र शकुनि कुछ न डरे और अपने बाणोंसे सुतसोमके सब बाणोंको काट डाला । तब सब योद्धा और आकाशमें खडे सिद्ध बहुत प्रसन्न हुए, नीचे खडे हुए सुतसोम रथमें बैठे हुए शकुनिसे युद्ध करते थे, यह देख सब योद्धा और सिद्धोंने उसकी बडी प्रशंसा की ॥ (२५-२७)

तब शकुनीने अपने तेज बाणोंसे उनके धनुष, रांदे, सब तूणीरोंको काट दिया । खड्ग और रथहीन सुतसोम लहसुनिया और पद्मके समान सुन्दर और हाथीदांतकी मूठवाले खड्गको लेकर गर्जने लगे । उस निर्मल आकाशके समान खड्गको लेकर सुतसोम घुमाने लगे, उस समय उस खड्गका तेज

कालदण्डोपमं मेने सुतसोमस्य धीमतः ॥ ३० ॥
सोऽचरत्सहसा खड्गी मण्डलानि सहस्रशः।
चतुर्दश महाराज शिक्षाबलसमन्वितः ॥ ३१ ॥
भ्रान्तमुद्भ्रान्तमाविद्धमाप्लुतं विप्लुतं सृतम्।
सम्पातसमुदीर्णे च दर्शयामास संयुगे ॥ ३२ ॥
सौबलस्तु ततस्तस्य शरांश्चिक्षेप वीर्यवान्।
तानापतत एवाशु चिच्छेद परमासिना ॥ ३३ ॥
ततः क्रुद्धो महाराज सौबलः परवीरहा।
प्राहिणोत्सुतसोमाय शरानाशीविषोपमान् ॥ ३४ ॥
चिच्छेद तांस्तु खड्गेन शिक्षया च बलेन च।
दर्शयँल्लाघवं युद्धे तार्क्ष्यतुल्यपराक्रमः ॥ ३५ ॥
तस्य सञ्चरतो राजन्मण्डलावर्तने तदा।
क्षुरप्रेण सुतीक्ष्णेन खड्गं चिच्छेद सुप्रभम् ॥ ३६ ॥
स च्छिन्नः सहसा भूमौ निपपात महानसिः।
अर्धमस्य स्थितं हस्ते त्सरुस्तत्र भारत ॥ ३७ ॥
छिन्नमाज्ञाय निस्त्रिंशमवप्लुत्य पदानि षट्।
प्राविध्यत ततः शेषं सुतसोमो महारथः ॥ ३८ ॥

---

साक्षात् यमराजके दण्डके सामान दीखता था ॥ (२८-३०)

हे महाराज ! शिक्षा और बलसे भरे हुए बुद्धिमान् सुतसोम चौदह प्रकारकी गतियोंसे युद्धमें घूमने लगे। सुतसोमने युद्धमें भ्रान्त, उद्भ्रान्त, आविद्ध, आप्लुत, विप्लुत, सृत, सम्पात, और समुदीर्ण रीतियोंको दिखलाया ॥ सुबलपुत्र शकुनि भी सुतसोमके ऊपर तेज बाण चलाते रहे, परन्तु सुतसोमने खड्गसे उन सब बाणोंको काटदिया ॥ ३१-३३

हे महाराज ! तब शत्रुनाशन शकुनिने क्रोध करके विषीले सांपोंके समान बाण चलाये ॥ गरुडके समान पराक्रमी सुतसोमने अपने विद्याबल और शीघ्रतासे उन सब बाणोंको काट दिया ॥ हे राजन् ! युद्धमें घूमते हुए सुतसोमके प्रकाशमान खड्गको शकुनिने एक तेज क्षुरप्र बाणसे काट दिया ॥ (३४-३६)

हे राजन् ! वह खड्ग कट कर आधा पृथ्वीमें गिर पडा और आधा सुतसोमके हाथमें रह गया, हे राजन् ! अपने खड्गको कटा हुआ देखकर महारथ सुतसोम छः पग कूदे और उसी आधे

चतुर्विधात्मकं सोमं ये पिबन्ति च सर्वदा ।
श्रुतेन ब्रह्मचर्येण तपसा च दमेन च ॥ ४५ ॥
ये समाराध्य शूलाङ्कं भवसायुज्यमागताः ।
यैरात्मभूतैर्भगवान्पार्वत्या च महेश्वरः ॥ ४६ ॥
महाभूतगणैर्भुङ्क्ते भूतभव्यभवत्प्रभुः ।
नानावादित्रहसितक्ष्वेडितोत्क्रुष्टगर्जितैः ॥ ४७ ॥
संत्रासयन्तस्ते विश्वमश्वत्थामानमभ्ययुः ।
संस्तुवन्तो महादेवं भाः कुर्वाणाः सुवर्चसः ॥ ४८ ॥
विवर्धयिषवो द्रौणेर्महिमानं महात्मनः ।
जिज्ञासमानास्तत्तेजः सौप्तिकं च दिदृक्षवः ॥ ४९ ॥
भीमोग्रपरिघालातशूलपट्टिशपाणयः ।
घोररूपाः समाजग्मुर्भूतसङ्घाः समन्ततः ॥ ५० ॥
जनयेयुर्भयं ये स्म त्रैलोक्यस्यापि दर्शनात् ।
तान्प्रेक्षमाणोऽपि व्यथां न चकार महाबलः ॥ ५१ ॥
अथ द्रौणिर्धनुष्पाणिर्बद्धगोधाङ्गुलित्रवान् ।
स्वयमेवात्मनात्मानमुपहारमुपाहरत् ॥ ५२ ॥
धनूंषि समिधस्तत्र पवित्राणि शिताः शराः ।
हविरात्मवतश्चात्मा तस्मिन् भारत कर्मणि ॥ ५३ ॥

अश्वत्थामानमासाद्य शरवर्षैरवाकिरत् ॥ ६१ ॥
तस्यापि शरवर्षाणि चर्मणा प्रतिवार्य सः।
सकुण्डलं शिरः कायात् भ्राजमानमुपाहरत् ॥ ६२ ॥
ततो भीष्मनिहन्तारं सहसर्वैः प्रभद्रकैः।
आहनत्सर्वतो वीरं नानाप्रहरणैर्बली ॥ ६३ ॥
शिलीमुखेन चान्येन भ्रुवोर्मध्ये समार्पयत्।
स तु क्रोधसमाविष्टो द्रोणपुत्रो महाबलः ॥ ६४ ॥
शिखण्डिनं समासाद्य द्विधा चिच्छेद सोऽसिना।
शिखण्डिनं ततो हत्वा क्रोधाविष्टः परन्तपः ॥ ६५ ॥
प्रभद्रकगणान्सर्वानभिदुद्राव वेगवान्।
यच्च शिष्टं विराटस्य बलं तु भृशमाद्रवत् ॥ ६६ ॥
द्रुपदस्य च पुत्राणां पौत्राणां सुहृदामपि।
चकार कदनं घोरं दृष्ट्वा दृष्ट्वा महाबलः ॥ ६७ ॥
अन्यानन्यांश्च पुरुषानभिसृत्याभिसृत्य च।
न्यकृन्तदसिना द्रौणिरसिमार्गविशारदः ॥ ६८ ॥
कालीं रक्तास्यनयनां रक्तमाल्यानुलेपनाम्।
रक्ताम्बरधरामेकां पाशहस्तां कुटुम्बिनीम् ॥ ६९ ॥

पृथ्वीमें गिर गया, तब वीर महारथ श्रुतकीर्त्ति, अश्वत्थामाकी ओर सहस्रों बाण वर्षाने लगे, परन्तु अश्वत्थामाने ढालसे उन सब बाणोंको बचाकर चमकते हुये कुण्डलों सहित श्रुतकीर्त्तिका शिर छेदन किया, तब भीष्मके मारनेवाले शिखण्डीको प्रभद्रकवंशी क्षत्रियोंसे खडा देख अश्वत्थामा उनकी ओर दौडे, वीर शिखण्डीने भी अनेक प्रकारके बाण चलाये, परन्तु कुछ सिद्धि न हुई, तब एक बाण दोनों भौंहके बीचमें मारा, उसके लगनेसे द्रोणपुत्रको महा क्रोध हुआ, और दौड कर शिखण्डीको मध्य शरीरमें काट दिया। शत्रुनाशन अश्वत्थामा क्रोधमें भरकर शिखण्डीको मारकर प्रभद्रक सेनाकी ओर वेगसे दौडे। फिर राजा विराटके वंशमें जो बचे थे, जो राजा द्रुपदके बेटे, पोते और मित्र बच रहे थे, उन सबको मारडाला। (६०—६८)

फिर [illegible] प्रधान [illegible] टुकडे टुकडे कर दिया [illegible] [illegible]

ततः सौम्येन मंत्रेण द्रोणपुत्रः प्रतापवान्।
उपहारं महामन्युरथात्मानमुपाहरत् ॥ ५४ ॥
तं रुद्रं रौद्रकर्माणं रौद्रैः कर्मभिरच्युतम्।
अभिष्टुत्य महात्मानमित्युवाच कृताञ्जलिः ॥ ५५ ॥

द्रौणिरुवाच — इममात्मानमद्याहं जातमाङ्गिरसे कुले।
स्वग्नौ जुहोमि भगवन् प्रतिगृह्णीष्व मां बलिम्॥ ५६ ॥
भवद्भक्त्या महादेव परमेण समाधिना।
अस्यामापदि विश्वात्मन्नुपाकुर्मि तवाग्रतः ॥ ५७ ॥
त्वयि सर्वाणि भूतानि सर्वभूतेषु चासि वै।
गुणानां हि प्रधानानामेकत्वं त्वयि तिष्ठति ॥ ५८ ॥
सर्वभूताश्रय विभो हविर्भूतमवस्थितम्।
प्रतिगृहाण मां देव यद्यशक्याः परे मया ॥ ५९ ॥
इत्युक्त्वा द्रौणिरास्थाय तां वेदीं दीप्तपावकाम्।
सन्त्यज्यात्मानमारुह्य कृष्णवर्त्मन्युपाविशत्॥ ६० ॥
तमूर्ध्वबाहुं निश्चेष्टं दृष्ट्वा हविरुपस्थितम्।
अब्रवीद्भगवान्साक्षान्महादेवो हसन्निव ॥ ६१ ॥
सत्यशौचार्जवत्यागैस्तपसा नियमेन च।
क्षान्त्या भक्त्या च धृत्या च बुद्ध्या च वचसा तथा॥६२॥
यथावदहमाराद्धः कृष्णेनाक्लिष्टकर्मणा।
तस्मादिष्टतमः कृष्णादन्यो मम न विद्यते ॥ ६३ ॥

माने भगवान शिवकी उत्तम स्तुतिकरके ऐसा कहा। (४७-५५)

अश्वत्थामा बोले, हे भगवन् शिव! सब जगत् आपमें स्थित है, सब जगत्के गुण आपमें विद्यमान हैं, मैं अङ्गिरावंशमें उत्पन्न हुआ, ब्राह्मण हूं, सो अब आपकी भक्ति और योगसे अपने शरीरको अग्निमें जलाता हूं, यदि मैं शत्रुओंको नहीं जीत सकता, तो आप इस बलीको ग्रहण कीजिये। ऐसा कहकर अश्वत्थामा उस जलती हुई अग्निमें घुस गये। (५६-६०)

इनको अग्निमें ऊपरको हाथ किये हुये खडा देख साक्षात् शिव हंसकर बोले, हे प्यारे भक्त! मुझे कृष्णने सत्य, पवित्रता, कोमलता, त्याग, तप, नियम, क्षमा, भक्ति, धारणा बुद्धि और वचनसे प्रसन्न किया था, इसलिये उनके समान

ददृशुः कालरात्रिं ते गायमानामवस्थिताम् ।
नराश्वकुञ्जरान्पाशैर्बद्ध्वा घोरैः प्रतस्थुषीम् ॥ ७० ॥
वहन्तीं विविधान्प्रेतान्पाशबद्धान्विमूर्धजान् ।
तथैव च सदा राजन्न्यस्तशस्त्रान्महारथान् ॥ ७१ ॥
स्वप्ने सुप्तान्नयन्तीं तां रात्रिष्वन्यासु मारिष ।
ददृशुर्योधमुख्यास्ते घ्नन्तं द्रौणिं च सर्वदा ॥ ७२ ॥
यतः प्रभृति संग्रामः कुरुपाण्डवसेनयोः ।
ततः प्रभृति तां कन्यामपश्यन् द्रौणिमेव च ॥ ७३ ॥
तांस्तु दैवहतान्पूर्वं पश्चाद्द्रौणिर्न्यपातयत् ।
त्रासयन्सर्वभूतानि विनदन् भैरवान् रवान् ॥ ७४ ॥
तदनुस्मृत्य ते वीरा दर्शनं पूर्वकालिकम् ।
इदं तदित्यमन्यन्त दैवेनोपनिपीडिताः ॥ ७५ ॥
ततस्तेन निनादेन प्रत्यबुध्यन्त धन्विनः ।
शिबिरे पाण्डवेयानां शतशोऽथ सहस्रशः ॥ ७६ ॥
सोऽच्छिनत्कस्यचित्पादौ जघनं चैव कस्यचित् ।
कांश्चिद्बिभेद पार्श्वेषु कालसृष्ट इवान्तकः ॥ ७७ ॥
अत्युग्रप्रतिपिष्टैश्च नदद्भिश्च भृशोत्कटैः ।

मुख और लाल नेत्रवाली, काली लाल माला और लाल चन्दन धारण किये काली युद्धमें घूम रही है, और फांसीसे अनेक मनुष्य और हाथियोंको मार रही है. किसीने यह देखा कि सोते हुए शस्त्ररहित महारथोंको वही काली फांसीसे खींच रही है। किसीको यह दीखने लगा कि वही काली और वही अश्वत्थामा युद्धके आरम्भसे हमारा नाश कर रहे हैं। (६८—७३)

हे राजन् ! इन सब पाञ्चालोंको दैवने पहले ही मार डाला था, पीछे अश्वत्थामाने उनका नाश किया, उस समय अश्वत्थामाके भयानक शब्दसे पाण्डवोंके डेरेके सब मनुष्य घबडा रहे थे, कोई वीर अश्वत्थामाके भयानक रूपको देखकर उसे साक्षात् यमराज समझते थे। (७४—७५)

अनन्तर उस घोर शब्दसे पाण्डवोंके डेरोंमें सोते हुए सैकडों सहस्रों धनुषधारी वीर जागे, तब अश्वत्थामाने भी प्रलयकालके यमराजके समान रूप धारण करके किसीका पैर, किसीका हाथ, किसीकी कमर और किसीकी जांघ काट

कुर्वता तान सम्मानं त्वां च जिज्ञासता मया ।
पाञ्चालाः सहसा गुप्ता मायाश्च बहुशः कृताः॥ ६४ ॥
कृतस्तस्यैव सम्मानः पाञ्चालान् रक्षता मया ।
अभिभूतास्तु कालेन नैषामद्यास्ति जीवितम् ॥ ६५ ॥
एवमुक्त्वा महात्मानं भगवानात्मनस्तनुम् ।
आविवेश ददौ चास्मै विमलं खड्गमुत्तमम् ॥ ६६ ॥
अथाविष्टो भगवता भूयो जज्वाल तेजसा ।
वेगवांश्चाभवद्युद्धे देवसृष्टेन तेजसा ॥ ६७ ॥
तमदृश्यानि भूतानि रक्षांसि च समाद्रवन् ।
अभितः शत्रुशिबिरं यान्तं साक्षादिवेश्वरम्॥ ६८ ॥ [३१६]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां सौप्तिके पर्वणि
द्रौणिकृतशिवार्चने सप्तमोऽध्यायः ॥ ७ ॥

धृतराष्ट्र उवाच—तथा प्रयाते शिबिरं द्रोणपुत्रे महारथे ।
कच्चित्कृपश्च भोजश्च भयार्तौ न न्यवर्तताम् ॥ १ ॥
कच्चिन्न वारितौ क्षुद्रै रक्षिभिर्नोपलक्षितौ ।
असह्यमिति मन्वानौ न निवृत्तौ महारथौ ॥ २ ॥
कच्चिदुन्मथ्य शिबिरं हत्वा सोमकपाण्डवान् ।

गजाश्वमथितैश्चान्यैर्मही कीर्णाऽभवत्प्रभो ॥ ७८ ॥
क्रोशतां किमिदं कोऽयं का शब्दः किं नु किं कृतम्।
एवं तेषां तथा द्रौणिरन्तकः समपद्यत ॥ ७९ ॥
अपेतशस्त्रसन्नाहान्सन्नद्धान्पाण्डुसृञ्जयान्।
प्राहिणोन्मृत्युलोकाय द्रौणिः प्रहरतां वरः ॥ ८० ॥
ततस्तच्छस्त्रवित्रस्ता उत्पतन्तो भयातुराः।
निद्रान्धा नष्टसंज्ञाश्च तत्र तत्र निलिल्यिरे ॥ ८१ ॥
ऊरुस्तम्भगृहीताश्च कश्मलाभिहतौजसः।
विनदन्तो भृशं त्रस्ताः समासीदन्परस्परम् ॥ ८२ ॥
ततो रथं पुनर्द्रौणिरास्थितो भीमनिःस्वनम्।
धनुष्पाणिः शरैरन्यान्प्रेषयद्वै यमक्षयम ॥ ८३ ॥
पुनरुत्पततश्चापि दूरादपि नरोत्तमान्।
शूरान्सम्पततश्चान्यान्कालरात्र्यै न्यवेदयत् ॥ ८४ ॥
तथैव स्यन्दनाग्रेण प्रमथन्स विधावति।
शरवर्षैश्च विविधैरवर्षच्छात्रवांस्ततः ॥ ८५ ॥
पुनश्च सुविचित्रेण शतचन्द्रेण चर्मणा।
तेन चाकाशवर्णेन तथाऽचरत सोऽसिना ॥ ८६ ॥

दी, कोई हाथी घोडोंकी मृटमें आकर मरगया, कोई कहने लगा, यह क्या है? यह कौन है? क्यों एक वारगी इतना हल्ला हो रहा है? डेरेमें क्या होता है? (७८—७९)

इस प्रकार अश्वत्थामा उन वीरोंके लिये कालरूप होगये शस्त्र चलानेवालोंमें श्रेष्ठ अश्वत्थामाने कवच और शस्त्र-रहित अनेक वीरोंको हटते हटते मार डाला। तब निद्रामें व्याकुल अश्वत्थामाके शब्दसे पीडित अनेक क्षत्रिय इधर उधर डरसे भागने लगे। किसीका पैर न चला कोई भयसे व्याकुल होगया, इस प्रकारसे सब वीर हाहाकार करने लगे। तब अश्वत्थामा फिर शीघ्रतासे घोर शब्दवाले रथपर चढे और बाणोंसे सहस्रों वीरोंको मारने लगे और जिसको अपनी ओर आते देखा उसको मार-डाला। (८०—८३)

कोई रथके पहियेसे आकर मर गया और किसीको अश्वत्थामाने अनेक प्रकारके वाणोंसे मार डाला, फिर घोडोंसे दूर जाकर रथसे उतरे और आकाशके समान चमकते हुए ढालके लिये वीरों-

दुर्योधनस्य पदवीं गतौ परमिकां रणे ॥ ३ ॥
पञ्चालैर्निहतौ वीरौ कच्चिन्नु स्वपतां क्षितौ।
कच्चित्ताभ्यां कृतं कर्म तन्ममाचक्ष्व सञ्जय ॥ ४ ॥

सञ्जय उवाच— तस्मिन्प्रयाते शिबिरं द्रोणपुत्रे महात्मनि।
कृपश्च कृतवर्मा च शिबिरद्वार्यतिष्ठताम् ॥ ५ ॥
अश्वत्थामा तु तौ दृष्ट्वा यत्नवन्तौ महारथौ।
प्रहृष्टः शनकै राजन्निदं वचनमब्रवीत् ॥ ६ ॥
यत्तौ भवन्तौ पर्याप्तौ सर्वक्षत्रस्य नाशने।
किं पुनर्योधशेषस्य प्रसुप्तस्य विशेषतः ॥ ७ ॥
अहं प्रवेक्ष्ये शिबिरं चरिष्यामि च कालवत्।
यथा न कश्चिदपि वां जीवन्मुच्येत मानवः ॥ ८ ॥
तथा भवद्भ्यां कार्यं स्यादिति मे निश्चिता मतिः।
इत्युक्त्वा प्राविशद्द्रौणिः पार्थानां शिबिरं महत् ॥ ९ ॥
अद्वारेणाभ्यवस्कन्द्य विहाय भयमात्मनः।
स प्रविश्य महाबाहुरुद्देशज्ञश्च तस्य ह ॥ १० ॥
धृष्टद्युम्नस्य निलयं शनकैरभ्युपागमत्।

तथा स शिबिरं तेषां द्रौणिराहवदुर्मदः।
व्यक्षोभयत राजेन्द्र महाह्रदमिव द्विपः ॥ ८७ ॥
उत्पेतुस्तेन शब्देन योधा राजन्विचेतसः।
निद्रार्त्ताश्च भयार्त्ताश्च व्यधावन्त ततस्ततः ॥ ८८ ॥
विस्वरं चुक्रुशुश्चान्ये बहुबद्धं तथाऽवदन्।
न च स्म प्रत्यपद्यन्त शस्त्राणि वसनानि च ॥ ८९ ॥
विमुक्तकेशाश्चाप्यन्ये नाभ्यजानन्परस्परम्।
उत्पतन्तोऽपतन् श्रान्ताः केचित्तत्राभ्रमंस्तदा ॥ ९० ॥
पुरीषमसृजन्केचित्केचिन्मूत्रं प्रसुस्रुवुः।
बन्धनानि च राजेन्द्र संछिद्य तुरगा द्विपाः ॥ ९१ ॥
समं पर्यपतंश्चान्ये कुर्वन्तो महदाकुलम्।
तत्र केचिन्नरा भीता व्यलीयन्त महीतले ॥ ९२ ॥
तथैव तानिपतितानपिंषन्गजवाजिनः।
तस्मिंस्तथा वर्त्तमाने रक्षांसि पुरुषर्षभ ॥ ९३ ॥
हृष्टानि व्यनदन्नुच्चैर्मुदा भरतसत्तम।
स शब्दः पूरितो राजन्भूतसङ्घैर्मुदायुतैः ॥ ९४ ॥
अपूरयद्दिशः सर्वा दिवं चातिमहास्वनः।
तेषामार्त्तरवं श्रुत्वा वित्रस्ता गजवाजिनः ॥ ९५ ॥

को मारने लगे। महावीर अश्वत्थामाने उस देशको ऐसा व्याकुल कर दिया जैसे मतवाला हाथी तालाबको व्याकुल कर देता है। हे राजन्! उस घोर शब्दसे सहस्रों योद्धा उठते थे, परन्तु भय और निद्रासे व्याकुल होकर इधर उधर दौड़ने लगते थे, कोई वृथा बकता था और कोई हाहाकार करता था। कोई शस्त्र और वस्त्र ढूंढता था, किसीके बाल खुले थे, कोई इधर उधर घूमता था और कोई थककर गिर जाता था। (८७-९०)

हे राजन्! हाथी, घोड़े अपने बन्धन छुड़ाकर भागते थे, कोई हाथी, घोड़ा मूत्र करता था और लीद करता था, कहीं योद्धा भयके मारे पृथ्वीमें सो जाते थे और हाथी घोड़े उन्हें आकर मार डालते थे। (९१-९३)

हे राजन्! उसी समय अनेक राक्षस और भूत प्रसन्नतासे गर्जने लगे और उस शब्दसे आकाश पूरित होगया तब हाथी, घोड़े इधर उधर दौड़ने लगे। उनके कुचलने और [illegible] उठी। तब महा

ते तु कृत्वा महत्कर्म श्रान्ताश्च बलवद्रणे ॥ ११ ॥
प्रसुप्ताश्चैव विध्वस्ताः स्वमेत्य परिधाविताः ।
अथ प्रविश्य तद्वेश्म धृष्टद्युम्नस्य भारत ॥ १२ ॥
पाञ्चाल्यं शयने द्रौणिरपश्यत्सुप्तमन्तिकात् ।
क्षौमावदाते महति स्पर्ध्यास्तरणसंवृते ॥ १३ ॥
माल्यप्रवरसंयुक्ते धूपैश्चूर्णैश्च वासिते ।
तं शयानं महात्मानं विस्रब्धमकुतोभयम् ॥ १४ ॥
प्राबोधयत पादेन शयनस्थं महीपते ।
सम्बुध्य चरणस्पर्शादुत्थाय रणदुर्मदः ॥ १५ ॥
अभ्यजानादमेयात्मा द्रोणपुत्रं महारथम् ।
तमुत्पतन्तं शयनादश्वत्थामा महाबलः ॥ १६ ॥
केशेष्वालभ्य पाणिभ्यां निष्पिपेष महीतले ।
सबलं तेन निष्पिष्टः साध्वसेन च भारत ॥ १७ ॥
निद्रया चैव पाञ्चाल्यो नाशकच्चेष्टितुं तदा ।
तमाक्रम्य पदा राजन् कण्ठे चोरसि चोभयोः ॥ १८ ॥
नदन्तं विस्फुरन्तं च पशुमारममारयत् ।
तुदन्नखैस्तु स द्रौणिं नातिव्यक्तमुदाहरत् ॥ १९ ॥

मुक्ताः पर्यपतन् राजन्मृद्नन्तः शिविरे जनम् ।
तैस्तत्र परिधावद्भिश्चरणोदीरितं रजः ॥ ९६ ॥
अकरोच्छिविरे तेषां रजन्यां द्विगुणं तमः ।
तस्मिंस्तमसि सञ्जाते प्रमूढाः सर्वतो जनाः ॥ ९७ ॥
नाजानन्पितरः पुत्रान् भ्रातॄन् भ्रातर एव च ।
गजो गजानतिक्रम्य निर्मनुष्या हया हयान ॥ ९८ ॥
अताडयंस्तथाऽभञ्जंस्तथाऽमृद्नंश्च भारत ।
ते भग्नाः प्रपतन्ति स्म निघ्नन्तश्च परस्परम् ॥ ९९ ॥
न्यपातयंस्तथा चान्यान्पातयित्वा तदाऽपिषन् ।
विचेतसः सनिद्राश्च तमसा चावृता नराः ॥ १०० ॥
जघ्नुः स्वानेव तत्राथ कालेनैव प्रचोदिताः ।
त्यक्त्वा द्वाराणि च द्वास्थास्तथा गुल्मानि गौल्मिकाः१०१॥
प्राद्रवन्त यथाशक्ति कान्दिशीका विचेतसः ।
विप्रनष्टाश्च तेऽन्योन्यं नाजानन्त तथा विभो ॥ १०२ ॥
क्रोशन्तस्तात पुत्रेति दैवोपहतचेतसः ।
पलायन्त दिशस्तेषां स्वानप्युत्सृज्य बान्धवान ॥१०३॥
गोत्रनामभिरन्योन्यमाक्रन्दन्त ततो जनाः ।
हाहाकारं च कुर्वाणाः पृथिव्यां शेरते परे ॥ १०४ ॥
तान्बुद्ध्वा रणमध्येऽसौ द्रोणपुत्रो न्यवारयत् ।
तत्रापरे वध्यमाना मुहुर्मुहुरचेतसः ॥ १०५ ॥

---

अन्धकार छागया, तब कोई मनुष्य अपने पिता और भाईको भी न पहिचान सका, हाथी, हाथियोंको और घोडे घोडोंको ओर दौडे और परस्पर एक दूसरेको मारते थे. कहीं कोई हाथी, घोडा, मनुष्यको पीस देता था. कहीं निद्रा और अन्धकारसे व्याकुल वीर पडे थे कहीं वीर अपने ही वीरोंको मारते थे. कहीं द्वारपाल द्वारोंको छोडकर इधर उधर भागते थे, कहीं गुल्ममें सोते वीर गुल्म छोडकर इधर उधर भागते थे, कहीं वीर भयसे व्याकुल होकर बाप और बेटोंको पुकारते थे कहीं अपने बान्धवोंको छोडकर दे दौडा भागते थे, कहीं अपना अपना गोत्रका नाम लेकर [illegible] देते थे. कोई हाहाकार करके पृथ्वीमें गिर जाता था. [illegible] कोई लडनेको उठता था, उसको

आचार्यपुत्र शस्त्रेण जहि मां मा चिरं कृथाः।
त्वत्कृते सुकृतॉंल्लोकान् गच्छेयं द्विपदांवर ॥ २० ॥
एवमुक्त्वा तु वचनं विरराम परंतपः।
सुतः पञ्चालराजस्य आक्रान्तो बलिना भृशम् ॥२१॥
तस्य व्यक्तां तु तां वाचं संश्रुत्य द्रौणिरब्रवीत्।
आचार्यघातिनां लोका न संति कुलपांसन ॥ २२ ॥
तस्माच्छस्त्रेण निधनं न त्वमर्हसि दुर्मते।
एवं ब्रुवाणस्तं वीरं सिंहो मत्तमिव द्विपम् ॥ २३ ॥
मर्मस्वभ्यवधीत् क्रुद्धः पादाष्ठीलैः सुदारुणैः।
तस्य वीरस्य शब्देन मार्यमाणस्य वेश्मनि ॥ २४ ॥
अबुध्यन्त महाराज स्त्रियो ये चास्य रक्षिणः।
ते दृष्ट्वा धर्षयन्तं तमतिमानुषविक्रमम् ॥ २५ ॥
भूतमेवाध्यवस्यंतो न स्म प्रव्याहरन् भयात्।
तं तु तेनाभ्युपायेन गमयित्वा यमक्षयम् ॥ २६ ॥
अध्यतिष्ठत तेजस्वी रथं प्राप्य सुदर्शनम्।
स तस्य भवनाद्राजन्निष्क्रम्यानादयन्दिशः ॥ २७ ॥

---

किया, तब पाञ्चालराजका शब्द भी बन्द होगया। (१४-१९)

अनन्तर उन्होंने अपने नखूनोंसे अश्वत्थामाको चीरना चाहा, परन्तु जब वह भी न कर सके तब कुछ तुतलाते धीरे धीरे बोले, हे गुरुपुत्र, आप यह क्या करते हैं? हमें शस्त्रसे मारिये। हे आचार्यपुत्र! तब हम आपकी कृपासे वीरलोकको जावेंगे, इस समय शत्रुनाशन धृष्टद्युम्न इसके सिवाय और कुछ न कह सके वीर पाञ्चालराजपुत्र इतना ही कह कर चुप होगये तब बलवान अश्वत्थामा बोले, रे कुलाधम दुर्बुद्धे! जो लोग गुरुको मारते हैं उन्हें वीर लोक नहीं मिलता, इसलिये तू शस्त्रसे मारने योग्य नहीं, ऐसा कहकर धृष्टद्युम्नके मर्मस्थानोंमें बलसे लात मारने लगे, मरते हुए वीर धृष्टद्युम्नके शब्दसे उनके पास सोई स्त्रियां और उनकी रक्षा करनेवाले जागे। उन्होंने अपने स्वामीकी ऐसी दशा देख अश्वत्थामाको भूत जाना और भयके मारे कुछ न बोल सकीं। इसी प्रकार धृष्टद्युम्नको अश्वत्थामाने मार डाला। (२०—२६)

अनन्तर उस डेरेसे निकल कर तेजस्वी अश्वत्थामा रथपर बैठकर दूसरे

शिबिरान्निष्पतन्ति स्म क्षत्रिया भयपीडिताः ।
तांस्तु निष्पतितांस्त्रस्तान् शिबिराज्जीवितैषिणः ॥१०६॥
कृतवर्मा कृपश्चैव द्वारदेशे निजघ्नतुः ।
विस्रस्तयन्त्रकवचान्मुक्तकेशान्कृताञ्जलीन् ॥ १०७ ॥
वेपमानान् क्षितौ भीतान्नैव कांश्चिदमुच्यताम् ।
नामुच्यत तयोः कश्चिन्निष्क्रान्तः शिबिराद्बहिः ॥१०८॥
कृपश्चैव महाराज हार्दिक्यश्चैव दुर्मतिः ।
भूयश्चैव चिकीर्षन्तौ द्रोणपुत्रस्य तौ प्रियम् ॥ १०९ ॥
त्रिषु देशेषु ददतुः शिबिरस्य हुताशनम् ।
ततः प्रकाशे शिबिरे खड्गेन पितृनन्दनः ॥ ११० ॥
अश्वत्थामा महाराज व्यचरत्कृतहस्तवत् ।
कांश्चिदापततो वीरानपरांश्च प्रधावतः ॥ १११ ॥
व्ययोजयत खड्गेन प्राणैर्द्विजवरोत्तमः ।
कांश्चिद्योधान्स खड्गेन मध्ये सञ्छिद्य वीर्यवान् ॥११२॥
अपातयद्द्रोणपुत्रः संरब्धस्तिलकाण्डवत् ।
निनदद्भिर्भृशायस्तैर्नराश्वद्विरदोत्तमैः ॥ ११३ ॥
पतितैरभवत्कीर्णा मेदिनी भरतर्षभ ।
मानुषाणां सहस्रेषु हतेषु पतितेषु च ॥ ११४ ॥
उदतिष्ठन्कबन्धानि बहून्युत्थाय चापतन् ।

रथेन शिबिरं प्रायाज्जिघांसुर्द्विषतो बली ।
अपक्रान्ते ततस्तस्मिन्द्रोणपुत्रे महारथे ॥ २८ ॥
सहितै रक्षिभिः सर्वैः प्राणेदुर्योषितस्तदा ।
राजानं निहतं दृष्ट्वा भृशं शोकपरायणाः ॥ २९ ॥
व्याक्रोशन् क्षत्रियाः सर्वे धृष्टद्युम्नस्य भारत ।
तासां तु तेन शब्देन समीपे क्षत्रियर्षभाः ॥ ३० ॥
क्षिप्रं च समनह्यन्त किमेतदिति चाब्रुवन् ।
स्त्रियस्तु राजन्वित्रस्ता भारद्वाजं निरीक्ष्य ताः ॥ ३१ ॥
अब्रुवन् दीनकण्ठेन क्षिप्रमाद्रवतेति वै ।
राक्षसो वा मनुष्यो वा नैनं जानीमहे वयम् ॥ ३२ ॥
हत्वा पाञ्चालराजानं रथमारुह्य तिष्ठति ।
ततस्ते योधमुख्याश्च सहसा पर्यवारयन् ॥ ३३ ॥
स तानापततः सर्वान् रुद्रास्त्रेण व्यपोथयत् ।
धृष्टद्युम्नं च हत्वा स तांश्चैवास्य पदानुगान् ॥ ३४ ॥
अपश्यच्छयने सुप्तमुत्तमौजसमन्तिके ।
तमप्याक्रम्य पादेन कण्ठे चोरसि तेजसा ॥ ३५ ॥
तथैव मारयामास विनर्दन्तमरिंदमम् ।

डेरोकी ओर शत्रुवोंको मारनेको दौडे । अश्वत्थामाके जानेके पीछे स्त्रियोंने देखा कि महाराज मरे पडे हैं, तब वे सब हाहाकार करके और अत्यन्त शोकसे व्याकुल होकर रोने लगी । तब सब श्रेष्ठ क्षत्रिय जागे और कहने लगे कि यह क्या हुआ ? ऐसा कहकर सब क्षत्रिय युद्धके लिये व्यूह ( किला ) बनाने लगे । तब द्वारपर जाकर देखा कि कृपाचार्य खडे हैं, तब सब ही उनको देखकर डरीं, तब सब क्षत्रिय उनसे पूछने लगे कि जिसने महाराज पाञ्चालराजको मारा है और जो रथपर चढ कर भागा जाता है, वह क्या कोई राक्षस है वा मनुष्य ? ( २८-३३ )

ऐसा कहते हुये वे सब वीर अश्वत्थामाको मारने दौडे, परन्तु अश्वत्थामाने रुद्रास्त्रसे उन सबको मार डाला । फिर वहांसे चलकर उत्तमौजाके डेरेमें पहुंचे और उनको भी सोते ही देखा । फिर उनके भी कण्ठमें एक पैर और एक पैर छातीमें धरकर उन्हें भी वैसे ही मार डाला । युधामन्यु उत्तमौजाको मरा हुआ सुन महाबलवान् युधामन्यु

साऽयुधान्साङ्गदान्बाहून्विचकर्त्त शिरांसि च ॥ ११५ ॥
हस्तिहस्तोपमानूरून्हस्तान्पादांश्च भारत ।
पृष्ठच्छिन्नान्पार्श्वच्छिन्नान्शिरश्छिन्नांस्तथाऽपरान् ॥ ११६ ॥
स महात्माऽकरोद् द्रौणिः कांश्चिचापि पराङ्मुखान् ।
मध्यदेशे नरानन्यांश्चिच्छेदान्यांश्च कर्णतः ॥ ११७ ॥
अंसदेशे निहत्यान्यान्काये प्रावेशयच्छिरः ।
एवं विचरतस्तस्य निघ्नतः सुबहून्नरान् ॥ ११८ ॥
तमसा रजनी घोरा बभौ दारुणदर्शना ।
किञ्चित्प्राणैश्च पुरुषैर्हतैश्चान्यैः सहस्रशः ॥ ११९ ॥
बहुना च गजाश्वेन भूरभूद्भीमदर्शना ।
यक्षरक्षःसमाकीर्णे रथाश्वद्विपदारुणे ॥ १२० ॥
क्रुद्धेन द्रोणपुत्रेण सञ्छिन्नाः प्रापतन्भुवि ।
भ्रातॄनन्ये पितॄनन्ये पुत्रानन्ये विचुक्रुशुः ॥ १२१ ॥
केचिदूचुर्न तत्क्रुद्धैर्धार्त्तराष्ट्रैः कृतं रणे ।
यत्कृतं नः प्रसुप्तानां रक्षोभिः क्रूरकर्मभिः ॥ १२२ ॥
असान्निध्याद्धि पार्थानामिदं नः कदनं कृतम् ।
न चासुरैर्न गंधर्वैर्न यक्षैर्न च राक्षसैः ॥ १२३ ॥
शक्यो विजेतुं कौन्तेयो गोप्ता यस्य जनार्दनः ।
ब्रह्मण्यः सत्यवाग्दान्तः सर्वभूतानुकम्पकः ॥ १२४ ॥

---

किसीकी पीठ कट गई, किसीका मुंह कट गया, इस प्रकार महात्मा अश्वत्थामाने सहस्रों वीरोंको गिरा दिया, वह भयानक अन्धकार रात्रि और भी भयानक दीखने लगी, कहीं न मारने योग्य शरीरमें शस्त्र लग गया, वह रात्रि भागते हुये हाथी, घोडे और मनुष्योंसे भयानक दीखने लगी, और कोई भाईको, कोई बापको, और कोई बेटोंको पुकारने लगे और कोई कहने लगा कि क्रोध भरे धृतराष्ट्रके पुत्रोंने हमारे लिये जो नहीं किया था, सो आज सोते समय भयानक राक्षसोंने किया, हाय पांचों पाण्डवोंमेंसे एक भी यहां नहीं है इसी लिये राक्षसोंने हमारा नाश कर दिया, जिनकी रक्षा करनेवाले साक्षात् श्रीकृष्ण हैं उन्हें राक्षस, गन्धर्व और दैत्य भी नहीं जीत सकते। (११५–१२३)

[illegible] भक्त, सत्यवादी, जितेन्द्रिय और सब मनुष्योंपर कृपा

युधामन्युश्च संप्राप्तो मत्वा तं रक्षसा हतम् ॥ ३६ ॥
गदामुद्यम्य वेगेन हृदि द्रौणिमताडयत्।
तमभिद्रुत्य जग्राह क्षितौ चैनमपातयत् ॥ ३७ ॥
विस्फुरन्तं च पशुवत्तथैवैनममारयत्।
तथा स वीरो हत्वा तं ततोऽन्यान्समुपाद्रवत्॥ ३८ ॥
संसुप्तानेव राजेन्द्र तत्र तत्र महारथान्।
स्फुरतो वेपमानांश्च शमितेव पशून्मखे ॥ ३९ ॥
ततो निस्त्रिंशमादाय जघानान्यान् पृथक् पृथक्।
भागशो विचरन्मार्गानसियुद्धविशारदः ॥ ४० ॥
तथैव गुल्मे संप्रेक्ष्य शयानान्मध्यगौल्मिकान्।
श्रान्तान् व्यस्तायुधान्सर्वान् क्षणेनैव व्यपोथयत्॥४१॥
योधानश्वान् द्विपांश्चैव प्राच्छिनत्स वरासिना।
रुधिरोक्षितसर्वाङ्गः कालसृष्ट इवान्तकः ॥ ४२ ॥
विस्फुरद्भिश्च तैर्द्रौणिर्निस्त्रिंशस्योद्यमेन च।
आक्षेपणेन चैवासेस्त्रिधा रक्तोक्षितोऽभवत् ॥ ४३ ॥
तस्य लोहितरक्तस्य दीप्तखड्गस्य युध्यतः।
अमानुष इवाकारो बभौ परमभीषणः ॥ ४४ ॥
ये त्वजाग्रन्त कौरव्य तेऽपि शब्देन मोहिताः।

---

गदा लेकर उठे, और अश्वत्थामाको राक्षस जानकर एक गदा उसकी छाती-में मारी, तभी अश्वत्थामाने उसके बाल पकड़कर पृथ्वीमें गिरा दिया और पशुके समान मार डाला। (३६—३८)

हे महाराज! तब वहांपर दूसरे दूसरे महारथोंके डेरोंमें जाकर सबको सोते ही मार डाला। किसीको कांपते हुए मारा, और किसीको उठते हुए मार-डाला। (३९)

खड्गयुद्ध जाननेवाले अश्वत्थामाने घूम घूमकर इस प्रकार शत्रुओंको मारा जैसे कोई यज्ञमें पशुओंको मारे। अनन्तर मध्य गुल्ममें घूमकर केवल शस्त्ररहित सोते और थके गुल्मपालकोंको मारा फिर हाथी और घोडोंके बन्धन खड्गसे काट दिये, उस समय रुधिरमें भींगा अश्वत्थामाका शरीर प्रलयकालके यम-राजके समान दीखता था, खड्गधारी अश्वत्थामा तीन गतियोंसे रुधिरमें भींगे। खड्गको घुमाते हुए महाभयानक राक्षसोंके समान दीखने लगे। (४०-४४)

न च सुप्तं प्रमत्तं वा न्यस्तशस्त्रं कृताञ्जलिम् ।
धावन्तं मुक्तकेशं वा हन्ति पार्थो धनञ्जयः ॥ १२५ ॥
तदिदं नः कृतं घोरं रक्षोभिः क्रूरकर्मभिः ।
इति लालप्यमानाः स्म शेरते बहवो जनाः ॥ १२६ ॥
स्तनतां च मनुष्याणामपरेषां च कूजताम् ।
ततो मुहूर्त्तात्प्राशाम्यत्स शब्दस्तुमुलो महान् ॥ १२७ ॥
शोणितव्यतिषिक्तायां वसुधायां च भूमिप ।
तद्रजस्तुमुलं घोरं क्षणेनान्तरधीयत ॥ १२८ ॥
स चेष्टमानानुद्विग्नान्निरुत्साहान्सहस्रशः ।
न्यपातयन्नरान् क्रुद्धः पशून्पशुपतिर्यथा ॥ १२९ ॥
अन्योन्यं संपरिष्वज्य शयानान्द्रवतोऽपरान् ।
संलीनान्युध्यमानांश्च सर्वान्द्रौणिरपोथयत् ॥ १३० ॥
दह्यमाना हुताशेन वध्यमानाश्च तेन ते ।
परस्परं तदा योधाननयन्यमसादनम् ॥ १३१ ॥
तस्या रजन्यास्त्वर्धेन पाण्डवानां महद्बलम् ।
गमयामास राजेन्द्र द्रौणिर्यमनिवेशनम् ॥ १३२ ॥
निशाचराणां सत्त्वानां रात्रिः सा हर्षवर्द्धिनी ।

निरीक्ष्यमाणा अन्योन्यं दृष्ट्वा दृष्ट्वा प्रविव्यथुः ॥ ४५ ॥
तद्रूपं तस्य ते दृष्ट्वा क्षत्रियाः शत्रुकर्षिणः ।
राक्षसं मन्यमानास्तं नयनानि न्यमीलयन् ॥ ४६ ॥
स घोररूपो व्यचरत्कालवच्छिबिरे ततः ।
अपश्यद्द्रौपदीपुत्रानवशिष्टांश्च सोमकान् ॥ ४७ ॥
तेन शब्देन वित्रस्ता धनुर्हस्ता महारथाः ।
धृष्टद्युम्नं हतं श्रुत्वा द्रौपदेया विशांपते ॥ ४८ ॥
अवाकिरन् शरव्रातैर्भारद्वाजमभीतवत् ।
ततस्तेन निनादेन संप्रबुद्धाः प्रभद्रकाः ॥ ४९ ॥
शिलीमुखैः शिखण्डी च द्रोणपुत्रं समार्दयन् ।
भारद्वाजः स तान् दृष्ट्वा शरवर्षाणि वर्षतः ॥ ५० ॥
ननाद बलवन्नादं जिघांसुस्तान्महारथान् ।
ततः परमसंक्रुद्धः पितुर्वधमनुस्मरन् ॥ ५१ ॥
अवरुह्य रथोपस्थात्त्वरमाणोऽभिदुद्रुवे ।
सहस्रचन्द्रविमलं गृहीत्वा चर्म संयुगे ॥ ५२ ॥
खड्गं च विमलं दिव्यं जातरूपपरिष्कृतम् ।

हे कुरुकुलश्रेष्ठ ! उस समय जो क्षत्रिय डेरोंमें जागते थे, वेही अश्वत्थामाका स्वरूप देखकर, चुप होकर, आंख मून्दकर लेते थे, और डरके मारे मूर्छित होजाते थे. शत्रुनाशन अश्वत्थामाका रूप देखकर सब लोग उसे राक्षस जा-

क्रोध करके डेरेके द्वारकी ओर चले, वहां जाकर देखा कृपाचार्य खडे हैं, तब उन्होंने कृपाचार्यके ऊपर बाण वर्षाना आरम्भ किया इतनेमें प्रभद्रकवंशी क्षत्रियोंमें समाचार पहुंचा तब वे लोग भी पहुंचे । ( ४५-४९ )

आसीन्नरगजाश्वानां रौद्री क्षयकरी भृशम् ॥ १३३ ॥
तत्रादृश्यन्त रक्षांसि पिशाचाश्च पृथग्विधाः ।
खादन्तो नरमांसानि पिबन्तः शोणितानि च॥१३४॥
करालाः पिङ्गलाश्चैव शैलदन्ता रजस्वलाः ।
जटिला दीर्घशङ्खाश्च पञ्चपादा महोदराः ॥ १३५ ॥
पश्चादङ्गुलयो रूक्षा विरूपा भैरवस्वनाः ।
घंटाजालावसक्ताश्च नलिकण्ठा विभीषणाः॥ १३६ ॥
सपुत्रदाराः सक्रूराः सुदुर्दशाः सुनिर्घृणाः ।
विविधानि च रूपाणि तत्रादृश्यन्त रक्षसाम्॥ १३७ ॥
पीत्वा च शोणितं हृष्टाः प्रानृत्यन्गणशो परे ।
इदं परमिदं मेध्यमिदं स्वाद्विति चाब्रुवन् ॥ १३८ ॥
मेदोमज्जास्थिरक्तानां वसानां च भृशाशिताः ।
परे मांसानि खादन्तः क्रव्यादा मांसजीविनः॥१३९॥
वसाश्चैवापरे पीत्वा पर्यधावन्विकुक्षिकाः ।
नानावक्त्रास्तथा रौद्राः क्रव्यादाः पिशिताशनाः॥१४०॥
अयुतानि च तत्रासन्प्रयुतान्यर्बुदानि च ।
रक्षसां घोररूपाणां महतां क्रूरकर्मणाम् ॥ १४१ ॥
मुदितानां वितृप्तानां तस्मिन्महति वैशसे ।

---

का नाश करनेवाली थी और मांस खा-
नेवाले भूत और जन्तुओंको प्रसन्नता
बढाती थी, तब अनेक प्रकारके राक्षस
घूमने लगे, वे मनुष्योंके मांस खाने और
रुधिर पीने लगे, कोई भयानक धूमले
रङ्गवाला किसीके बडे बडे दांत, कोई
धूलमें भरा, किसीके बडी बडी जटा,
किसीका बडा मुह, किसीका बडा पेट,
किसीके पैरके पञ्जे पीछेको थे, कोई
घण्टा बजा रहा था, किसीका नीला-
कण्ठ था, कोई महाभयानक था, वे सब
भयानक निर्दय अनेक रूपधारी राक्षस
पुत्र और स्त्रियोंके सहित वहां आए,
फिर मनुष्योंका रुधिर पीकर नाचने
लगे और कहने लगे कि यह रुधिर बडा
स्वादमें श्रेष्ठ और पीने योग्य है, मांस
खाने वाले जन्तु भी प्रसन्नता पूर्वक
रुधिर पीने लगे, चर्बी मांस और
चर्म खाने लगे । चर्बी खानेसे राक्षसों
के पेट फूल गये, इस प्रकारके हजारों
भयानक कर्मों राक्षस मनुष्योंको घोर
रूप बनाकर [illegible]

द्रौपदेयानभिद्रुत्य खड्गेन व्यधमद्बली ॥ ५३ ॥
ततः स नरशार्दूलः प्रतिविन्ध्यं महाहवे ।
कुक्षिदेशेऽवधीद्राजन् स हतो न्यपतद्भुवि ॥ ५४ ॥
प्रासेन विद्ध्वा द्रौणिं तु सुतसोमः प्रतापवान् ।
पुनश्चासिं समुद्यम्य द्रोणपुत्रमुपाद्रवत् ॥ ५५ ॥
सुतसोमस्य सासिं तं बाहुं छित्वा नरर्षभ ।
पुनरप्याहनत्पार्श्वे स भिन्नहृदयोऽपतत् ॥ ५६ ॥
नाकुलिस्तु शतानीको रथचक्रेण वीर्यवान् ।
दोर्भ्यामुत्क्षिप्य वेगेन वक्षस्येनमताडयत् ॥ ५७ ॥
अताडयच्छतानीकं मुक्तचक्रं द्विजस्तु सः ।
स विह्वलो ययौ भूमिं ततोऽस्यापाहरच्छिरः ॥ ५८ ॥
श्रुतकर्मा तु परिघं गृहीत्वा समताडयत् ।
अभिद्रुत्य ययौ द्रौणिं सव्ये स फलके भृशम् ॥ ५९ ॥
स तु तं श्रुतकर्माणमास्ये जघ्ने वरासिना ।
स हतो न्यपतद्भूमौ विमूढो विकृताननः ॥ ६० ॥
तेन शब्देन वीरस्तु श्रुतकीर्तिर्महारथः ।

फिर अपने रथसे कूदे और अनेक चन्द्रमाके समान प्रकाशित अनेक बिन्दुयुक्त ढाल और सोनेकी मूठवाला चमकता हुआ खड्ग लेकर द्रौपदीके पुत्रोंकी ओर दौडे, और प्रतिविन्ध्यके कोखमें एक खड्ग मारा, उसके लगतेही वह कटकर पृथ्वीमें गिर गया, उसके गिरते ही प्रतापवान् सुतसोमने एक प्रास अश्वत्थामाको मारा, और फिर खड्ग लेकर उनकी ओर दौडे, परन्तु अश्वत्थामाने भी खड्गके सहित उनका हाथ काट दिया, फिर भी उसी खड्ग सहित उनकी पसलीमें एक खड्ग मारा, उसके लगते ही उसका हृदय फट गया, और मरकर पृथ्वीमें गिरगया, तब नकुलपुत्र बलवान शतानीकको कुछ शस्त्र न मिला, तब टूटे हुये रथका पहिया उठाकर अश्वत्थामाकी छातीमें वेगसे मारा, तब अश्वत्थामाने वेगसे दौडकर उसे पृथ्वीमें गिरा दिया, और फिर उसका शिर काट लिया, तब श्रुतकर्माने दौडकर एक परिघ अश्वत्थामाकी छातीमें मारा, वह परिघ अश्वत्थामाके खड्गसहित दहिने हाथमें लगा। (५०-५९)

तब अश्वत्थामाने झपटकर उसके मुखमें एक खड्ग मारा, वह भी मरकर

समेतानि बहून्यासन् भूतानि च जनाधिप ॥ १४२ ॥
प्रत्यूषकाले शिबिरात्प्रतिगन्तुमियेष सः
नृशोणितावसिक्तस्य द्रौणेरासीदसित्सरुः ॥ १४३ ॥
पाणिना सह संश्लिष्ट एकीभूत इव प्रभो।
दुर्गमां पदवीं गत्वा विरराज जनक्षये ॥ १४४ ॥
युगान्ते सर्वभूतानि भस्म कृत्वेव पावकः।
यथाप्रतिज्ञं तत्कर्म कृत्वा द्रौणायनिः प्रभो ॥ १४५ ॥
दुर्गमां पदवीं गच्छन्पितुरासीद्गतज्वरः।
यथैव संसुप्तजने शिबिरे प्राविशन्निशि ॥ १४६ ॥
तथैव हत्वा निःशब्दे निश्चक्राम नरर्षभः।
निष्क्रम्य शिबिरात्तस्मात्ताभ्यां संगम्य वीर्यवान् ॥ १४७ ॥
आचख्यौ कर्म तत्सर्वं हृष्टः संहर्षयन्विभो।
तावप्याचख्यतुस्तस्मै प्रियं प्रियकरौ तदा ॥ १४८ ॥
पाञ्चालान्सृञ्जयांश्चैव विनिकृत्तान्सहस्रशः।
प्रीत्या चोच्चैरुदक्रोशंस्तथैवास्फोटयंस्तलान् ॥ १४९ ॥
एवंविधा हि सा रात्रिः सोमकानां जनक्षये।

तच्छित्त्वा सगुणं चापं रणे तस्य महात्मनः ।
पपात धरणीं तूर्णं स्वर्णवज्रविभूषितम् ॥ ३९ ॥
सुतसोमस्ततोऽगच्छच्छ्रुतकीर्तेर्महारथम् ।
सौबलोऽपि धनुर्गृह्य घोरमन्यत्सुदुर्जयम् ॥ ४० ॥
अभ्ययात्पाण्डवानीकं निघ्नञ्शत्रुगणान्बहून् ।
तत्र नादो महानासीत्पाण्डवानां विशाम्पते ॥ ४१ ॥
सौबलं समरे दृष्ट्वा विचरन्तमभीतवत् ।
तान्यनीकानि दृप्तानि शस्त्रवन्ति महान्ति च ॥ ४२ ॥
द्राव्यमाणान्यदृश्यन्त सौबलेन महात्मना ।
यथा दैत्यचमूं राजन्देवराजो ममर्द ह ।
तथैव पाण्डवीं सेनां सौबलेयो व्यनाशयत् ॥ ४३॥ [१०३०]

इति श्रीमहाभारते शतसाहस्र्या संहितायां वैयासिक्यां कर्णपर्वणि सुतसोमसौबलयुद्धे पञ्चविंशोऽध्यायः ॥२५

सञ्जय उवाच— धृष्टद्युम्नं कृपो राजन्वारयामास संयुगे ।
यथा दृष्ट्वा वने सिंहं शरभो वारयेद्युधि ॥ १ ॥
निरुद्धः पार्षतस्तेन गौतमेन बलीयसा ।
पदात्पदं विचलितुं नाशकत्तत्र भारत ॥ २ ॥
गौतमस्य रथं दृष्ट्वा धृष्टद्युम्नरथं प्रति ।

खड्गसे शकुनीका रोदेके सहित धनुष काट दिया। वज्रके समान वह धनुष कट कर पृथ्वीमें गिर गया ॥ (३७-३९)

तब शकुनिने दूसरा धनुष लिया, उतने समयमें सुतसोम दौडकर श्रुतकीर्त्तिके रथ पर चढ गये, शकुनि भी दूसरा धनुष लेकर पाण्डवोंकी सेनाका नाश करने लगे। उस समय पाण्डवोंकी सेनामें घोर शब्द होने लगा ॥ हे राजन्! पाण्डवोंकी सेनामें बेडर शकुनि इस प्रकार घूमने लगे, जैसे दैत्योंकी सेनामें इन्द्र घूमते हैं। शस्त्रधारी पाण्डवोंकी सेना शकुनिके बाणोंसे व्याकुल होकर इधर उधर भागने लगी ॥ (४०-४३)

कर्णपर्वमें पचीस अध्याय समाप्त । [ १०३० ]

कर्णपर्वमें छब्बीस अध्याय ।

सञ्जय बोले, हे राजन् धृतराष्ट्र ! धृष्टद्युम्नको उसके संग युद्ध करते हुए कृपाचार्यने इस प्रकार रोक दिया, जैसे वनमें सिंहको शरभ रोकता है ॥ हे भारत ! गौतमवंशी बलवान् कृपाचार्यसे निरुद्ध होकर धृष्टद्युम्न युद्धमें एक पग भी चल न सके॥ धृष्टद्युम्नके रथकी ओर कृपाचार्यका रथ आते देख सब त्रस्त

वित्रेसुः सर्वभूतानि क्षयं प्राप्तं च मेनिरे ॥ ३ ॥
तत्रावोचन्विमनसो रथिनः सादिनस्तथा ।
द्रोणस्य निधनान्नूनं संक्रुद्धो द्विपदां वरः ॥ ४ ॥
शारद्वतो महातेजा दिव्यास्त्रविदुदारधीः ।
अपि स्वस्ति भवेदद्य धृष्टद्युम्नस्य गौतमात् ॥ ५ ॥
अपीयं वाहिनी कृत्स्ना मुच्येत महतो भयात् ।
अप्ययं ब्राह्मणः सर्वान्न नो हन्यात्समागतान् ॥ ६ ॥
यादृशं दृश्यते रूपमन्तकप्रातिमं भृशम् ।
गमिष्यत्यद्य पदवीं भारद्वाजस्य गौतमः ॥ ७ ॥
आचार्यः क्षिप्रहस्तश्च विजयी च सदा युधि ।
अस्त्रवान्वीर्यसम्पन्नः क्रोधेन च समन्वितः ॥ ८ ॥
पार्षतश्च महायुद्धे विमुखोऽद्याभिलक्ष्यते ।
इत्येवं विविधा वाचस्तावकानां परैः सह ॥ ९ ॥
व्यश्रूयन्त महाराज तयोस्तत्र समागमे ।
विनिःश्वस्य ततः क्रोधात्कृपः शारद्वतो नृप ॥ १० ॥

होगये और सबको निश्चय होगया, कि धृष्टद्युम्न जीते नहीं बचेंगे ॥ (१–३)

उस समय रथ, हाथी और घोडों पर चढे वीर तथा पैदल लोग खिन्न होकर कहने लगे, कि द्रोणाचार्यके मरनेसे मनुष्य श्रेष्ठ कृपाचार्यको क्रोध हुआ है, इसी लिये यह धृष्टद्युम्नसे लडनेको आये हैं। गौतमवंशी महातेजस्वी कृपाचार्य दिव्य अस्त्रोंके जाननेवाले है, ईश्वर इनके हाथसे धृष्टद्युम्नको आज बचावें॥ ईश्वर कृपा करे, आज यह सब सेना इस ब्राह्मणके हाथसे बचे, क्योंकि यह ब्राह्मण हम सबको मारनेमें समर्थ है ॥ (४—६)

कोई कहने लगा, कि कृपाचार्यका रूप इस समय यमराजके समान हो रहा है, इससे यह धृष्टद्युम्नके हाथसे आज ही द्रोणाचार्यके पास पहुंचेंगे ॥ कोई कहने लगा, कि कृपाचार्य धनुर्वेदके जाननेवाले, शीघ्र शस्त्र चलानेवाले, बलवान् और सदा युद्ध जीतनेवाले हैं। इस समय कृपाचार्यको क्रोध भरा देख, धृष्टद्युम्न भागना चाहते हैं। इस प्रकार तुम्हारी और पाण्डवोंकी सेनामें अनेक प्रकारकी बातें होने लगीं। (७–१०)

हे राजेन्द्र! इन सब बातोंको सुनते हुए महात्मा कृपाचार्यने क्रोधमें भरकर अनेक सांस लिये, फिर धृष्टद्युम्नकी

प्रसुप्तानां प्रमत्तानामासीत्सुभृशदारुणा ॥ १५० ॥
असंशयं हि कालस्य पर्यायो दुरतिक्रमः ।
तादृशा निहता यत्र कृत्वाऽस्माकं जनक्षयम् ॥ १५१ ॥

धृतराष्ट्र उवाच—प्रागेव सुमहत्कर्म द्रौणिरेतन्महारथः ।
नाकरोदीदृशं कस्मान्मत्पुत्रविजये धृतः ॥ १५२ ॥
अथ कस्माद्धते क्षुद्रे कर्मेदं कृतवानसौ ।
द्रोणपुत्रो महात्मा स तन्मे शंसितुमर्हसि ॥ १५३ ॥

सञ्जय उवाच— तेषां नूनं भयान्नासौ कृतवान्कुरुनन्दन ।
असान्निध्याद्धि पार्थानां केशवस्य च धीमतः ॥ १५४ ॥
सात्यकेश्चापि कर्मेदं द्रोणपुत्रेण साधितम् ।
को हि तेषां समक्षं तान् हन्यादपि मरुत्पतिः ॥ १५५ ॥
एतदीदृशकं वृत्तं राजन्सुप्तजने विभो ।
ततो जनक्षयं कृत्वा पाण्डवानां महात्ययम् ॥ १५६ ॥
दिष्ट्या दिष्ट्येव चान्योन्यं समेत्योचुर्महारथाः ।
पर्यष्वजत्ततो द्रौणिस्ताभ्यां सम्प्रति नन्दितः ॥ १५७ ॥
इदं हर्षात्तु सुमहदाददे वाक्यमुत्तमम् ।
पाञ्चाला निहताः सर्वे द्रौपदेयाश्च सर्वशः ॥ १५८ ॥

---

सेनाका नाश किया था और वही आज इस प्रकार मारे गये, कालकी गतिको कोई नहीं जान सक्ता, यह बडी ही कठिन है। ( १४६-१५१ )

धृतराष्ट्र बोले, हे सञ्जय! महारथ अश्वत्थामाके यह इच्छा तो थी, कि हमारे पुत्रकी विजय होय, तब इन्होंने पहिले यह कर्म क्यों नहीं किया था? दुर्योधनके मरनेपर महात्मा द्रोणपुत्रने ऐसा कुकर्म क्यों किया सो तुम हमसे कहो! ( १५२-१५३ )

सञ्जय बोले, हे कुरुनन्दन! पाण्डवोंके और कृष्णके भयसे अश्वत्थामाने ऐसा नहीं किया था, आज वे पाण्डव, श्रीकृष्ण और सात्यकी सेनामें नहीं थे, इसही लिये अश्वत्थामाने इनको मार डाला। यदि वे लोग होते तो साक्षात् इन्द्र भी इन लोगोंको नहीं मार सक्ता था। ( १५४-१५५ )

हे महाराज! इस प्रकार वह सोती हुई पाण्डव सेनाका नाश हुआ, तब तीनों उत्साह करने लगे कि बहुत [illegible]

एवं ते निधनं यातः पुत्रो दुर्योधनो नृप ।
अग्रे यात्वा रणे शूरः पश्चाद्विनिहतः परैः ॥ ५८ ॥

तथैव ते परिष्वक्ताः परिष्वज्य च ते नृपम् ।
पुनः पुनः प्रेक्षमाणाः स्वकानारुरुहू रथान् ॥ ५९ ॥

इत्येवं द्रोणपुत्रस्य निशम्य करुणां गिरम् ।
प्रत्यूषकाले शोकार्त्ताः प्राद्रवन्नगरं प्रति ॥ ६० ॥

एवमेष क्षयो वृत्तः कुरुपाण्डवसेनयोः ।
घोरो विशसनो रौद्रो राजन् दुर्मन्त्रिते तव ॥ ६१ ॥

तव पुत्रे गते स्वर्गं शोकार्त्तस्य ममानघ ।
ऋषिदत्तं प्रनष्टं तद्दिव्यदर्शित्वमद्य वै ॥ ६२ ॥

वैशम्पायन उवाच–इति श्रुत्वा स नृपतिः पुत्रस्य निधनं तदा ।
निःश्वस्य दीर्घमुष्णं च ततश्चिन्तापरोऽभवत् ॥ ६३ ॥[९३८]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां सौप्तिके पर्वणि
दुर्योधनप्राणत्यागे नवमोऽध्यायः ॥ ९ ॥

## अथैषीकपर्व :

वैशम्पायन उवाच–तस्यां रात्र्यां व्यतीतायां धृष्टद्युम्नस्य सारथिः ।
शशंस धर्मराजाय सौप्तिके कदनं कृतम् ॥ १ ॥

सूत उवाच– द्रौपदेया हता राजन्द्रुपदस्यात्मजैः सह ।

प्रमत्ता निशि विश्वस्ताः स्वपन्तः शिबिरे स्वके ॥ २ ॥
कृतवर्मणा नृशंसेन गौतमेन कृपेण च ।
अश्वत्थाम्ना च पापेन हतं वः शिबिरं निशि ॥ ३ ॥
एतैर्नरगजाश्वानां प्रासशक्तिपरश्वधैः ।
सहस्राणि निकृन्तद्भिर्निःशेषं ते बलं कृतम् ॥ ४ ॥
छिद्यमानस्य महतो वनस्येव परश्वधैः ।
शुश्रुवे सुमहान् शब्दो बलस्य तव भारत ॥ ५ ॥
अहमेकोऽवशिष्टस्तु तस्मात्सैन्यान्महामते ।
मुक्तः कथं चिद्धर्मात्मन् व्यग्राच्च कृतवर्मणः ॥ ६ ॥
तच्छ्रुत्वा वाक्यमशिवं कुन्तीपुत्रो युधिष्ठिरः ।
पपात मह्यां दुर्धर्षः पुत्रशोकसमन्वितः ॥ ७ ॥
पतन्तं तमतिक्रम्य परिजग्राह सात्यकिः ।
भीमसेनोऽर्जुनश्चैव माद्रीपुत्रौ च पाण्डवौ ॥ ८ ॥
लब्धचेतास्तु कौन्तेयः शोकविह्वलया गिरा ।
जित्वा शत्रून् जितः पश्चात्पर्यदेवयदार्त्तवत् ॥ ९ ॥
दुर्विदा गतिरर्थानामपि ये दिव्यचक्षुषः ।

---

महाराज ! द्रुपदके पुत्रोंके सहित आपके पांचों पुत्र मारे गये, वे मुझसे विश्वास पूर्वक डेरोंमें सो रहे थे, उसी समय कृतवर्मा, पापी कृपाचार्य और पापी अश्वत्थामाने सबको मारडाला। (१-३)

हे महाराज ! आपकी हाथी, घोडा और मनुष्योंसे भरी सेनामें केवल एक मैं ही बचा हूं. उन्होंने प्रास, शक्ति और परश्वोंसे हमारी सेनाका नाश कर दिया. उस समय आपकी सेनामें ऐसा शब्द होता था. जैसे कुल्हाडीसे कटते हुए वनमें। हे धर्मात्मन् ! मैं किसी प्रकार कृतवर्मासे बचकर भाग आया हूं, उस सब सेनामेंसे केवल मैं ही एकला बचा हूं। (४-६)

सारथीके ऐसे वचन सुन महापराक्रमी महाराज युधिष्ठिर पुत्रशोकसे व्याकुल होकर पृथ्वीमें गिरपडे, तब उनको गिरते देख सात्यकी, कृष्ण, अर्जुन, नकुल और सहदेव दौडे और उन्हें पकड लिया, तब कुन्तीपुत्र थोडे समयमें चैतन्य हो और शोकसे व्याकुल होकर ऐसे दीनवचन बोले। (७-८)

हमने पहले शत्रुओंको जीत लिया था, और अब फिर हार गये, दिव्य दृष्टिवाले महात्मा भी समय और हा-

शुशुभे स वृतो राजा वेदी त्रिभिरिवाग्निभिः ।
ते तं शयानं सम्प्रेक्ष्य राजानमतथोचितम् ॥ ८ ॥
अविषह्येन दुःखेन ततस्ते रुरुदुस्त्रयः ।
ततस्तु रुधिरं हस्तैर्मुखान्निर्मृज्य तस्य हि ।
रणे राज्ञः शयानस्य कृपणं पर्यदेवयन् ॥ ९ ॥

कृप उवाच— न दैवस्यातिभारोऽस्ति यदयं रुधिरोक्षितः ।
एकादशचमूभर्त्ता शेते दुर्योधनो हतः ॥ १० ॥
पश्य चामीकराभस्य चामीकरविभूषिताम् ।
गदां गदाप्रियस्येमां समीपे पतितां भुवि ॥ ११ ॥
इयमेनं गदा शूरं न जहाति रणे रणे ।
स्वर्गायापि व्रजन्तं हि न जहाति यशस्विनम् ॥ १२ ॥
पश्येमां सह वीरेण जाम्बूनदविभूषिताम् ।
शयानां शयने हर्म्ये भार्यां प्रीतिमतीमिव ॥ १३ ॥
योऽयं मूर्धाभिषिक्तानामग्रे जातः परन्तपः ।
स हतो ग्रसते पांसून्पश्य कालस्य पर्ययम् ॥ १४ ॥
येनाजौ निहता भूमावशेरत हतद्विषः ।

उस समय इन तीनों रुधिर भीगे वीरोंके बीचमें राजाकी ऐसी शोभा दीखती थी, जैसे तीन अग्नियोंके बीचमें प्रधान अग्नि थी। महाराजको अनुचित रीतिसे पडे देख तीनों वीर सांस लेकर रोने लगे। तब कृपाचार्य उनके पास गये और उनके मुखका रुधिर अपने हाथसे पोछकर रोकर कहने लगे। प्रारब्ध बहुत बडी वस्तु है देखो ग्यारह अक्षौहिणीके स्वामी राजा दुर्योधन आज पृथ्वीमें मूर्च्छित होकर सोते हैं देखो सोनेके समान रङ्गवाले गदाके प्यारे महाराजकी सोनेसे भूषित गदा पृथ्वीमें पडी है, यह गदा इस महात्मा यशस्वी वीरको किसी युद्धमें नहीं छोडती; अब स्वर्ग जाते समय भी इनको नहीं छोडती। (८-१२)

देखो यह सोनेके भूषणवाली गदा इन महात्मा वीरके सङ्ग प्यारी स्त्रीके समान सोती है। हाय! यही शत्रुनाशन महाराज पहिले राजाओंके आगे चलते थे, आज पृथ्वीमें पडे हुए धूल खाते हैं। समय बडा कठिन है। हाय! जिस कुरुराजके हाथसे मरे हुए बहुतसे शत्रु पृथ्वीमें सोते थे, वही आज शत्रुओंके हाथसे मरकर पृथ्वीमें सोते हैं,

जीयमाना जयन्त्यन्ये जयमाना वयं जिताः ॥ १० ॥
हत्वा भ्रातॄन्वयस्यांश्च पितॄन्पुत्रान्सुहृद्गणान् ।
बन्धूनमात्यान्पौत्रांश्च जित्वा सर्वान् जिता वयम् ॥ ११ ॥
अनर्थो ह्यर्थसङ्काशस्तथाऽनर्थोऽर्थदर्शनः ।
जयोऽयमजयाकारो जयस्तस्मात्पराजयः ॥ १२ ॥
यज्जित्वा तप्यते पश्चादापन्न इव दुर्मतिः ।
कथं मन्येत विजयं ततो जिततरः परैः ॥ १३ ॥
येषामर्थाय पापं स्याद्विजयस्य सुहृद्वधैः ।
निर्जितैरप्रमत्तैर्हि विजिता जितकाशिनः ॥ १४ ॥
कर्णिनालीकदंष्ट्रस्य खड्गजिह्वस्य संयुगे ।
चापव्यात्तस्य रौद्रस्य ज्यातलस्वननादिनः ॥ १५ ॥
क्रुद्धस्य नरसिंहस्य संग्रामेष्वपलायिनः ।
ये व्यमुञ्चन्त कर्णस्य प्रमादात्त इमे हताः ॥ १६ ॥
रथह्रदं शरवर्षोर्मिमन्तं रत्नाचितं वाहनराजियुक्तम् ।
शक्त्यृष्टिमीनध्वजनागनक्रं शरासनावर्तमहेषुफेनम् ॥ १७ ॥
संग्रामचन्द्रोदयवेगवेलं द्रोणार्णवं ज्यातलनेमिघोषम् ।

---

गोंकी गतिको नहीं जान सके, देखो कोई हारकर हारता है, और हम जीतकर हार गये, भाई, पिता, बन्धु, मित्र, पुत्र और पोतोंको मारकर भी हम लोग पीछे हार गये, अर्थोंको विचारना और देखना भी अनर्थ ही है, हमारी यह विजय भी पराजयके समान होगई जिस विजयको पाकर दुर्बुद्धि राजाको शोच करना पडे, उसे बुद्धिमान् विजय क्यों कहेंगे, यह तो पराजयसे भी अधिक दुःखदायक है, जिन मित्रोंके लिये हम पाप और विजय करनेकी इच्छा करते थे, वेही हमारे मित्र [illegible] गये। (१–१४)

जिन्होंने बाणरूपी फण, खड्गरूपी जिह्वा, धनुषरूपी खुले हुए मुख, धनुष टङ्काररूपी हुङ्कार वाले पुरुष वीर, कर्णरूपी क्रोधी सिंहके विषको शान्त किया था, वही युद्धमें न भागनेवाले हमारे मित्र लोग हमारी भूलसे मारे गये। जो रथ और बाण नाव, [illegible] वेही

स भूमौ निहतः शेते कुरुराजः परैरयम् ॥ १५ ॥
भयान्नमन्ति राजानो यस्य स्म शतसङ्घशः ।
स वीरशयने शेते क्रव्याद्भिः परिवारितः ॥ १६ ॥
उपासत द्विजाः पूर्वमर्थहेतोर्यमीश्वरम् ।
उपासते च तं ह्यद्य क्रव्यादा मांसहेतवः ॥ १७ ॥
सञ्जय उवाच— तं शयानं कुरुश्रेष्ठं ततो भरतसत्तम ।
अश्वत्थामा समालोक्य करुणं पर्यदेवयत् ॥ १८ ॥
आहुस्त्वां राजशार्दूल मुख्यं सर्वधनुष्मताम् ।
धनाध्यक्षोपमं युद्धे शिष्यं सङ्कर्षणस्य च ॥१९॥
कथं विवरमद्राक्षीद्भीमसेनस्तवानघ ।
बलिनं कृतिनं नित्यं स च पापात्मवान्नृप ॥ २० ॥
कालो नूनं महाराज लोकेऽस्मिन्बलवत्तरः ।
पश्यामो निहतं त्वां च भीमसेनेन संयुगे ॥ २१ ॥
कथं त्वां सर्वधर्मज्ञं क्षुद्रः पापो वृकोदरः ।
निकृत्या हतवान्मन्दो नूनं कालो दुरत्ययः ॥ २२ ॥
धर्मयुद्धे ह्यधर्मेण समाहूयौजसा मृधे ।
गदया भीमसेनेन निर्भिन्ने सक्थिनी तव ॥ २३ ॥
अधर्मेण हतस्याजौ मृद्यमानं पदा शिरः ।

ये तैरुच्चावचशस्त्रनौभिस्ते राजपुत्रा निहताः प्रमादात् ॥ १८ ॥
न हि प्रमादात्परमस्ति कश्चिद्वधो नराणामिह जीवलोके।
प्रमत्तमर्था हि नरं समन्तात्त्यजन्त्यनर्थाश्च समाविशन्ति ॥ १९ ॥
ध्वजोत्तमाग्रोच्छ्रितधूमकेतुं शरार्चिषं कोपमहासमीरम्।
महाधनुर्ज्यातलनेमिघोषं तनुत्रनानाविधशस्त्रहोमम् ॥ २० ॥
महाचमूकक्षदवाभिपन्नं महाहवे भीष्ममयाग्निदाहम्।
ये सेहुरात्तायुधतीक्ष्णवेगं ते राजपुत्रा निहताः प्रमादात् ॥ २१ ॥
न हि प्रमत्तेन नरेण शक्यं विद्या तपः श्रीर्विपुलं यशो वा।
पश्याप्रमादेन निहत्य शत्रून्सर्वान्महेन्द्रं सुखमेधमानम् ॥ २२ ॥
इन्द्रोपमान्पार्थिव पुत्रपौत्रान्पश्याविशेषेण हतान्प्रमादात्।
तीर्त्वा समुद्रं वणिजः समृद्धा मग्नाः कुनद्यामिव हेलमानाः ॥२३॥
अमर्षितैर्ये निहताः शयाना निःसंशयं ते त्रिदिवं प्रपन्नाः।
कृष्णां तु शोचामि कथं नु साध्वी शोकार्णवं साऽद्य विशल भीता ॥२४॥
भ्रातॄंश्च पुत्रांश्च हतान्निशम्य पाञ्चालराजं पितरं च वृद्धम्।
ध्रुवं विसंज्ञा पतिता पृथिव्यां सा शोष्यते शोककृशाङ्गयष्टिः ॥२५॥

---

राजपुत्र आज हमारी भूलसे मारे गए। (१५-१८)

देखो जगत्में भूलके समान और कोई बुरी बात नहीं है, भूले हुये मनुष्यके सब अभिप्राय नष्ट हो जाते हैं और अनेक अनर्थ उसको घेर लेते हैं। जिन्होंने ऊंची ध्वजारूपी धुआं, बाण ज्वाला, क्रोध वायु, धनुष पहिए और तल शब्दरूपी शब्द और अनेक प्रकार के शस्त्र आहुतियुक्त भीष्मरूपी सेना में जलती हुई अग्नि को सहा था, वही राजपुत्र आज भूलसे मारे गये। प्रमत्त मनुष्य विद्या, तप, लक्ष्मी और यशको नहीं पा सक्ता, देखो शत्रुओंको मारकर इन्द्र, सुखसे राज करते हैं। (१९-२२)

देखो आज ये इन्द्रके समान पराक्रमी राजपुत्र और राजोंके पोते भूलसे सामान्य मनुष्योंके समान इस प्रकार मारे गये, जैसे धनधान्य भरे बनिये समुद्रको पार होकर छोटी नदीमें तरते हुए डूब जांय, हमें यह निश्चय है, कि हमारे सब सम्बन्धी सोते हुये मारे गये, अब हमें कुछ शोक नहीं है, वे सब निश्चय ही स्वर्गको चले गए। हमें केवल पतिव्रता द्रौपदीका शोक है, कि वह अपने भाई, पुत्र और बूढे पिताको मारा हुआ सुन किस दशाको प्राप्त होगी? (२३-

य उपेक्षितवान् क्षुद्रं धिक्कृष्णं धिग्युधिष्ठिरम् ॥२४॥
युद्धेष्वपवदिष्यन्ति योधा नूनं वृकोदरम् ।
यावत्स्थास्यन्ति भूतानि निकृत्याह्यसि पातितः ॥२५॥
ननु रामोऽब्रवीद्राजंस्त्वां सदा यदुनन्दनः ।
दुर्योधनसमो नास्ति गदया इति वीर्यवान् ॥ २६ ॥
श्लाघते त्वां हि वार्ष्णेयो राजन्संसत्सु भारत ।
स शिष्यो मम कौरव्यो गदायुद्ध इति प्रभो ॥ २७ ॥
यां गतिं क्षत्रियस्याहुः प्रशस्तां परमर्षयः ।
हतस्याभिमुखस्याजौ प्राप्तस्त्वमसि तां गतिम् ॥ २८ ॥
दुर्योधन न शोचामि त्वामहं पुरुषर्षभ ।
हतपुत्रौ तु शोचामि गान्धारीं पितरं च ते ॥ २९ ॥
भिक्षुकौ विचरिष्येते शोचंतौ पृथिवीमिमाम् ।
धिगस्तु कृष्णं वार्ष्णेयमर्जुनं चापि दुर्मतिम् ॥ ३० ॥
धर्मज्ञमानिनौ यौ त्वां वध्यमानमुपेक्षताम् ।
पाण्डवाश्चापि ते सर्वे किं वक्ष्यन्ति नराधिप ॥ ३१ ॥

मारडाला । इससे हम जानते हैं, कि समयकी गति बडी कठिन है, धर्मसे बुलाकर और धर्म युद्ध आरम्भ करके भीमसेनने आपकी जङ्घा तोड दी, इससे अधिक अधर्म और क्या होगा ? जिसने अधर्मसे मरे हुये आपके शिरमें पैर रखते भीमसेनको देखा उस क्षुद्र, कृष्ण और युधिष्ठिरको धिक्कार है, जब तक पृथ्वीमें मनुष्य रहेंगे तब तक सब वीर भीमसेनकी अवश्य निन्दा करेंगे। ( २०–२५ )

हे महाराज ! यदुकुलश्रेष्ठ वीर बलराम सदा कहा करते थे कि गदा युद्धमें दुर्योधनके समान कोई वीर नहीं है, बलराम सब सभाओंमें आपकी प्रशंसा किया करते थे, कि राजा दुर्योधन गदायुद्धमें हमारे शिष्य है, हे महाराज ! महामुनियोंने जो क्षत्रियोंके लिये उत्तम गति कही है, युद्धमें मरनेसे आपको वही गति प्राप्त हुई । ( २६—२८ )

हे पुरुषसिंह दुर्योधन ! हम आपका कुछ शोच नहीं करते परन्तु हमें पुत्र हीन गान्धारी, और आपके पिताजीका शोच है, वे दोनों पुत्र शोकसे व्याकुल होकर भिक्षुकके समान पृथ्वीमें घूमेंगे, दुर्बुद्धी कृष्ण और अर्जुनको धिक्कार है, जो धर्मज्ञ अभिमान करनेवाले और आप-

तच्छोकजं दुःखमपारयन्ती कथं भविष्यत्युचिता सुखानाम् ।
पुत्रक्षयभ्रातृवधप्रणुन्ना प्रदह्यमानेन हुताशनेन ॥ २६ ॥
इत्येवमार्त्तः परिदेवयन्स राजा कुरूणां नकुलं बभाषे ।
गच्छानयैनामिह मन्दभाग्यां समातृपक्षामिति राजपुत्रीम् ॥२७॥
माद्रीसुतस्तत्परिगृह्य वाक्यं धर्मेण धर्मप्रतिमस्य राज्ञः ।
ययौ रथेनालयमाशु देव्याः पञ्चालराजस्य च यत्र दाराः ॥ २८ ॥
प्रस्थाप्य माद्रीसुतमाजमीढः शोकार्दितस्तैः सहितः सुहृद्भिः ।
रोरूयमाणः प्रययौ सुतानामायोधनं सूतगणानुकीर्णम् ॥ २९ ॥
स तत्प्रविश्याशिवमुग्ररूपं ददर्श पुत्रान्सुहृदः सर्व्वांश्च ।
भूमौ शयानान् रुधिरार्द्रगात्रान्विभिन्नदेहान्प्रहृतोत्तमाङ्गान् ॥३०॥
स तांस्तु दृष्ट्वा भृशमार्त्तरूपो युधिष्ठिरो धर्मभृतां वरिष्ठः ।
उच्चैः प्रचुक्रोश च कौरवाग्र्यः पपात चोर्व्यां सगणो विसंज्ञः ॥३१॥५६९

इति श्रीमहाभारते शत० सौप्तिके पर्वणि ऐषीकपर्वणि युधिष्ठिरशिविरप्रवेशे दशमोऽध्यायः ॥ १० ॥

निश्चय ही वह शोकसे व्याकुल होकर पृथ्वीमें गिर पड़ेगी । आज वह सुख भोगने योग्य द्रौपदी इस शोकसमुद्रके पार कैसे जायगी ? उसकी क्या दशा होगी अपने भाई पुत्रोंको मरा हुआ सुन उसकी ऐसी दशा होजायगी जैसे आगमें जलते हुए मनुष्यकी । कुरुकुलके स्वामी महाराज युधिष्ठिर इस प्रकार रोते हुए व्याकुल होकर नकुलसे बोले, तुम जाओ उस

कथं दुर्योधनोऽस्माभिर्हत इत्यनपत्रपाः।
धन्यस्त्वमसि गान्धारे यस्त्वमायोधने हतः ॥ ३२ ॥
प्रायशोऽभिमुखः शत्रून्धर्मेण पुरुषर्षभ।
हतपुत्रा हि गान्धारी निहतज्ञातिबान्धवा ॥ ३३ ॥
प्रज्ञाचक्षुश्च दुर्धर्षः कां गतिं प्रतिपत्स्यते।
धिगस्तु कृतवर्माणं मां कृपं च महारथम् ॥ ३४ ॥
ये वयं न गताः स्वर्गं त्वां पुरस्कृत्य पार्थिवम्।
दातारं सर्वकामानां रक्षितारं प्रजाहितम् ॥ ३५ ॥
यद्वयं नानुगच्छाम त्वां धिगस्मान्नराधमान्।
कृपस्य तव वीर्येण मम चैव पितुश्च मे ॥ ३६ ॥
सभृत्यानां नरव्याघ्र रत्नवन्ति गृहाणि च।
तव प्रसादादस्माभिः समित्रैः सहबान्धवैः ॥ ३७ ॥
अवाप्ताः क्रतवो मुख्या बहवो भूरिदक्षिणाः।
कुतश्चापीदृशं पापाः प्रवर्तिष्यामहे वयम् ॥ ३८ ॥
यादृशेन पुरस्कृत्य त्वं गतः सर्वपार्थिवान्।
वयमेव त्रयो राजन् गच्छन्तं परमां गतिम् ॥ ३९ ॥
यद्वै त्वां नानुगच्छामस्तेन धक्ष्यामहे वयम्।
तत्स्वर्गस्थानहीनार्थाः स्मरन्तः सुकृतस्य ते ॥ ४० ॥
किं नाम तद्धि कर्म स्याद्येन त्वां न व्रजाम वै।

वैशम्पायन उवाच–स दृष्ट्वा निहतान्संख्ये पुत्रान्पौत्रान्सर्वांस्तथा।
महादुःखपरीतात्मा बभूव जनमेजय ॥ १ ॥
ततस्तस्य महान् शोकः प्रादुरासीन्महात्मनः।
स्मरतः पुत्रपौत्राणां भ्रातॄणां स्वजनस्य ह ॥ २ ॥
तमश्रुपरिपूर्णाक्षं वेपमानमचेतसम्।
सुहृदो भृशसंविग्नाः सांत्वयांचक्रिरे तदा ॥ ३ ॥
ततस्तस्मिन् क्षणे कल्पो रथेनादित्यवर्चसा।
नकुलः कृष्णया सार्धमुपायात्परमार्त्तया ॥ ४ ॥
उपप्लव्यं गता सा तु श्रुत्वा सुमहदप्रियम्।
तदा विनाशं सर्वेषां पुत्राणां व्यथिताऽभवत् ॥ ५ ॥
कम्पमानेव कदली वातेनाभिसमीरिता।
कृष्णा राजानमासाद्य शोकार्त्तान्यपतद्भुवि ॥ ६ ॥
बभूव वदनं तस्याः सहसा शोककर्षितम्।
फुल्लपद्मपलाशाक्ष्यास्तमोग्रस्त इवांशुमान् ॥ ७ ॥
ततस्तां पतितां दृष्ट्वा संरम्भी सत्यविक्रमः।
बाहुभ्यां परिजग्राह समुत्पत्य वृकोदरः ॥ ८ ॥

सौप्तिक पर्वमें ग्यारह अध्याय।

श्रीवैशम्पायन मुनि बोले, हे राजन जनमेजय! अपने बेटे, पोते और सम्बन्धियोंको मरा हुआ देखकर महाराज अत्यन्त शोकसे व्याकुल होगये; तब महात्मा युधिष्ठिर बेटे, पोते, भाई और सम्बन्धियोंके शोकसे व्याकुल होकर आंखोंमें आंसू भरकर कांपने लगे तब सब रोते हुये मित्र उन्हें समझाने लगे। (१—३)

उसी समय प्रातःकालके सूर्यके समान चमकते हुये, रथपर बैठे हुए रोती हुई द्रौपदीके सहित नकुल आ पहुंचे। द्रौपदी पहिले ही उपप्लव (छावनी) को चली गई थीं, वहीं अपने पुत्रोंके मरनेका समाचार सुना और व्याकुल होगई, द्रौपदी महाराजके पास आकर और शोकसे व्याकुल होकर इस प्रकार पृथ्वीमें गिर पडी जैसे केलेका वृक्ष आंधीसे टूटकर गिर पडता है, उस समय फूले हुये कमलके समान नेत्रवाली द्रौपदीका मुख शोकसे व्याकुल होनेके कारण ऐसा होगया जैसा राहुके ग्रहण करनेसे चन्द्रमा। (४—७)

द्रौपदीको पृथ्वीमें पडी देख महापराक्रमी भीमसेनने अपने हाथोंसे उठा

दुःखं नूनं कुरुश्रेष्ठ चरिष्याम महीमिमाम् ॥ ४१ ॥
हीनानां नस्त्वया राजन्कुतः शान्तिः कुतः सुखम् ।
गत्वैव तु महाराज समेत्य च महारथान् ॥ ४२ ॥
यथाज्येष्ठं यथाश्रेष्ठं पूजयेर्वचनान्मम ।
आचार्यं पूजयित्वा च केतुं सर्वधनुष्मताम् ॥ ४३ ॥
हतं मयाद्य शंसेथा धृष्टद्युम्नं नराधिप ।
परिष्वजेथा राजानं बाल्हिकं सुमहारथम् ॥ ४४ ॥
सैन्धवं सोमदत्तं च भूरिश्रवसमेव च ।
तथा पूर्वगतानन्यान् स्वर्गे पार्थिवसत्तमान् ॥ ४५ ॥
अस्मद्वाक्यात्परिष्वज्य संपृच्छेस्त्वमनामयम् ॥४६॥

सञ्जय उवाच- इत्येवमुक्त्वा राजानं भग्नसक्थमचेतनम् ।
अश्वत्थामा समुद्वीक्ष्य पुनर्वचनमब्रवीत् ॥ ४७ ॥
दुर्योधन जीवसि त्वं वाक्यं श्रोत्रसुखं शृणु ।
सप्त पाण्डवतः शेषा धार्त्तराष्ट्रास्त्रयो वयम् ॥ ४८ ॥
ते चैव भ्रातरः पञ्च वासुदेवोऽथ सात्यकिः ।
अहं च कृतवर्मा च कृपः शारद्वतस्तथा ॥ ४९ ॥

---

आपके धर्मका स्मरण करेंगे, वह कौनसा कर्म आपका है, जिसका स्मरण हम नहीं करेंगे। ( ३२—४१ )

हे कुरुकुलश्रेष्ठ! अब हमको जगत्में दुःख ही भोगना शेष है, क्यों कि अब आपके बिना हमको सुख और शान्ति कहां? हे महाराज आप स्वर्गमें जाकर सब महारथियोंसे मिलकर हमारी ओरसे क्रमके अनुसार सबकी पूजा करना. फिर सब धनुषधारियोंमें श्रेष्ठ गुरुजीको प्रणाम करके कहना, कि मैंने धृष्टद्युम्नको मारडाला। फिर महारथ राजा बाह्लीक, सिन्धुराज जयद्रथ, सोमदत्त और भूरिश्रवादि स्वर्गमें बैठे राजोंसे मिलकर कुशल प्रश्न करना। (४२-४६)

सञ्जय बोले, जांघ टूटे मूर्च्छित राजासे ऐसा कहकर फिर उनके मुख-की ओर देखकर अश्वत्थामा बोले, हे महाराज दुर्योधन! अभी आप जीते हो तो कानको सुख देनेवाले, मेरे वचन सुनिये, अब पाण्डवोंकी सब सेनामें केवल सात मनुष्य शेष हैं और आपकी ओरसे हम तीन बचे हैं, पाण्डवोंकी ओर पांचों पाण्डव, छठे कृष्ण और सातवें सात्यकी, आपकी ओर मैं कृतवर्मा और कृपाचार्य। (४७-४९)

सा समाश्वासिता तेन भीमसेनेन भामिनी।
रुदती पाण्डवं कृष्णा सा हि भारतमब्रवीत् ॥ ९ ॥
दिष्ट्या राजन्नवाप्येमामखिलां भोक्ष्यसे महीम्।
आत्मजान् क्षत्रधर्मेण संप्रदाय यमाय वै ॥ १० ॥
दिष्ट्या त्वं कुशली पार्थ मत्तमातङ्गगामिनीम्।
अवाप्य पृथिवीं कृत्स्नां सौभद्रं न स्मरिष्यसि ॥ ११ ॥
आत्मजान् क्षत्रधर्मेण श्रुत्वा शूरान्निपातितान्।
उपप्लव्ये मया सार्धं दिष्ट्या त्वं न स्मरिष्यसि ॥ १२ ॥
प्रसुप्तानां वधं श्रुत्वा द्रौणिना पापकर्मणा।
शोकस्तपति मां पार्थ हुताशन इवाश्रयम् ॥ १३ ॥
तस्य पापकृतो द्रौणेर्न चेदद्य त्वया रणे।
ह्रियते सानुबन्धस्य युधि विक्रम्य जीवितम् ॥ १४ ॥
इहैव प्रायमासिष्ये तन्निबोधत पाण्डवाः।
न चेत्फलमवाप्नोति द्रौणिः पापस्य कर्मणः ॥ १५ ॥
एवमुक्त्वा ततः कृष्णा पाण्डवं प्रत्युपाविशत्।

लिया और समझाने लगे, तब रोती हुई द्रौपदी महाराजसे बोली, हे पृथ्वीनाथ! आज प्रारब्धहीसे आप इस सब पृथ्वीके राजा हुए, अब क्षत्रियोंके धर्मके पालनेवाले अपने बेटोंको यमराजकी

पापी अश्वत्थामाने मेरे पुत्रोंको सोते हुए मारडाला शोकसे व्याकुल होगई हूं, शोक मेरे शरीरको इस प्रकार तपाता है जैसे पास रक्खी हुई अग्नि वस्तुको। (८-१३)

कथं दुर्योधनोऽस्माभिर्हत इत्यनपत्रपाः।
धन्यस्त्वमसि गान्धारे यस्त्वमायोधने हतः ॥ ३२ ॥
प्रायशोऽभिमुखः शत्रून्धर्मेण पुरुषर्षभ।
हतपुत्रा हि गान्धारी निहतज्ञातिबान्धवा ॥ ३३ ॥
प्रज्ञाचक्षुश्च दुर्धर्षः कां गतिं प्रतिपत्स्यते।
धिगस्तु कृतवर्माणं मां कृपं च महारथम् ॥ ३४ ॥
ये वयं न गताः स्वर्गं त्वां पुरस्कृत्य पार्थिवम्।
दातारं सर्वकामानां रक्षितारं प्रजाहितम् ॥ ३५ ॥
यद्वयं नानुगच्छाम त्वां धिगस्मान्नराधमान्।
कृपस्य तव वीर्येण मम चैव पितुश्च मे ॥ ३६ ॥
सभृत्यानां नरव्याघ्र रत्नवन्ति गृहाणि च।
तव प्रसादादस्माभिः समित्रैः सहबान्धवैः ॥ ३७ ॥
अवाप्ताः क्रतवो मुख्या बहवो भूरिदक्षिणाः।
कुतश्चापीदृशं पापाः प्रवर्तिष्यामहे वयम् ॥ ३८ ॥
यादृशेन पुरस्कृत्य त्वं गतः सर्वपार्थिवान्।
वयमेव त्रयो राजन्गच्छन्तं परमां गतिम् ॥ ३९ ॥
यद्वै त्वां नानुगच्छामस्तेन पश्चात्पदं वयम्।
तत्स्वर्गहीना हीनार्थाः स्मरन्तः सुकृतस्य ते ॥ ४० ॥
किं नाम तद्भवेत्कर्म येन त्वां न व्रजाम वै।

युधिष्ठिरं याज्ञसेनी धर्मराजं यशस्विनी ॥ १६ ॥
दृष्ट्वोपविष्टां राजर्षिः पाण्डवो महिषीं प्रियाम् ।
प्रत्युवाच स धर्मात्मा द्रौपदीं चारुदर्शनाम् ॥ १७ ॥
धर्म्यं धर्मेण धर्मज्ञे प्राप्तास्ते निधनं शुभे ।
पुत्रास्ते भ्रातरश्चैव तान्न शोचितुमर्हसि ॥ १८ ॥
स कल्याणि वनं दुर्गं दूरं द्रौणिरितो गतः
तस्य त्वं पातनं संख्ये कथं ज्ञास्यसि शोभने ॥ १९ ॥

द्रौपद्युवाच— द्रोणपुत्रस्य सहजो मणिः शिरसि मे श्रुतः ।
निहत्य संख्ये तं पापं पश्येयं मणिमाहृतम् ॥ २० ॥
राजन् शिरसि ते कृत्वा जीवेयमिति मे मतिः ।
इत्युक्त्वा पाण्डवं कृष्णा राजानं चारुदर्शना॥ २१ ॥
भीमसेनमथागत्य परमं वाक्यमब्रवीत् ।
त्रातुमर्हसि मां भीम क्षत्रधर्ममनुस्मरन् ॥ २२ ॥
जहि तं पापकर्माणं शम्बरं मघवानिव ।
न हि ते विक्रमे तुल्यः पुमानस्तीह कश्चन ॥ २३ ॥
श्रुतं तत्सर्वलोकेषु परमव्यसने यथा ।
द्वीपोऽभूस्त्वं हि पार्थानां नगरे वारणावते ॥ २४ ॥

दुःखं नूनं कुरुश्रेष्ठ चरिष्याम महीमिमाम् ॥ ४१ ॥
हीनानां नस्त्वया राजन्कुतः शान्तिः कुतः सुखम्।
गत्वैव तु महाराज समेत्य च महारथान् ॥ ४२ ॥
यथाज्येष्ठं यथाश्रेष्ठं पूजयेर्वचनान्मम।
आचार्यं पूजयित्वा च केतुं सर्वधनुष्मताम् ॥ ४३ ॥
हतं मयाद्य शंसेथा धृष्टद्युम्नं नराधिप।
परिष्वजेथा राजानं बाल्हिकं सुमहारथम् ॥ ४४ ॥
सैन्धवं सोमदत्तं च भूरिश्रवसमेव च।
तथा पूर्वगतानन्यान् स्वर्गे पार्थिवसत्तमान् ॥ ४५ ॥
अस्मद्वाक्यात्परिष्वज्य संपृच्छेस्त्वमनामयम् ॥४६॥
सञ्जय उवाच- इत्येवमुक्त्वा राजानं भग्नसक्थमचेतनम्।
अश्वत्थामा समुद्वीक्ष्य पुनर्वचनमब्रवीत् ॥ ४७ ॥
दुर्योधन जीवसि त्वं वाक्यं श्रोत्रसुखं शृणु।
सप्त पाण्डवतः शेषा धार्तराष्ट्रास्त्रयो वयम् ॥ ४८ ॥
ते चैव भ्रातरः पञ्च वासुदेवोऽथ सात्यकिः।
अहं च कृतवर्मा च कृपः शारद्वतस्तथा ॥ ४९ ॥

---

आपके धर्मका स्मरण करेंगे, वह कौनसा धर्म आपका है, जिसका स्मरण हम नहीं करेंगे। ( ३२—४१ )

हे कुरुकुलश्रेष्ठ! अब हमको जगत्में दुःख ही भोगना शेष है, क्यों कि अब आपके बिना हमको सुख और शान्ति कहां? हे महाराज आप स्वर्गमें जाकर सब महारथियोंसे मिलकर हमारी ओरसे क्रमके अनुसार सबकी पूजा करना, फिर सब धनुषधारियोंमें श्रेष्ठ गुरुजीको प्रणाम करके कहना, कि मैंने धृष्टद्युम्नको मारडाला। फिर महारथ राजा बाल्हिक, सिन्धुराज जयद्रथ, सोमदत्त और भूरिश्रवादि स्वर्गमें बैठे राजोंसे मिलकर कुशल प्रश्न करना। ( ४२-४६ )

सञ्जय बोले, जांघ टूटे मूर्छित राजासे ऐसा कहकर फिर उनके मुख-की ओर देखकर अश्वत्थामा बोले, हे महाराज दुर्योधन! अभी आप जीते हो तो कानको सुख देनेवाले, मेरे वचन सुनिये, अब पाण्डवोंकी सब सेनामें केवल सात मनुष्य शेष हैं और हमलोगोंमें केवल तीन ही बचे हैं, पाण्डवोंमें पांचो पाण्डव, कृष्ण और सात्यकि, हमलोगोंमें मैं, कृतवर्मा और कृपाचार्य ही बचे हैं ( ४७-४९ )

हिडिम्बदर्शने चैव तथा त्वमभवो गतिः ।
तथा विराटनगरे कीचकेन भृशार्दिताम् ॥ २५ ॥
मामप्युद्धृतवान्कृच्छ्रात्पौलोमीं मघवानिव ।
यथैतान्यकृथाः पार्थ महाकर्माणि वै पुरा ॥ २६ ॥
तथा द्रौणिममित्रघ्नं विनिहत्य सुखी भव ।
तस्या बहुविधं दुःखं निशम्य परिदेवितम् ॥ २७ ॥
न चामर्षत कौन्तेयो भीमसेनो महाबलः ।
स काञ्चनविचित्राङ्गमारुरोह महारथम् ॥ २८ ॥
आदाय रुचिरं चित्रं समार्गणगुणं धनुः ।
नकुलं सारथिं कृत्वा द्रोणपुत्रवधे धृतः ॥ २९ ॥
विस्फार्य सशरं चापं तूर्णमश्वानचोदयत् ।
ते हयाः पुरुषव्याघ्र चोदिता वातरंहसः ॥ ३० ॥
वेगेन त्वरिता जग्मुर्हरयः शीघ्रगामिनः ।
शिबिरात्स्वाद्गृहीत्वा स रथस्य पदमच्युतः ॥ ३१ ॥ [४००]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां सौप्तिकपर्वणि ऐषीकपर्वणि
द्रौणिवधार्थं भीमसेनगमने एकादशोऽध्यायः ॥ ११ ॥

वैशम्पायन उवाच-तस्मिन्प्रयाते दुर्धर्षे यदूनामृषभस्ततः ।

अब्रवीत्पुण्डरीकाक्षः कुन्तीपुत्रं युधिष्ठिरम् ॥ १ ॥
एष पाण्डव ते भ्राता पुत्रशोकपरायणः ।
जिघांसुर्द्रौणिमाक्रन्दे एक एवाभिधावति ॥ २ ॥
भीमः प्रियस्ते सर्वेभ्यो भ्रातृभ्यो भरतर्षभ ।
तं कृच्छ्रगतमद्य त्वं कस्मान्नाभ्युपपद्यसे ॥ ३ ॥
यत्तदाऽऽचष्ट पुत्राय द्रोणः परपुरञ्जयः ।
अस्त्रं ब्रह्मशिरो नाम दहेत पृथिवीमपि ॥ ४ ॥
तन्महात्मा महाभागः केतुः सर्वधनुष्मताम् ।
प्रत्यपादयदाचार्यः प्रीयमाणो धनञ्जयम् ॥ ५ ॥
तं पुत्रोऽप्येक एवैनमन्वयाचदमर्षणः ।
ततः प्रोवाच पुत्राय नातिहृष्टमना इव ॥ ६ ॥
विदितं चापलं ह्यासीदात्मजस्य दुरात्मनः ।
सर्वधर्मविदाचार्यः सोऽन्वशात्स्वसुतं ततः ॥ ७ ॥
परमापद्गतेनापि न स्म तात त्वया रणे ।
इदमस्त्रं प्रयोक्तव्यं मानुषेषु विशेषतः ॥ ८ ॥
इत्युक्तवान्गुरुः पुत्रं द्रोणः पश्चादथोक्तवान् ।

पार्षतं चार्दयामास निश्चेष्टं सर्वमर्मसु ।
स हन्यमानः समरे गौतमेन महात्मना ॥ ११ ॥
कर्त्तव्यं न स्म जानाति मोहेन महता वृतः ।
तमब्रवीत्ततो यन्ता कच्चित्क्षेमं तु पार्षत ॥ १२ ॥
ईदृशं व्यसनं युद्धे न ते दृष्टं मया क्वचित् ।
दैवयोगात्तु ते बाणा नापतन्मर्मभेदिनः ॥ १३ ॥
प्रेषिता द्विजमुख्येन मर्माण्युद्दिश्य सर्वतः ।
व्यावर्तये रथं तूर्णं नदीवेगमिवार्णवात् ॥ १४ ॥
अवध्यं ब्राह्मणं मन्ये येन ते विक्रमो हतः ।
धृष्टद्युम्नस्ततो राजञ्शनकैरब्रवीद्वचः ॥ १५ ॥
मुह्यते मे मनस्तात गात्रस्वेदश्च जायते ।
वेपथुश्च शरीरे मे रोमहर्षश्च सारथे ॥ १६ ॥
वर्जयन्ब्राह्मणं युद्धे शनैर्याहि यतोऽर्जुनः ।
अर्जुनं भीमसेनं वा समरे प्राप्य सारथे ॥ १७ ॥
क्षेममद्य भवेदेवमेषा मे नैष्ठिकी मतिः ।
ततः प्रायान्महाराज सारथिस्त्वरयन्हयान् ॥ १८ ॥
यतो भीमो महेष्वासो युयुधे तव सैनिकैः ।

सन्धियोंमें अनेक बाण मारे, उस समय धृष्टद्युम्न ऐसे मोहित हुए, कि कुछ न कर सके, तब उनके सारथीने कहा। हे महाराज कुमार ! आप कुशलसे तो है ? हमने इससे पहले किसी युद्धमें ऐसी आपकी दशा नहीं देखी थी, आज हमारी प्रारब्धसे आपके शरीरमें मर्मभेदी बाण नहीं लगे रहे है। ब्राह्मणश्रेष्ठ कृपाचार्य आपके मर्म स्थानोंमें बाण मार रहे है। इस लिये हमारी इच्छा यह है, कि जैसे समुद्रको प्राप्त होकर नदीका वेग पीछे हटता है, तैसे ही आपके रथको युद्धमे लौटावें। ब्राह्मण अवध्य है इसीलिये आपका बल नष्ट होगया। (१०–१५)

सारथीके ऐसे वचन सुन धृष्टद्युम्न धीरसे बोले, हे सारथी ! मेरी बुद्धि नष्ट होगयी, मन घबडा रहा है, शरीर पसीनेमे भीजा जाता है, रोवें खडे हुए जाते हैं और अङ्ग कांप रहे है। हे सारथे ! तुम हमारे रथको इस ब्राह्मणके रथसे बचाकर जहां अर्जुन वा भीमसेन हों वहां लेचलो। हमको निश्चय है कि भीमसेन या अर्जुनके पास जानेहीसे हमारा कल्याण होगा। (१५—१८)

प्रद्रुतं च रथं दृष्ट्वा धृष्टद्युम्नस्य मारिष ॥ १९ ॥
किरञ्शरशतान्येव गौतमोऽनुययौ तदा।
शङ्खं च पूरयामास मुहुर्मुहुररिन्दमः ॥ २० ॥
पार्षतं त्रासयामास महेन्द्रो नमुचिं यथा।
शिखण्डिनं तु समरे भीष्ममृत्युं दुरासदम् ॥ २१ ॥
हार्दिक्यो वारयामास स्मयन्निव मुहुर्मुहुः।
शिखण्डी तु समासाद्य हृदिकानां महारथम् ॥ २२ ॥
पञ्चभिर्निशितैर्भल्लैर्जत्रुदेशे समाहनत्।
कृतवर्मा तु संक्रुद्धो भित्त्वा षष्ट्या पतत्रिभिः ॥ २३ ॥
धनुरेकेन चिच्छेद हसन्राजन्महारथः।
अथान्यद्धनुरादाय द्रुपदस्यात्मजो बली ॥ २४ ॥
तिष्ठ तिष्ठेति संक्रुद्धो हार्दिक्यं प्रत्यभाषत।
ततोऽस्य नवतिं बाणान्रुक्मपुङ्खान्सुतेजनान् ॥ २५ ॥
प्रेषयामास राजेन्द्र तेऽस्याभ्रश्यन्त वर्मतः।
वितथांस्तान्समालक्ष्य पतितांश्च महीतले ॥ २६ ॥
क्षुरप्रेण सुतीक्ष्णेन कार्मुकं चिच्छिदे भृशम्।
अथैनं छिन्नधन्वानं भग्नशृङ्गमिवर्षभम् ॥ २७ ॥

धृष्टद्युम्नके ऐसे वचन सुन सारथीने घोडोंको शीघ्र हांका, थोडे समयमें जहां भीमसेन युद्ध कर रहे थे, वहां जा पहुंचे। हे राजन्! धृष्टद्युम्नको भागते देख शत्रुनाशन कृपाचार्य बाण छोडते और शङ्ख बजाते उनके पीछे दौडे, कृपाचार्यने धृष्टद्युम्नको इस प्रकार डराया जैसे इन्द्रने नमुचिको। (१८—२१)

अनन्तर भीष्मके मारनेवाले महापराक्रमी शिखण्डीको हार्दिक्य युद्धमें निवारण करने लगे, शिखण्डीने कृतवर्माके जत्रुदेशमें पांच तेज बाण चलाये, महारथ कृतवर्माने हंसकर उन सब बाणोंको अपने साठ बाणोंसे काट दिया और एक बाणसे शिखण्डीका धनुष काटदिया। तब बलवान् शिखण्डीने क्रोध करके दूसरा धनुष धारण किया, और कृतवर्मासे खडा रह! कहके शिखण्डीने सोनेके पङ्खवाले नव्वे तेज बाण कृतवर्माकी ओर चलाये, वे बाण कृतवर्माके कवचमें लगकर पृथ्वीमें गिर गये। २१—२६

शिखण्डीने अपने बाणोंको विफल होकर पृथ्वीमें गिरते देख एक तीक्ष्ण क्षुरप्र बाणसे कृतवर्माका धनुष काट दिया।

न त्वं जातु सतां मार्गे स्थातेति पुरुषर्षभ ॥ ९ ॥
स तदाज्ञाय दुष्टात्मा पितुर्वचनमप्रियम् ।
निराशः सर्वकल्याणैः शोकात्पर्यचरन्महीम् ॥ १० ॥
ततस्तदा कुरुश्रेष्ठ वनस्थे त्वयि भारत ।
अवसद् द्वारकामेत्य वृष्णिभिः परमार्चितः ॥ ११ ॥
स कदाचित्समुद्रान्ते वसन् द्वारवतीमनु ।
एकएकं समागम्य मामुवाच हसन्निव ॥ १२ ॥
यत्तदुग्रं तपः कृष्ण चरन्सत्यपराक्रमः ।
अगस्त्याद्भारताचार्यः प्रत्यपद्यत मे पिता ॥ १३ ॥
अस्त्रं ब्रह्मशिरो नाम देवगन्धर्वपूजितम् ।
तदद्य मयि दाशार्ह यथा पितरि मे तथा ॥ १४ ॥
अस्मत्तस्तदुपादाय दिव्यमस्त्रं यदूत्तम ।
ममाप्यस्त्रं प्रयच्छ त्वं चक्रं रिपुहणं रणे ॥ १५ ॥
स राजन्प्रीयमाणेन मयाऽप्युक्तः कृताञ्जलिः ।
याचमानः प्रयत्नेन मत्तोऽस्त्रं भरतर्षभ ॥ १६ ॥
देवदानवगन्धर्वमनुष्यपतगोरगाः ।

जीवितान्तकरं घोरं व्यसृजत्त्वरयान्वितः।
स तेनाभिहतो राजन्मूर्च्छामाशु समाविशत्॥ ३६ ॥
ध्वजयष्टिं च सहसा शिश्रिये कश्मलावृतः।
अपोवाह रणात्तूर्णं सारथी रथिनां वरम् ॥ ३७ ॥
हार्दिक्यशरसन्तप्तं निःश्वसन्तं पुनः पुनः।
पराजिते ततः शूरे द्रुपदस्यात्मजे प्रभो।
व्यद्रवत्पाण्डवी सेना व्यधमाना समन्ततः ॥३८॥ [१०६८]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां कर्णपर्वणि सकुलयुद्धे षड्विंशोऽध्यायः ॥ २६ ॥

सञ्जय उवाच— श्वेताश्वोऽथ महाराज व्यधमत्तावकं बलम्।
यथा वायुः समासाद्य तूलराशिं समन्ततः ॥ १ ॥
प्रत्युद्ययुस्त्रिगर्त्तास्तं शिबयः कौरवैः सह।
शाल्वाः संशप्तकाश्चैव नारायणबलं च तत् ॥ २ ॥
सत्यसेनश्चन्द्रदेवो मित्रदेवः सुतञ्जयः।
सौश्रुतिश्चित्रसेनश्च मित्रवर्मा च भारत ॥ ३ ॥
त्रिगर्त्तराजः समरे भ्रातृभिः परिवारितः।
पुत्रैश्चैव महेष्वासैर्नानाशस्त्रविशारदैः ॥ ४ ॥
व्यसृजन्त शरव्रातान्किरन्तोऽर्जुनमाहवे।

शत्रुनाशन शिखण्डीके शरीरमें मारा, उस वाणके लगनेसे महारथ शिखण्डीको मूर्च्छा होगयी, और वह ध्वजा के बांसको पकडकर बैठ गया, तब सारथी ने उनके रथको शीघ्रतासे युद्धसे हटा दिया॥ कृतवर्मा के वाणोंसे पीडित होकर शिखण्डी बार बार सांस लेने लगे, हे महाराज! द्रुपदके पुत्र महारथ शिखण्डीको युद्धसे हटता हुआ देखकर पाण्डवोंकी सेना इधर उधर भागने लगी॥ (३४-३८) [१०६८]

कर्णपर्वमें छब्बीस अध्याय समाप्त।

कर्णपर्वमें सताईस अध्याय।

सञ्जय बोले, हे राजन् धृतराष्ट्र! जैसे वायु रुईको उडाता है, तैसे ही अर्जुनने तुम्हारी सेनाको मारना और भगाना आरम्भ किया॥ उनसे लडनेके लिये त्रिगर्त्त, शिबी, कौरव, शाल्व, संशप्तक और नारायणी सेनाके वीर चले। हे भारत! सत्यसेन, चन्द्रदेव, मित्रदेव, सुतञ्जय, सौश्रुति, चित्रसेन, मित्रवर्मा और त्रिगर्त्त देशका राजा अपने भाई और पुत्रोंके सहित अर्जुनसे युद्ध करनेको आये॥ १-४

वे सब युद्धविद्याके जाननेवाले महा

न समा मम वीर्यस्य शतांशेनापि पिण्डिताः॥ १७ ॥
इदं धनुरियं शक्तिरिदं चक्रमियं गदा।
यद्यदिच्छसि चेदस्त्रं मत्तस्तत्तद्ददामि ते ॥ १८ ॥
यच्छक्नोषि समुद्यन्तुं प्रयोक्तुमपि वारणे।
तद्गृहाण विनाऽस्त्रेण यन्मे दातुमभीप्ससि ॥ १९ ॥
स सुनाभं सहस्रारं वज्रनाभमयस्मयम्।
वव्रे चक्रं महाभागो मत्तः स्पर्धन्मया सह ॥ २० ॥
गृहाण चक्रमित्युक्तो मया तु तदनन्तरम्।
जग्राहोत्पत्य सहसा चक्रं सव्येन पाणिना ॥ २१ ॥
न चैनमशकत्स्थानात्सञ्चालयितुमच्युत।
अथैनं दक्षिणेनापि ग्रहीतुमुपचक्रमे ॥ २२ ॥
सर्वयत्नबलेनापि गृह्णन्नेवमिदं ततः।
ततः सर्वबलेनापि यदैनं न शशाक ह ॥ २३ ॥
उद्धर्तुं वा चालयितुं द्रौणिः परमदुर्मनाः।
कृत्वा यत्नं परिश्रान्तः स न्यवर्तत भारत ॥ २४ ॥
निवृत्तमनसं तस्मादभिप्रायाद्विचेतसम्।
अहमामन्त्र्य संविग्नमश्वत्थामानमब्रुवम् ॥ २५ ॥
यः सदैव मनुष्येषु प्रमाणं परमं गतः।

भागके एक भागके समान भी हों, जो हो यह धनुष, यह चक्र, यह शक्ती और यह गदा रक्खी है, जो तुम चाहो सो ले लो हम देते हैं, तुम जिस शस्त्रको उठा सको और युद्धमें चला सको, उसे ही ले लो; और उसके बदलेमें जो शस्त्र तुम देना चाहते हो, सो हम नहीं लेंगे (१६–१९)

प्रसन्न होकर उठे और बांये हाथसे उठाने लगे। परन्तु जरासा भी स्थानसे न उठा सके तब दहिना हाथ लगाकर उठाने लगे, परन्तु सब बल और सब पराक्रम करके हार गये, परन्तु चक्र न उठा। तब वे उसको उठा या हिला न सके, तब बहुत ही मलीन मन होकर थककर बैठ गये। (२०—२४)

तथेतरान्महाराज यतमानान्महारथान् ।
पञ्चभिः पञ्चभिर्बाणैरेकैकं प्रत्यवारयत् ॥ १४ ॥
सत्यसेनस्तु संक्रुद्धस्तोमरं व्यसृजन्महत् ।
समुद्दिश्य रणे कृष्णं सिंहनादं ननाद च ॥ १५ ॥
स निर्भिद्य भुजं सव्यं माधवस्य महात्मनः ।
अयस्मयो हेमदण्डो जगाम धरणीं तदा ॥ १६ ॥
माधवस्य तु विद्धस्य तोमरेण महारणे ।
प्रतोदः प्रापतद्धस्ताद्रश्मयश्च विशाम्पते ॥ १७ ॥
वासुदेवं विभिन्नाङ्गं दृष्ट्वा पार्थो धनञ्जयः ।
क्रोधमाहारयत्तीव्रं कृष्णं चेदमुवाच ह ॥ १८ ॥
प्रापयाश्वान्महाबाहो सत्यसेनं प्रति प्रभो ।
यावदेनं शरैस्तीक्ष्णैर्नयामि यमसादनम् ॥ १९ ॥
प्रतोदं गृह्य सोऽन्यत्तु रश्मीनपि यथा पुरा ।
वाहयामास तानश्वान्सत्यसेनरथं प्रति ॥ २० ॥
विष्वक्सेनं तु निर्भिन्नं दृष्ट्वा पार्थो धनञ्जयः ।
सत्यसेनं शरैस्तीक्ष्णैर्वारयित्वा महारथः ॥ २१ ॥
ततः सुनिशितैर्भल्लै राज्ञस्तस्य महच्छिरः ।

---

बाणों से मार कर यमलोक में पहुंचा दिया, और सब महारथोंको पांच पांच बाणोंसे निवारण किया ॥ (१२—१४)

अत्यन्त क्रुद्ध सत्यसेनने सिंहके समान गर्जके एक भारी तोमर श्रीकृष्णके उद्देश्यसे मारा ॥ वह सोनेके दण्डवाला लोहेका तोमर श्रीकृष्णके बाएं हाथको छेदकर पृथ्वीमें चला गया ॥ हे पृथ्वीनाथ! महात्मा श्रीकृष्णके हाथमें तोमर लगनेसे घोडोंकी रास और चाबुक छूट गया ॥ (१५—१७)

कृष्णको अत्यन्त व्याकुल देखकर अर्जुनको बहुत क्रोध हुआ और कृष्णसे बोले, हे कृष्ण! तुम हमारे घोडोंको शीघ्र सत्यसेनके रथके पास ले चलो; मैं इस दुष्टको अपने बाणोंसे अभी मारूंगा ॥ ( १८—१९ )

अर्जुनका वचन सुन श्रीकृष्णने दूसरा कोडा लिया और रास पकडकर घोडोंको सत्यसेनकी ओर हांका ॥ महारथ अर्जुनने कृष्णके हाथमे घाव देख सत्यसेनके ऊपर अनेक बाण चलाये, अर्जुनने अपने तेज भल्ल बाणोंसे उस राजाके शिरको कुण्डल सहित पृथ्वी पर गिरा

गाण्डीवधन्वा श्वेताश्वः कपिप्रवरकेतनः ॥ २६ ॥
यः साक्षाद्देवदेवेशं शितिकण्ठमुमापतिम् ।
द्वन्द्वयुद्धे पराजिष्णुस्तोषयामास शङ्करम् ॥ २७ ॥
यस्मात्प्रियतरो नास्ति ममान्यः पुरुषो भुवि ।
नादेयं यस्य मे किंचिदपि दाराः सुतास्तथा ॥ २८ ॥
तेनापि सुहृदा ब्रह्मन्पार्थेनाक्लिष्टकर्मणा ।
नोक्तपूर्वमिदं वाक्यं यत्त्वं मामभिभाषसे ॥ २९ ॥
ब्रह्मचर्यं महद्घोरं तीर्त्वा द्वादशवार्षिकम् ।
हिमवत्पार्श्वमास्थाय यो मया तपसार्जितः ॥ ३० ॥
समानव्रतचारिण्यां रुक्मिण्यां योऽन्वजायत ।
सनत्कुमारस्तेजस्वी प्रद्युम्नो नाम मे सुतः ॥ ३१ ॥
तेनाप्येतन्महद्दिव्यं चक्रमप्रतिमं रणे ।
न प्रार्थितमभून्मूढ यदिदं प्रार्थितं त्वया ॥ ३२ ॥
रामेणातिबलेनैतन्नोक्तपूर्वं कदाचन ।
न गदेन न साम्बेन यदिदं प्रार्थितं त्वया ॥ ३३ ॥
द्वारकावासिभिश्चान्यैर्वृष्ण्यन्धकमहारथैः ।
नोक्तपूर्वमिदं जातु यदिदं प्रार्थितं त्वया ॥ ३४ ॥
भारताचार्यपुत्रस्त्वं मानितः सर्वयादवैः ।

गदानां परिघाणां च शक्तितोमरपट्टिशैः ॥ ३१ ॥
शतघ्नीनां सचक्राणां भुजानां चोरुभिः सह ।
कण्ठसूत्राङ्गदानां च केयूराणां च मारिष ॥ ३२ ॥
हाराणामथ निष्काणां तनुत्राणां च भारत ।
छत्राणां व्यजनानां च शिरसां मुकुटैः सह ॥ ३३ ॥
अश्रूयत महाञ्शब्दस्तत्र तत्र विशाम्पते ।
सकुण्डलानि स्वक्षीणि पूर्णचन्द्रनिभानि च ॥ ३४ ॥
शिरांस्युर्व्यामदृश्यन्त ताराजालमिवाम्बरे ।
सुस्रग्वीणि सुवासांसि चन्दनेनोक्षितानि च ॥ ३५ ॥
शरीराणि व्यदृश्यन्त निहतानां महीतले ।
गन्धर्वनगराकारं घोरमायोधनं तदा ॥ ३६ ॥
निहतै राजपुत्रैश्च क्षत्रियैश्च महाबलैः ।
हस्तिभिः पतितैश्चैव तुरङ्गैश्चाभवन्मही ॥ ३७ ॥
अगम्यरूपा समरे विशीर्णैरिव पर्वतैः ।
नासीच्चक्रपथस्तत्र पाण्डवस्य महात्मनः ॥ ३८ ॥
निघ्नतः शात्रवान्भल्लैर्हस्त्यश्वं चास्यतो महत् ।

परिघ, शक्ति, चक्र, पट्टिश और तोमरोंसे घोडे हाथी और वीरोंके हाथ पैर मांडी, और शरीरके भूषण कट कट कर पृथ्वीमें गिरने लगे। कहीं शतघ्नियोंसे मर कर अनेक वीर पृथ्वीमें गिरने लगे। तब कहीं हार कहीं पंखे कहीं सिरोंके सहित मुकट कट कर गिर गये। (२९-३३)

हे पृथ्वीनाथ! उस युद्धमें कहीं वीरो के घोर शब्द सुनाई देने लगे। अनेक अच्छे कुण्डल युक्त पूर्णचन्द्रके समान प्रकाशमान शिर इस प्रकार पृथ्वीमें दीखने लगे, जैसे आकाशमें तारे दीखते है। अच्छी माला और वस्त्रोंसे युक्त चन्दनसे लिप्त मृत योद्धाओंके अनेक शरीर रणभूमिमें पडे हुए दीखने लगे। उससे युद्ध भूमि गन्धर्वोंके नगरके समान शोभित हुई॥ (३४-३६)

अनेक राजपुत्र और अनेक क्षत्री तथा अनेक हाथी घोडे मर कर पृथ्वीमें गिर गये॥ इससे विशीर्ण पर्वतोंके समान वह युद्धभूमि अगम्य हो गई। उस समय महात्मा अर्जुनके रथ चलनेको मार्ग न रहा॥ हे राजन्! जब हाथी, घोडे और वीरोंको मारते हुए अर्जुन युद्धभूमिमें घूमने लगे तब जैसे स्वामीका नाश होनेसे उनके अनन्य

चक्रेण रथिनां श्रेष्ठ कं नु तात युयुत्ससे ॥ ३५ ॥
एवमुक्तो मया द्रौणिर्मामिदं प्रत्युवाच ह।
प्रयुज्य भवते पूजां योत्स्ये कृष्ण त्वया सह ॥ ३६ ॥
प्रार्थितं ते मया चक्रं देवदानवपूजितम्।
अजेयः स्यामिति विभो सत्यमेतद्ब्रवीमि ते ॥ ३७ ॥
त्वत्तोऽहं दुर्लभं काममनवाप्यैव केशव।
प्रतियास्यामि गोविंद शिवेनाभिवदस्व माम् ॥ ३८ ॥
एतत्सुभीमं भीमानामृषभेण त्वया धृतम्।
चक्रमप्रतिचक्रेण भुवि नान्योऽभिपद्यते ॥ ३९ ॥
एतावदुक्त्वा द्रौणिर्मां युग्यानश्वान्धनानि च।
आदायोपगमी काले रत्नानि विविधानि च ॥ ४० ॥
स संरम्भी दुरात्मा च चपलः क्रूर एव च।
वेद चास्त्रं ब्रह्मशिरस्तस्माद्रक्ष्यो वृकोदरः ॥ ४१ ॥ [ ६४१ ]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां सौप्तिकपर्वान्तर्गत ऐषीके पर्वणि युधिष्ठिरकृष्णसंवादे द्वादशोऽध्यायः ॥ १२ ॥

वैशम्पायन उवाच-एवमुक्त्वा युधांश्रेष्ठः सर्वयादवनन्दनः।

आपका सत्कार किया। हे महारथ! इस चक्रको आप लेकर किससे महारथसे युद्ध करेंगे, सो कहो, हमारे ऐसे वचन सुन अश्वत्थामाने हमसे कहा। (३५—३६)

हे कृष्ण! हम यह चक्र लेकर आपकी शुभ पूजा करके आपहीसे युद्ध करेंगे। हम आपसे सत्य कहते हैं कि, इसीलिये हमने आपसे ये देवता और दानवोंसे पूजित चक्र मांगा था, और यह भी इच्छा थी कि, हमें कोई न जीत सके, परन्तु यह दुर्लभ काम हमारा सिद्ध न हुआ, इसलिये हम प्रसन्नता पूर्वक आपसे जानेकी आज्ञा मांगते हैं, आप सब भयानकोंमें भी भयानक हैं, इसी लिये इस भयानक चक्रको कोई नहीं ले सकता ऐसा कहकर हमारे दिये हुए सवार, घोडे, धन और अनेक प्रकारके रत्न लेकर अश्वत्थामा अपने घरको चले गये। वही अश्वत्थामा अत्यन्त पापी चञ्चल और दुष्ट है, और ब्रह्मशिर अस्त्रको जानता भी है, इसलिये भीमसेनकी रक्षा करनी चाहिये। (३७—४१)[६४१]

[illegible]

[illegible]

श्रीवैशम्पायन मुनि बोले, हे राजन्

दुर्योधनाय चिक्षेप त्रयोदश शिलाशितान् ॥ ४ ॥
चतुर्भिश्चतुरो वाहांस्तस्य हत्वा महारथः।
पञ्चमेन शिरः कायात्सारथेश्च समाक्षिपत् ॥ ५ ॥
षष्ठेन तु ध्वजं राज्ञः सप्तमेन तु कार्मुकम्।
अष्टमेन तथा खड्गं पातयामास भूतले ॥ ६ ॥
पञ्चभिर्नृपतिं चापि धर्मराजोऽर्दयद्भृशम्।
हताश्वात्तु रथात्तस्मादवप्लुत्य सुतस्तव ॥ ७ ॥
उत्तमं व्यसनं प्राप्तो भूमावेवावतिष्ठत।
तं तु कृच्छ्रगतं दृष्ट्वा कर्णद्रौणिकृपादयः ॥ ८ ॥
अभ्यवर्त्तन्त सहसा परीप्सन्तो नराधिपम्।
अथ पाण्डुसुताः सर्वे परिवार्य युधिष्ठिरम् ॥ ९ ॥
अन्वयुः समरे राजंस्ततो युद्धमवर्त्तत।
ततस्तूर्यसहस्राणि प्रावाद्यन्त महामृधे ॥ १० ॥
ततः किलकिलाशब्दाः प्रादुरासन्महीपते।
यत्राभ्यगच्छन्समरे पञ्चालाः कौरवैः सह ॥ ११ ॥
नरा नरैः समाजग्मुर्वारणा वरवारणैः।
रथाश्च रथिभिः सार्धं हयाश्च हयसादिभिः ॥ १२ ॥
द्वन्द्वान्यासन्महाराज प्रेक्षणीयानि संयुगे।

बाण दुर्योधनकी ओर चलाए॥ महारथ युधिष्ठिरने चार बाणोंसे चारों घोडोंको मारडाला और पांचवें बाणसे सारथीको मारडाला, छठेसे ध्वजा, सातवेंसे धनुष, आठवेंसे खड्गको काटकर पृथ्वीपर गिरा दिया॥ और पांच बाण धर्मराजने तुम्हारे पुत्रके शरीरमें मारे। तुम्हारे पुत्र टूटे रथसे उतरे, बहुत दुःखी होकर भूमिपर खडे होगये। (४-८)

राजा दुर्योधनको ऐसे दुःखमें पडा देख अश्वत्थामा, कृपाचार्य और कर्ण आदिक वीरोंने राजा दुर्योधनको चारों ओरसे घेर लिया, इसी प्रकार सब पाण्डवोंने राजा युधिष्ठिरको घेर लिया। हे राजन्! तब सबसे उनका घोर युद्ध होने लगा, तब अनेक प्रकारके बाजे युद्धमें बजने लगे, जहांपर पाञ्चाल और कौरवोंका घोर युद्ध होरहा था, वहां कौरव और पञ्चालोंने घोर शब्द किया॥ (८-११)

मनुष्य मनुष्यसे, हाथी हाथीसे, रथ रथसे, घुडसवार घुडसवारोंसे युद्ध करने

सर्वायुधवरोपेतमारुरोह रथोत्तमम् ॥ १ ॥
युक्तं परमकाम्बोजैस्तुरगैर्हेममालिभिः ।
आदित्योदयवर्णस्य धुरं रथवरस्य तु ॥ २ ॥
दक्षिणामवहच्छैब्यः सुग्रीवः सव्यतोऽभवत् ।
पार्ष्णिवाहौ तु तस्यास्तां मेघपुष्पबलाहकौ ॥ ३ ॥
विश्वकर्मकृता दिव्या रत्नधातुविभूषिता ।
उच्छ्रितेव रथे माया ध्वजयष्टिरदृश्यत ॥ ४ ॥
वैनतेयः स्थितस्तस्यां प्रभामण्डलरश्मिवान् ।
तस्य सत्यवतः केतुर्भुजगारिरदृश्यत ॥ ५ ॥
अथारोहद्धृषीकेशः केतुः सर्वधनुष्मताम् ।
अर्जुनः सत्यकर्मा च कुरुराजो युधिष्ठिरः ॥ ६ ॥
अशोभेतां महात्मानौ दाशार्हमभितः स्थितौ ।
रथस्थं शार्ङ्गधन्वानमश्विनाविव वासवम् ॥ ७ ॥
तावुपारोप्य दाशार्हः स्यन्दनं लोकपूजितम् ।
प्रतोदेन जवोपेतान्परमाश्वानचोदयत ॥ ८ ॥
ते हयाः सहसोत्पेतुर्गृहीत्वा स्यन्दनोत्तमम् ।
आस्थितं पाण्डवेयाभ्यां यदूनामृषभेण च ॥ ९ ॥
वहतां शार्ङ्गधन्वानमश्वानां शीघ्रगामिनाम् ।
प्रादुरासीन्महान् शब्दः पक्षिणां पततामिव ॥ १० ॥

साश्वारोहांश्च तुरगान्विषाणैर्विन्यधू रुषा ।
अपरे चिक्षिपुर्वेगात्प्रगृह्यातिवलास्तदा ॥ २२ ॥
पादातैराहता नागा विवरेषु समन्ततः ।
चक्रुरार्त्तस्वरं घोरं दुद्रुवुश्च दिशो दश ॥ २३ ॥
पदातीनां तु सहसा प्रद्रुतानां महाहवे ।
उत्सृज्याभरणं तूर्णमवपन्रू रणाजिरे ॥ २४ ॥
निमित्तं मन्यमानास्तु परिणाम्य महागजाः ।
जगृहुर्बिभिदुश्चैव चित्राण्याभरणानि च ॥ २५ ॥
तांस्तु तत्र प्रसक्तान्वै परिवार्य पदातयः ।
हस्त्यारोहान्निजघ्नुस्ते महावेगा वलोत्कटाः ॥ २६ ॥
अपरे हस्तिभिर्हस्तैः खं विक्षिप्ता महाहवे ।
निपतन्तो विषाणाग्रैर्भृशं विद्धाः सुशिक्षितैः ॥ २७ ॥
अपरे सहसा गृह्य विषाणैरेव सूदिताः ।
सेनान्तरं समासाद्य केचित्तत्र महागजैः ॥ २८ ॥
क्षुण्णगात्रा महाराज विक्षिप्य च पुनः पुनः ।
अपरे व्यजनानीव विभ्राम्य निहता मृधे ॥ २९ ॥
पुरःसराश्च नागानामपरेषां विशाम्पते ।
शरीराण्यतिविद्धानि तत्रतत्र रणाजिरे ॥ ३० ॥
प्रतिमानेषु कुम्भेषु दन्तवेष्टेषु चापरे ।

चढे हुए मनुष्यके सहित घोडेको अपने सूंडसे दूर फेंक दिया ॥ (१९-२२)

इसी प्रकार पैदलोंने अवसर पाकर हाथियोंको विद्ध किया। तब वे चिल्लाते हुए चारों ओरको भागे, जब पैदललोग दूसरोंके भूषण उतारकर भागने लगे, तब यह अच्छा निमित्त देख बडे हाथी पर चढे हुए वीर उनको पकडकर उन के नाना प्रकारके अलंकार लेने लगे, और उनको मारने लगे ॥ तब महाय-लवाले पैदल वीरोंने भी हाथीयोंको घेर कर उनके ऊपरके वीरोंको मारना आरंभ किया ॥ (२३-२६)

अनेक शिक्षित हाथियोंने अपनी शूंडसे मनुष्योंको पकडकर आकाशमें फेंक दिया, और गिरते समय दांतसे चीर दिया ॥ अनेक हाथियोंने सेनाके बीचमें घुसकर मनुष्योंके पेट दांतसे चीर दिये, अनेक मनुष्योंको हाथियोंने पङ्खेके समान घुमाके मार डाला, अनेक

ते समाच्छन्नरव्याघ्राः क्षणेन भरतर्षभ।
भीमसेनं महेष्वासं समनुद्रुत्य वेगिताः ॥ ११ ॥
क्रोधदीप्तं तु कौन्तेयं द्विषदर्थे समुद्यतम्।
नाशक्नुवन्वारयितुं समेत्यापि महारथाः ॥ १२ ॥
स तेषां प्रेक्षतामेव श्रीमतां दृढधन्विनाम्।
ययौ भागीरथीतीरं हरिभिर्भृशवेगितैः ॥ १३ ॥
यत्र स्म श्रूयते द्रौणिः पुत्रहन्ता महात्मनाम्।
स ददर्श महात्मानमुदकान्ते यशस्विनम् ॥ १४ ॥
कृष्णद्वैपायनं व्यासमासीनमृषिभिः सह।
तं चैव क्रूरकर्माणं घृताक्तं कुशचीरिणम् ॥ १५ ॥
रजसा ध्वस्तमासीनं ददर्श द्रौणिमन्तिके।
तमभ्यधावत्कौन्तेयः प्रगृह्य सशरं धनुः ॥ १६ ॥
भीमसेनो महाबाहुस्तिष्ठ तिष्ठेति चाब्रवीत्।
स दृष्ट्वा भीमधन्वानं प्रगृहीतशरासनम् ॥ १७ ॥
भ्रातरौ पृष्ठतश्चास्य जनार्दनरथे स्थितौ।
व्यथितात्माऽभवद्द्रौणिः प्राप्तं चेदममन्यत ॥ १८ ॥
स तद्दिव्यमदीनात्मा परमास्त्रमचिन्तयत्।

समासक्तस्य चान्येन आविज्ञातस्तथापरः ॥ ४० ॥
जहार समरे प्राणान्नानाशस्त्रैरनेकधा ।
संसक्तेषु च योधेषु वर्तमाने च संकुले ॥ ४१ ॥
कबन्धान्युत्थितानि स्युः शतशोऽथ सहस्रशः ।
शोणितैः सिच्यमानानि शस्त्राणि कवचानि च ॥ ४२ ॥
महारागानुरक्तानि वस्त्राणीव चकाशिरे ।
एवमेतन्महद्युद्धं दारुणं शस्त्रसंकुलम् ॥ ४३ ॥
उन्मत्तगङ्गाप्रतिमं शब्देनापूरयज्जगत् ।
नैव स्वे न परे राजन्विज्ञायन्ते शरातुराः ॥ ४४ ॥
योद्धव्यमिति युध्यन्ते राजानो जयगृद्धिनः ।
स्वान्स्वे जघ्नुर्महाराज परांश्चैव समागतान् ॥ ४५ ॥
उभयोः सेनयोर्वीरैर्व्याकुलं समपद्यत ।
रथैर्भग्नैर्महाराज वारणैश्च निपातितैः ॥ ४६ ॥
हयैश्च पतितैस्तत्र नरैश्च विनिपातितैः ।
अगम्यरूपा पृथिवी क्षणेन समपद्यत ॥ ४७ ॥
क्षणेनासीन्महीपाल क्षतजौघप्रवर्तिनी ।

घूसेमे मारता था, कोई किसीके बाल पकडकर खींचता था, कोई किसीसे बाहुयुद्ध कर रहा था, कोई अपनेसे अधिक बलवान् शत्रुके सङ्ग युद्ध कर रहा था। उस घोर युद्धमें कोई अनेक प्रकारके शस्त्रोंसे अपने शत्रुके शरीरके टुकडे कर रहा था, उस युद्धमें सहस्रों कबन्ध नाच रहे थे, रुधिरमें भीगे हुए अनेक शस्त्र और कवच भूमिमें पडे हुए थे। वे कवच लाल रंगे हुए वस्त्रोंके समान हो रहे थे। (३९-४३)

यह घोर युद्ध इस प्रकार हुआ, उस समय इस युद्धमें ऐसा घोर शब्द उठा जैसे पहाडोंमें घूमती हुई गङ्गाका। उस समय यह किसीको नहीं जान पडता था, कि यह हमारी सेनाका मनुष्य है, वा दूसरीका, उस समय राजा लोग अपने तथा दूसरेकी सेनासे विजयके लिये लड रहे थे, किन्तु अपने और परायेको नहीं पहचानते थे, हे राजन्! दोनों सेना भागते और गिरते हुए रथ हाथियोंसे व्याकुल होगई थीं, मरे हुए हाथी और मनुष्योंके गिरनेसे वह भूमि क्षणभरमें जाने योग्य नहीं रहीं थी॥(४३-४७)

उस युद्धमें क्षण मात्रमें रुधिरकी नदी बहने लगी। पाञ्चालोंको कर्ण और

जग्राह च स चैषीकां द्रौणिः सव्येन पाणिना ॥१९॥
स तामापदमासाद्य दिव्यमस्त्रमुदैरयत् ।
अमृष्यमाणस्ताञ्छूरान्दिव्यायुधधरान् स्थितान् ॥२०॥
अपाण्डवायेति रुषा व्यसृजद्दारुणं वचः ।
इत्युक्त्वा राजशार्दूल द्रोणपुत्रः प्रतापवान् ॥ २१ ॥
सर्वलोकप्रमोहार्थं तदस्त्रं प्रमुमोच ह ।
ततस्तस्यामिषीकायां पावकः समजायत ।
प्रधक्ष्यन्निव लोकांस्त्रीन्कालान्तकयमोपमः ॥ २२ ॥ [६६३]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां सौप्तिकपर्वान्तर्गत
ऐषीके पर्वणि ब्रह्मशिरोऽस्त्रत्यागे त्रयोदशोऽध्यायः॥ १३ ॥

वैशम्पायनउवाच इङ्गितेनैव दाशार्हस्तमभिप्रायमादितः ।
द्रोणेर्बुद्ध्वा महाबाहुरर्जुनं प्रत्यभाषत ॥ १ ॥
अर्जुनार्जुन यद्दिव्यमस्त्रं ते हृदि वर्त्तते ।
द्रोणोपदिष्टं तस्यायं कालः सम्प्रति पाण्डव ॥ २ ॥
भ्रातृणामात्मनश्चैव परित्राणाय भारत ।
विसृजैतत्त्वमप्याजावस्त्रमस्त्रनिवारणम् ॥ ३ ॥

दुर्योधनः समालक्ष्य धर्मराजं युधिष्ठिरम् ॥ ६ ॥
प्रोवाच सूतं त्वरितो याहि याहीति भारत ।
तत्र मां प्रापय क्षिप्रं सारथे यत्र पाण्डवः ॥ ७ ॥
ध्रियमाणातपत्रेण राजा राजति दंशितः ।
स सूतश्चोदितो राज्ञा राज्ञः स्यन्दनमुत्तमम् ॥ ८ ॥
युधिष्ठिरस्याभिमुखं प्रेषयामास संयुगे ।
ततो युधिष्ठिरः क्रुद्धः प्रभिन्न इव कुञ्जरः ॥ ९ ॥
सारथिं चोदयामास याहि यत्र सुयोधनः ।
तौ समाजग्मतुर्वीरौ भ्रातरौ रथसत्तमौ ॥ १० ॥
समेत्य च महावीरौ संरब्धौ युद्धदुर्मदौ ।
ववर्षतुर्महेष्वासौ शरैरन्योन्यमाहवे ॥ ११ ॥
ततो दुर्योधनो राजा धर्मशीलस्य मारिष ।
शिलाशितेन भल्लेन धनुश्चिच्छेद संयुगे ॥ १२ ॥
तं नामृष्यत संक्रुद्धो ह्यवमानं युधिष्ठिरः ।
अपविध्य धनुश्छिन्नं क्रोधसंरक्तलोचनः ॥ १३ ॥
अन्यत्कार्मुकमादाय धर्मपुत्रश्चमूमुखे ।
दुर्योधनस्य चिच्छेद ध्वजं कार्मुकमेव च ॥ १४ ॥

तब तुम्हारे पुत्र दुर्योधनने विषैले सांपके समान क्रोध करके और दूसरे रथपर बैठ धर्मराजसे युद्ध करना आरम्भ किया, अनन्तर दुर्योधनने अपने सारथीसे कहा चलो चलो हमारे रथको शीघ्र युधिष्ठिर के पास पहुंचाओ, जहां सफेद छत्र धारण किये युधिष्ठिर खडे है, वहीं हमारे रथको ले चलो। ( ५–८ )

राजाके वचन सुन सारथीने दुर्योधनके उत्तम घोडोंको महाराज धर्मराज की ओर हांका, महाराज युधिष्ठिर जो मतवाले हाथीके समान खडे थे, अपनी ओर दुर्योधनको आते देख अपने सारथीसे कहा तुम शीघ्र हमारे रथको दुर्योधनकी ओर हांको; थोडे समयमें दोनों रथ पास आगये; तब ये दोनों महारथ और महाधनुर्द्धारी राजा एक दूसरे पर बाणोंकी वर्षा करने लगे॥ ( ८–११ )

तब राजा दुर्योधनने शिलापर घिसे हुए अपने तेज बाणोंसे धर्मात्मा युधिष्ठिरका धनुष काट दिया। राजा युधिष्ठिर अपने इस अपमानको क्षमा न कर सके और क्रोधके मारे नेत्र लाल होगये, उन्होंने दूसरा धनुष लेकर सब सेनाके

केशवेनैवमुक्तोऽथ पाण्डवः परवीरहा।
अवातरद्रथात्तूर्णं प्रगृह्य सशरं धनुः ॥ ४ ॥
पूर्वमाचार्यपुत्राय ततोऽनन्तरमात्मने।
भ्रातृभ्यश्चैव सर्वेभ्यः स्वस्तीत्युक्त्वा परन्तपः ॥ ५ ॥
देवताभ्यो नमस्कृत्य गुरुभ्यश्चैव सर्वशः।
उत्ससर्ज शिवं ध्यायन्नस्त्रमस्त्रेण शाम्यताम् ॥ ६ ॥
ततस्तदस्त्रं सहसा सृष्टं गाण्डीवधन्वना।
प्रजज्वाल महार्चिष्मद्युगान्तानलसन्निभम् ॥ ७ ॥
तथैव द्रोणपुत्रस्य तदस्त्रं तिग्मतेजसः।
प्रजज्वाल महाज्वालं तेजोमण्डलसंवृतम् ॥ ८ ॥
निर्घाता बहवश्चासन्पेतुरुल्काः सहस्रशः।
महद्भयं च भूतानां सर्वेषां समजायत ॥ ९ ॥
सशब्दमभवद्व्योम ज्वालामालाकुलं भृशम्।
चचाल च मही कृत्स्ना सपर्वतवनद्रुमा ॥ १० ॥
ते त्वस्त्रतेजसी लोकांस्तापयन्ती व्यवस्थिते।
महर्षी सहितौ तत्र दर्शयामासतुस्तदा ॥ ११ ॥
नारदः सर्वभूतात्मा भरतानां पितामहः।

तामापतन्तीं सहसा धर्मराजः शितैः शरैः ॥ २३ ॥
त्रिभिश्चिच्छेद सहसा तं च विव्याध पञ्चभिः।
निपपात ततः साथ स्वर्णदण्डा महास्वना ॥ २४ ॥
निपतन्ती महोल्केव व्यराजच्छिखिसन्निभा।
शक्तिं विनिहतां दृष्ट्वा पुत्रस्तव विशाम्पते ॥ २५ ॥
नवभिर्निशितैर्भल्लैर्निजघान युधिष्ठिरम्।
सोऽतिविद्धो बलवता शत्रुणा शत्रुतापनः ॥ २६ ॥
दुर्योधनं समुद्दिश्य बाणं जग्राह सत्वरः।
समाधत्त च तं बाणं धनुर्मध्ये महाबलः ॥ २७ ॥
चिक्षेप च महाराज ततः क्रुद्धः पराक्रमी।
स तु बाणः समासाद्य तव पुत्रं महारथम् ॥ २८ ॥
व्यामोहयत राजानं धरणीं च ददार ह।
ततो दुर्योधनः क्रुद्धो गदामुद्यम्य वेगितः ॥ २९ ॥
विधित्सुः कलहस्यान्तं धर्मराजमुपाद्रवत्।
तमुद्यतगदं दृष्ट्वा दण्डहस्तमिवान्तकम् ॥ ३० ॥
धर्मराजो महाशक्तिं प्राहिणोत्तव सूनवे।
दीप्यमानां महावेगां महोल्कां ज्वलितामिव ॥ ३१ ॥

शक्तिको धर्मराज युधिष्ठिरने अपने तीन तेज बाणोंसे काटा और पांच बाण दुर्योधनकी ओर चलाये। (२०-२४)

वह सोनेके दण्डवाली शक्ति उन बाणोंसे कटकर पृथ्वीमें गिर गई, हे पृथ्वीनाथ ! वह शक्ति कटकर बडी उल्का और अग्निके समान गिर गई। जब तुम्हारे पुत्रने अपनी शक्तिको निष्फल देखा, तब युधिष्ठिरके शरीरमें नौ बाण मारे, शत्रुनाशन युधिष्ठिर बलवान् शत्रुके बाण लगनेसे क्रोधमें भर गये, और एक घोर बाण अपने तूणीरसे निकाल कर धनुष पर चढाया, फिर पराक्रमी युधिष्ठिरने क्रोधमें भरकर और धनुष खींच कर एक बाण छोडा, वह बाण राजा दुर्योधनके शरीरको छेद कर पृथ्वीको छेदगया। (२४—२९)

उसके लगनेसे राजा दुर्योधनको मूर्च्छा होगयी तब मूर्च्छा जागने पर दुर्योधनने महा क्रोध किया। अनन्तर इस युद्धको समाप्त करनेके लिये एक गदा लेकर युधिष्ठिरकी ओर दौडे, दण्डधारी यमराजके समान दुर्योधनको आते देख धर्मराज युधिष्ठिरने जलती हुई

उभौ शमयितुं वीरौ भारद्वाजधनञ्जयौ ॥ १२ ॥
तौ मुनी सर्वधर्मज्ञौ सर्वभूतहितैषिणौ ।
दीप्तयोरस्त्रयोर्मध्ये स्थितौ परमतेजसौ ॥ १३ ॥
तदन्तरमथाधृष्यावुपगम्य यशस्विनौ ।
आस्तामृषिवरौ तत्र ज्वलिताविव पावकौ ॥ १४ ॥
प्राणभृद्भिरनाधृष्यौ देवदानवसंमतौ ।
अस्त्रतेजः शमयितुं लोकानां हितकाम्यया ॥ १५ ॥

ऋषी ऊचतुः— नानाशस्त्रविदः पूर्वे येऽप्यतीता महारथाः ।
नैतदस्त्रं मनुष्येषु तैः प्रयुक्तं कथञ्चन ।
किमिदं साहसं वीरौ कृतवन्तौ महात्ययम् ॥ १६ ॥ [६७०]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां सौप्तिकपर्वान्तर्गतैषीकपर्वणि
अर्जुनास्त्रत्यागे चतुर्दशोऽध्यायः ॥ १४ ॥

वैशम्पायन उवाच- दृष्ट्वैव नरशार्दूल तावग्निसमतेजसौ ।
संजहार शरं दिव्यं त्वरमाणो धनञ्जयः ॥ १ ॥
उवाच भरतश्रेष्ठ तावृषी प्राञ्जलिस्तदा ।
प्रमुक्तमस्त्रमस्त्रेण शाम्यतामिति वै मया ॥ २ ॥

देखा। फिर वीर अश्वत्थामा और अर्जुनको शान्त करने लगे। सब धर्मोंके जाननेवाले, सब जगत्के कल्याण चाहनेवाले, महातेजस्वी नारद और व्यासमुनि दोनों जलते हुए अस्त्रोंके बीचमें खडे होगए, उन दोनों जलते हुये ना-

ऐसे वचन बोले : पहिले समयमें भी अस्त्रविद्या जाननेवाले अनेक महावीर हुए हैं, परन्तु किसीने मनुष्योंके लिये इस अस्त्रको नहीं छोडा, हे वीरो! तुमने ऐसा साहस क्यों किया? (१२-१६)
[illegible]

शितपरश्वधसासिपट्टिशैरिषुभिरनेकविधैश्च सूदिताः ।
द्विरदरथहया महाहवे वरपुरुषैः पुरुषाश्च वाहनैः ॥ ३ ॥
कमलदिनकरेन्दुसन्निभैः सितदशनैः सुमुखाक्षिनासिकैः ।
रुचिरमुकुटकुण्डलैर्मही पुरुषशिरोभिरुपस्तृता बभौ ॥ ४ ॥
परिघमुसलशक्तितोमरैर्नखरभुशुण्डिगदाशतैर्हताः ।
द्विरदनरहयाः सहस्रशो रुधिरनदीप्रवहास्तदाभवन् ॥ ५ ॥
प्रहतरथनराश्वकुञ्जरं प्रतिभयदर्शनमुल्वणव्रणम् ।
तदहितहतमाबभौ बलं पितृपतिराष्ट्रमिव प्रजाक्षये ॥ ६ ॥
अथ तव नरदेव सैनिकास्तव च सुताः सुरसूनुसन्निभाः ।
अमितबलपुरःसरा रणे कुरुवृषभाः शिनिपुत्रमभ्ययुः ॥ ७ ॥
तदतिरुधिरभीममाबभौ पुरुषवराश्वरथद्विपाकुलम् ।
लवणजलसमुद्धतस्वनं बलमसुरामरसैन्यसप्रभम् ॥ ८ ॥
सुरपतिसमविक्रमस्ततस्त्रिदशवरावरजोपमं युधि ।
दिनकरकिरणप्रभैः पृषत्कै रवितनयोऽभ्यहनच्छिनिप्रवीरम् ॥ ९ ॥

अनेक हाथी, घोडे और मनुष्योंको वीरोंने परश्वध, पट्टिश, खड्ग और अनेक प्रकारके बाणोंसे मार डाला। इसी प्रकार वाहनोंने मनुष्योंको और मनुष्योंने वाहनोंको मार डाला ॥ (१-३)

कमल, सूर्य और चन्द्रके समान सुन्दर मुखवाले, दांत, मुकुट और कुण्डल सहित कटे हुए शिरोंसे पृथ्वी भर गई ॥ सहस्रों हाथी, नर और घोडे परिघ, मूसल, शक्ति तोमर और नखोंसे कटकर पृथ्वीमें गिर गये और युद्धमें रुधिरकी नदी बहने लगी ॥ जैसे प्रलय कालमें यमराजकी पुरी भयानक होती है, वैसे ही मरे हुए हाथी, घोडे, रथ और मनुष्योंसे वह रणभूमि भयानक मालूम होने लगी ॥ (४—६)

हे नरदेव! इसके पश्चात् तुम्हारे सब सैनिक और देवपुत्रके समान तुम्हारे सब पुत्र अमितबल कर्णको आगे करके शिनिपुत्र सात्यकिसे युद्ध करनेको चले ॥ तब उस युद्धमें रुधिरकी नदी बह निकली और समुद्रके समान शब्द होने लगा, अनन्तर वे दोनों सेना देवता और राक्षसोंकी सेनाके समान युद्ध करने लगीं ॥ घोडे हाथी, और मनुष्योंसे भरी वह सेना समुद्रके समान गर्जने लगी; अनन्तर इन्द्र और उपेन्द्रके समान पराक्रमी कर्णने सूरज किरणके समान प्रकाशमान बाणोंसे शिनिकुलमें श्रेष्ठ सात्यकिको मारना आरंभ किया॥(७-९)

अशीत्या मार्गणैः क्रुद्धो बाह्वोरुरसि चार्पयत् ।
कृतवर्मा तु संक्रुद्धो मार्गणैः क्षतविक्षतः ॥ २८ ॥
ववाम रुधिरं गात्रैः कुम्भवक्त्रादिवोदकम् ।
रुधिरेण परिक्लिन्नः कृतवर्मा व्यराजत ॥ २९ ॥
वर्षेण क्लेदितो राजन्यथा गैरिकपर्वतः ।
अथान्यद्धनुरादाय समार्गणगुणं प्रभुः ॥ ३० ॥
शिखण्डिनं बाणगणैः स्कन्धदेशे व्यताडयत् ।
स्कन्धदेशस्थितैर्बाणैः शिखण्डी तु व्यराजत ॥ ३१ ॥
शाखाप्रशाखाविपुलः सुमहान्पादपो यथा ।
तावन्योन्यं भृशं विद्ध्वा रुधिरेण समुक्षितौ ॥ ३२ ॥
अन्योन्यशृङ्गाभिहतौ रेजतुर्वृषभाविव ।
अन्योन्यस्य वधे यत्नं कुर्वाणौ तौ महारथौ ॥ ३३ ॥
रथाभ्यां चेरतुस्तत्र मण्डलानि सहस्रशः ।
कृतवर्मा महाराज पार्षतं निशितैः शरैः ॥ ३४ ॥
रणे विव्याध सप्तत्या स्वर्णपुङ्खैः शिलाशितैः ।
ततोऽस्य समरे बाणं भोजः प्रहरतां वरः ॥ ३५ ॥

और उनके शरीरमें अस्सी बाण मारे। धनुष कटनेसे कृतवर्मा टूटे सींगवाले बैलके समान खडे रह गये, अनन्तर हाथ पैर और हृदयमें घाव होनेसे कृतवर्माको अत्यन्त क्रोध हुआ, कृतवर्माके शरीरसे इस प्रकार रुधिर बहने लगा जैसे फूटे घडेसे पानी बहता है। कृतवर्माके शरीरसे इस प्रकार रुधिर बहा जैसे वर्षामें भीगनेसे गेरुके पहाडसे झरने बहते हैं ॥ (२६—३०)

अनन्तर कृतवर्माने दूसरे धनुषपर रोदा चढाकर शिखण्डीके कन्धेमें बाण मारे, उन बाणोंके लगनेसे अनेक शाखा युक्त वृक्षके समान शिखण्डी दीखने लगे, तब ये दोनों वीर एक दूसरेको विद्ध करके रुधिरसे भीग गये, ये दोनों महारथ एक दूसरेके मारनेका उपाय करने लगे। उस समय इन दोनोंके शरीरसे ऐसा रुधिर बहा, जैसे सींगोंके प्रहारसे विद्ध होनेसे दो बैलोंके शरीरसे बहे। हे महाराज! एक दूसरेके वधकी इच्छा करनेवाले इन दोनोंके रथ अनेक प्रकारकी गतियोंसे युद्धमें घूमने लगे। (३०-३४)

अनन्तर कृतवर्माने सोनेके पङ्खवाले सत्तर शिलापर घिसे हुए तीक्ष्ण बाण शिखण्डीकी ओर चलाये, एक बाण

सादिनोऽश्वांश्च पत्तींश्च शरैर्निन्ये यमक्षयम् ॥ १७ ॥
तमन्तकमिव क्रुद्धमनिवार्यं महारथम् ।
दुर्योधनोऽभ्ययादेको निघ्नन्बाणैरजिह्मगैः ॥ १८ ॥
तस्यार्जुनो धनुः सूतमश्वान्केतुं च सायकैः ।
हत्वा सप्तभिरेकेन च्छत्रं चिच्छेद पत्रिणा ॥ १९ ॥
नवमं च समाधाय व्यसृजत्प्राणघातिनम् ।
दुर्योधनायेषुवरं तं द्रौणिः सप्तधाच्छिनत् ॥ २० ॥
ततो द्रौणेर्धनुश्छित्वा हत्वा चाश्वरथाञ्शरैः ।
कृपस्यापि तदत्युग्रं धनुश्चिच्छेद पाण्डवः ॥ २१ ॥
हार्दिक्यस्य धनुश्छित्वा ध्वजं चाश्वांस्तदावधीत् ।
दुःशासनस्येष्वसनं छित्त्वा राधेयमभ्ययात् ॥ २२ ॥
अथ सात्यकिमुत्सृज्य त्वरन्कर्णोऽर्जुनं त्रिभिः ।
विद्ध्वा विव्याध विंशत्या कृष्णं पार्थं पुनः पुनः ॥२३॥
न ग्लानिरासीत्कर्णस्य क्षिपतः सायकान्बहून् ।
रणे विनिघ्नतः शत्रून्क्रुद्धस्येव शतक्रतोः ॥ २४ ॥
अथ सात्यकिरागत्य कर्णं विद्ध्वा शितैः शरैः ।

अर्जुनने मारडाला ॥ कालके समान क्रोधी अर्जुनको आते हुए देख कोई वीर रोक न सका । परन्तु तब अकेले दुर्योधन घोर शस्त्र छोडते हुए अर्जुनकी ओर आये ॥ (१६-१८)

अर्जुनने सात बाणोंसे उनके घोडे सारथीको मार धनुषको काट रथको तोड डाला और एक बाणसे छत्र भी काट दिया ॥ फिर घोर नौवा बाण दुर्योधनका प्राण नाश करनेको छोडा परन्तु उस बाणको अश्वत्थामाने बीचही में सप्तधा काट डाला ॥ अर्जुनने अश्वत्थामाके घोडे सारथी और रथको काट कर कृपाचार्यके अति उग्र धनुषको काट दिया ॥ (१९-२१)

फिर कृतवर्माकी ध्वजाको काट कर घोडोंको मार दिया, अनन्तर दुःशासनके धनुषको काटकर कर्णसे युद्ध करनेको चले गये ॥ कर्णने सात्यकिको छोडकर अर्जुनकी ओर तीन बाण चलाये, और कृष्णके शरीरमें बीस बाण मारे ॥ जिस प्रकार युद्ध करते हुए क्रुद्ध इन्द्र नहीं थकते, वैसेही बार बार बाण चलाते और शत्रुओंको मारते कर्ण भी न थके ॥ (२२-२४)

तब सात्यकिने दौडके कर्णके शरीर

अभ्यवर्त्तन्त सहसा वार्योघा इव सागरम् ॥ ५ ॥
ते त्वर्जुनं समासाद्य योधाः शतसहस्रशः ।
अगच्छन्विलयं सर्वे तार्क्ष्यं दृष्ट्वेव पन्नगाः ॥ ६ ॥
ते हन्यमानाः समरे नाजहुः पाण्डवं रणे ।
हन्यमाना महाराज शलभा इव पावकम् ॥ ७ ॥
सत्यसेनस्त्रिभिर्बाणैर्विव्याध युधि पाण्डवम् ।
मित्रदेवस्त्रिषष्ट्या तु चन्द्रसेनस्तु सप्तभिः ॥ ८ ॥
मित्रवर्मा त्रिसप्तत्या सौश्रुतिश्चापि सप्तभिः ।
शत्रुञ्जयस्तु विंशत्या सुशर्मा नवभिः शरैः ॥ ९ ॥
स विद्धो बहुभिः सङ्ख्ये प्रतिविव्याध तान्नृपान् ।
सौश्रुतिं सप्तभिर्विध्वा सत्यसेनं त्रिभिः शरैः ॥ १० ॥
शत्रुञ्जयं च विंशत्या चन्द्रदेवं तथाष्टभिः ।
मित्रदेवं शतेनैव श्रुतसेनं त्रिभिः शरैः ॥ ११ ॥
नवभिर्मित्रवर्माणं सुशर्माणं तथाष्टभिः ।
शत्रुञ्जयं च राजानं हत्वा तत्र शिलाशितैः ॥ १२ ॥
सौश्रुतेः सशिरस्त्राणं शिरः कायादपाहरत् ।
त्वरितश्चन्द्रदेवं च शरैर्निन्ये यमक्षयम् ॥ १३ ॥

धनुषधारी वीर अर्जुनके ऊपर इस प्रकार बाण वर्षाने लगे, जैसे मेघ इकट्ठे होकर पर्वतपर जल वर्षाते हैं ॥ अर्जुनके पास आते ही वे सहस्रों योधा इस प्रकार शान्त होगये, कि जैसे गरुडको देख सांप ॥ हे महाराज ! जैसे पतङ्ग जलने पर भी अग्निको नहीं छोडते वैसेही उन वीरोंने मरने पर भी अर्जुनको नहीं छोडा ॥ (५-७)

सत्यसेनने तीन, मित्रदेवने तिरसठ, चन्द्रसेनने सात, मित्रवर्माने तिहत्तर, सौश्रुतिने सात, शत्रुञ्जयने चौवीस और सुशर्माने नौ बाण चलाये, इस प्रकार अनेक वीरोंसे विद्ध होकर अर्जुनने भी उन सब राजाओंको अपने बाणोंसे विद्ध किया । सौश्रुतिके शरीरमें सात, सत्य सेनके तीन, शत्रुंजयके वीस, चन्द्रदेवके आठ, मित्रदेवके आठ, और श्रुतसेनके ऊपर एकसौ बाण मारे ॥ (८-११)

मित्रवर्माके शरीरमें नौ, सुशर्माके आठ तथा राजा शत्रुञ्जयको अनेक तीक्ष्ण बाणोंसे मारकर फिर सौश्रुतिके शिरको शिरस्त्राणके सहित काटकर पृथ्वी पर गिरा दिया । फिर चंद्रदेवको भी अनेक

दिशः खं चैव भूमिं च प्रावृणोच्छरवृष्टिभिः ॥ ३३ ॥
मुसलानीव सम्पेतुः परिघा इव चेषवः ।
शतघ्न्य इव चाप्यन्ये वज्राण्युग्राणि चापरे ॥ ३४ ॥
तैर्वध्यमानं तत्सैन्यं सपत्त्यश्वरथद्विपम् ।
निमीलिताक्षमत्यर्थं बभ्राम च ननाद च ॥ ३५ ॥
निष्कैवल्यं तदा युद्धं प्रापुरश्वनरद्विपाः ।
हन्यमानाः शरैरार्त्तास्तदा भीताः प्रदुद्रुवुः ॥ ३६ ॥
त्वदीयानां तदा युद्धे संसक्तानां जयैषिणाम् ।
गिरिमस्तं समासाद्य प्रत्यपद्यत भानुमान् ॥ ३७ ॥
तमसा च महाराज रजसा च विशेषतः ।
न किञ्चित्प्रत्यपश्याम शुभं वा यदि वाशुभम् ॥ ३८ ॥
ते त्रस्यन्तो महेष्वासा रात्रियुद्धस्य भारत ।
अपयानं ततश्चक्रुः सहिताः सर्वयोधिभिः ॥ ३९ ॥
कौरवेष्वपयातेषु तदा राजन्दिनक्षये ।
जयं सुमनसः प्राप्य पार्थाः स्वशिविरं ययुः ॥ ४० ॥
वादित्रशब्दैर्विविधैः सिंहनादैः सगर्जितैः ।
परानुपहसन्तश्च स्तुवन्तश्चाच्युतार्जुनौ ॥ ४१ ॥

दिया; और सब दिशा आकाश और भूमि पूरित कर दीं॥ कोई बाण मूशल के समान, कोई परिघके समान तथा कोई शतघ्नी और तेज वज्रके समान चले ॥ ( ३०—३४ )

अर्जुनके बाणोंसे व्याकुल होकर कौरवोंकी सेना आंख बन्दकर घूमने और चिल्लाने लगी; तब यह युद्ध घोर रूपसे हुआ। अनेक हाथी, घोडे, मनुष्य मरने गिरने और भयसे भागने लगे॥ इस प्रकार तुम्हारी ओरके योद्धा लोग विजयकी इच्छासे युद्ध कर रहे थे, उसी समय भगवान् सूर्य अस्ताचल पर पहुंच गये॥ हे राजन्! उससमय अन्धकार और धूलसे हम कुछ शुभ और अशुभ न देख सके॥ तब तेरे ओरके सब महाधनुर्धर वीरोंने रात्रि युद्धसे डरकर सेनाको पीछे हटाया॥ (३५-३९)

उस रात्रिके समय कौरवोंके जानेके पश्चात् जययुक्त पाण्डवोंने प्रसन्न मनसे अपने अपने शिबिरमें प्रवेश किया, जानेके समय सब वीरोंसे बाजे बजाये, वीर लोग गर्जकर कौरवोंको नींदने लगे। हे पृथ्वी नाथ! सेनाके लौटते समय

कुण्डलोपचितं कायाच्चकर्त्त पृतनान्तरे ॥ २२ ॥
तन्निकृत्य शितैर्बाणैर्मित्रवर्माणमाक्षिपत्।
वत्सदन्तेन तीक्ष्णेन सारथिं चास्य मारिष ॥ २३ ॥
ततः शरशतैर्भूयः संशप्तकगणान्बली।
पातयामास संक्रुद्धः शतशोऽथ सहस्रशः ॥ २४ ॥
ततो रजतपुङ्खेन राजञ्शीर्षं महात्मनः।
मित्रसेनस्य चिच्छेद क्षुरप्रेण महारथः ॥ २५ ॥
सुशर्माणं सुसंक्रुद्धो जत्रुदेशे समाहनत्।
ततः संशप्तकाः सर्वे परिवार्य धनञ्जयम् ॥ २६ ॥
शस्त्रौघैर्ममृदुः क्रुद्धा नादयन्तो दिशो दश।
अभ्यर्दितस्तु तज्जिष्णुः शक्रतुल्यपराक्रमः ॥ २७ ॥
ऐन्द्रमस्त्रममेयात्मा प्रादुश्चक्रे महारथः।
ततः शरसहस्राणि प्रादुरासन्विशाम्पते ॥ २८ ॥
ध्वजानां छिद्यमानानां कार्मुकाणां च मारिष।
रथानां सपताकानां तूणीराणां युगैः सह ॥ २९ ॥
अक्षाणामथ चक्राणां योक्त्राणां रश्मिभिः सह।
कूवराणां वरूथानां पृषत्कानां च संयुगे ॥ ३० ॥
अश्वानां पततां चापि प्रासानामृष्टिभिः सह।

दिया ॥ उसको मार कर मित्रवर्मासे युद्ध करने चले और एक वत्सदन्त तीक्ष्ण बाणसे उसके सारथीका सिर काट लिया॥ फिर अर्जुनने अपने बाणोंसे सहस्रों संशप्तकोंका वध किया॥ (२०—२४)

अनन्तर महारथ अर्जुनने चांदीके पङ्खवाले, तेज क्षुरप्र बाणसे मित्रसेनका सिर काट लिया॥ फिर सुशर्माके हृदयमें क्रोध करके बाण मारे तब सब संशप्तकोंने अर्जुनको चारों ओरसे घेर लिया; क्रोध करके दस दिशाओंको नादित करते हुए अनेक शस्त्र चलाने लगे; हे पृथ्वीनाथ! उनके शस्त्रोंसे व्याकुल होकर इन्द्र तुल्य पराक्रमी अर्जुनने इन्द्रास्त्र चलाया, तब उस अस्त्रसे सहस्रों बाण निकलने लगे॥ (२५–२८)

उन बाणोंसे ध्वजा धनुष तूणीर और पताका सहित अनेक रथ कटने लगे। किसी रथके पहिये, किसीकी धुरी, किसीकी अक्ष, किसीकी लगाम, किसीकी चक्र आदि कट गई॥ कहीं घोडे मर कर गिरने लगे। कहीं प्रास, ऋष्टि, गदा,

न ते निन्द्याः प्रशस्यास्ते यत्ते चक्रुर्ब्रवीहि तत्।
ततो दुर्योधनः सूत पश्चात्किमकरोत्तदा ॥ ५ ॥

सञ्जय उवाच— हतप्रहतविध्वस्ता विवर्मायुधवाहनाः।
दीनस्वरा दूयमाना मानिनः शत्रुनिर्जिताः ॥ ६ ॥
शिबिरस्थाः पुनर्मन्त्रं मन्त्रयन्ति स्म कौरवाः।
भग्नदंष्ट्रा हतविषाः पादाक्रान्ता इवोरगाः ॥ ७ ॥
तानब्रवीत्ततः कर्णः क्रुद्धः सर्प इव श्वसन्।
करं करेण निष्पीड्य प्रेक्षमाणस्तवात्मजम् ॥ ८ ॥
यत्तो दृढश्च दक्षश्च धृतिमानर्जुनस्तदा।
सम्बोधयति चाप्येनं यथाकालमधोक्षजः ॥ ९ ॥
सहसास्त्रविसर्गेण वयं तेनाद्य वञ्चिताः।
श्वस्त्वहं तस्य सङ्कल्पं सर्वं हन्ता महीपते ॥ १० ॥
एवमुक्तस्तथेत्युक्त्वा सोऽनुजज्ञे नृपोत्तमान्।
तेऽनुज्ञाता नृपाः सर्वे स्वानि वेश्मानि भेजिरे ॥ ११ ॥

हम पाण्डवोंकी निन्दा नहीं करते, क्यों कि वे प्रशंसाके योग्य ही हैं, उन पाण्डवोंने तब क्या किया तथा सेना लौटनेके पश्चात् दुर्योधन और कर्णने क्या किया? सो हमसे कहो ॥ (१–५)

सञ्जय बोले, हे राजन्! जिस समय मरनेसे बचे शस्त्र रहित तुम्हारी सेनाके वीर शत्रुओंके हाथसे पराजित होकर युद्धसे हटे, तब दीन वाणीसे परस्पर बात करते हुए डेरोंको चले, सब सेनाको डेरोंमें सुलाकर प्रधान कौरव लोग एक डेरेमें इकट्ठे हुए और विषके दांत टूट जानेके कारण विषरहित हुए तथा लात मारे हुए सांपोंके समान सम्मति करने लगे ॥ (६–७)

उन सबके बीचमें क्रोधी सांपके समान सांस लेते हुए हाथसे हाथ मीजते और तुम्हारे पुत्र दुर्योधनकी ओर देखते हुए कर्ण बोले, अर्जुन स्वभाव हीसे धनुष विद्याके जाननेवाले और महा पराक्रमी है। तिस पर भी कृष्ण उनको समय समय पर उपदेश करते हैं। इसी लिये आज हम लोग युद्धको नहीं जीत सके, परन्तु प्रातःकाल होते ही हम अर्जुनके सब अभिमानको तोड देंगे ॥ (८–१०)

कर्णके ऐसे वचन सुन दुर्योधनने कहा कि बहुत अच्छा। इसके पश्चात् सब मन्त्री और राजोंको जानेकी आज्ञा दी। वे सब लोग दुर्योधनकी आज्ञा पाकर अपने अपने डेरोंपर चलेगये ॥

स्वानुगा इव सीदन्ति रथचक्राणि मारिष ॥ ३९ ॥
चरतस्तस्य संग्रामे तस्मिँल्लोहितकर्दमे ।
सीदमानानि चक्राणि समूहुस्तुरगा भृशम् ॥ ४० ॥
श्रमेण महता युक्ता मनोमारुतरंहसः ।
वध्यमानं तु तत्सैन्यं पाण्डुपुत्रेण धन्विना ॥ ४१ ॥
प्रायशो विमुखं सर्वं नावतिष्ठत भारत ।
ताञ्जित्वा समरे जिष्णुः संशप्तकगणान्बहून् ।
विरराज तदा पार्थो विधूमोऽग्निरिव ज्वलन् ॥४२॥ [१११०]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां कर्णपर्वणि संशप्तकजये सप्तविंशोऽध्यायः ॥२७॥

सञ्जय उवाच— युधिष्ठिरं महाराज विसृजन्तं शरान्बहून् ।
स्वयं दुर्योधनो राजा प्रत्यगृह्णादभीतवत् ॥ १ ॥
तमापतन्तं सहसा तव पुत्रं महारथम् ।
धर्मराजो द्रुतं विद्ध्वा तिष्ठ तिष्ठेति चाब्रवीत् ॥ २ ॥
स तु तं प्रतिविव्याध नवभिर्निशितैः शरैः ।
सारथिं चास्य भल्लेन भृशं क्रुद्धोऽभ्यताडयत् ॥ ३ ॥
ततो युधिष्ठिरो राजन्स्वर्णपुङ्खाञ्शिलीमुखान् ।

सेवकभी प्राणत्याग करते है उसी प्रकार वहां रथोंके नष्ट होनेसे उनके चक्र भी नष्ट होने लगे ॥ (३७-३९)

जिस समय अर्जुन उस रुधिर भरे घोर युद्धमें घूम रहे थे, तब उनको कहीं मार्गभी नहीं मिलता था, उस समय महारथ अर्जुनके मन और वायुके समान वेगवाले घोडे युद्धभूमिमें चल नहीं सक्ते थे। हे महाराज! पाण्डुपुत्र अर्जुनने उस सेनाको इसप्रकार जीत लिया, और इस प्रकार शोभित हुए जैसे धूमरहित अग्नि शोभित होती है। (४०-४२) [१११०]

कर्णपर्वमें सताईस अध्याय समाप्त ।

कर्णपर्वमें अठाईस अध्याय ।

सञ्जय बोले, हे राजन् धृतराष्ट्र! अनेक बाण छोडते हुए राजा युधिष्ठिरसे निडर राजा दुर्योधन युद्ध करनेको गये॥ तुम्हारे महारथ पुत्रको आते देख राजा युधिष्ठिरने शीघ्रतासे उसे विद्ध करके कहा खडा रह! खडा रह॥ तब राजा दुर्योधनने अत्यन्त क्रुद्ध होकर अपने तेज नौ बाणोंसे राजा युधिष्ठिरको विद्ध करके एक भल्ल बाणसे उसके सारथिको विद्ध किया॥ ( १-३ )

हे राजन्! तब युधिष्ठिरने सोनेके पङ्खवाले, शिलापर घिसे हुए तीक्ष्ण तेरह

तस्य शस्त्राणि घोराणि विक्रमश्च महात्मनः।
कर्णमाश्रित्य संग्रामे मत्तो दुर्योधनो नृपः ॥ २० ॥
दुर्योधनं ततो दृष्ट्वा पाण्डवेन भृशार्दितम्।
पराक्रान्तान्पाण्डुसुतान्दृष्ट्वा चापि महारथः ॥ २१ ॥
कर्णमाश्रित्य संग्रामे मन्दो दुर्योधनः पुनः।
जेतुमुत्सहते पार्थान्सपुत्रान्सहकेशवान् ॥ २२ ॥
अहो बत महद्दुःखं यत्र पाण्डुसुतान्रणे।
नातरद्रभसः कर्णो दैवं नूनं परायणम् ॥ २३ ॥
अहो द्यूतस्य निष्ठेयं घोरा सम्प्रति वर्तते।
अहो तीव्राणि दुःखानि दुर्योधनकृतान्यहम् ॥ २४ ॥
सोढा घोराणि बहुशः शल्यभूतानि सञ्जय।
सौबलं च तदा तात नीतिमानिति मन्यते ॥ २५ ॥
कर्णश्च रभसो नित्यं राजा तं चाप्यनुव्रतः।
यदेवं वर्तमानेषु महायुद्धेषु सञ्जय ॥ २६ ॥
अश्रौषं निहतान्पुत्रान्नित्यमेव विनिर्जितान्।
न पाण्डवानां समरे कश्चिदस्ति निवारकः ॥ २७ ॥

---

सक्ते हैं। क्योंकि कर्णका बाहुवीर्य इन्द्र और विष्णुके समान है॥ महात्मा कर्णके शस्त्र तथा पराक्रम बडा घोर है। इन्हींके भरोसे दुर्योधन उन्मत्तके समान बैठा रहता है॥ पाण्डवोंसे पीडित दुर्योधनको देखकर और पाण्डवोंका बल बढा हुआ देखकर महारथ कर्णने क्या किया? सो कहो॥ (१९—२१)

हमें यही आश्चर्य होता है कि मूर्ख दुर्योधन कर्णका आश्रय लेकर पुत्र बान्धव और कृष्णके सहित पाण्डवोंको जीतना चाहता है॥ हमें यह स्मरण करके बहुत दुःख होता है, कि तेजस्वी कर्ण भी पाण्डवोंको युद्धमें न जीत सके। इसमें प्रारब्ध ही प्रधान है। हाय! यह उसी जुएका फल है। (२२–२४)

हे तात! मैं दुर्योधनके दिये हुए अनेक दुःख सह रहा हूं, वे दुःख मेरे हृदयमें घावके समान लगे हुए है, मूर्ख दुर्योधनने उस समय शकुनिको नीति जाननेवाला समझा था, हे सञ्जय! कर्ण सदासे तेज स्वभाववाला है और दुर्योधन उसीकी बातको मानता है, इसीसे यह घोर युद्ध हुआ। हे सञ्जय! हम रोज सुनते हैं कि आज हमारे इतने पुत्र मरे और इतने हारे, परन्तु यह कभी

विविधान्यप्यचिन्त्यानि शस्त्रयन्त्युत्तमानि च ॥ १३ ॥
ते शूराः समरे सर्वे चित्रं लघु च सुष्ठु च ।
अयुध्यन्त महावेगाः परस्परवधैषिणः ॥ १४ ॥
अन्योन्यं समरे जघ्नुर्योधव्रतमनुष्ठिताः ।
नहि ते समरं चक्रुः पृष्ठतो वै कथञ्चन ॥ १५ ॥
मुहूर्त्तमेव तद्युद्धमासीन्मधुरदर्शनम् ।
तत उन्मत्तवद्राजन्निर्मर्यादमवर्त्तत ॥ १६ ॥
रथी नागं समासाद्य दारयन्निशितैः शरैः ।
प्रेषयामास कालाय शरैः सन्नतपर्वभिः ॥ १७ ॥
नागा हयान्समासाद्य विक्षिपन्तो बहून्रणे ।
दारयामासुरत्युग्रं तत्र तत्र तदा तदा ॥ १८ ॥
हयारोहाश्च बहवः परिवार्य हयोत्तमान् ।
तलशब्दरवांश्चक्रुः सम्पतन्तस्ततस्ततः ॥ १९ ॥
धावमानांस्ततस्तांस्तु द्रवमाणान्महागजान् ।
पार्श्वतः पृष्ठतश्चैव निजघ्नुर्हयसादिनः ॥ २० ॥
विद्राव्य च बहूनश्वान्नागा राजन्मदोत्कटाः ।
विषाणैश्चापरे जघ्नुर्ममृदुश्चापरे भृशम् ॥ २१ ॥

लगे, हे राजन् ! यह घोर द्वन्द्व युद्ध ऐसा प्रेक्षणीय हुआ जिसमें असंख्य अचिन्त्य शस्त्र चले ॥ वे महाबलवान् योद्धा लोग एक दूसरेको मारनेके लिये शीघ्र हलके हाथोंसे और सुन्दरतासे शस्त्र चलाने लगे ॥ (१२—१४)

एक दूसरेको मारने लगा, और वे लोग सामने खडे युद्ध करते रहे, किसीने भी पीछे हटनेकी इच्छा न की ॥ हे राजन् ! थोडे समय यह युद्ध मर्यादासे होता रहा पीछे किसीको कुछ ध्यान न रहा , सब मर्यादा छोड कर लडने लगे ॥ तब रथमें बैठा वीर अपने तेज बाणोंसे हाथीपर बैठे वीरोंको मारने लगा ॥ हाथी घोडोंको पकडकर अपनी सूंडसे विदीर्ण करके मारने लगे ॥ १५-१८

घोडोंपर चढे वीर अच्छे घोडोंको चारों ओरसे घेर कर ताली बजाने लगे, तब वे घोडे डरके दौडने लगे। उस समय उन दौडते हुए घोडे और हाथियोंको आगे पीछे और दहने बायेंसे घोडोंपर चढे वीर मारने लगे। इसी प्रकार मतवाले हाथियोंने अपने दातोंसे अनेक घोडोंको मार डाला ॥ किसी हाथीने

बहुत्वान्मम कार्याणां तथा पार्थस्य भारत।
नाभूत्समागमो राजन्मम चैवार्जुनस्य च ॥ ३६ ॥
इदं तु मे यथाप्रज्ञं शृणु वाक्यं विशाम्पते।
अनिहत्य रणे पार्थं नाहमेष्यामि भारत ॥ ३७ ॥
हतप्रवीरे सैन्येऽस्मिन्मयि चावस्थिते युधि।
अभियास्यति मां पार्थः शक्रशक्तिविनाकृतम् ॥ ३८ ॥
ततः श्रेयस्करं यच्च तन्निबोध जनेश्वर।
आयुधानां च मे वीर्यं दिव्यानामर्जुनस्य च ॥ ३९ ॥
कार्यस्य महतो भेदे लाघवे दूरपातने।
सौष्ठवे चास्त्रपाते च सव्यसाची न मत्समः ॥ ४० ॥
प्राणे शौर्येऽथ विज्ञाने विक्रमे चापि भारत।
निमित्तज्ञानयोगे च सव्यसाची न मत्समः ॥ ४१ ॥
सर्वायुधमहामात्रं विजयं नाम तद्धनुः।
इन्द्रार्थं प्रियकामेन निर्मितं विश्वकर्मणा ॥ ४२ ॥
येन दैत्यगणान्राजञ्जितवान्वै शतक्रतुः।
यस्य घोषेण दैत्यानां व्यामुह्यन्त दिशो दश ॥ ४३ ॥

साथ युद्ध करनेको जाते हैं, हम उसको आज युद्धमें मारेंगे या वही हमको मारेगा ॥ हे राजन् ! हमारे और अर्जुनके सिर बहुत कामोंका भार है, इसीसे हमारा और उसका कलह युद्ध नहीं हुआ था, हे भारत ! आज हम प्रतिज्ञा करके जाते हैं, कि विना अर्जुनके मारे नहीं लौटेंगे ॥ (३४-३७)

हे राजन् ! जब मैं उनकी सेनाके वीरोंको मारूंगा। तब मुझे इन्द्रकी दी हुई शक्तिसे रहित जानकर अर्जुन युद्ध करनेको आवेंगे ॥ हे राजन् ! उस समय मेरे और अर्जुनके दिव्य बाणोंकी शक्तिको आप देखियेगा। उस समय आपको निश्चय होगा कि बाणोंको शीघ्र चलाना, दूर चलाना, ठीक लक्ष पर मारना और सुन्दरतासे चलानेमें अर्जुन हमारे समान नहीं है ॥ यह भी आपको निश्चय हो जायगा, कि अर्जुन शरीरबल, तेज, युद्धविद्या शकुन और ज्ञानमें हमारे समान नहीं है ॥ (३८-४१)

जो विश्वकर्माने इन्द्रको प्रसन्न करनेके लिये बनाया था, जो सब शस्त्रोंमें श्रेष्ठ है, जिसके शब्दसे राक्षस मोहित होते थे, जिसको धारण करके इन्द्रने अनेक दानवोंको मारा था, वही विजय

निगृहीता भृशं नागाः प्रासतोमरशक्तिभिः ॥ ३१ ॥
निगृह्य च गजाः केचित्पार्श्वस्थैर्भृशदारुणैः ।
रथाश्वसादिभिस्तत्र सम्भिन्ना न्यपतन्भुवि ॥ ३२ ॥
सहयाः सादिनस्तत्र तोमरेण महामृधे ।
भूमावमृद्नन्वेगेन सचर्माणं पदातिनम् ॥ ३३ ॥
तथा सावरणान्कांश्चित्तत्रतत्र विशाम्पते ।
रथान्नागाः समासाद्य परिगृह्य च मारिष ॥ ३४ ॥
व्याक्षिपन्सहसा तत्र घोररूपे भयानके ।
नाराचैर्निहताश्चापि गजाः पेतुर्महाबलाः ॥ ३५ ॥
पर्वतस्येव शिखरं वज्ररुग्णं महीतले ।
योधा योधान्समासाद्य मुष्टिभिर्व्यहनन्युधि ॥ ३६ ॥
केशेष्वन्योन्यमाक्षिप्य चिक्षिपुर्बिभिदुश्च ह ।
उद्यम्य च भुजानन्ये निक्षिप्य च महीतले ॥ ३७ ॥
पदा चोरः समाक्रम्य स्फुरतोऽपाहरच्छिरः ।
पततश्चापरो राजन्विजहारासिना शिरः ॥ ३८ ॥
जीवतश्च तथैवान्यः शस्त्रं काये न्यमज्जयत् ।
मुष्टियुद्धं महच्चासीद्योधानां तत्र भारत ॥ ३९ ॥
तथा केशग्रहश्चोग्रो बाहुयुद्धं च भैरवम् ।

---

हाथियोंके महावत मरकर पृथ्वीमें गिर गये, अनेक हाथियोंकी सूंडमें और सिरमें शक्ति और प्रास लगी ॥ २७-३१

अनेक हाथी चलते हुए, रथ और घोडोंकी रगडसे मर गये, अनेक घोडोंपर चढे वीर घोडोंके सहित पृथ्वीपर गिरकर मर गये, उनके गिरनेसे नीचे खडे पैदल भी मर गये, कहीं वस्त्रोंके सहित रथोंको हाथीने अपने पैरोंसे पीस दिया ॥ कहीं रथोंको उठाकर ऊपरको फेंक दिया, कहीं महाबल हाथी बाणोंसे मरकर पृथ्वीमें गिर गये ॥ ( ३२-३५ )

युद्धमें पडे हाथी ऐसे दीखते थे, जैसे कटे पर्वतोंके शिखर । कहीं दो वीर घूसोंसे लड रहे थे। कोई किसीके बाल पकडकर खींचता था। कोई किसीके थप्पड मारता था और किसीको फेंक देता था। कोई छातीपर पैर रखकर शत्रुका शिर काटता था; कोई भूमिमें गिरते हुए शत्रुको मार रहा था॥ ३६-३८

हे भारत ! कोई जीते हुए शत्रुके पेटमें कटार मारता था । कोई किसीको

अवश्यं तु मया वाच्यं येन हीनोऽस्मि फाल्गुनात् ॥५१॥
ज्या तस्य धनुषो दिव्या तथाक्षय्ये महेषुधी ।
सारथिस्तस्य गोविन्दो मम तादृङ् न विद्यते ॥ ५२ ॥
तस्य दिव्यं धनुः श्रेष्ठं गाण्डीवमजितं युधि ।
विजयं च महद्दिव्यं ममापि धनुरुत्तमम् ॥ ५३ ॥
तत्राहमधिकः पार्थाद्धनुषा तेन पार्थिव ।
येन चाप्यधिको वीरः पाण्डवस्तन्निबोध मे ॥ ५४ ॥
रश्मिग्राहश्च दाशार्हः सर्वलोकनमस्कृतः ।
अग्निदत्तश्च वै दिव्यो रथः काञ्चनभूषणः ॥ ५५ ॥
अच्छेद्यः सर्वतो वीर वाजिनश्च मनोजवाः ।
ध्वजश्च दिव्यो द्युतिमान्वानरो विस्मयङ्करः ॥ ५६ ॥
कृष्णश्च स्रष्टा जगतो रथं तमभिरक्षति ।
एतैर्द्रव्यैरहं हीनो योद्धुमिच्छामि पाण्डवम् ॥ ५७ ॥
अयं तु सदृशः शौरेः शल्यः समितिशोभनः ।
सारथ्यं यदि मे कुर्याद् ध्रुवस्ते विजयो भवेत् ॥५८॥
तस्य मे सारथिः शल्यो भवत्वसुकरः परैः ।
नाराचान्गार्ध्रपत्रांश्च शकटानि वहन्तु मे ॥ ५९ ॥

मुझे अवश्य कहना चाहिये । अर्जुनके धनुषकी डोरी दिव्य है और उसके दो तूणीर अक्षय है, तथा कृष्ण अर्जुनके सारथी है, वैसा हमारा नहीं है ॥ जैसे अर्जुनका दिव्य गाण्डीव धनुष युद्धमे अजित है, वैसा ही मेरा भी विजय धनुष दिव्य, बडा और उत्तम है॥ मैं इस धनुषके कारण अर्जुनसे श्रेष्ठ हूं । परन्तु अर्जुन जिससे श्रेष्ठ है सो सुनो। ५१ ५४

अर्जुनके सारथी सर्वलोक पूजित श्रीकृष्ण है, और अग्निका दिया हुआ सुवर्ण भूषित रथ दिव्य और सब ओरसे अच्छेद्य है, तथा अर्जुनके घोडे मनके समान शीघ्र चलते हैं और उन की दिव्य ध्वजापर भयङ्कर बन्दर रहता है, जगत्कर्त्ता कृष्ण उनके रथकी रक्षा करते हैं, हम इन सब सामग्रियोंसे हीन है, तौ भी अर्जुनसे युद्ध करनेका साहस रखते है ॥ (५५-५७)

राजा शल्य कृष्णके समान घोडे हांकने जानते है, यदि ये मेरे सारथी बनें तो निश्चयही आपका विजय होगा॥ आज राजा शल्य हमारे सारथी बनें और गिद्धपङ्ख लगे बाणोंसे भरे छकडे

पञ्चालानहनत्कर्णस्त्रिगर्त्तांश्च धनञ्जयः ॥ ४८ ॥
भीमसेनः कुरून्राजन्हरत्यनीकं च सर्वशः ।
एवमेष क्षयो वृत्तः कुरुपाण्डवसेनयोः ।
अपराह्ने गते सूर्ये कांक्षतां विपुलं यशः ॥ ४९ ॥ [ ११५९ ]

इति श्रीमहाभारते० शतसाहस्र्या संहितायां वैयासिक्यां कर्णपर्वणि सकुलयुद्धेऽष्टाविंशोऽध्यायः ॥ २८ ॥

धृतराष्ट्र उवाच— अतितीव्राणि दुःखानि दुःसहानि बहूनि च ।
त्वत्तोऽहं सञ्जयाश्रौषं पुत्राणां चैव संक्षयम् ॥ १ ॥
यथा त्वं मे कथयसे यथा युद्धमवर्त्तत ।
न सन्ति सूत कौरव्या इति मे निश्चिता मतिः ॥ २ ॥
दुर्योधनश्च विरथः कृतस्तत्र महारथः ।
धर्मपुत्रः कथं चक्रे तस्य वा नृपतिः कथम् ॥ ३ ॥
अपराह्ने कथं युद्धमभवल्लोमहर्षणम् ।
तन्ममाचक्ष्व तत्त्वेन कुशलो ह्यसि सञ्जय ॥ ४ ॥

सञ्जय उवाच— संसक्तेषु तु सैन्येषु वध्यमानेषु भागशः ।
रथमन्यं समास्थाय पुत्रस्तव विशाम्पते ॥ ५ ॥
क्रोधेन महता युक्तः सविषो भुजगो यथा ।

त्रिगर्तोंको अर्जुन मारने लगे, इसी प्रकार भीमसेन भी कौरवोंकी गजसेना का नाश करने लगे । हे महाराज ! इस प्रकार यह कौरव और पाण्डवोंकी सेना में घोर युद्ध हुआ, इस प्रकार यश प्राप्त करने की इच्छासे वीरोंने दोपहर युद्ध किया ॥ (४८-४९) [ ११५९ ]

कर्णपर्वमें अटाईस अध्याय समाप्त ।

कर्णपर्वमें उनतीस अध्याय ।

धृतराष्ट्र बोले, हे सञ्जय ! हमने तुम्हारे मुखसे न सहने योग्य अनेक दुःखकी बातें सुनीं, यह भी सुना कि हमारे पुत्रोंका नाश होता जाता है, जैसा युद्ध हुआ वैसाही हमसे तुमने कहा । हे सूत ! हमें यह निश्चय है कि इस युद्धमें सब कौरवोंका नाश होजायगा ॥ महारथ धर्मराज युधिष्ठिरने दुर्योधनका रथ काट दिया था, उस युद्धमें धर्मराज युधिष्ठिर और दुर्योधनने क्या किया सो हमसे कहो; हे सञ्जय ! इस घोर युद्धमें दोपहर के पश्चात् क्या हुआ सो भी हमसे कहो; क्योंकि तुम इस विषयको अच्छी प्रकार जानते हो ? ( १—४ )

सञ्जय बोले, हे पृथ्वीनाथ ! जब धर्मराज युधिष्ठिर तुम्हारी सेनाको मारने लगे, और दुर्योधनका रथ कट गया,

सर्वथा पाण्डवान्सङ्ख्ये विजेष्ये वै समागतान् ॥ ६८॥
न हि मे समरे शक्ताः समुद्यातुं सुरासुराः ।
किमु पाण्डुसुता राजन्रणे मानुषयोनयः ॥ ६९ ॥
सञ्जय उवाच— एवमुक्तस्तव सुतः कर्णेनाहवशोभिना ।
सम्पूज्य सम्प्रहृष्टात्मा ततो राधेयमब्रवीत् ॥ ७० ॥
दुर्योधन उवाच- एवमेतत्करिष्यामि यथा त्वं कर्ण मन्यसे ।
सोपासङ्गा रथाः साश्वाः स्वनुयास्यन्ति संयुगे ॥७१ ॥
नाराचान्गार्ध्रपत्रांश्च शकटानि वहन्तु ते ।
अनुयास्याम कर्ण त्वां वयं सर्वे च पार्थिवाः ॥ ७२ ॥
सञ्जय उवाच— एवमुक्त्वा महाराज तव पुत्रः प्रतापवान् ।
अभिगम्याब्रवीद्राजा मद्रराजमिदं वचः ॥ ७३ ॥ [१३१२]

इति श्रीमहा० शतसाहस्त्र्या संहितायां वैयासिक्यां कर्णपर्वणि कर्णदुर्योधनसंवादे एकत्रिंशोऽध्याय ॥३१॥

सञ्जय उवाच— पुत्रस्तव महाराज मद्रराजं महारथम् ।
विनयेनोपसङ्गम्य प्रणयाद्वाक्यमब्रवीत् ॥ १ ॥
सत्यव्रत महाभाग द्विषतां तापवर्धन ।
मद्रेश्वर रणे शूर परसैन्यभयङ्कर ॥ २ ॥

देखेंगे, हम निश्चय युद्धमें प्राप्त हुए पांचों वीर पाण्डवोंको जीतेंगे ॥ हे राजन्! युद्धमें मेरे आगे देवता और राक्षस भी नहीं ठरह सकते, फिर मनुष्य योनिमें उत्पन्न हुए पाण्डवोंकी तो बातही क्या है? ( ६६–६९ )

सञ्जय बोले, युद्धमें शोभायमान महा पराक्रमी राधापुत्रके वचन सुनकर हंसकर दुर्योधन बोले, हे कर्ण! तुम जो कहते हो हम वैसा ही करेंगे, तुम्हारे सङ्ग अनेक रथ घोडों सहित रहेंगे। हे कर्ण! छकडोंमें भरे हुए नाराच तथा गृध्रपंखवाले और भी अनेक बाण तुम्हारे सङ्ग रहेंगे और हम सब राजा लोग तुम्हारे पीछे रहेंगे, हे राजन्! कर्णसे ऐसे कहकर प्रतापी दुर्योधन मद्रराज शल्यसे ऐसा वचन बोले॥ (७०-७३) [१३१२]

कर्णपर्वमें इकतसि अध्याय समाप्त।

कर्णपर्वमें बत्तीस अध्याय।

सञ्जय बोले, हे राजन्! राजा दुर्योधन महारथ शल्यके पास जाकर विनयपूर्वक उन्हें प्रसन्न करके ऐसा वचन बोले, हे सत्यव्रत! हे महाभाग! आपसे सब शत्रु कांपते है; हे मद्रराज! आप युद्धमें शूर और शत्रुओंकी सेनाको भय देनेवाले है। हे बोलने वालोंमें श्रेष्ठ!

अथान्यद्धनुरादाय प्राविध्यत युधिष्ठिरम् ।
तावन्योन्यं सुसंक्रुद्धौ शस्त्रवर्षाण्यमुञ्चताम् ॥ १५ ॥
सिंहाविव सुसंरब्धौ परस्परजिगीषया ।
जघ्नतुस्तौ रणेऽन्योन्यं नर्दमानौ वृषाविव ॥ १६ ॥
अन्तरं मार्गमाणौ च चेरतुस्तौ महारथौ ।
ततः पूर्णायतोत्सृष्टैः शरैस्तौ तु कृतव्रणौ ॥ १७ ॥
विरेजतुर्महाराज किंशुकाविव पुष्पितौ ।
ततो राजन्विमुञ्चतौ सिंहनादान्मुहुर्मुहुः ॥ १८ ॥
तलयोश्च तथा शब्दान्धनुषश्च महाहवे ।
शङ्खशब्दरवांश्चैव चक्रतुस्तौ नरेश्वरौ ॥ १९ ॥
अन्योन्यं तौ महाराज पीडयाञ्चक्रतुर्भृशम् ।
ततो युधिष्ठिरो राजा पुत्रं तव शरैस्त्रिभिः ॥ २० ॥
आजघानोरसि क्रुद्धो वज्रवेगैर्दुरासदैः ।
प्रतिविव्याध तं तूर्णं तव पुत्रो महीपतिः ॥ २१ ॥
पञ्चभिर्निशितैर्बाणैः स्वर्णपुङ्खैः शिलाशितैः ।
ततो दुर्योधनो राजा शक्तिं चिक्षेप भारत ॥ २२ ॥
सर्वपारसवीं तीक्ष्णां महोल्काप्रतिमां तदा ।

---

आगे दुर्योधनकी ध्वजा और धनुषको काट दिया, दुर्योधनभी दूसरा धनुष ले कर धर्मराजको विद्ध करने लगे। १२-१५

वे दोनों अपनी विजयकी इच्छासे सिंहके समान गर्जने लगे और एक दूसरेके ऊपर बाणोंकी वर्षा करने लगे, और मतवारे लडनेवाले दो बैलोंके समान एक दूसरेको मारनेके लिये समय देखने लगा॥ तब दोनोंके शरीरमें बाणोंके घाव होगये, हे राजन्! रुधिर बहनेसे उन दोनोंकी ऐसी शोभा बढी जैसे फूले हुए कचनारकी। वे दोनों राजा कभी धनुष टङ्कारते थे, कभी शङ्ख बजाते थे; वे दोनों राजा अपने बाणोंसे एक दूसरेको पीडा देने लगे। ( १५-२० )

तब राजा युधिष्ठिरने तुम्हारे पुत्रकी ओर तीन बाण चलाये। वे वज्रके समान तीनों बाण दुर्योधनकी छातीमें आकर लगे, तब तुम्हारे पुत्रने भी युधिष्ठिरके हृदयमें तीन बाण मारे, हे भारत! तुम्हारे पुत्रने युधिष्ठिरके बाणोंको अपने पांच बाणोंसे काटकर उनकी ओर एक शक्ति चलाई, उस सर्व शत्रुओंके नाश करनेवाली बडी उल्काके समान आतीहुई

वृद्धौ हि तौ महेष्वासौ छलेन निहतौ युधि ॥ ११ ॥
कृत्वा न सुकरं कर्म गतौ स्वर्गमितोऽनघ ।
तथान्ये पुरुषव्याघ्राः परैर्विनिहता युधि ॥ १२ ॥
अस्मदीयाश्च बहवः स्वर्गायोपगता रणे ॥
त्यक्त्वा प्राणान्यथाशक्ति चेष्टां कृत्वा च पुष्कलाम् ॥१३॥
तदिदं हतभूयिष्ठं बलं मम नराधिप ।
पूर्वमप्यल्पकैः पार्थैर्हतं किमुत साम्प्रतम् ॥ १४ ॥
बलवन्तो महात्मानः कौन्तेयाः सत्यविक्रमाः ।
बलं शेषं न हन्युर्मे यथा तत्कुरु पार्थिव ॥ १५ ॥
हतवीरमिदं सैन्यं पाण्डवैः समरे विभो ।
कर्णो ह्येको महाबाहुरस्मत्प्रियहिते रतः ॥ १६ ॥
भवांश्च पुरुषव्याघ्र सर्वलोकमहारथः ।
शल्य कर्णोऽर्जुनेनाद्य योद्धुमिच्छति संयुगे ॥ १७ ॥
तस्मिञ्जयाशा विपुला मद्रराज नराधिप ।
तस्याभीषुग्रहवरो नान्योऽस्ति भुवि कश्चन ॥ १८ ॥

दोनोंने मेरे शत्रुओंको मार मारकर अपने भागको समाप्त कर दिया, परन्तु पाण्डवोंने उन दोनों धनुषधारी बूढोंको छलसे मार डाला। वे दोनों अमानुष कर्म करके यहांसे स्वर्गलोकमें गये तथा और भी हमारे अनेक वीर अपनी शक्तिके अनुसार पराक्रम करके स्वर्गको चले गये, अब हमारी सेना मरनेसे थोडीसी रही है। (९-१४)

अल्पसेनावाले पाण्डवोंने पहलेही इस को नाश किया था, अब वे बलवान् हुए है तो उनको इतनी अल्प सेनाका मारना क्या कठिन है? हे पृथ्वीनाथ ! पाण्डव लोग महात्मा सत्यपराक्रमी और विजयी है। जिस प्रकार वे लोग हमारी बची सेनाको न मार सकें सोही आप उपाय कीजिये ॥ हे पृथ्वीनाथ ! इस बची हुई सेनाकी रक्षा करनेके लिये एक कर्ण ही समर्थ है; क्योंकि वह सदा हमारा प्रिय और कल्याण चाहते हैं॥ हे पुरुष सिंह! महारथ कर्णकी यह इच्छा है, कि आपकी सहायतासे पाण्डवोंके साथ युद्ध करे ॥ (१४-१७)

हे मद्रराज ! हमको यह निश्चय है, कि कर्ण ही हमारे सब शत्रुओंको जीत सक्ते है। परन्तु पृथ्वीमें आपके सिवाय उनके घोडे हांकनेके योग्य और कोई मनुष्य नहीं है। जैसे अर्जुनके कृष्ण

रथस्थः स तया विद्धो वर्म भित्त्वा स्तनान्तरे ।
भृशं संविग्नहृदयः पपात च मुमोह च ॥ ३२ ॥
भीमस्तमाह च ततः प्रतिज्ञामनुचिन्तयन् ।
नायं वध्यस्तव नृप इत्युक्तः स न्यवर्तत ॥ ३३ ॥
ततस्त्वरितमागम्य कृतवर्मा तवात्मजम् ।
प्रत्यपद्यत राजानं निमग्नं व्यसनार्णवे ॥ ३४ ॥
गदामादाय भीमोऽपि हेमपट्टपरिष्कृताम् ।
अभिदुद्राव वेगेन कृतवर्माणमाहवे ॥ ३५ ॥
एवं तदभवद्युद्धं त्वदीयानां परैः सह ।
अपराह्णे महाराज कांक्षतां विजयं युधि ॥ ३६ ॥ [ ११९५ ]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां कर्णपर्वणि सकुलयुद्धे एकोनत्रिंशोऽध्यायः ॥ २९ ॥

सञ्जय उवाच— ततः कर्णं पुरस्कृत्य त्वदीया युद्धदुर्मदाः ।
पुनरावृत्य संग्रामं चक्रुर्देवासुरोपमम् ॥ १ ॥
द्विरदनररथाश्वशङ्खशब्दैः परिहृषिता विविधैश्च शस्त्रपातैः ।
द्विरदरथपदातिसादिसङ्घाः परिकुपिताभिमुखाः प्रजह्रिरे ते ॥ २ ॥

बडी उल्काके समान एक शक्ति दुर्योधन की ओर चलाई उस शक्तिसे दुर्योधनका कवच कट गया और उसकी छाती विद्ध हुई, इससे दुर्योधन पृथ्वीमें गिर गये और मूर्च्छित हुए ॥ (२९—३२)

दुर्योधनको इस दुर्दशामें देख भीमसेनने युधिष्ठिरसे कहा, हे महाराज ! इसको मारनेकी मैंने प्रतिज्ञा की है । भीमसेनके वचन सुन युधिष्ठिर दूसरी ओर चले गये । हे राजन् ! दुःखसे पीडित तुम्हारे पुत्र राजा दुर्योधनकी रक्षा करनेके लिये बहुत शीघ्रतासे कृतवर्मा आये । इधर भीमसेनने भी सोनेके तारोंसे जडी हुई गदाको लेकर कृतवर्माकी ओर वेगसे दौडे, तब तुम्हारी और युधिष्ठिरकी सेना अपनी जीतके लिये उस तीसरे पहरमें युद्ध करने लगी ॥ (३३–३६) [११९५]

कर्णपर्वमें उनतीस अध्याय समाप्त।

कर्णपर्वमें तीस अध्याय ।

सञ्जय बोले, हे राजन् धृतराष्ट्र ! तब तुम्हारी सब वीर सेनाने कर्णको आगे करके फिर देवासुरके संग्रामके समान युद्ध करना आरंभ किया ॥ हाथी, मनुष्य, रथ, घोडे और शङ्खके शब्दोंमे और अनेक प्रकारके अस्त्र चलनेसे प्रसन्न होकर हाथी घोडे और रथोंपर बैठे तथा पैदल वीर क्रोध करके युद्ध करने लगे ॥

संयोगो युवयोर्लोके नाभून्न च भविष्यति ॥ २७ ॥
यथा सर्वास्ववस्थासु वार्ष्णेयः पाति पाण्डवम् ।
तथा भवान्परित्रातु कर्णं वैकर्त्तनं रणे ॥ २८ ॥
त्वया सारथिना ह्येष अप्रधृष्यो भविष्यति ।
देवतानामपि रणे सशक्राणां महीपते ।
किं पुनः पाण्डवेयानां मा विशङ्कीर्वचो मम ॥ २९ ॥
सञ्जय उवाच— दुर्योधनवचः श्रुत्वा शल्यः क्रोधसमन्वितः ।
त्रिशिखां भ्रुकुटिं कृत्वा धुन्वन्हस्तौ पुनः पुनः॥ ३० ॥
क्रोधरक्ते महानेत्रे परिवृत्त्य महाभुजः ।
कुलैश्वर्यश्रुतबलैर्दृप्तः शल्योऽब्रवीदिदम् ॥ ३१ ॥
शल्य उवाच— अवमन्यसि गान्धारे ध्रुवं च परिशङ्कसे ।
यन्मां ब्रवीषि विश्रब्धं सारथ्यं क्रियतामिति ॥ ३२ ॥
अस्मत्तोऽभ्यधिकं कर्णं मन्यमानः प्रशंससि ।
न चाहं युधि राधेयं गणये तुल्यमात्मनः ॥ ३३ ॥
आदिश्यतामभ्यधिको ममांशः पृथिवीपते ।
तमहं समरे जित्वा गमिष्यामि यथागतम् ॥ ३४ ॥

श्रेष्ठ हैं, तैसे ही आप रथ हांकनेमें उत्तम हैं। ऐसा संयोग न कभी हुआ और न होगा॥ (२५—२७)

जैसे कृष्ण अर्जुनको सब आपत्तियोंसे बचाते हैं, तैसे ही युद्धमें आप कर्णकी रक्षा कीजिये॥ हे पृथ्वीनाथ ! आपको सारथी बनाकर कर्ण देवतोंके सहित इन्द्रको भी जीत सकते हैं, फिर पाण्डवोंकी तो कथा ही क्या है! आप हमारे वचनमें कुछ सन्देह न कीजिये॥ २८-२९

सञ्जय बोले, हे राजन् ! दुर्योधनके ऐसे वचन सुन शल्य क्रोधसे भर गये, भौंहें चढाकर हाथोंको बार बार वेगसे घुमाने लगे। कुल, ऐश्वर्य, श्रुत, और बल इनके अभिमानसे भरे हुए शल्यके नेत्र क्रोधसे लाल होगये, और दुर्योधनको दपट कर ऐसा बोले॥ हे गान्धारी पुत्र ! तुझे हमारा कुछ विश्वास नहीं है, जो निरादर करके कहता है, कि कर्णके सारथी बनो॥ तू हमसे कर्णको अधिक जानकर उसकी प्रशंसा कर रहा है, परन्तु मैं राधापुत्रको किसी अवस्थामें अपने समान योद्धा नहीं समझता॥ (३०—३३)

तुम हममें किसी योधाको इस सेनामें अधिक बताओ, उसीको हम जीतकर

तमपि सरथवाजिसारथिं शिनिवृषभो विविधैः शरैस्त्वरन् ।
भुजगविषसमप्रभै रणे पुरुषवर समवास्तृणोत्तदा ॥ १० ॥
शिनिवृषभशरैर्निपीडितं तव सुहृदो वसुषेणमभ्ययुः ।
त्वरितमतिरथा रथर्षभं द्विरदरथाश्वपदातिभिः सह ॥ ११ ॥
तदुदधिनिभमाद्रवद्बलं त्वरिततरैः समभिद्रुतं परैः ।
द्रुपदसुतमुखैस्तदाभवत्पुरुषरथाश्वगजक्षयो महान् ॥ १२ ॥
अथ पुरुषवरौ कृताह्निकौ भवमभिपूज्य यथाविधि प्रभुम् ।
अरिवधकृतनिश्चयौ द्रुतं तव बलमर्जुनकेशवौ सृतौ ॥ १३ ॥
जलदनिनदनिःस्वनं रथं पवनविधूतपताककेतनम् ।
सितहयमुपयान्तमन्तिकं कृतमनसो ददृशुस्तदारयः ॥ १४ ॥
अथ विस्फार्य गाण्डीवं रथे नृत्यन्निवार्जुनः ।
शरसम्बाधमकरोत्खं दिशः प्रदिशस्तथा ॥ १५ ॥
रथान्विमानप्रतिमान्मज्जयन्सायुधध्वजान् ।
ससारथींस्तदा बाणैरभ्राणीवानिलोऽवधीत् ॥ १६ ॥
गजान्गजप्रयन्तॄंश्च वैजयन्त्यायुधध्वजान् ।

शिनिवंश श्रेष्ठ सात्यकिने भी युद्धमें सर्पविषके समान प्रभाव शाली अपने बाणोंसे घोडे सारथी और रथ सहित कर्णको छिपा दिया ॥ महारथ कर्णको सात्यकिके बाणोंसे पीडित देखकर रथ घोडे और हाथियों पर चढ कर तुम्हारी सेनाके अतिरथी योद्धालोग पाण्डवोंकी सेनाकी ओर दौडे । तब उधरसे भी धृष्टद्युम्न आदि प्रधान वीरोंसे युक्त समुद्रके समान सैन्य युद्ध करनेको चले, तब यह हाथी घोडे और मनुष्योंका नाश करनेवाला घोर युद्ध होने लगा ॥ १०-१२

अनन्तर पुरुषश्रेष्ठ कृष्ण और अर्जुन मध्यान्हकी सन्ध्या करके और जगत्के पति शिवकी पूजा करके तुम्हारी सेनाका नाश करनेको आये ॥ शत्रुओंने वायुसे उडते हुए, पताकावाले मेघके समान गर्जते हुए सफेद घोडे युक्त अर्जुनके रथको देखा ॥ अनन्तर अर्जुनने अपनी धनुषपर टङ्कार देके अपने बाणोंसे आकाश दिशा और उपदिशाओंको पूरित कर दिया ॥ ( १३-१५ )

अर्जुन अपने बाणोंसे आयुध ध्वजा और सारथियोंके सहित विमानके समान अनेक रथोंको मेघोंको नष्ट करनेवाले वायुके समान नष्ट करने लगे ॥ हाथी महावत, माला और शस्त्रोंके सहित वीर घोडे और घोडोंपर चढे अनेक वीरोंको

वशो पापीयसो धत्ते तत्पापमधरोत्तरम् ।
ब्रह्मणा ब्राह्मणाः सृष्टा मुखात्क्षत्रं च बाहुतः ॥ ४३ ॥
ऊरुभ्यामसृजद्वैश्याञ्शूद्रान्पद्भ्यामिति श्रुतिः ।
तेभ्यो वर्णविशेषाश्च प्रतिलोमानुलोमजाः ॥ ४४ ॥
अथान्योन्यस्य संयोगाच्चातुर्वर्ण्यस्य भारत ।
गोप्तारः संगृहीतारो दातारः क्षत्रियाः स्मृताः॥ ४५ ॥
याजनाध्यापनैर्विप्रा विशुद्धैश्च प्रतिग्रहैः ।
लोकस्यानुग्रहार्थाय स्थापिता ब्राह्मणा भुवि ॥ ४६ ॥
कृषिश्च पाशुपाल्यं च विशां दानं च धर्मतः ।
ब्रह्मक्षत्रविशां शूद्रा विहिताः परिचारकाः ॥ ४७ ॥
ब्रह्मक्षत्रस्य विहिताः सूता वै परिचारकाः ।
न क्षत्रियो वै सूतानां शृणुयाच्च कथञ्चन ॥ ४८ ॥
अहं मूर्धाभिषिक्तो हि राजर्षिकुलजो नृपः ।
महारथः समाख्यातः सेव्यः स्तुत्यश्च वन्दिनाम्॥४९ ॥
सोऽहमेतादृशो भूत्वा नेहारिबलसूदनः ।
सूतपुत्रस्य संग्रामे सारथ्यं कर्तुमुत्सहे ॥ ५० ॥
अवमानमहं प्राप्य न योत्स्यामि कथञ्चन ।

कराना यह पाप कर्म होता है। ब्राह्मणोंको मुखसे, क्षत्रीको हाथोंसे, वैश्योंको जङ्घासे और शूद्र लोगोंको पैरोंसे ब्रह्माने बनाया है ॥ (४०-४४)

उन्हीं चार वर्णोंसे अनुलोम प्रतिलोम भावसे अनेक जाति उत्पन्न हुई हैं। हे भारत! ये चारों वर्ण तथा और जातियोंकी भी रक्षा, पालन और पोषणके लिये, क्षत्रियोंको ब्रह्माने बनाया है ॥ पढना, पढाना, यज्ञ करना, कराना, दान देना और शुद्ध दान लेना, ये लोकानुग्रह कारक ब्राह्मणके कर्म हैं। खेती करना, पशुओंका पालना और धर्मसे दान देना ये वैश्योंके कर्म हैं, और ब्राह्मण, क्षत्री तथा वैश्यकी सेवा करना शूद्रका काम है ॥ (४५-४७)

ब्राह्मण और क्षत्रियोंकी सूत जाति सेवक है। क्षत्री कभी सूतकी आज्ञाको नहीं सुन सक्ता ॥ मैं राजऋषियोंके कुल में उत्पन्न हुआ, अभिषेक किया गया राजा, प्रसिद्ध, महारथ, सेव्य, और शत्रुसेनाका नाश करनेमें समर्थ हूं॥ वन्दिजन नित्य हमारी स्तुति करते हैं। मैं इस प्रकारके गुणोंसे युक्त होकर

नवत्या नवभिश्चोग्रैः शतेन पुनरार्पयत् ॥ २५ ॥
ततः प्रवीराः पार्थानां सर्वे कर्णमपीडयन् ।
युधामन्युः शिखण्डी च द्रौपदेयाः प्रभद्रकाः ॥ २६ ॥
उत्तमौजा युयुत्सुश्च यमौ पार्षत एव च ।
चेदिकारूषमत्स्यानां कैकयानां च यद्बलम् ॥ २७ ॥
चेकितानश्च बलवान्धर्मराजश्च सुव्रतः ।
एते रथाश्वद्विरदैः पत्तिभिश्चोग्रविक्रमैः ॥ २८ ॥
परिवार्य रणे कर्णं नानाशस्त्रैरवाकिरन् ।
भाषन्तो वाग्भिरुग्राभिः सर्वे कर्णवधे धृताः ॥ २९ ॥
तां शस्त्रवृष्टिं बहुधा कर्णश्छित्त्वा शितैः शरैः ।
अपोवाहास्त्रवीर्येण द्रुमं भंक्त्वेव मारुतः ॥ ३० ॥
रथिनः समहामात्रान्गजानश्वान्ससादिनः ।
पत्तिव्रातांश्च संक्रुद्धो निघ्नन्कर्णो व्यदृश्यत ॥ ३१ ॥
तद्वध्यमानं पाण्डूनां बलं कर्णास्त्रतेजसा ।
विशस्त्रपत्रदेहासु प्राय आसीत्पराङ्मुखम् ॥ ३२ ॥
अथ कर्णास्त्रमस्त्रेण प्रतिहत्यार्जुनः स्मयन् ।

पर निन्यानवे बाण मारे, और फिर एकसौ बाण मारे॥ तब कर्णसे लडनेको युधामन्यु, शिखण्डी, द्रौपदीके पांचों पुत्र, प्रभद्रक, उत्तमौजा, युयुत्सु, नकुल, सहदेव, और धृष्टद्युम्न आये ॥ इनके संग चेदी, कारूष, मत्स्य और केकयदेशकी सब सेना आई ॥ (२५-२७)

सङ्गही बलवान् चेकितान तथा महाराज अच्छे व्रतवाले धर्मराज युधिष्ठिरभी आये । ये सब वीर रथ, घोडे और बलवान् हाथियोंपर चढकर कर्णको घेर कर उनके वधकी इच्छासे कठोर बोलते हुए नाना प्रकारके शस्त्रोंको कर्णकी ओर चलाने लगे ॥ (२८-२९)

कर्णने अपने शस्त्रोंके बलसे उन सब बाणोंको इस प्रकार काट दिया, जैसे वायु वृक्षोंको उखाडकर फेंक देता है ॥ तब कर्णने क्रुद्ध होकर अपने बाणोंसे महावतोंके सहित हाथी, सारथियोंके सहित रथ, सवारोंके सहित अनेक घोडों और अनेक पैदल वीरोंको मार डाला॥ तब हमने देखा, कि कर्णके बाणोंसे पाण्डवोंकी सेनाके शस्त्र, वाहन, देह और प्राण नष्ट होने लगे और जब वह सब सेना भागने लगी, तब अर्जुनने कर्णके सब बाणोंको अपने बाणोंसे काट

वशो पापीयसो धत्ते तत्पापमधरोत्तरम् ।
ब्रह्मणा ब्राह्मणाः सृष्टा मुखात्क्षत्रं च बाहुतः॥ ४३ ॥
ऊरुभ्यामसृजद्वैश्याञ्छूद्रान्पद्भ्यामिति श्रुतिः ।
तेभ्यो वर्णविशेषाश्च प्रतिलोमानुलोमजाः ॥ ४४ ॥
अथान्योन्यस्य संयोगाच्चातुर्वर्ण्यस्य भारत ।
गोप्तारः संगृहीतारो दातारः क्षत्रियाः स्मृताः॥ ४५ ॥
याजनाध्यापनैर्विप्रा विशुद्धैश्च प्रतिग्रहैः ।
लोकस्यानुग्रहार्थाय स्थापिता ब्राह्मणा भुवि ॥ ४६ ॥
कृषिश्च पाशुपाल्यं च विशां दानं च धर्मतः ।
ब्रह्मक्षत्रविशां शूद्रा विहिताः परिचारकाः ॥ ४७ ॥
ब्रह्मक्षत्रस्य विहिताः सूता वै परिचारकाः ।
न क्षत्रियो वै सूतानां शृणुयाच्च कथञ्चन ॥ ४८ ॥
अहं मूर्धाभिषिक्तो हि राजर्षिकुलजो नृपः ।
महारथः समाख्यातः सेव्यः स्तुत्यश्च वन्दिनाम्॥४९ ॥
सोऽहमेतादृशो भूत्वा नेहारिबलसूदनः ।
सूतपुत्रस्य संग्रामे सारथ्यं कर्तुमुत्सहे ॥ ५० ॥
अवमानमहं प्राप्य न योत्स्यामि कथञ्चन ।

कराना यह पाप कर्म होता है । ब्राह्मणोंको मुखसे, क्षत्रीको हाथोंसे, वैश्योंको जङ्घासे और शूद्र लोगोंको पैरोंसे ब्रह्माने बनाया है ॥ (४०–४४)

उन्हीं चार वर्णोंसे अनुलोम प्रतिलोम भावसे अनेक जाति उत्पन्न हुई हैं। हे भारत ! ये चारों वर्ण तथा और जातियोंकी भी रक्षा, पालन और पोपणके लिये, क्षत्रियोंको ब्रह्माने बनाया है ॥ पढना, पढाना, यज्ञ करना, कराना, दान देना और शुद्ध दान लेना, ये लोकानुग्रह कारक ब्राह्मणके कर्म है। खेती करना, पशुओंका पालना और धर्मसे दान देना ये वैश्योंके कर्म हैं, और ब्राह्मण, क्षत्री तथा वैश्यकी सेवा करना शूद्रका काम है ॥ (४५–४७)

ब्राह्मण और क्षत्रियोंकी सूत जाति सेवक है। क्षत्री कभी सूतकी आज्ञाको नहीं सुन सक्ता ॥ मैं राजऋषियोंके कुल में उत्पन्न हुआ, अभिषेक किया गया राजा, प्रसिद्ध, महारथ, सेव्य, और शत्रुसेनाका नाश करनेमें समर्थ हूं ॥ वन्दिजन नित्य हमारी स्तुति करते हैं। मैं इस प्रकारके गुणोंसे युक्त होकर

कृतेऽवहारे तैर्वीरैः सैनिकाः सर्व एत ते ।
आशीर्वाचः पाण्डवेषु प्रयुञ्जन्त नरेश्वराः ॥ ४२ ॥
ततः कृतेऽवहारे च प्रहृष्टास्तत्र पाण्डवाः ।
निशायां शिबिरं गत्वा न्यवसन्त नरेश्वराः ॥ ४३ ॥
ततो रक्षःपिशाचाश्च श्वापदाश्चैव सङ्घशः ।
जग्मुरायोधनं घोरं रुद्रस्याक्रीडसन्निभम् ॥ ४४ ॥ [१२३९]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां कर्णपर्वणि
प्रथमे युद्धदिवसे त्रिंशोऽध्यायः ॥ ३० ॥

धृतराष्ट्र उवाच– स्वेन च्छन्देन नः सर्वानवधीद्व्यक्तमर्जुनः ।
न ह्यस्य समरे मुच्येदन्तकोऽप्याततायिनः ॥ १ ॥
पार्थश्चैकोऽहरद्भद्रामेकश्चाग्निमतर्पयत् ।
एकश्चेमां महीं जित्वा चक्रे बलिभृतो नृपान् ॥ २ ॥
एको निवातकवचानहनद्दिव्यकार्मुकः ।
एकः किरातरूपेण स्थितं शर्वमयोधयत ॥ ३ ॥
एको ह्यरक्षद्भरतानेको भवमतोषयत् ।
तेनैकेन जिताः सर्वे महीपा ह्युग्रतेजसा ॥ ४ ॥

सब योद्धाओंने उच्च स्वरसे श्रीकृष्ण और अर्जुनकी प्रशंसा की ॥ और नरश्रेष्ठ पाण्डवोंके विषयमें आशीर्वाद प्रदान किया ॥ (४०–४२)

सेनाको लौटाकर पांचों पाण्डव अपने अपने डेरोंमें प्रसन्न होकर चले गये । अनन्तर रुद्रकी क्रीडा भूमिके समान उस घोर युद्धभूमिमें राक्षस, भूत, पिशाच उल्लू और सियार आदि अनेक मांस भक्षक जन्तु आगये ॥(४३-४४)[१२३९]

कर्णपर्वमें तीस अध्याय समाप्त ।

कर्णपर्वमें इकतीस अध्याय ।

धृतराष्ट्र बोले, हे सञ्जय ! अर्जुन अपनी इच्छासे सब वीरोंको मार सकते है; शस्त्र धारण करनेवाले उस वीरसे युद्ध करके साक्षात् यमराज भी नहीं मुक्त हो सकता ॥ एकले अर्जुनने सुभद्रा को छीन लाये थे, एकलेने ही अग्निको तृप्त किया । एकले अर्जुनने सब राजोंको जीत युधिष्ठिरको कर दिलाया ॥ एकले ने दिव्य धनुष्य धारण करके निवात-कवचोंको मारा और एकलेही अर्जुनने किरात रूपी शिवसे युद्ध किया ॥ उस एकहीने सब भरतवंशकी रक्षा की और एकलेहीने शिवको सन्तुष्ट किया तथा अपने उग्र तेजसे सब राजोंको जीता ॥

वृणेऽहं त्वां हयाग्र्याणां यन्तारमिह संयुगे ॥ ५९ ॥
मन्ये चाभ्यधिकं शल्य गुणैः कर्णं धनञ्जयात्।
भवन्तं वासुदेवाच्च लोकोऽयमिति मन्यते ॥ ६० ॥
कर्णो ह्यभ्यधिकः पार्थादस्त्रैरेव नरर्षभ।
भवानभ्यधिकः कृष्णादश्वज्ञाने बले तथा ॥ ६१ ॥
यथाश्वहृदयं वेद वासुदेवो महामनाः।
द्विगुणं त्वं तथा वेत्सि मद्रराजेश्वरात्मज ॥ ६२ ॥
शल्य उवाच— यन्मां ब्रवीषि गान्धारे मध्ये सैन्यस्य कौरव।
विशिष्टं देवकीपुत्रात्प्रीतिमानस्म्यहं त्वयि ॥ ६३ ॥
एष सारथ्यमातिष्ठे राधेयस्य यशस्विनः।
युध्यतः पाण्डवाग्र्येण यथा त्वं वीर मन्यसे ॥ ६४ ॥
समयश्च हि मे वीर कश्चिद्वैकर्तनं प्रति।
उत्सृजेयं यथाश्रद्धमहं वाचोऽस्य सन्निधौ ॥ ६५ ॥
सञ्जय उवाच— तथेति राजन्पुत्रस्ते सह कर्णेन भारत।
अब्रवीन्मद्रराजस्य मतं भरतसत्तम ॥ ६६ ॥ [१३७८]

इति श्रीमहाभारते शतसाहस्र्या संहितायां वैयासिक्यां कर्णपर्वणि शल्यसारथ्ये द्वात्रिंशोऽध्यायः ॥ ३२ ॥

दुर्योधन उवाच—भूय एव तु मद्रेश यत्ते वक्ष्यामि तच्छृणु।

---

कीजिये ॥ कर्ण अथवा हम आपसे अधिक बलवान् नहीं हैं परन्तु आप घोड़ोंकी विद्याको जानते है इसीसे हम आपको सारथी होनेको कहते हैं, मै और सब जगत् कर्णको अर्जुनके और आपको कृष्णके समान जानते है॥ हे पुरुषसिंह! कर्ण अर्जुनसे शस्त्र विद्यामें और आप कृष्णसे घोड़ोंकी विद्यामें अधिक है। हे मद्रराज! आप कृष्णसे दूनी घोड़ोंकी विद्या जानते है ॥ (५८-६२)

शल्य बोले, हे गान्धारीपुत्र! तुमने जो सब सेनाके बीचमें हमें कृष्णसे अधिक कहा, इस लिये हम तुमसे प्रसन्न हुए॥ हे वीर! हम अब यशस्वी कर्णके सारथी बने, अब कर्ण निर्भय होकर अर्जुनसे युद्ध करें, परन्तु कर्णके सङ्ग मैं एक प्रतिज्ञा कर लेता हूं; मेरी जो इच्छा होगी, सो कर्णको कहूंगा ॥ (६३-६५)

सञ्जय बोले, हे राजन्! तुम्हारे पुत्रने और कर्णने शल्यकी बातको स्वीकार कर लिया ॥ (६६) [१३७८]

कर्णपर्वमें बत्तीस अध्याय समाप्त।

कर्णपर्वमें तैंतीस अध्याय।

दुर्योधन बोले, हे पृथ्वीनाथ! हे

सुखोषितास्तां रजनीं हृष्टा युद्धाय निर्ययुः ।
तेऽपश्यन्विहितं व्यूहं धर्मराजेन दुर्जयम् ॥ १२ ॥
प्रयत्नात्कुरुमुख्येन बृहस्पत्युशनोमते ।
अथ प्रतीपकर्त्तारं प्रवीरं परवीरहा ॥ १३ ॥
सस्मार वृषभस्कन्धं कर्णं दुर्योधनस्तदा ।
पुरन्दरसमं युद्धे मरुद्गणसमं बले ॥ १४ ॥
कीर्त्तवीर्यसमं वीर्ये कर्णं राज्ञोऽगमन्मनः ।
सर्वेषां चैव सैन्यानां कर्णमेवागमन्मनः ।
सूतपुत्रं महेष्वासं बन्धुमात्यायिकेष्विव ॥ १५ ॥
धृतराष्ट्र उवाच—ततो दुर्योधनः सूत पश्चात्किमकरोत्तदा ।
यद्वोऽगमन्मनो मन्दाः कर्णं वैकर्त्तनं प्रति ॥ १६ ॥
अप्यपश्यत राधेयं शीतार्त इव भास्करम् ।
कृतेऽवहारे सैन्यानां प्रवृत्ते च रणे पुनः ॥ १७ ॥
कथं वैकर्तनः कर्णस्तत्रायुध्यत सञ्जय ।
कथं च पाण्डवाः सर्वे युयुधुस्तत्र सूतजम् ॥ १८ ॥
कर्णो ह्येको महाबाहुर्हन्यात्पार्थान्ससृञ्जयान् ।
कर्णस्य भुजयोर्वीर्यं शक्रविष्णुसमं युधि ॥ १९ ॥

सुखसे रात्रिको बिताकर कौरवोंके योद्धा उठे तो देखा कि धर्मराज युधिष्ठिरने अपनी सेनाका कठिन व्यूह बना रक्खा है॥ राजा दुर्योधनने बृहस्पति और शुक्र के समान बुद्धिमान कुरुकुलश्रेष्ठ युधिष्ठिरके बनाये व्यूहको देखकर सब सैनिकोंके रहते ही युद्धमें इन्द्रके समान योद्धा और बलमें मरुतोंके समान बलवान् तथा कार्त्तवीर्य अर्जुन के समान पराक्रमी कर्णका ऐसा स्मरण किया, कि जैसे कोई संकटके समयमें अपने बंधुका ही स्मरण करता है ॥ (११–१५)

धृतराष्ट्र बोले, हे सूत ! कर्णके स्मरण करनेके पश्चात् क्या किया ? सो हमसे कहो। जिस समय दूसरे दिन सेना युद्धको उपस्थित हुई और जैसे शीतसे व्याकुल मनुष्य सूर्यको देखता है, वैसे ही जब दुर्योधनने राधापुत्र कर्णको देखा, उसके पश्चात् क्या हुआ ? सो कहो॥ विकर्त्तनपुत्र कर्णने पाण्डवोंके साथ कैसे युद्ध किया ? और पाण्डव कैसे कर्णसे लडे ? (१६–१८)

हमको निश्चय है, कि एकले कर्ण सृञ्जयोंके महित पाण्डवोंका नाश कर

वृणेऽहं त्वां हयाग्र्याणां यन्तारमिह संयुगे ॥ ५९ ॥
मन्ये चाभ्यधिकं शल्य गुणैः कर्णं धनञ्जयात् ।
भवन्तं वासुदेवाच्च लोकोऽयमिति मन्यते ॥ ६० ॥
कर्णो ह्यभ्यधिकः पार्थादस्त्रैरेव नरर्षभ ।
भवानभ्यधिकः कृष्णादश्वज्ञाने बले तथा ॥ ६१ ॥
यथाश्वहृदयं वेद वासुदेवो महामनाः ।
द्विगुणं त्वं तथा वेत्सि मद्रराजेश्वरात्मज ॥ ६२ ॥

शल्य उवाच— यन्मां ब्रवीषि गान्धारे मध्ये सैन्यस्य कौरव ।
विशिष्टं देवकीपुत्रात्प्रीतिमानस्म्यहं त्वयि ॥ ६३ ॥
एष सारथ्यमातिष्ठे राधेयस्य यशस्विनः ।
युध्यतः पाण्डवाग्र्येण यथा त्वं वीर मन्यसे ॥ ६४ ॥
समयश्च हि मे वीर कश्चिद्वैकर्तनं प्रति ।
उत्सृजेयं यथाश्रद्धमहं वाचोऽस्य सन्निधौ ॥ ६५ ॥

सञ्जय उवाच— तथेति राजन्पुत्रस्ते सह कर्णेन भारत ।
अब्रवीन्मद्रराजस्य मतं भरतसत्तम ॥ ६६ ॥ [१३७८]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां कर्णपर्वणि शल्यसारथ्येद्वात्रिंशोऽध्यायः ॥ ३२ ॥

दुर्योधन उवाच—भूय एव तु मद्रेश यत्ते वक्ष्यामि तच्छृणु ।

---

कीजिये ॥ कर्ण अथवा हम आपसे अधिक बलवान् नहीं हैं परन्तु आप घोडोंकी विद्याको जानते हैं इसीसे हम आपको सारथी होनेको कहते है, मै और सब जगत् कर्णको अर्जुनके और आपको कृष्णके समान जानते है॥ हे पुरुषसिंह! कर्ण अर्जुनसे शस्त्र विद्यामें और आप कृष्णसे घोडोंकी विद्यामें अधिक है। हे मद्रराज! आप कृष्णसे दूनी घोडोंकी विद्या जानते हैं॥ (५८-६२)

शल्य बोले, हे गान्धारीपुत्र! तुमने जो सब सेनाके बीचमें हमें कृष्णसे अधिक कहा, इस लिये हम तुमसे प्रसन्न हुए॥ हे वीर! हम अब यशस्वी कर्णके सारथी बने, अब कर्ण निर्भय होकर अर्जुनसे युद्ध करें, परन्तु कर्णके सङ्ग मै एक प्रतिज्ञा कर लेता हूं; मेरी जो इच्छा होगी, सो कर्णको कहूंगा॥ (६३-६५)

सञ्जय बोले, हे राजन्! तुम्हारे पुत्रने और कर्णने शल्यकी बातको स्वीकार कर लिया॥ (६६) [१३७८]

कर्णपर्वमें बत्तीस अध्याय समाप्त।

कर्णपर्वमें तैंतीस अध्याय।

दुर्योधन बोले, हे पृथ्वीनाथ! हे

स्त्रीमध्यमिव गाहन्ते दैवं तु बलवत्तरम् ।

सञ्जय उवाच— राजन्पूर्वनिमित्तानि धर्मिष्ठानि विचिन्तय ॥ २८ ॥

अतिक्रान्तं हि यत्कार्यं पश्चाच्चिन्तयते नरः ।
तच्चास्य न भवेत्कार्यं चिन्तया च विनश्यति ॥ २९ ॥
तदिदं तव कार्यं तु दूरप्राप्तं विजानता ।
न कृतं यत्त्वया पूर्वं प्राप्ताप्राप्तविचारणम् ॥ ३० ॥
उक्तोऽसि बहुधा राजन्मा युध्यस्वेति पाण्डवैः ।
गृह्णीषे न च तन्मोहाद्वचनं च विशाम्पते ॥ ३१ ॥
त्वया पापानि घोराणि समाचीर्णानि पाण्डुषु ।
त्वत्कृते वर्तते घोरः पार्थिवानां जनक्षयः ॥ ३२ ॥
तत्त्विदानीमतिक्रान्तं मा शुचो भरतर्षभ ।
शृणु सर्वं यथा वृत्तं घोरं वैशसमुच्यते ॥ ३३ ॥
प्रभातायां रजन्यां तु कर्णो राजानमभ्ययात् ।
समेत्य च महाबाहुर्दुर्योधनमथाब्रवीत् ॥ ३४ ॥

कर्ण उवाच— अद्य राजन्समेष्यामि पाण्डवेन यशस्विना ।
निहनिष्यामि तं वीरं स वा मां निहनिष्यति ॥३५॥

नहीं सुना कि पाण्डव भी हारे। पाण्डव लोग हमारी सेनाको स्त्रियोंके समान मारे डालते है । इसमें प्रारब्धके सिवाय और किसका दोष है ? (२४-२८)

सञ्जय बोले, हे राजन् ! आप अपने पहले किये अधर्मकार्यको विचारिये, जो समय बीतने पर कार्यकी चिन्ता करता है, उसको कुछ फल नहीं मिलता और चिन्तासे नष्ट हो जाता है । तुमने जो पहले हानि और लाभ विचार कर काम नहीं किया, उसीका यह फल है ॥ परन्तु अब चिन्ता करनेमे कुछ नहीं होगा । हे पृथ्वीनाथ ! हमने बहुत वार आपसे कहा था, कि पाण्डवोंसे युद्ध न कीजिये परन्तु आपने पुत्रोंके मोहमें पडकर हमारी बातको नहीं माना ॥ (२८-३१)

तुमने पाण्डवोंके साथ अनेक अन्याय किये हैं, उसीसे आपके लिये ही यह राजोंका और वीरोंका नाश हो रहा है ॥ आप कुछ शोच न कीजिये और बीती हुई बातको भुला दीजिये, अब युद्धका वर्णन सुनिये ॥ (३२-३३)

प्रातःकाल होतेही बलवान् कर्ण दुर्योधनके पासमें गये और कहने लगे, हे राजन् ! आज हम यशस्वी अर्जुनके

सर्वलोकेश्वरं वाक्यं प्रणम्येदमथाब्रुवन्।
अस्मभ्यं त्वं वरं देव संप्रयच्छ पितामह ॥ ११ ॥
वयं पुराणि त्रीण्येव समास्थाय महीमिमाम्।
विचरिष्याम लोकेऽस्मिंस्त्वत्प्रसादपुरस्कृताः ॥ १२ ॥
ततो वर्षसहस्रे तु समेष्यामः परस्परम्।
एकीभावं गमिष्यन्ति पुराण्येतानि चानघ ॥ १३ ॥
समागतानि चैतानि यो हन्याद्भगवंस्तदा।
एकेषुणा देववरः स नो मृत्युर्भविष्यति ॥ १४ ॥
एवमस्त्विति तान्देवः प्रत्युक्त्वा प्राविशद्दिवम्।
ते तु लब्धवराः प्रीताः संप्रधार्य परस्परम् ॥ १५ ॥
पुरत्रयविसृष्ट्यर्थं मयं वव्रुर्महासुरम्।
विश्वकर्माणमजरं दैत्यदानवपूजितम् ॥ १६ ॥
ततो मयः स्वतपसा चक्रे धीमान्पुराणि च।
त्रीणि काञ्चनमेकं वै रौप्यं कार्ष्णायसं तथा ॥ १७ ॥
काञ्चनं दिवि तत्रासीदन्तरिक्षे च राजतम्।
आयसं चाभवद्भौमं चक्रस्थं पृथिवीपते ॥ १८ ॥
एकैकं योजनशतं विस्तारायामतः समम्।
गृहाट्टालकसंयुक्तं बहुप्राकारतोरणम् ॥ १९ ॥

सम्मति करके ब्रह्माको प्रसन्न करके कहा कि, हे पितामह! यदि आप हम लोगों को वरदान देना चाहते हैं, तो हम आपके प्रसादसे जगत्में अपने तीन नगर बना-कर रहैं ॥ (९-१२)

हे पापरहित ! हमारे नगर हजार वर्षतक जगत्में घूमा करें और फिर मिल जाया करें; जो हमारे तीनों नगरों को एकही बाणसे नाश कर सके, उसके हाथसे हमारी मृत्यु हो ॥ ब्रह्मा यही वर देकर स्वर्गको चले गये। तब वे तीनों दैत्य भी प्रसन्न होकर अपने घर गये, फिर दैत्य और दानवोंके विश्वकर्मा मय नामक दैत्यको तीन नगर बनानेकी आज्ञा उन्होंने दी ॥ (१३—१६)

तब मयने अपनी विद्याके बलसे सोने, चांदी और लोहेके तीन नगर बनाए ॥ हे पृथ्वीनाथ ! सोनेका नगर स्वर्गमें, चांदीका आकाशमें और लोहेका नगर पृथ्वीमें बनाया ॥ एक एक नगर इच्छाके अनुसार गमन करनेवाला और सौ सौ योजन लम्बा तथा सौ सौ

तद्भार्गवाय प्रायच्छच्छक्रः परमसम्मतम् ।
तद्दिव्यं भार्गवो मह्यमददद्धनुरुत्तमम ॥ ४४ ॥
तेन योत्स्ये महाबाहुमर्जुनं जयतां वरम् ।
यथेन्द्रः समरे सर्वान्दैतेयान्वै समागतान् ॥ ४५ ॥
धनुर्घोरं रामदत्तं गाण्डीवात्तद्विशिष्यते ।
त्रिस्सप्तकृत्वः पृथिवी धनुषा येन निर्जिता ॥ ४६ ॥
धनुषो ह्यस्य कर्माणि दिव्यानि प्राह भार्गवः ।
तद्रामो ह्यददन्मह्यं तेन योत्स्यामि पाण्डवम् ॥ ४७ ॥
अद्य दुर्योधनाहं त्वां नन्दयिष्ये सबान्धवम् ।
निहत्य समरे वीरमर्जुनं जयतां वरम् ॥ ४८ ॥
सपर्वतवनद्वीपा हतवीरा ससागरा ।
पुत्रपौत्रप्रतिष्ठा ते भविष्यत्यद्य पार्थिव ॥ ४९ ॥
नाशक्यं विद्यते मेऽद्य त्वत्प्रियार्थं विशेषतः ।
सम्यग्धर्मानुरक्तस्य सिद्धिरात्मवतो यथा ॥ ५० ॥
नहि मां समरे सोढुं संशक्तोऽग्निं तरुर्यथा ।

नामक धनुष उन्होंने प्रसन्न होकर परशुरामको दिया था, परशुरामने वही महा शब्दवाला दिव्य धनुष मुझे दिया है ॥ (४२–४४)

आज हम वही धनुष धारण करके विजयी अर्जुनसे इस प्रकार युद्ध करेंगे जैसे राक्षसोंसे इन्द्र ॥ यह परशुरामने मुझे दिया हुआ विजय धनुष गाण्डीवसे भी उत्तम है। उस धनुषसे ही परशुरामने इक्कीस वार पृथ्वीको जीत लिया था। इस धनुषके अनेक कर्म मुझसे भगवान् परशुरामने कहे थे, और मुझे धनुष दिया था आज इसी धनुषसे अर्जुनके साथ युद्ध करूंगा ॥ (४५–४७)

हे दुर्योधन! अब हम वीर विजयी अर्जुनको मार कर ही भाइयों समेत आपको आनन्दित करेंगे ॥ हे राजन्! आज अर्जुनके मरनेसे वन पर्वत और समुद्रके सहित पृथ्वीमें आपका राज्य होगा, और बहुत पीढीतक राज स्थिर रहेगा ॥ जैसे चित्तको स्वाधीन रखनेवाले धर्मप्रेमी पुरुषको कोई सिद्धि दुर्लभ नहीं होती, ऐसे ही ऐसा कोई काम नहीं है, कि जो हम आपकी प्रीतिके लिये नहीं कर सक्ते ॥ (४८–५०)

जैसे वृक्ष अग्निको नहीं सह सक्ता, ऐसे ही मुझे युद्धमें कोई नहीं सह सक्ता, परन्तु जिससे मैं अर्जुनसे हीन हूं वह

सन्तुष्टमवृणोद्देवं वापी भवतु नः पुरे ॥ २८ ॥
शस्त्रैर्विनिहता यत्र क्षिप्ताः स्युर्बलवत्तराः ।
स तु लब्ध्वा वरं वीरस्तारकाक्षसुतो हरिः ॥ २९ ॥
ससृजे तत्र वापीं तां मृतानां जीविनीं प्रभो ।
येन रूपेण दैत्यस्तु येन वेषेण चैव ह ॥ ३० ॥
मृतस्तस्यां परिक्षिप्तस्तादृशेनैव जज्ञिवान् ।
तां प्राप्य ते पुनस्तांस्तु लोकान्सर्वान्बबाधिरे ॥ ३१ ॥
महता तपसा सिद्धाः सुराणां भयवर्धनाः ।
न तेषामभवद्राजन्क्षयो युद्धे कदाचन ॥ ३२ ॥
ततस्ते लोभमोहाभ्यामभिभूता विचेतसः ।
निर्ह्रीकाः संस्थिताः सर्वे स्थापिताः समलुलुपन् ॥ ३३ ॥
विद्राव्य सगणान्देवांस्तत्र तत्र तदा तदा ।
विचेरुः स्वेन कामेन वरदानेन दर्पिताः ॥ ३४ ॥
देवोद्यानानि सर्वाणि प्रियाणि च दिवौकसाम् ।
ऋषीणामाश्रमान्पुण्यान्रम्याञ्जनपदांस्तथा ॥ ३५ ॥
व्यनाशयन्नमर्यादा दानवा दुष्टचारिणः ।

---

वान् पुत्र हुआ; उसने ऐसा घोर तप किया, जिससे ब्रह्मा प्रसन्न होगये, तब उसने ब्रह्मासे यह वरदान मांगा, कि हमारे नगरमें एक बावडी बन जाये, उस बावडीके जलमें यह प्रताप रहै, कि जो शस्त्रसे मरा वीर उसमें पडे सो जी जाय और बलवान् होजावे, ब्रह्माने उसको यही वरदान दिया । हे राजन् ! उसने अपने नगरमें आकर बावडी बनाई, उसका यह प्रताप होगया कि जो जिस रूपसे और जिस वेषसे दैत्य मरे उसमें डालनेसे उसी रूप और वेषसे फिर जी जाता था । उन मरे हुए वीरोंको जिलाकर इन्होंने फिर सब लोकोंको पीडा देना शुरू किया ॥ (२७-३१)

जब ब्रह्माके वरदानके बलसे दैत्योंका नाश न होने लगा, तब देवतोंको बडा भय उत्पन्न होने लगा ॥ तब राक्षसोंको लोभ और मोह उत्पन्न हुआ, लज्जा जाती रही और अनेक प्रकारके उपद्रव होने लगे, वरदानके अभिमानसे सब देवतोंको मार कर उनके स्थानोंमें आप विहार करने लगे ॥ तब दुष्ट दानवलोग मर्यादा छोडकर देवतोंके प्यारे बाग, ऋषियोंके पवित्र आश्रम और रमणीय देशोंको नष्ट करने लगे । (३२—३६)

रथाश्च मुख्या राजेन्द्र युक्ता वाजिभिरुत्तमैः ।
आयान्तु पश्चात्सततं मामेव भरतर्षभ ॥ ६० ॥
एवमभ्यधिकः पार्थाद्भविष्यामि गुणैरहम् ।
शल्योऽप्यभ्यधिकः कृष्णादर्जुनादपि चाप्यहम् ॥६१॥
यथाश्वहृदयं वेद दाशार्हः परवीरहा ।
तथा शल्यो विजानीते हयज्ञानं महारथः ॥ ६२ ॥
बाहुवीर्ये समो नास्ति मद्रराजस्य कश्चन ।
तथास्त्रे मत्समो नास्ति कश्चिदेव धनुर्धरः ॥ ६३ ॥
तथा शल्यसमो नास्ति हयज्ञाने हि कश्चन ।
सोऽयमभ्यधिकः कृष्णाद्भविष्यति रथो मम ॥ ६४ ॥
एवं कृते रथस्थोऽहं गुणैरभ्यधिकोऽर्जुनात् ।
भवे युधि जयेयं च फाल्गुनं कुरुसत्तम ॥ ६५ ॥
समुद्यातुं न शक्ष्यन्ति देवा अपि सवासवाः ।
एतत्कृतं महाराज त्वयेच्छामि परन्तप ॥ ६६ ॥
क्रियतामेष कामो मे मा वः कालोऽत्यगादयम् ।
एवं कृते कृतं सह्यं सर्वकामैर्भविष्यति ॥ ६७ ॥
ततो द्रक्ष्यसि संग्रामे यत्करिष्यामि भारत ।

हमारे सङ्ग रहें, हे भरतकुलसिंह ! अच्छे घोडोंसे जूते हुए उत्तम रथ हमारे पीछे रहे, ऐसा होनेसे हम अर्जुनसे अधिक बलवान् हो जायंगे, क्योंकि शल्य कृष्णसे और हम अर्जुनसे अधिक है ॥ ( ५८-६१)

जैसे शत्रुनाशन कृष्ण घोडोंकी विद्या जानते हैं, वैसे ही महारथ शल्य भी जानते हैं। जगत्में मद्रराज शल्यके समान कोई पराक्रमी नहीं है; ऐसे ही मेरे समान बाणविद्यामें कोई नहीं है॥ शल्यके समान कोई घोडोंकी विद्या नहीं जानता, इस लिये यह कृष्णसे उत्तम हैं, सो आज ये हमारा रथ हांके। हे कुरुश्रेष्ठ ! ऐसा होनेसे हम अर्जुनसे अधिक बलवान होंगे और आपकी विजय होगी ॥ (६२-६५)

हे शत्रुनाशन ! शल्य सारथीके सहित हमसे देवतोंके सहित इन्द्र भी नहीं जीत सकते । हे राजन् ! आप इस काम को सिद्ध कीजिये, क्योंकि अब समय नहीं है, विलम्ब न होना चाहिये । ऐसा होनेसे हम अवश्य अर्जुनको जीतेंगे, तब आप युद्धमें हमारे पराक्रमको

ते यूयं स्थाणुमीशानं जिष्णुमक्लिष्टकारिणम्।
योद्धारं वृणुतादित्याः स तान्हन्ता सुरेतरान् ॥ ४५ ॥
इति तस्य वचः श्रुत्वा देवाः शक्रपुरोगमाः।
ब्रह्माणमग्रतः कृत्वा वृषाङ्कं शरणं ययुः ॥ ४६ ॥
तपोनियममास्थाय गृणन्तो ब्रह्म शाश्वतम्।
ऋषिभिः सह धर्मज्ञा भवं सर्वात्मना गताः ॥ ४७ ॥
तुष्टुवुर्वाग्भिरुग्राभिर्भयेष्वभयदं नृप।
सर्वात्मानं महात्मानं येनाप्तं सर्वमात्मना ॥ ४८ ॥
तपोविशेषैर्विविधैर्योगं यो वेद चात्मनः।
यः साङ्ख्यमात्मनो वेत्ति यस्य चात्मा वशे सदा॥४९॥
तं ते ददृशुरीशानं तेजोराशिमुमापतिम्।
अनन्यसदृशं लोके भगवन्तमकल्मषम् ॥ ५० ॥
एकं च भगवन्तं ते नानारूपमकल्पयन्।
आत्मनः प्रतिरूपाणि रूपाण्यथ महात्मनि ॥ ५१ ॥
परस्परस्य चापश्यन्सर्वे परमविस्मिताः।
सर्वभूतमयं दृष्ट्वा तमजं जगतः पतिम् ॥ ५२ ॥
देवा ब्रह्मर्षयश्चैव शिरोभिर्धरणीं गताः।

है। यह शक्ति शिवके सिवाय और किसीको नहीं है ॥ सो तुम लोग जगत् स्वामी वरदानदाता और महायुद्ध करनेवाले शिवजीसे प्रार्थना करो, वे सब दानवोंका नाश करेंगे ॥ (४४-४५)

ब्रह्माके ऐसे वचन सुन ब्रह्माको आगे करके वे इन्द्र आदि सब देवता शिवकी शरण गये, धर्मज्ञ देवता तप और व्रत करके शाश्वत ब्रह्म जपनेवाले ऋषि और मुनियोंके सहित अपने मनको स्थिर कर शिव की स्तुति करने लगे॥ (४६-४८)

जिनकी शक्तिमे सब जगत् व्याप्त है, जो सब भयोंको नाश करते है, देवता उन्हींकी स्तुति करने लगे। जो अनेक तपोंसे आत्माको जानते है, आत्मा सदा जिनके वशमें रहते हैं, उस जगत्कर्त्ता शिवको देवतोंने देखा। पापरहित तेजोंके समूह असाधारण शिवको देखकर अपनी इच्छानुसार शिवके रूपोंकी कल्पना करने लगे। तब सबने अपनी इच्छानुसार शिवको देखा, एक देवता दूसरेको शिवके रूपमे देखने लगे, ऐसा देखकर देवतोंको बहुत आश्चर्य हुआ, और उन्होंने शिवको सर्वव्यापक जाना, शिवको देखकर सब

श्रुतवानसि कर्णस्य ब्रुवतो वदतां वर ।
यथा नृपतिसिंहानां मध्ये त्वां वरये स्वयम् ॥ ३ ॥
तत्त्वामप्रतिवीर्याद्य शत्रुपक्षक्षयावह ।
मद्रेश्वर प्रयाचेऽहं शिरसा विनयेन च ॥ ४ ॥
तस्मात्पार्थविनाशार्थं हितार्थं मम चैव हि ।
सारथ्यं रथिनां श्रेष्ठ प्रणयात्कर्तुमर्हसि ॥ ५ ॥
त्वयि यन्तरि राधेयो विद्विषो मे विजेष्यते ।
अभीषूणां हि कर्णस्य ग्रहीतान्यो न विद्यते ॥ ६ ॥
ऋते हि त्वां महाभाग वासुदेवसमं युधि ।
स पाहि सर्वथा कर्णं यथा ब्रह्मा महेश्वरम् ॥ ७ ॥
यथा च सर्वथापत्सु वार्ष्णेयः पाति पाण्डवम् ।
तथा मद्रेश्वराद्य त्वं राधेयं प्रतिपालय ॥ ८ ॥
भीष्मो द्रोणः कृपः कर्णो भवान्भोजश्च वीर्यवान् ।
शकुनिः सौबलो द्रौणिरहमेव च नो बलम् ॥ ९ ॥
एवमेष कृतो भागो नवधा पृथिवीपते ।
न च भागोऽत्र भीष्मस्य द्रोणस्य च महात्मनः ॥१०॥
ताभ्यामतीत्य तौ भागौ निहता मम शत्रवः ।

आपने कर्णके वचन सुने ! अब इन सब राजाओंके बीच आपको मैं स्वतः अनुरोध करता हूं; आप अप्रतिम वीर्यवान् और शत्रु पक्षका नाश करनेवाले हैं, इस लिये हम विनयसे आपको शिरसे प्रणाम करते हैं, और एक वर दान मागते हैं ॥ (१-४)

हे महारथ ! आप पाण्डवोंके नाश और हमारे कल्याणके लिये प्रेमसे कर्णके सारथी बन जाइये ॥ तुमको सारथी बनाकर कर्ण मेरे सब शत्रुओंको जीतेंगे, तुम्हारे सिवाय कर्णके घोडे हांकने योग्य और कोई नहीं है ॥ आप कृष्णके समान योद्धा हैं; जैसे ब्रह्मा शिवकी रक्षा करते है, तैसे तुम कर्णकी रक्षा करना ॥ हे मद्रेश्वर ! कृष्ण जैसे अर्जुनकी आपत्तियोंमें रक्षा करते है, ऐसे ही आप राधापुत्रकी रक्षा कीजिये ॥ (५-८)

भीष्म, द्रोणाचार्य, कृपाचार्य, कर्ण, कृतवर्मा, आप, अश्वत्थामा, सुबलपुत्र शकुनि और हम अपनी सेनाके प्रधान है । हे पृथ्वीनाथ ! हमने इस सेनाके प्रधान नौ भाग किये थे । उसमें भीष्म और द्रोणका भाग नष्ट होगया ॥ उन

वनस्पतीनां पतये नराणां पतये नमः।
गवां च पतये नित्यं यज्ञानां पतये नमः ॥ ६१ ॥
नमोऽस्तु ते ससैन्याय त्र्यम्बकायामितौजसे।
मनोवाक्कर्मभिर्देव त्वां प्रपन्नान्भजस्व नः ॥ ६२ ॥
ततः प्रसन्नो भगवान्स्वागतेनाभिनन्द्य च।
प्रोवाच व्येतु वस्त्रासो ब्रूत किं करवाणि वः ॥६३॥ [१४४१]

इति श्रीमहाभारते शतसाहस्र्या संहितायां वैयासिक्यां कर्णपर्वणि त्रिपुराख्याने त्रयस्त्रिंशोऽध्यायः ॥ ३३॥

दुर्योधन उवाच – पितृदेवर्षिसङ्घेभ्योऽभये दत्ते महात्मना।
सत्कृत्य शङ्करं प्राह ब्रह्मा लोकहितं वचः ॥ १ ॥
तवातिसर्गाद्देवेश प्राजापत्यमिदं पदम्।
मयाधितिष्ठता दत्तो दानवेभ्यो महान्वरः ॥ २ ॥
नानतिक्रान्तमर्यादान्नान्यः संहर्तुमर्हति।
त्वामृते भूतभव्येश त्वं ह्येषां प्रत्यरिर्वधे ॥ ३ ॥
स त्वं देव प्रपन्नानां याचतां च दिवौकसाम्।
कुरु प्रसादं देवेश दानवाञ्जहि शङ्कर ॥ ४ ॥

हैं ॥ वनस्पति, मनुष्य, गौ और यज्ञोंके स्वामी शिवको प्रणाम करते हैं॥ गणोंके सहित त्रिनेत्रधारी आपको नमस्कार है। हे महातेजस्वी देव ! हम लोग मन, वचन और शिरसे आपको प्रणाम करते है, आप हमारी रक्षा कीजिये ॥ (६०-६२)

इस स्तुतिको सुनकर शिवजी बहुत प्रसन्न हुए और उनको स्वागतसे संतुष्ट करके कहने लगे, कि आप भय मत करो, कहो हम तुम्हारा कौनसा काम करें ? (६३) [१४४१]

कर्णपर्वमें तैंतीस अध्याय समाप्त।

कर्णपर्वमें चौतीस अध्याय।

दुर्योधन बोले, हे राजन् शल्य ! जब शिव देवता, ऋषि और पितरोंको अभय दान दे चुके, तब ब्रह्माने शिवका सत्कार करके लोकहित कर वचन कहा, हे देव ! हम आपके दिये हुए प्रजापति पदका भोग करते है। इसीसे हमने दानवोंको महा वरदान दिया है ॥ हे जगन्नाथ ! अब उन दानवोंने सब मर्यादाओंका नाश कर दिया। अब आपके सिवाय उन्हें कोई नहीं मार सक्ता। इस लिये अब आप उनके मारनेका उपाय कीजिये, हे शङ्कर ! हे देवनाथ ! सब देवता आपकी शरण आये हैं। और आप प्रसन्न होकर इनके शत्रुओंको मारिये ॥ हे वरदान दायक ! आपकी

पार्थस्य समरे कृष्णो यथाभीषुग्रहो वरः ।
तथा त्वमपि कर्णस्य रथेऽभीषुग्रहो भव ॥ १९ ॥
तेन युक्तो रणे पार्थो रक्ष्यमाणश्च पार्थिव ।
यानि कर्माणि कुरुते प्रत्यक्षाणि तथैव तत् ॥ २० ॥
पूर्वं न समरे ह्येवमवधीदर्जुनो रिपून् ।
इदानीं विक्रमो ह्यस्य कृष्णेन सहितस्य च ॥ २१ ॥
कृष्णेन सहितः पार्थो धार्त्तराष्ट्रीं महाचमूम् ।
अहन्यहनि मद्रेश द्रावयन्दृश्यते युधि ॥ २२ ॥
भागोऽवशिष्टः कर्णस्य तव चैव महाद्युते ।
तं भागं सह कर्णेन युगपन्नाशयाद्य हि ॥ २३ ॥
अरुणेन यथा सार्द्धं तमः सूर्यो व्यपोहति ।
तथा कर्णेन सहितो जहि पार्थं महाहवे ॥ २४ ॥
उद्यन्तौ च यथा सूर्यौ बालसूर्यसमप्रभौ ।
कर्णशल्यौ रणे दृष्ट्वा विद्रवन्तु महारथाः ॥ २५ ॥
सूर्यारुणौ यथा दृष्ट्वा तमो नश्यति मारिष ।
तथा नश्यन्तु कौन्तेयाः सपञ्चालाः ससृञ्जयाः ॥२६॥
रथिनां प्रवरः कर्णो यन्तॄणां प्रवरो भवान् ।

सारथी है, वैसे ही आप कर्णके सारथी बन जाइये ॥ कृष्णकी सहायतासे अर्जुन युद्धमें जो जो कार्य करते है, सो सब प्रत्यक्ष ही है ॥ (१८–२०)

जैसे अर्जुन इस समय शत्रुओंको मार रहे है, वैसे कभी नहीं मारते थे। यह केवल कृष्णकी सहायताकाही फल है। कृष्णके सहित अर्जुन हमारी सेना मारते और भगाते दीखते है ॥ हे महातेजस्वी! अब आपका और कर्णका भाग शेष है सो अब आप कर्णके सहित अपने भाग को नाश कीजिये ॥ जैसे अरुणके सहित सूर्य अन्धकारका नाश करते हैं, तैसे ही आप कर्णके साथ पाण्डवोंकी सेनाका नाश करो ॥ (२१–२४)

जैसे दो सूर्य उदय होकर अन्धकारका नाश करते हैं, तैसे ही बालसूर्यके समान कांतिवाले आपको और कर्णको देखकर शत्रुओंके महारथ योद्धा भाग जावे ॥ जैसे अरुण और सूर्यको देख अन्धकारका नाश होता है, वैसे ही आपको और कर्णको देख पाञ्चाल और पाण्डवोंके सहित सृञ्जयवंशियोंका नाश होजायगा ॥ कर्ण रथी योद्धाओंमे जैसे

स तु देवो बलेनासीत्सर्वेभ्यो बलवत्तरः ।
महादेव इति ख्यातस्ततःप्रभृति शङ्करः ॥ १३ ॥
ततोऽब्रवीन्महादेवो धनुर्बाणधरो ह्यहम् ।
हनिष्यामि रथेनाजौ तान्रिपून्वो दिवौकसः ॥ १४ ॥
ते यूयं मे रथं चैव धनुर्बाणं तथैव च ।
पश्यध्वं यावदद्यैतान्पातयामि महीतले ॥ १५ ॥
देवा ऊचुः— मूर्तीः सर्वाः समाधाय त्रैलोक्यस्य ततस्ततः ।
रथं ते कल्पयिष्यामो देवेश्वर सुवर्चसम् ॥ १६ ॥
तथैव बुद्ध्या विहितं विश्वकर्मकृतं शुभम् ।
ततो विबुधशार्दूलास्ते रथं समकल्पयन् ॥ १७ ॥
विष्णुं सोमं हुताशं च तस्येषुं समकल्पयन् ।
शृङ्गमग्निर्बभूवास्य भल्लः सोमो विशाम्पते ॥ १८ ॥
कुड्मलश्चाभवद्विष्णुस्तस्मिन्निषुवरे तदा ॥ १९ ॥
रथं वसुन्धरां देवीं विशालपुरमालिनीम् ।
सपर्वतवनद्वीपां चक्रुर्भूतधरां तदा ।
मन्दरः पर्वतश्चाक्षो जङ्घा तस्य महानदी ॥ २० ॥
दिशश्च प्रदिशश्चैव परिवारो रथस्य तु ।

---

वचनोंको स्वीकार किया। और उनका आधा बल आनेसे शिवजी बहुत तेजस्वी होगये, देवतोंका तेज आनेसे शिव सबसे अधिक बलवान् होगये। उसी दिनसे उनका नाम महादेव होगया॥ शिव बोले, हम धनुष बाण धारण करके रथमें बैठकर युद्धमें तुम्हारे सब शत्रुओंका नाश करेंगे॥ तुम लोग हमारे रथ, धनुष और बाणोंको देखो, हम अभी त्रिपुरासुरका नाश करते है॥ (१२–१५)

देवता बोले, हे देवेश्वर! हम लोग मूर्त्ति धारण करके आपका तेजस्वी रथ बनाते हैं। तब विश्वकर्मा और सब श्रेष्ठ देवतोंने शिवका रथ बनाया॥ उस समय विष्णु, सोम और अग्नि तीनों मिलकर बाण बने, उन में अग्नि बाणका शृङ्गाकार भाग बने, सोम बाणका शल्य और विष्णु अग्रभाग बन गये॥ (१६–१९)

अनेक पर्वत वन विशाल नगर और द्वीपोंसे युक्त यह पृथ्वी शिवका रथ बनी. मन्दराचल और महानदी गङ्गा उस रथकी पहियोंकी नाभि बनीं॥ दिशा और कोने रथका परिवार; तारे पहियों-

अथवाप्येक एवाहं योत्स्यामि कुरुनन्दन ।
पश्य वीर्यं ममाद्य त्वं संग्रामे दहतो रिपून् ॥ ३५ ॥
यथाभिमानं कौरव्य निधाय हृदये पुमान् ।
अस्मद्विधः प्रवर्त्तेत मा मां त्वमभिशङ्किथाः ॥ ३६ ॥
युधि वाऽप्यवसानो मे न कर्त्तव्यः कथञ्चन ।
पश्य पीनौ मम भुजौ वज्रसंहननोपमौ ॥ ३७ ॥
धनुः पश्य च मे चित्रं शरांश्चाशीविषोपमान् ।
रथं पश्य च मे क्लृप्तं सदश्वैर्वातवेगितैः ॥ ३८ ॥
गदां च पश्य गान्धारे हेमपट्टविभूषिताम् ।
दारयेयं महीं कृत्स्नां विकिरेयं च पर्वतान् ॥ ३९ ॥
शोषयेयं समुद्रांश्च तेजसा स्वेन पार्थिव ।
तं मामेवंविधं राजन्समर्थमरिनिग्रहे ॥ ४० ॥
कस्माद्युनक्षि सारथ्ये नीचस्याधिरथे रणे ।
न मामधुरि राजेन्द्र नियोक्तुं त्वमिहार्हसि ॥ ४१ ॥
नहि पापीयसः श्रेयान्भूत्वा प्रेष्यत्वमुत्सहे ।
यो ह्यभ्युपगतं प्रीत्या गरीयांसं वशे स्थितम् ॥ ४२ ॥

अपने देशको लौट जायंगे ॥ अथवा इस सब युद्धका भार हमारे शिर पर दो और फिर हमारे पराक्रमको देखो, किस प्रकार हम तुम्हारे शत्रुओंका नाश करते हैं ॥ हम लोग अपने आदर और निरादरको देखकर काम करते हैं। तुम हमसे किसी प्रकारभी शङ्का मत करो, हम तुम्हारे शत्रुओंका नाश करेंगे॥(३४ ३६)

तुम युद्धमें हमारा निरादर मत करो, हमारे वज्रके समान हाथोंको देखो, तुम हमारे विचित्र धनुषको, सर्पके समान बाणोंको और वायुके समान तेज चलनेवाले घोडेयुक्त रथको देखो ॥ हे गान्धारीपुत्र ! हमारी इस सोनेसे भूषित गदाको देखो, यह सब पृथ्वीको विदीर्ण कर सकती है और पर्वतोंको तोड सक्ती है ॥ (३७-३९)

मैं अपने तेजसे समुद्रको भी सुखा सक्ता हूं। ऐसे शत्रुओंके निग्रह में समर्थ मुझको तुम नीच राधापुत्रके रथ हांकनेको कहते हो ! मुझ सरीखेको ऐसे नीचकर्ममें नियुक्त करना आपको योग्य नहीं है ॥ कोई महात्मा पापीका नोकर नहीं होसक्ता, जो किसी प्रीतिसे आये हुए महात्माको पापीके वशमें डाल देता है, उसका उच्चको नीचकी सेवामें नियुक्त

इतरे चाभवन्नागा हयानां वालबन्धनाः ।
दिशश्च प्रदिशश्चैव रश्मयो रथवाजिनाम् ॥ ३० ॥
सन्ध्यां धृतिं च मेधां च स्थितिं सन्नतिमेव च ।
ग्रहनक्षत्रताराभिश्चर्म चित्रं नभस्तलम् ॥ ३१ ॥
सुराम्बुप्रेतवित्तानां पतींल्लोकेश्वरान्हयान् ।
सिनीवालीमनुमतिं कुहूं राकां च सुव्रताम् ॥ ३२ ॥
योक्त्राणि चक्रुर्वाहानां रोहकांस्तत्र कण्टकान् ।
धर्मः सत्यं तपोऽर्थश्च विहितास्तत्र रश्मयः ॥ ३३ ॥
अधिष्ठानं मनश्चासीत्परिरथ्या सरस्वती ।
नानावर्णाश्च चित्राश्च पताकाः पवनेरिताः ॥ ३४ ॥
विद्युदिन्द्रधनुर्नद्धं रथं दीप्तं व्यदीपयन् ।
वषट्कारः प्रतोदोऽभूद्गायत्री शीर्षबन्धना ॥ ३५ ॥
यो यज्ञे विहितः पूर्वमीशानस्य महात्मनः ।
संवत्सरो धनुस्तद्वै सावित्री ज्या महास्वना ॥ ३६ ॥
दिव्यं च वर्म विहितं महार्हं रत्नभूषितम् ।
अभेद्यं विरजस्कं वै कालचक्रबहिष्कृतम् ॥ ३७ ॥
ध्वजयष्टिरभून्मेरुः श्रीमान्कनकपर्वतः ।
पताकाश्चाभवन्मेघास्ताडिद्भिः समलंकृताः ॥ ३८ ॥

आदि सर्प घोडों के वालबन्धन बने ॥ ( २५-३० )

दिशा और कोने घोडोंकी राम; सन्ध्या, धृति, मेघा, स्थिति, सन्नति, ग्रह नक्षत्र तारे सहित आकाश छतरी; इन्द्र, वरुण, यम और कुबेर चारो घोडे; कृष्णपक्षकी चतुर्दशी शुक्लपक्षकी चतुर्दशी अमावस और पूर्णमासीकी रात्रि घोडोंकी लगाम और पितर आदि लगामके कांटे; धर्म, तप, सत्य, अर्थ ये राश, मन विछौना और विद्या इस रथकी लीक बनी ॥ (३०-३४)

अनेक वर्ण उस रथकी विचित्र पताका जिन्हें पवन उडाने लगा ॥ विजली और इन्द्रधनुषके सहित वह रथ प्रकाशित होने लगा। वषट्कार कोडा; गायत्री कलगी; महात्मा शिवने जो यज्ञोंके लिये वर्ष बताया है वही धनुष और सावित्री बडे शब्दवाला रोदा बना। कालचक्रको दिव्य रत्नभूषित अभेद्य और निर्मल कवच बनाया, सोनेके सुमेरु पर्वतको ध्वजाका थांम बनाया और

आपृच्छे त्वाद्य गान्धारे गमिष्यामि गृहाय वै ॥ ५१ ॥

सञ्जय उवाच— एवमुक्त्वा महाराज शल्यः समितिशोभनः ।
उत्थाय प्रययौ तूर्णं राजमध्यादमर्षितः ॥ ५२ ॥
प्रणयाद्बहुमानाच्च तं निगृह्य सुतस्तव ।
अब्रवीन्मधुरं वाक्यं साम्ना सर्वार्थसाधकम् ॥ ५३ ॥
यथा शल्य विजानीषे एवमेतदसंशयम् ।
अभिप्रायस्तु मे कश्चित्तं निबोध जनेश्वर ॥ ५४ ॥
न कर्णोऽभ्यधिकस्त्वत्तो न शङ्के त्वां च पार्थिव ।
नहि मद्रेश्वरो राजा कुर्याद्यदनृतं भवेत् ॥ ५५ ॥
ऋतमेव हि पूर्वास्ते वदन्ति पुरुषोत्तमाः ।
तस्मादार्तायनिः प्रोक्तो भवानिति मतिर्मम ॥ ५६ ॥
शल्यभूतस्तु शत्रूणां यस्मात्त्वं युधि मानद ।
तस्माच्छल्यो हि ते नाम कथ्यते पृथिवीतले ॥ ५७ ॥
यदेतद्व्याहृतं पूर्वं भवता भूरिदक्षिण ।
तदेव कुरु धर्मज्ञ मदर्थं यद्यदुच्यते ॥ ५८ ॥
न च त्वत्तो हि राधेयो न चाहमपि वीर्यवान् ।

---

सूतपुत्रका रथ कैसे हांकूंगा ? मै अपने अपमानको सहकर फिर युद्ध नहीं करूंगा, अब हम तुमसे पूछ कर अपने घरको जाते है ॥ (४८-५१)

सञ्जय बोले, हे राजन् ! ऐसा कह कर महावीर शल्य क्रोधसे भर कर राजोंके बीचसे उठ कर चले ॥ फिर तुम्हारे पुत्रने शल्यको पकड लिया, और बहुत संमान और विनयपूर्वक शान्ति सहित अपना प्रयोजन सिद्ध करनेको ऐसे वचन बोले ॥ हे शल्य ! आप जो कहते है, सो सब सत्य है, परन्तु मेरा जो अभिप्राय है, सो सुनिये ॥ (५२-५४)

हे पृथ्वीनाथ ! कर्ण आपसे अधिक बलवान् नहीं हैं, और न मै आपसे किसी प्रकारकी शङ्का करता हूं, क्योंकि मुझे निश्चय है कि जो आप कहेंगे सो कदापि मिथ्या नहीं होगा ॥ आपके सब पुरुषा लोग सत्य बोलते थे, इसी लिये आपके गोत्रका नाम आर्तायनी है॥ आप शत्रुओंके हृदयमें कांटेके समान शलते रहते है, इसी लिये आपका नाम शल्य है ॥ (५५-५७)

हे धर्मज्ञ ! आपने जो पहले वरदान दिया था, कि हम तुम्हारा कल्याण करेंगे, उस अपने वचनको आज सत्य

छायामेवात्मनश्चक्रे धनुर्ज्यामक्षयां रणे ॥ ४७ ॥
कालो हि भगवान्रुद्रस्तस्य संवत्सरो धनुः।
तस्माद्रौद्री कालरात्रिर्ज्या कृता धनुषोऽजरा ॥ ४८ ॥
इषुश्चाप्यभवद्विष्णुर्ज्वलनः सोम एव च।
अग्नीषोमौ जगत्कृत्स्नं वैष्णवं चोच्यते जगत् ॥ ४९ ॥
विष्णुश्चात्मा भगवतो भवस्यामिततेजसः।
तस्माद्धनुर्ज्यासंस्पर्शं न विषेहुर्हरस्य ते ॥ ५० ॥
तस्मिञ्शरे तिग्ममन्युं मुमोचासह्यमीश्वरः।
भृग्वङ्गिरोमन्युभवं क्रोधाग्निमतिदुःसहम् ॥ ५१ ॥
स नीललोहितो धूम्रः कृत्तिवासा भयङ्करः।
आदित्यायुतसङ्काशस्तेजोज्वालावृतो ज्वलन् ॥ ५२ ॥
दुश्च्यावच्यावनो जेता हन्ता ब्रह्मद्विषां हरः।
नित्यं त्राता च हन्ता च धर्माधर्माश्रितान्नरान् ॥५३॥
प्रमाथिभिर्भीमबलैर्भीमरूपैर्मनोजवैः।
विभाति भगवान्स्थाणुस्तैरेवात्मगुणैर्वृतः ॥ ५४ ॥
तस्याङ्गानि समाश्रित्य स्थितं विश्वमिदं जगत्।

शिवने छओं ऋतुओंके सहित वर्षको विचित्र धनुष बनाया। और छायाको उस धनुषकी डोरी बनायी ॥ भगवान् रुद्र ही काल है, वर्ष उनका धनुष है, रात्रि उनकी रोदा है, इसी लिये रात्रियोंके नाम कालरात्रि और रुद्ररात्रि है ॥ चन्द्रमा, विष्णु और अग्नि तीनों बाण बने। अग्नि और चन्द्रमा तेजके कर्त्ता है और विष्णु भी जगत्के कर्त्ता है, और वे ही विष्णु अनन्त तेजस्वी शिवकी आत्मा है, इसी लिये जगत्को वैष्णव कहते है। इसी लिये कालरात्रिरूप शिव की धनुषकी रोदेका स्पर्श असुरोंसे नहीं सहागया ॥ ४७–५०)

तब शिवने क्रोधमे उन बाणोंको छोडा, भृगु और अङ्गिरा उस घोर क्रोधकी अग्निका रूप होगये। वे बाण उस क्रोधकी अग्निसे प्रकाशित होगये। शिव भी लाल नेत्र सहस्रों सूर्योंके समान तेजस्वी और भयङ्कर होगये ॥ नित्य धर्मयुक्तोंका रक्षक, और अधर्मयुक्त तथा ब्राह्मण द्वेषीयोंके नाश करनेवाले तथा पापोंको छुडानेवाले शिव सब देवतोंके तेजमे बहुत प्रकाशित होगये, घोर रूपी गण और अपने गुणोंमे भगवान् शिव आप ही प्रकाशित होने लगे ॥ (५२–५४)

आपृच्छे त्वाद्य गान्धारे गमिष्यामि गृहाय वै ॥५१॥

सञ्जय उवाच— एवमुक्त्वा महाराज शल्यः समितिशोभनः ।
उत्थाय प्रययौ तूर्णं राजमध्यादमर्षितः ॥ ५२ ॥
प्रणयाद्बहुमानाच्च तं निगृह्य सुतस्तव ।
अब्रवीन्मधुरं वाक्यं साम्ना सर्वार्थसाधकम् ॥ ५३ ॥
यथा शल्य विजानीषे एवमेतदसंशयम् ।
अभिप्रायस्तु मे कश्चित्तं निबोध जनेश्वर ॥ ५४ ॥
न कर्णोऽभ्यधिकस्त्वत्तो न शङ्के त्वां च पार्थिव ।
नहि मद्रेश्वरो राजा कुर्याद्यदनृतं भवेत् ॥ ५५ ॥
ऋतमेव हि पूर्वास्ते वदन्ति पुरुषोत्तमाः ।
तस्मादार्तायनिः प्रोक्तो भवानिति मतिर्मम ॥ ५६ ॥
शल्यभूतस्तु शत्रूणां यस्मात्त्वं युधि मानद ।
तस्माच्छल्यो हि ते नाम कथ्यते पृथिवीतले ॥ ५७ ॥
यदेतद्व्याहृतं पूर्वं भवता भूरिदक्षिण ।
तदेव कुरु धर्मज्ञ मदर्थं यद्यदुच्यते ॥ ५८ ॥
न च त्वत्तो हि राधेयो न चाहमपि वीर्यवान् ।

---

सूतपुत्रका रथ कैसे हांकूंगा ? मैं अपने अपमानको सहकर फिर युद्ध नहीं करूंगा, अब हम तुमसे पूछ कर अपने घरको जाते हैं ॥ (४८–५१)

सञ्जय बोले, हे राजन् ! ऐसा कह कर महावीर शल्य क्रोधसे भर कर राजाके बीचसे उठ कर चले ॥ फिर तुम्हारे पुत्रने शल्यको पकड लिया, और बहुत संमान और विनयपूर्वक शान्ति सहित अपना प्रयोजन सिद्ध करनेको ऐसे वचन बोले ॥ हे शल्य ! आप जो कहते हैं, सो सब सत्य है, परन्तु मेरा जो अभिप्राय है, सो सुनिये ॥(५२–५४)

हे पृथ्वीनाथ ! कर्ण आपसे अधिक बलवान् नहीं हैं, और न मैं आपसे किसी प्रकारकी शङ्का करता हूं, क्योंकि मुझे निश्चय है कि जो आप कहेंगे सो कदापि मिथ्या नहीं होगा ॥ आपके सब पुरुषा लोग सत्य बोलते थे, इसी लिये आपके गोत्रका नाम आर्तायनी है॥ आप शत्रुओंके हृदयमें कांटेके समान शलते रहते है, इसी लिये आपका नाम शल्य है ॥ (५५–५७)

हे धर्मज्ञ ! आपने जो पहले वरदान दिया था, कि हम तुम्हारा कल्याण करेंगे, उस अपने वचनको आज सत्य

गत्वा पितामहं देवाः प्रसाद्येदं वचोऽब्रुवन् ॥ ६४ ॥
यथा त्वत्कथितं देव त्रिदशारिविनिग्रहे ।
तथा च कृतमस्माभिः प्रसन्नो नो वृषध्वजः ॥ ६५ ॥
रथश्च विहितोऽस्माभिर्विचित्रायुधसंवृतः ।
सारथिं च न जानीमः कः स्यात्तस्मिन्रथोत्तमे ॥ ६६ ॥
तस्माद्विधीयतां कश्चित्सारथिर्देवसत्तम ।
सफलां तां गिरं देव कर्त्तुमर्हसि नो विभो ॥ ६७ ॥
एवमस्मासु हि पुरा भगवन्नुक्तवानसि ।
हितकर्तास्मि भवतामिति तत्कर्तुमर्हसि ॥ ६८ ॥
स देव युक्तो रथसत्तमो नो दुराधरो द्रावणः शात्रवाणाम् ।
पिनाकपाणिर्विहितोऽत्र योद्धा विभीषयन्दानवानुद्यतोऽसौ ॥ ६९ ॥
तथैव वेदाश्चतुरो हयाग्र्या धरा सशैला च रथो महात्मनः ।
नक्षत्रवंशानुगतो वरूथी हरो योद्धा सारथिर्नाभिलक्ष्यः ॥ ७० ॥
तत्र सारथिरेष्टव्यः सर्वैरेतैर्विशेषवान् ।
तत्प्रतिष्ठो रथो देव हया योद्धा तथैव च ॥ ७१ ॥
कवचानि सशस्त्राणि कार्मुकं च पितामह ।

महात्मा शिवके वचन सुन सब देवता ब्रह्माके पास गये, और उन्हें प्रसन्न कर ऐसे बोले, हे देव ! आपने जैसा कहा था, हम लोगोंने शिवसे वैसा ही कहा, इस लिये शिव हमसे प्रसन्न हो गये। हम लोगोंने अनेक विचित्र शस्त्रोंके सहित एक रथ भी बना लिया है, परन्तु उसका सारथी कौन होगा; सो हम नहीं जानते । हे देवश्रेष्ठ ! अब आप कोई उत्तम सारथी बतलाइये और अपने वचनको सत्य कीजिये ॥ (६४—६७)

आपने पहले हम लोगोंसे कहा था, कि हम लोगोंका कल्याण करेंगे, अब उस वचनको सत्य कीजिये ॥ हे देव ! वह शत्रुओंको डरानेवाला घोर रथ हम लोगोंने बना लिया है। शिव उसमें बैठकर और दानवोंको डरा कर युद्ध करेंगे; इसी प्रकार चारों वेद घोडे बने हैं । महात्मा शिवने वन और पर्वतोंके सहित पृथ्वी रथ और तारा आदि सब रथ सामग्री बनाए हैं । अब केवल सारथी हीका विलम्ब है ॥ (६८—७०)

हे देव ! रथ, घोडे और योद्धाके अनुसार जो सब देवतोंमें श्रेष्ठ हो उसे सारथी बनाइये। कवच, धनुष और बाण आदि सब चीजें बन चुकी हैं। अब

यथा पुरावृत्तमिदं युद्धे देवासुरे विभो ॥ १ ॥
यदुक्तवान्पितुर्मह्यं मार्कण्डेयो महानृषिः ।
तदशेषेण ब्रुवतो मम राजर्षिसत्तम ॥ २ ॥
निबोध मनसा चात्र न ते कार्या विचारणा ।
देवानामसुराणां च परस्परजिगीषया ॥ ३ ॥
बभूव प्रथमो राजन्संग्रामस्तारकामयः ।
निर्जिताश्च तदा दैत्या दैवतैरिति नः श्रुतम् ॥ ४ ॥
निर्जितेषु च दैत्येषु तारकस्य सुतास्त्रयः ।
ताराक्षः कमलाक्षश्च विद्युन्माली च पार्थिव ॥ ५ ॥
तप उग्रं समास्थाय नियमे परमे स्थिताः ।
तपसा कर्षयामासुर्देहान्स्वाञ्शत्रुतापन ॥ ६ ॥
दमेन तपसा चैव नियमेन समाधिना ।
तेषां पितामहः प्रीतो वरदः प्रददौ वरम् ॥ ७ ॥
अवध्यत्वं च ते राजन्सर्वभूतस्य सर्वदा ।
सहिता वरयामासुः सर्वलोकपितामहम् ॥ ८ ॥
तानब्रवीत्तदा देवो लोकानां प्रभुरीश्वरः ।
नास्ति सर्वामरत्वं वै निवर्त्तध्वमितोऽसुराः ॥ ९ ॥
अन्यं वरं वृणीध्वं वै यादृशं सम्प्ररोचते ।
ततस्ते सहिता राजन्सम्प्रधार्यासकृत्प्रभुम् ॥ १० ॥

---

मद्रराज ! देवासुर संग्राममें जो बात हुई थी सो आपसे हम कहते हैं सुनो। आप हमारी बातमें कुछ सन्देह न कीजिये। जब देवता और राक्षसोंका युद्ध हुआ था, हमने सुना है कि उस पहले युद्धमें तारकासुर दैत्योंका राजा था, तब देवतोंने दानवोंको जीत लिया था ॥ (१-४)

उसके पश्चात् तारकासुरके तीन बेटे शेष रह गये थे, उनके नाम ये हैं ताराक्ष, कमलाक्ष, विद्युन्माली। हे शत्रुनाशन! वे तीनों घोर तप करके अपने शरीरोंको सुखाने लगे ॥ उनके तप, नियम और संयमसे प्रसन्न होकर ब्रह्मा वरदान देनेको आये, उन तीनोंने ब्रह्मासे मांगा कि हमको कभी कोई न मार सके॥ (५-८)

उनके वचन सुन सब जगत्के कर्त्ता ब्रह्माने कहा, कि जगत्में कोई अमर नहीं हो सक्ता, इस लिये तुम दूसरा वरदान मांगो। तब उन दैत्योंने परस्पर

तमारूढं तु देवेशं तुष्टुवुः परमर्षयः ॥ ८० ॥
गन्धर्वा देवसङ्घाश्च तथैवाप्सरसां गणाः।
स शोभमानो वरदः खड्गी बाणी शरासनी ॥ ८१ ॥
प्रदीपयन्रथे तस्थौ त्रीँल्लोकान्स्वेन तेजसा।
ततो भूयोऽब्रवीद्देवो देवानिन्द्रपुरोगमान् ॥ ८२ ॥
न हन्यादिति कर्त्तव्यो न शोको वः कथञ्चन।
हतानित्येव जानीत बाणेनानेन चासुरान् ॥ ८३ ॥
ते देवाः सत्यमित्याहुर्निहता इति चाब्रुवन्।
न च तद्वचनं मिथ्या यदाह भगवान्प्रभुः ॥ ८४ ॥
इति सञ्चिन्त्य वै देवाः परां तुष्टिमवाप्नुवन्।
ततः प्रयातो देवेशः सर्वैर्देवगणैर्वृतः ॥ ८५ ॥
रथेन महता राजन्नुपमा नास्ति यस्य ह।
स्वैश्च पारिषदैर्देवः पूज्यमानो महायशाः ॥ ८६ ॥
नृत्यद्भिरपरैश्चैव मांसभक्षैर्दुरासदैः।
धावमानैः समन्ताच्च तर्जमानैः परस्परम् ॥ ८७ ॥
ऋषयश्च महाभागास्तपोयुक्ता महागुणाः।
आशंसुर्वै जना देवा महादेवस्य सर्वशः ॥ ८८ ॥
एवं प्रयाते देवेशे लोकानामभयङ्करे।

रूपी बाणको धनुष पर धारण किया। उससे सब दानव कांपने लगे, और ऋषि शिवकी स्तुति करने लगे॥ खड्ग बाण और धनुषधारी शिवकी देवता गन्धर्व और अप्सरा स्तुति करने लगे। शिवने रथमें बैठ कर तीनों लोकोंको अपने तेजसे प्रकाशित किया। ७८-८२

फिर इन्द्रादिक देवताओंसे बोले, तुम लोग यह मत जानो कि त्रिपुरासुर नहीं मरा और किसी प्रकारका भय मत करो अब हम इसी एक बाणसे त्रिपुरासुरको मारते है। देवतोंने कहा, जो आप कहते है सो सब सत्य होगा। हम लोगोंका निश्चय होगया कि त्रिपुरासुर मारा गया। ऐसा कहकर देवता बहुत प्रसन्न हुए और सब देवतोंके सहित शिव चले। महायशस्वी शिव अपने पारिषदोंके सहित उस उपमा रहित रथमें बैठ कर चले॥ ( ८२—८६ )

उनके सङ्ग अनेक नाचते कूदते गर्जते मांसभक्षी भूत पिशाच चले। महा गुणवान् महा तपस्वी ऋषि लोग शिव-

यथा पुरावृत्तमिदं युद्धे देवासुरे विभो ॥ १ ॥
यदुक्तवान्पितुर्मह्यं मार्कण्डेयो महानृषिः ।
तदशेषेण ब्रुवतो मम राजर्षिसत्तम ॥ २ ॥
निबोध मनसा चात्र न ते कार्या विचारणा ।
देवानामसुराणां च परस्परजिगीषया ॥ ३ ॥
बभूव प्रथमो राजन्संग्रामस्तारकामयः ।
निर्जिताश्च तदा दैत्या दैवतैरिति नः श्रुतम् ॥ ४ ॥
निर्जितेषु च दैत्येषु तारकस्य सुतास्त्रयः ।
ताराक्षः कमलाक्षश्च विद्युन्माली च पार्थिव ॥ ५ ॥
तप उग्रं समास्थाय नियमे परमे स्थिताः ।
तपसा कर्षयामासुर्देहान्स्वाञ्शत्रुतापन ॥ ६ ॥
दमेन तपसा चैव नियमेन समाधिना ।
तेषां पितामहः प्रीतो वरदः प्रददौ वरम् ॥ ७ ॥
अवध्यत्वं च ते राजन्सर्वभूतस्य सर्वदा ।
सहिता वरयामासुः सर्वलोकपितामहम् ॥ ८ ॥
तानब्रवीत्तदा देवो लोकानां प्रभुरीश्वरः ।
नास्ति सर्वामरत्वं वै निवर्त्तध्वमितोऽसुराः ॥ ९ ॥
अन्यं वरं वृणीध्वं वै यादृशं सम्प्ररोचते ।
ततस्ते सहिता राजन्सम्प्रधार्यासकृत्प्रभुम् ॥ १० ॥

मद्रराज ! देवासुर संग्राममें जो बात हुई थी सो आपसे हम कहते हैं सुनो। आप हमारी बातमें कुछ सन्देह न कीजिये। जब देवता और राक्षसोंका युद्ध हुआ था, हमने सुना है कि उस पहले युद्धमें तारकासुर दैत्योंका राजा था, तब देवतोंने दानवोंको जीत लिया था॥ (१-४)

उसके पश्चात् तारकासुरके तीन बेटे शेष रह गये थे, उनके नाम ये हैं ताराक्ष, कमलाक्ष, विद्युन्माली। हे शत्रुनाशन! वे तीनों घोर तप करके अपने शरीरोंको सुखाने लगे॥ उनके तप, नियम और संयमसे प्रसन्न होकर ब्रह्मा वरदान देनेको आये, उन तीनोंने ब्रह्मासे मांगा कि हमको कभी कोई न मार सके॥ (५-८)

उनके वचन सुन सब जगत्के कर्त्ता ब्रह्माने कहा, कि जगत्में कोई अमर नहीं हो सक्ता, इस लिये तुम दूसरा वरदान मांगो। तब उन दैत्योंने परस्पर

तमारूढं तु देवेशं तुष्टुवुः परमर्षयः ॥ ८० ॥
गन्धर्वा देवसङ्घाश्च तथैवाप्सरसां गणाः ।
स शोभमानो वरदः खड्गी बाणी शरासनी ॥ ८१ ॥
प्रदीपयन्रथे तस्थौ त्रीँल्लोकान्स्वेन तेजसा ।
ततो भूयोऽब्रवीद्देवो देवानिन्द्रपुरोगमान् ॥ ८२ ॥
न हन्यादिति कर्त्तव्यो न शोको वः कथञ्चन ।
हतानित्येव जानीत बाणेनानेन चासुरान् ॥ ८३ ॥
ते देवाः सत्यमित्याहुर्निहता इति चाब्रुवन् ।
न च तद्वचनं मिथ्या यदाह भगवान्प्रभुः ॥ ८४ ॥
इति सञ्चिन्त्य वै देवाः परां तुष्टिमवाप्नुवन् ।
ततः प्रयातो देवेशः सर्वैर्देवगणैर्वृतः ॥ ८५ ॥
रथेन महता राजन्नुपमा नास्ति यस्य ह ।
स्वैश्च पारिषदैर्देवः पूज्यमानो महायशाः ॥ ८६ ॥
नृत्यद्भिरपरैश्चैव मांसभक्षैर्दुरासदैः ।
धावमानैः समन्ताच्च तर्जमानैः परस्परम् ॥ ८७ ॥
ऋषयश्च महाभागास्तपोयुक्ता महागुणाः ।
आशंसुर्वै जना देवा महादेवस्य सर्वशः ॥ ८८ ॥
एवं प्रयाते देवेशे लोकानामभयङ्करे ।

रूपी बाणको धनुष पर धारण किया। उससे सब दानव कांपने लगे, और ऋषि शिवकी स्तुति करने लगे॥ खड्ग बाण और धनुषधारी शिवकी देवता गन्धर्व और अप्सरा स्तुति करने लगे। शिवने रथमें बैठ कर तीनों लोकोंको अपने तेजसे प्रकाशित किया। ७८-८२

फिर इन्द्रादिक देवताओंसे बोले, तुम लोग यह मत जानो कि त्रिपुरासुर नहीं मरा और किसी प्रकारका भय मत करो अब हम इसी एक बाणसे त्रिपुरासुरको मारते है। देवतोंने कहा, जो आप कहते हैं सो सब सत्य होगा। हम लोगोंका निश्चय होगया कि त्रिपुरासुर मारा गया। ऐसा कहकर देवता बहुत प्रसन्न हुए और सब देवतोंके सहित शिव चले। महायशस्वी शिव अपने पारिषदोंके सहित उस उपमा रहित रथमें बैठ कर चले॥ ( ८२—८६ )

उनके सङ्ग अनेक नाचते कूदते गर्जते मांसभक्षी भूत पिशाच चले। महा गुणवान् महा तपस्वी ऋषि लोग शिव-

गृहप्रवरसम्बाधमसम्बाधमहापथम् ।
प्रासादैर्विविधैश्चापि द्वारैश्चैवोपशोभितम् ॥ २० ॥
पुरेषु चाभवन्राजन्राजानो वै पृथक् पृथक् ।
काञ्चनं तारकाक्षस्य चित्रमासीन्महात्मनः ॥ २१ ॥
राजतं कमलाक्षस्य विद्युन्मालिन आयसम् ।
त्रयस्ते दैत्यराजानस्त्रींल्लोकानस्त्रतेजसा ॥ २२ ॥
आक्रम्य तस्थुरूचुश्च कश्च नाम प्रजापतिः ।
तेषां दानवमुख्यानां प्रयुतान्यर्बुदानि च ॥ २३ ॥
कोट्यश्चाप्रतिवीराणां समाजग्मुस्ततस्ततः ।
मांसाशिनः सुदृप्ताश्च सुरैर्विनिकृताः पुरा ॥ २४ ॥
महदैश्वर्यमिच्छन्तस्त्रिपुरं दुर्गमाश्रिताः ।
सर्वेषां च पुनश्चैषां सर्वयोगवहो मयः ॥ २५ ॥
तमाश्रित्य हि ते सर्वे वर्तयन्तेऽकुतोभयाः ।
यो हि यन्मनसा कामं दध्यौ त्रिपुरसंश्रयः ॥ २६ ॥
तस्मै कामं मयस्तं तं विदधे मायया तदा ।
तारकाक्षसुतो वीरो हरिर्नाम महाबलः ॥ २७ ॥
तपस्तेपे परमकं येनातुष्यत्पितामहः ।

योजन चौडा था, उनके भीतर अनेक अटारी, स्थान और तौरन बनी थीं। अनेक बडे बडे मार्ग और अनेक सुन्दर स्थान, तथा अनेक प्रकारके प्रासाद और द्वार उनमें बने थे। (१७—२०)

सोनेके विचित्र नगरमें महात्मा तारकाक्ष, चांदीके नगरमें कमलाक्ष और लोहेके नगरमें विद्युन्माली राजा हुआ। ये तीनों दैत्यराजा अपने अस्त्रोंके तेजसे तीनों लोकका राज्य करने लगे, और मदमत्त होकर कहने लगे, कि हमसे और दूसरा प्रजापति कौन है? इनके संग लक्षों करोडों और दानवभी आगये, सब देवतोंसे हारे मांसभक्षी दानव इन तीनोंके पास आकर रहने लगे॥ (२१-२४)

ये सब दानव बडे ऐश्वर्यकी इच्छासे त्रिपुरदुर्गमें निवासके लिये आये थे इन सबको मय राक्षस इच्छानुसार भोग देता था। उस त्रिपुरका आश्रय करके सब निर्भयतासे रहते थे, और उस त्रिपुरवासियोंके चित्तमें जो जो अभिलाषा उत्पन्न होती थी, उसको मय राक्षस अपनी मायासे पूर्ण करता था॥ (२५—२७)

तारकाक्षका हरि नाम एक महाबल-

ततः स्थाणुर्महाराज शूलधृक् क्रोधमूर्छितः ॥ ९८ ॥
त्रस्तानि सर्वभूतानि त्रैलोक्यं भूः प्रकम्पते ।
निमित्तानि च घोराणि तत्र सन्दधतः शरम् ॥ ९९ ॥
तस्मिन्सोमाग्निविष्णूनां क्षोभेण ब्रह्मरुद्रयोः ।
स रथो धनुषः क्षोभादतीव ह्यवसीदति ॥ १०० ॥
ततो नारायणस्तस्माच्छरभागाद्विनिःसृतः ।
वृषरूपं समास्थाय उज्जहार महारथम् ॥ १०१ ॥
सीदमाने रथे चैव नर्दमानेषु शत्रुषु ।
स सम्भ्रमात्तु भगवान्नादं चक्रे महाबलः ॥ १०२ ॥
वृषभस्य स्थितो मूर्ध्नि हयपृष्ठे च मानद ।
तदा स भगवान्रुद्रो निरैक्षद्दानवं पुरम् ॥ १०३ ॥
वृषभस्यास्थितो रुद्रो हयस्य च नरोत्तम ।
स्तनांस्तदाशातयत खुरांश्चैव द्विधाकरोत् ॥ १०४ ॥
ततः प्रभृति भद्रं ते गवां द्वैधीकृताः खुराः ।
हयानां च स्तना राजंस्तदाप्रभृति नाभवन् ॥ १०५ ॥
पीडितानां बलवता रुद्रेणाद्भुतकर्मणा ।
अथाधिज्यं धनुः कृत्वा शर्वः सन्धाय तं शरम् ॥ १०६ ॥
युक्त्वा पाशुपतास्त्रेण त्रिपुरं समचिन्तयत् ।
तस्मिंस्थिते महाराज रुद्रे विधूतकार्मुके ॥ १०७ ॥

क्रोधसे हाथमें शूल धारण किया, तब तीनों लोक कांपने लगे, और घोर अशकुन होने लगे॥ अग्नि, चन्द्रमा और विष्णु तथा ब्रह्मा और शिवके क्षोभसे वह रथ नीचे दबनेलगा ॥ (९७-१००)

जब विष्णु वृषरूप धारण कर उस बाणसे निकले, तब वह रथ नीचेको दबने लगा और दानव नाचने लगे। तब शिव वेगसे गर्जने लगे। बैलके शिर और घोडोंकी कमर पर बैठ शिवने दानवोंके नगरको देखा, हे नरोत्तम! शिव बैल घोडे दोनों पर चढे थे, उन्होंने बैलके खुरको बीचमें काट दिया, उसी दिनसे गौके खुर फटे रहते है। इसी प्रकार शिवने घोडोंके स्तन काट दिये उस दिनसे घोडे स्तनहीन होते है ॥ (१०१-१०५)

अद्भुत कर्म करनेवाले शिवके बलसे घोडे पीडित होगये। तब शिवने धनुष पर उस बाणको चढाया और पाशुपत

पीड्यमानेषु लोकेषु ततः शक्रो मरुद्वृतः　　॥ ३६ ॥
पुराण्यायोधयाञ्चक्रे वज्रपातैः समन्ततः ।
नाशकत्तान्यभेद्यानि यदा भेत्तुं पुरन्दरः　　॥ ३७ ॥
पुराणि वरदत्तानि धात्रा तेन नराधिप ।
तदा भीतः सुरपतिर्मुक्त्वा तानि पुराण्यथ　　॥ ३८ ॥
तैरेव विबुधैः सार्धं पितामहमरिन्दम ।
जगामाथ तदाख्यातुं विप्रकारं सुरेतरैः　　॥ ३९ ॥
ते तत्त्वं सर्वमाख्याय शिरोभिः सम्प्रणम्य च ।
वधोपायमपृच्छन्त भगवन्तं पितामहम्　　॥ ४० ॥
श्रुत्वा तद्भगवान्देवो देवानिदमुवाच ह ।
ममापि सोऽपराध्नोति यो युष्माकमसौम्यकृत ॥ ४१॥
असुरा हि दुरात्मानः सर्व एव सुरद्विषः ।
अपराध्यन्ति सततं ये युष्मान्पीडयन्त्युत　　॥ ४२ ॥
अहं हि तुल्यः सर्वेषां भूतानां नात्र संशयः ।
अधार्मिकास्तु हन्तव्या इति मे व्रतमाहितम् ॥ ४३ ॥
एकेपुणा विभेद्यानि तानि दुर्गाणि नान्यथा ।
न च स्थाणुमृते शक्तो भेत्तुमेकेषुणा पुरः　　॥ ४४ ॥

इस प्रकार जब सब लोक पीडित होने लगे तब इन्द्र मरुत् आदि देवतोंको सङ्ग लेकर त्रिपुरासुरसे लडने चले, वहां जाकर वज्रसे अनेक दिन लडते रहे, परन्तु राक्षसोंका नाश न हुआ, न नगरोंको तोड सके। तब इन्द्रने जाना, कि ये नगर ब्रह्माके वरदानसे टूट नहीं सकते, ऐसा जानकर इन्द्र भयसे लौट आये, हे शत्रुनाशन! इन्द्र उन्ही देवतोंके सहित सब दैत्योंका समाचार कहनेको ब्रह्माके निकट गये ॥ (३६-३९)

उन्होंने जाकर भगवान् ब्रह्माको सिरसे प्रणाम किया और त्रिपुरासुरके मारनेका यत्न पूछा ॥ देवतोंके वचन सुन ब्रह्माने कहा, कि जिन्होंने तुम लोगोंका अपराध किया है, वे हमारे भी अपराधी हैं; दुष्ट दानव सदा देवतोंका अपराध करते हैं, इस लिये हमारे भी अपराधी हैं, इसमें संशय नहीं, कि मैं सब जगत्को समान समझता हूं। परन्तु अधर्मी को मारना ही हमारा प्रण है ॥ (४०-४३)

जो कोई एक बाणसे उन तीनों नगरोंका नाश करे वही उनको मार सक्ता

तुष्टुवुर्वाग्भिरग्र्याभिः स्थाणुमप्रतिमौजसम्॥ ११६ ॥
तेऽनुज्ञाता भगवता जग्मुः सर्वे यथागतम्।
कृतकामाः प्रयत्नेन प्रजापतिमुखाः सुराः ॥ ११७ ॥
एवं स भगवान्देवो लोकस्रष्टा महेश्वरः।
देवासुरगणाध्यक्षो लोकानां विदधे शिवम् ॥ ११८ ॥
यथैव भगवान्ब्रह्मा लोकधाता पितामहः।
सारथ्यमकरोत्तत्र रुद्रस्य परमोऽव्ययः ॥ ११९ ॥
तथा भवानपि क्षिप्रं रुद्रस्येव पितामहः।
संयच्छतु हयानस्य राधेयस्य महात्मनः ॥ १२० ॥
त्वं हि कृष्णाच्च कर्णाच्च फाल्गुनाच्च विशेषतः।
विशिष्टो राजशार्दूल नास्ति तत्र विचारणा॥ १२१ ॥
युद्धे ह्ययं रुद्रकल्पस्त्वं च ब्रह्मसमो नये।
तस्माच्छक्तो भवाञ्जेतुं मच्छत्रूंस्तानिवासुरान्॥१२२॥
यथा शल्याद्य कर्णोऽयं श्वेताश्वं कृष्णसारथिम्।
प्रमथ्य हन्यात्कौन्तेयं तथा शीघ्रं विधीयताम्॥१२३॥
त्वयि मद्रेश राज्याशा जीविताशा तथैव च।
विजयश्च तथैवाद्य कर्णसाचिव्यकारितः ॥ १२४ ॥
त्वयि कर्णश्च राज्यं च वयं चैव प्रतिष्ठिताः।

---

होकर महातेजस्वी शिवकी स्तुति करने लगे॥ अनन्तर शिवकी आज्ञा लेकर कृतकार्य ब्रह्मादिक देवता अपने अपने घर चले गये॥ (११४-११७)

इस प्रकार देवता असुर और मनुष्योंके स्वामी जगत्कर्त्ता शिवने त्रिपुरासुरको मारा। जिस प्रकार अविनाशी जगत्कर्त्ता भगवान् ब्रह्माने शिवके घोडे हांके थे, इसी प्रकार आप भी महात्मा राधापुत्रके घोडे हांकिये॥ (११८-१२०)

हे राजश्रेष्ठ शल्य! इसमें संशय नहीं है, कि तुम कृष्ण, कर्ण और अर्जुनसे भी अधिक हैं॥ यह कर्ण युद्धमें रुद्रके समान पराक्रमी है, और तुम ब्रह्माके समान है, इस लिये तुम असुरोंके समान मेरे शत्रुको जीतने में समर्थ है। हे शल्य! अब तुम ऐसा विधान करो, कि जिससे कृष्ण सारथिके सहित अर्जुनको कर्ण मार सकेंगे॥ (१२१-१२३)

हे राजेन्द्र! आपहीमे हमें राज्य और जीवनकी आशा है। आपहीको सारथी बनाकर कर्ण युद्धमें विजय पावेंगे।

तान्स्वस्तिवादेनाभ्यर्च्य समुत्थाप्य च शङ्करः॥ ५३ ॥
ब्रूत ब्रूतेति भगवान्स्मयमानोऽभ्यभाषत ।
त्र्यम्बकेणाभ्यनुज्ञातास्ततस्ते स्वस्थचेतसः ॥ ५४ ॥
नमो नमो नमस्तेऽस्तु प्रभो इत्यब्रुवन्वचः ।
नमो देवाधिदेवाय धन्विने वनमालिने ॥ ५५ ॥
प्रजापतिमखघ्नाय प्रजापतिभिरीड्यते ।
नमः स्तुताय स्तुत्याय स्तूयमानाय शम्भवे ॥ ५६ ॥
विलोहिताय रुद्राय नीलग्रीवाय शूलिने ।
अमोघाय मृगाक्षाय प्रवरायुधयोधिने ॥ ५७ ॥
अर्हाय चैव शुद्धाय क्षयाय क्रथनाय च ।
दुर्वारणाय काथाय ब्रह्मणे ब्रह्मचारिणे ॥ ५८ ॥
ईशानायाप्रमेयाय नियन्त्रे चर्मवाससे ।
तपोरथाय पिङ्गाय व्रतिने कृत्तिवाससे ॥ ५९ ॥
कुमारपित्रे त्र्यक्षाय प्रवरायुधधारिणे ।
प्रपन्नार्तिविनाशाय ब्रह्मद्विट्सङ्घघातिने ॥ ६० ॥

---

देवताओं और ऋषियोंने शिवको शिरसे प्रणाम किया । (४८-५३)

शिवने उनको उठाकर कुशल पूछा, शिवजीने हंस कर कहा तुम लोग अपने आनेका प्रयोजन कहो । तब देवतोंने त्र्यम्बककी आज्ञा सुनकर सावधान होकर कहा, कि हे प्रभो ! आप देवतोंके देवता हैं इसलिये हम आपको बार बार प्रणाम करते हैं । हम लोग वनमाला और धनुषधारी शिवको प्रणाम करते है । हम स्तुति करने योग्य, स्तुतिकिये हुए, स्तुति किये जानेवाले, दक्षकी यज्ञ नाश करनेवाले, प्रजापतियोंके द्वारा स्तुति करने योग्य आपको प्रणाम करते हैं ॥(५४ ५६)

लाल वर्ण, रुद्र, नीलकण्ठ,शूलधारी, अमोघ, मृगनेत्र और उत्तम शस्त्रोंसे युद्ध करनेवाले आपकी स्तुति करते है ॥ योग्य, शुद्ध, और विध्वंस करनेवाले, कथन, दुःखसे निवारण करने योग्य, वध करनेवाले ब्रह्मरूपी आपको प्रणाम करते हैं ॥ जगत्स्वामी अनन्तर जगत्को नियमसे चलानेवाले, चर्मधारी, तप करनेवाले, व्रतधारी, पिंग और गजचर्मधारी शिवको प्रणाम करते है ॥ (५७-५९)

स्वामीकार्त्तिकके पिता,त्रिनेत्र, उत्तम शस्त्रधारी, शरणागत दुखियोंका दुःख नाश करनेवाले और ब्राह्मणोंके वैरियोंको नाश करनेवाले, शिवको प्रणाम करते

प्रत्युवाच महात्मानं शिरसावनतः प्रभुम् ॥ १३३ ॥
यदा जानाति देवेशः पात्रं मामस्त्रधारणे।
तदा शुश्रूषतेऽस्त्राणि भवान्मे दातुमर्हति ॥ १३४ ॥
दुर्योधन उवाच- ततः स तपसा चैव दमेन नियमेन च।
पूजोपहारबलिभिर्होममन्त्रपुरस्कृतैः ॥ १३५ ॥
आराधयितवाञ्शर्वं बहून्वर्षगणांस्तदा।
प्रसन्नश्च महादेवो भार्गवस्य महात्मनः ॥ १३६ ॥
अब्रवीत्तस्य बहुशो गुणान्देव्याः समीपतः।
भक्तिमानेष सततं मयि रामो दृढव्रतः ॥ १३७ ॥
एवं तस्य गुणान्प्रीतो बहुशोऽकथयत्प्रभुः।
देवतानां पितॄणां च समक्षमरिसूदन ॥ १३८ ॥
एतस्मिन्नेव काले तु दैत्या ह्यासन्महाबलाः।
तैस्तदा दर्पमोहाद्यैरबाध्यन्त दिवौकसः ॥ १३९ ॥
ततः सम्भूय विबुधास्तान्हन्तुं कृतनिश्चयाः।
चक्रुः शत्रुवधे यत्नं न शेकुर्जेतुमेव तान् ॥ १४० ॥
अभिगम्य ततो देवा महेश्वरमुमापतिम्।
प्रासादयंस्तदा भक्त्या जहि शत्रुगणानिति ॥१४१॥
प्रतिज्ञाय ततो देवो देवतानां रिपुक्षयम्।

प्रणाम कर बोले, हे देव! यदि आप हमें अस्त्र ग्रहण करनेके लिये योग्य समझें तो अस्त्र दीजिये॥ ( १३३-१३४ )

दुर्योधन बोले, तब परशुराम नियम, दम, तप, होम, मन्त्र और बलिदानोंसे अपनी आत्माको पवित्र करने लगे, तब महात्मा परशुराम फिर बलि, होम और मन्त्रोंसे पूजा करने लगे। इस प्रकार बहुत दिन तपस्या करनेसे शिव बहुत प्रसन्न हुए, तब शिवने पार्वतीसे इनकी प्रशंसा करके कहा कि, परशुराम मेरा पूरा भक्त और विश्वासी है, इसी प्रकार देवता और पितरोंके आगे भी शिवने उनके गुण वर्णन किये॥ १३५-१३८

उसी समय दानवोंका बहुत बल बढ गया था, उन्होंने अपने बल और अभिमानसे सब देवतोंको जीत लिया॥ तब सब देवतोंने मिलकर उनके मारने के यत्न किये, परन्तु मार नहीं सके॥ तब सब देवता शिवके पास गये और उन्हें प्रसन्न करके कहने लगे, कि हे देव! आप हमारे शत्रुओंका नाश

त्वत्प्रसादाज्जगत्सर्वं सुखमैधत मानद ।
शरण्यस्त्वं हि लोकेश ते वयं शरणं गताः ॥ ५ ॥

स्थाणुरुवाच— हन्तव्याः शात्रवः सर्वे युष्माकमिति मे मतिः ।
न त्वेक उत्सहे हन्तुं बलस्था हि सुरद्विषः ॥ ६ ॥
ते यूयं संहताः सर्वे मदीयेनार्धतेजसा ।
जयध्वं युधि ताञ्शत्रून्संहता हि महाबलाः ॥ ७ ॥

देवा ऊचुः— अस्मत्तेजोबलं यावत्तावद् द्विगुणमाहवे ।
तेषामिति हि मन्यामो दृष्टतेजोबला हि ते ॥ ८ ॥

श्रीभगवानुवाच- वध्यास्ते सर्वतः पापा ये युष्मास्वपराधिनः ।
मम तेजोबलार्धेन सर्वान्निघ्नत शात्रवान् ॥ ९ ॥

देवा ऊचुः— बिभर्तुं भवतोऽर्धं तु न शक्ष्यामो महेश्वर ।
सर्वेषां नो बलार्धेन त्वमेव जहि शात्रवान् ॥ १० ॥

श्रीभगवानुवाच- यदि शक्तिर्न वः काचिद्विभर्त्तुं मामकं बलम् ।
अहमेतान्हनिष्यामि युष्मत्तेजोर्धबृंहितः ॥ ११ ॥
ततस्तथेति देवेशस्तैरुक्तो राजसत्तम ।
अर्धमादाय सर्वेषां तेजसाभ्यधिकोऽभवत् ॥ १२ ॥

---

कृपासे जब जगत्को सुख होता है, आप शरण आयेकी रक्षा करते है; इस लिये हम लोग आपकी शरण है ॥ (१-५)

शिवजी बोले, हम तुम्हारे शत्रुओंको मारेंगे, परन्तु वे लोग बहुत सेनाके सहित रहते है । इस लिये हम अकेले नहीं मार सक्ते ॥ तुम लोग इकट्ठे होकर हमारे आधे तेजसे उन सब दानवोंको मार डालो । क्यों कि एकता से युक्त होनेवाले ही महाबली होते है॥ (६-७)

देवता बोले, हम लोगोंने दानवोंका बल देखा है । हमारे बलमे उनका बल दूना है ॥ (८)

तब शिवजी बोले, जिन्होंने आपका अपराध किया है, वे सब मरनेके योग्य है । इसलिये हमारे आधे तेजसे उन सबको मार डालिये ॥ (९)

तब देवता बोले, हम लोग आपके आधे तेजको सम्हाल नहीं सक्ते, इस लिये आपही हम लोगोंके आधे तेजसे शत्रुओंका नाश कीजिये ॥ तब शिवजी फिर बोले, यदि तुम लोग हमारे आधे तेजको नहीं धारण कर सक्ते हो, तो हम ही तुम्हारे आधे तेजसे उनका नाश करेंगे ॥ (१०-११)

हे राजश्रेष्ठ ! तब देवतोंने शिवके

स दानवैः क्षततनुर्जामदग्न्यो द्विजोत्तमः ॥ १५० ॥
संस्पृष्टः स्थाणुना सद्यो निर्व्रणः समजायत ।
प्रीतश्च भगवान्देवः कर्मणा तेन तस्य वै ॥ १५१ ॥
वरान्प्रादाद्बहुविधान्भार्गवाय महात्मने ।
उक्तश्च देवदेवेन प्रीतियुक्तेन शूलिना ॥ १५२ ॥
निपातात्तव शस्त्राणां शरीरे याभवद्रुजा ।
तया ते मानुषं कर्म व्यपोढं भृगुनन्दन ॥ १५३ ॥
गृहाणास्त्राणि दिव्यानि मत्सकाशाद्यथेप्सितम् ।
दुर्योधन उवाच- ततोऽस्त्राणि समस्तानि वरांश्च मनसेप्सितान् ॥ १५४ ॥
लब्ध्वा बहुविधान्रामः प्रणम्य शिरसा भवम् ।
अनुज्ञां प्राप्य देवेशाज्जगाम स महातपाः ॥ १५५ ॥
एवमेतत्पुरावृत्तं तदा कथितवानृषिः ।
भार्गवोऽपि ददौ दिव्यं धनुर्वेदं महात्मने ॥ १५६ ॥
कर्णाय पुरुषव्याघ्र सुप्रीतेनान्तरात्मना ।
वृजिनं हि भवेत्किञ्चिद्यदि कर्णस्य पार्थिव ॥ १५७ ॥
नास्मै ह्यस्त्राणि दिव्यानि प्रादास्यद्भृगुनन्दनः ।

डाला, और उन दानवोंके बाणोंसे परशुरामके शरीरमें भी बहुत घाव लगे॥ तब परशुराम शिवके पास गये। शिवने उनके सब घाव स्पर्शमात्रसे ही अच्छे कर दिये ॥ ( १४९-१५१ )

भृगुकुलोत्पन्न परशुरामके उस कर्मसे भगवान् शिव प्रसन्न हुए और उनको अनेक प्रकारके वरदान दिये, तब शूलधारी शिवने प्रसन्न होकर कहा, कि हे भृगुनन्दन ! दानवोंके शस्त्र लगनेमे जो तुम्हारे शरीरमें घाव हुए थे, उनको देखनेमे निश्चय हुआ कि तुमने अमानुष कर्म किया है। अब तुम अपनी इच्छानुसार हमसे दिव्य अस्त्र ग्रहण करो। ( १५१-१५४ )

दुर्योधन बोले, हे राजन् शल्य ! तब शिवने परशुरामको सब अस्त्र और इच्छानुसार वर दान दिये। महा तपस्वी परशुराम शिवसे वरदान और अस्त्र पाकर शिवको प्रणाम करके और उनकी आज्ञा ले, अपने घरको चले गये। इस दिव्य कथाको एक मुनिने हमारे पितासे कहा था। परशुरामने वही धनुष प्रसन्न हो पुरुषसिंह कर्णको दिया है। कोई ऐसा अस्त्र नहीं है,जो परशुरामने कर्णको नहीं दिया हो ! (१५४-१५७)

ईषा नक्षत्रवंशाश्च युगः कृतयुगोऽभवत् ॥ २१ ॥
कूबरश्च रथस्यासीद्वासुकिर्भुजगोत्तमः ।
अपस्करमधिष्ठाने हिमवान्विन्ध्यपर्वतः ॥
उदयास्तावधिष्ठाने गिरी चक्रुः सुरोत्तमाः ॥ २२ ॥
समुद्रमक्षमसृजन्दानवालयमुत्तमम् ।
सप्तर्षिमण्डलं चैव रथस्यासीत्परिष्करः ॥ २३ ॥
गङ्गा सरस्वती सिन्धुर्धुरमाकाशमेव च ।
उपस्करो रथस्यासन्नापः सर्वाश्च निम्नगाः ॥ २४ ॥
अहोरात्रं कलाश्चैव काष्ठाश्च ऋतवस्तथा ।
अनुकर्षं ग्रहा दीप्ता वरूथं चापि तारकाः ॥ २५ ॥
धर्मार्थकामसंयुक्तं त्रिवेणुं दारु बन्धुरम् ।
ओषधीर्वीरुधश्चैव घण्टाः पुष्पफलोपगाः ॥ २६ ॥
सूर्याचन्द्रमसौ कृत्वा चक्रे रथवरोत्तमे ।
पक्षौ पूर्वापरौ तत्र कृते रात्र्यहनी शुभे ॥ २७ ॥
दशनागपतीनीषां धृतराष्ट्रमुखांस्तदा ।
योक्त्राणि चक्रुर्नागांश्च निःश्वसन्तो महोरगान् ॥२८॥
द्यां युगं युगचर्माणि संवर्तकवलाहकान् ।
कालपृष्ठोऽथ नहुषः कर्कोटकधनञ्जयौ ॥ २९ ॥

की कील, सतयुग धुरी, रथका कूबर और पीछेका काष्ठ नागराज वासुकी बने, उसका जुआ विन्ध्याचल और हिमाचल बने । उदयाचल और अस्ताचल उसका मार्ग बना; दानवोंके स्थान सातों समुद्र रथ बांधनेकी उत्तम रस्सी बनी, सप्तऋषियोंका मण्डल पहियोंकी हाल; गङ्गा, सिन्धु, सरस्वती और आकाश धुरी और जल रथ बांधनेकी छोटी छोटी रस्सी बने ॥ (२०–२४)

रात, दिन, वसंत, ग्रीष्म, वर्षा, [illegible] हेमन्त, शिशिर, काल और [illegible] खटीला बने । तारे रथके [illegible] जाल बने; धर्म, अर्थ [illegible] तीन बांस बने; [illegible] वृक्ष घण्टा [illegible] गन दिन [illegible]

यथा देवैर्महाराज ईश्वरादधिको वृतः ।
तथा भवानपि क्षिप्रं रुद्रस्येव पितामहः ॥ ४ ॥
नियच्छ तुरगान्युद्धे राधेयस्य महाद्युते ।
मयाप्येतन्नरश्रेष्ठ बहुशो नरसिंहयोः ॥ ५ ॥
कथ्यमानं श्रुतं दिव्यमाख्यानमतिमानुषम् ।
यथा च चक्रे सारथ्यं भवस्य प्रपितामहः ॥ ६ ॥
यथासुराश्च निहता इषुणैकेन भारत ।
कृष्णस्य चापि विदितं सर्वमेतत्पुरा ह्यभूत ॥ ७ ॥
यथा पितामहो जज्ञे भगवान्सारथिस्तदा ।
अनागतमतिक्रान्तं वेद कृष्णोऽपि तत्त्वतः ॥ ८ ॥
एनदर्थं विदित्वापि सारथ्यमुपजग्मिवान् ।
स्वयम्भूरिव रुद्रस्य कृष्णः पार्थस्य भारत ॥ ९ ॥
यदि हन्याच्च कौन्तेयं सूतपुत्रः कथञ्चन ।
दृष्ट्वा पार्थं हि निहतं स्वयं योत्स्यति केशवः ॥ १० ॥
शङ्खचक्रगदापाणिर्धक्ष्यते तव वाहिनीम् ।
न चापि तस्य क्रुद्धस्य वार्ष्णेयस्य महात्मनः ॥ ११ ॥
स्थास्यते प्रत्यनीकेषु कश्चिदत्र नृपस्तव ।
सञ्जय उवाच— तं तथा भाषमाणं तु मद्रराजमरिन्दमः ॥ १२ ॥

अधिक गुणवान् जानकर उनका सारथी बनाया है । जैसे ब्रह्माने शिवके घोडे हांके थे, तैसे ही आप भी महातेजस्वी राधापुत्रके घोडे हांकिये ॥ (१-५)

शल्य बोले, हे नरश्रेष्ठ! जैसे ब्रह्माने शिवके घोडे हांके थे, सो कथा मैने भी बहुत बार सुनी थी। जैसे शिवने सब राक्षसोंको एक बाणसे मारा था, ये भी हम जानते हैं। जैसे भगवान् ब्रह्मा शिवके सारथी बने थे, इस कथाको कृष्ण भी अच्छी भांतिसे जानते है। क्यों कि कृष्ण भूत भविष्य सबको जानते हैं। और यही जान कर कृष्ण अर्जुनके सारथी बने है। वे दोनों ब्रह्मा और शिवके समान मिले है ॥ (५-९)

यदि अर्जुनको कर्ण मार डालेंगे, तब कृष्ण आप ही युद्ध करने लगेंगे। अर्जुनके मरनेके पश्चात् महात्मा कृष्ण शङ्ख, चक्र और गदा लेकर तुम्हारी सेनाको नाश करेंगे। हे राजन् कृष्णको क्रोध भरे देख, कोई तुम्हारी सेनाका वीर युद्धमें खडा न रहेगा ॥ (१०—१२)

रेजुरध्वर्युमध्यस्था ज्वलन्त इव पावकाः ।
क्लृप्तं तु तं रथं दृष्ट्वा विस्मिता देवताभवन् ॥ ३९ ॥
सर्वलोकस्य तेजांसि दृष्ट्वैकस्थानि मारिष ।
युक्तं निवेदयामासुर्देवास्तस्मै महात्मने ॥ ४० ॥
एवं तस्मिन्महाराज कल्पिते रथसत्तमे ।
देवैर्मनुजशार्दूल द्विषतामभिमर्दने ॥ ४१ ॥
स्वान्यायुधानि मुख्यानि न्यदधाच्छङ्करो रथे ।
ध्वजयष्टिं वियत्कृत्वा स्थापयामास गोवृषम् ॥ ४२ ॥
ब्रह्मदण्डः कालदण्डो रुद्रदण्डस्तथा ज्वरः ।
परिस्कन्दा रथस्यासन्सर्वतोदिशमुद्यताः ॥ ४३ ॥
अथर्वाङ्गिरसावास्तां चक्ररक्षौ महात्मनः ।
ऋग्वेदः सामवेदश्च पुराणं च पुरःसराः ॥ ४४ ॥
इतिहासयजुर्वेदौ पृष्ठरक्षौ बभूवतुः ।
दिव्या वाचश्च विद्याश्च परिपार्श्वचराः स्थिताः ॥४५॥
स्तोत्रादयश्च राजेन्द्र वषट्कारस्तथैव च ।
ओङ्कारश्च मुखे राजन्नतिशोभाकरोऽभवत ॥ ४६ ॥
विचित्रमृतुभिः षड्भिः कृत्वा संवत्सरं धनुः ।

---

बिजलीसे शोभित मेघ उस रथकी पताका बना ॥ (३४—३८)

उस रथके बीचमें जलती हुई अग्निके समान तेजस्वी यज्ञ करानेवाले ऋषि बैठे । रथको देख सब देवता आश्चर्यमें आगये॥ सब जगत्के तेजको एक स्थानमें इकट्ठा देख देवतोंने महात्मा शिवसे कहा, हे पुरुषसिंह शल्य ! देवतोंके वचन सुन और रथको तैयार देख देवतोंके सहित शिव उस रथपर बैठे और दिव्य शस्त्रोंको पास रख लिया । फिर आकाशको ध्वजाका बांस मानकर उस पर बैलको बिठा दिया ॥ (३९-४२)

ब्रह्मदण्ड, रुद्रदण्ड, कालदण्ड और सब ज्वर चारो ओरसे सब दिशाओंको प्रकाशित करते हुए रथकी रक्षा करने लगे ॥ अथर्वा और अङ्गिरा मुनि रथके पहियोंके रक्षक बने । ऋग्वेद, सामवेद और पुराण आगे चलने लगे। इतिहास यजुर्वेद पीछेसे रथकी रक्षा करने लगे, उत्तम वाणी और सब विद्या पास बैठीं। हे राजेन्द्र शल्य ! स्तोत्र वषट्कार और ओंकार शिव के मुख में शोभित होगये ॥ (४३ – ४६)

असकृन्निर्जिताः सङ्ख्ये स्मयमानेन संयुगे ।
तं कथं पाण्डवा युद्धे विजेष्यन्ति महारथम् ॥ २१ ॥
यो हन्यात्समरे क्रुद्धो वज्रहस्तं पुरन्दरम् ।
त्वं च सर्वास्त्रविद्वीरः सर्वविद्यास्त्रपारगः ॥ २२ ॥
बाहुवीर्येण ते तुल्यः पृथिव्यां नास्ति कश्चन ।
त्वं शल्यभूतः शत्रूणामविषह्यः पराक्रमे ॥ २३ ॥
ततस्त्वमुच्यसे राजञ्शल्य इत्यरिसूदन ।
तव बाहुबलं प्राप्य न शेकुः सर्वसात्वताः ॥ २४ ॥
तव बाहुबलाद्राजन्किं तु कृष्णो बलाधिकः ।
यथा हि कृष्णेन बलं धार्यं वै फाल्गुने हते ॥ २५ ॥
तथा कर्णात्ययीभावे त्वया धार्यं महद्बलम् ।
किमर्थं समरे सैन्यं वासुदेवो न्यवारयत् ॥ २६ ॥
किमर्थं च भवान्सैन्यं न हनिष्यति मारिष ।
त्वत्कृते पदवीं गन्तुमिच्छेयं युधि मारिष ।
सोदराणां च वीराणां सर्वेषां च महीक्षिताम् ॥ २७ ॥
शल्य उवाच— यन्मां ब्रवीषि गान्धारे अग्रे सैन्यस्य मानद ।
विशिष्टं देवकीपुत्रात्प्रीतिमानस्म्यहं त्वयि ॥ २८ ॥

जीता है। इन महारथ कर्णको पाण्डव लोग किस प्रकार जीत सकेंगे? (१७ २१)

सब विद्या और शस्त्रोंके जाननेवाले कर्ण आपको सारथी बनाकर वज्रधारी इन्द्रको भी जीत सक्ते हैं। आपके समान पृथ्वी पर बलवान् और शस्त्र विद्या जाननेवाला दूसरा कोई नहीं है। आप शत्रुओंके हृदयमें कांटेके समान दुःख देते है, हे राजन्! इसीलिये आपका नाम शल्य है। आपके पराक्रम के आगे कोई यादव युद्धमें नहीं ठहर सकते, आपके आगे कृष्ण क्या है? २१-२५

जैसे अर्जुनकी आपत्तिके समय कृष्ण सेनाको स्थिर रखते हैं, तैसे ही आप भी कर्णकी आपत्तिके समय हमारी सेना की रक्षा कीजियेगा॥ आप पाण्डवोंकी सेनाको क्यों नहीं मारेंगे? हम आपही की कृपासे राज्य पानेकी इच्छा करते है। हम अपने वीर भाई और राजोंके सहित आपकी कृपासे सुख भोगनेकी इच्छा करते है॥ (२५—२७)

शल्य बोले, हे प्रिय गान्धारीपुत्र! तुम जो मुझ सेनाके आगे हमें कृष्णसे अच्छा कहते हो, इसीसे हम तुम्हारे

जङ्गमाजङ्गमं राजञ्शुशुभेऽद्भुतदर्शनम् ॥ ५५ ॥
दृष्ट्वा तु तं रथं युक्तं कवची सशरासनी ।
बाणमादाय तं दिव्यं सोमविष्णवग्निसम्भवम्॥ ५६ ॥
तस्य राजंस्तदा देवाः कल्पयाश्चक्रिरे प्रभो ।
पुण्यगन्धवहं राजञ्श्वसनं देवसत्तमम् ॥ ५७ ॥
तमास्थाय महादेवस्त्रासयन्दैवतान्यपि ।
आरुरोह तदा यत्तः कम्पयन्निव मेदिनीम् ॥ ५८ ॥
तमारुरुक्षुं देवेशं तुष्टुवुः परमर्षयः ।
गन्धर्वा देवसङ्घाश्च तथैवाप्सरसां गणाः ॥ ५९ ॥
ब्रह्मर्षिभिः स्तूयमानो वन्द्यमानश्च वन्दिभिः ।
तथैवाप्सरसां वृन्दैर्नृत्यद्भिर्नृत्यकोविदैः ॥ ६० ॥
स शोभमानो वरदः खड्गी बाणी शरासनी ।
हसन्निवाब्रवीद्देवान्सारथिः को भविष्यति ॥ ६१ ॥
तमब्रुवन्देवगणा यं भवान्संनियोक्ष्यते ।
स भविष्यति देवेश सारथिस्ते न संशयः ॥ ६२ ॥
तानब्रवीत्पुनर्देवो मत्तः श्रेष्ठतरो हि यः ।
तं सारथिं कुरुध्वं मे स्वयं सञ्चिन्त्य मा चिरम् ॥ ६३ ॥
एतच्छ्रुत्वा ततो देवा वाक्यमुक्तं महात्मना ।

---

उसी शिवके शरीरोंमें सब जगत् स्थित है। हे राजन्! सब चर और अचर उसीसे स्थिर है; उस रथको देखकर शिवने कवच पहना और धनुष पर वही दिव्य विष्णु, चन्द्रमा और अग्निरूपी बाण चढाए॥ हे राजन्! फिर देवतोंने उत्तम सुगन्ध भरे वायुको शिवके पास भेजा॥ अनन्तर शिव देवतोंको भी डराते और पृथ्वीको कंपाते हुए उस रथ पर बैठे॥ (५५-५८)

रथपर बैठे हुए शिवकी देवता, गन्धर्व, अप्सरा और सिद्ध स्तुति करने लगे। नाचने वाली अप्सरा गन्धर्व और ब्रह्मऋषियोंकी स्तुति सुनते हुए खड्ग, धनुष और कवचधारी वर दान देनेवाले शिवजीने हंसकर देवतोंसे कहा, कि सारथी कौन बनेगा? (५९-६१)

देवता बोले, हे देवराज! आप जिसको सारथी बनाना चाहें वही आपके रथको हांकेगा॥ तब शिवने कहा तुम लोग आप ही हमसे श्रेष्ठ देवका विचार कर सारथी बनाओ॥ (६२-६३)

शल्य कर्णोऽर्जुनेनाद्य योद्धव्यमिति मन्यते ॥ ३७ ॥
तस्य त्वं पुरुषव्याघ्र नियच्छ तुरगान्युधि ।
कर्णो हत्वेतरान्सर्वान्फाल्गुनं हन्तुमिच्छति ॥ ३८ ॥
तस्याभीषुग्रहे राजन्प्रयाचे त्वां पुनः पुनः ।
पार्थस्य सचिवः कृष्णो यथाभीषुग्रहो वरः ।
तथा त्वमपि राधेयं सर्वतः परिपालय ॥ ३९ ॥

सञ्जय उवाच— ततः शल्यः परिष्वज्य सुतं ते वाक्यमब्रवीत् ।
दुर्योधनममित्रघ्नं प्रीतो मद्राधिपस्तदा ॥ ४० ॥

शल्य उवाच— एवं चेन्मन्यसे राजन्गान्धारे प्रियदर्शन ।
तस्मात्ते यत्प्रियं किञ्चित्तत्सर्वं करवाण्यहम् ॥ ४१ ॥
यत्रास्मि भरतश्रेष्ठ योग्यः कर्माणि कर्हिचित् ।
तत्र सर्वात्मना युक्तो वक्ष्ये कार्यं परन्तप ॥ ४२ ॥
यत्तु कर्णमहं ब्रूयां हितकामः प्रियाप्रिये ।
मम तत्क्षमतां सर्वं भवान्कर्णश्च सर्वशः ॥ ४३ ॥

कर्ण उवाच— ईशानस्य यथा ब्रह्मा यथा पार्थस्य केशवः ।
तथा नित्यं हिते युक्तो मद्रराज भवस्व नः ॥ ४४ ॥

वाणीसे कहने लगे। हे शल्य! अब कर्ण अर्जुनसे युद्ध करनेको जाते है। हे राजन्! कर्णकी इच्छा है, कि पाण्डवोंके सब वीरोंको मारकर अर्जुनको मारें, इस लिये आप उनके घोडोंको हांके। जैसे कृष्ण अर्जुनके सारथी और मन्त्री हैं, तैसे ही आप भी कर्णके सारथी बनो, हम यह भिक्षा आपसे बार बार मांगते हैं; जैसे कृष्ण अर्जुनकी रक्षा करते हैं; तैसे ही आप भी राधापुत्र की रक्षा कीजिये ॥ (३७—३९)

सञ्जय बोले, तब राजा शल्य बहुत प्रसन्न होकर और दुर्योधनको आलिंगन देकर बोले, हे गान्धारीपुत्र! यदि तुम्हारी ऐसी ही इच्छा है, तो तुम्हें प्रसन्न करनेके लिये हम सब कुछ करेंगे। हे भरतकुल-श्रेष्ठ! हम जिस कामको कर सकते हैं सो तुम प्रसन्न होकर हमसे कह दिया करो, और युद्ध में जो हम कर्णके हितकी इच्छासे कठोर या कोमल वचन कहें उसको तुम और कर्ण क्षमा करना ॥ (४०–४३)

कर्ण बोले, हे मद्रराज! जैसे शिवके ब्रह्मा और कुन्तीपुत्र अर्जुनके कृष्ण सार-थी हैं, वैसे ही तुम नित्य हमारे सारथी बनो ॥ (४४)

त्वामृते सारथिं तत्र नान्यं पश्यामहे वयम् ॥ ७२ ॥
त्वं हि सर्वगुणैर्युक्तो दैवतेभ्योऽधिकः प्रभो ।
स रथं तूर्णमारुह्य संयच्छ परमान्हयान् ॥ ७३ ॥
जयाय त्रिदिवेशानां वधाय त्रिदशद्विषाम् ।
इति ते शिरसा गत्वा त्रिलोकेशं पितामहम् ।
देवाः प्रसादयामासुः सारथ्यायेति नः श्रुतम् ॥ ७४ ॥

पितामह उवाच- नात्र किञ्चिन्मृषा वाक्यं यदुक्तं त्रिदिवौकसः ।
संयच्छामि हयानेष युध्यतो वै कपर्दिनः ।
ततः स भगवान्देवो लोकस्रष्टा पितामहः ॥ ७५ ॥
सारथ्ये कल्पितो देवैरीशानस्य महात्मनः ।
तस्मिन्नारोहति क्षिप्रं स्यन्दने लोकपूजिते ॥ ७६ ॥
शिरोभिरगमन्भूमिं ते हया वातरंहसः ।
आरुह्य भगवान्देवो दीप्यमानः स्वतेजसा ॥ ७७ ॥
अभीषून्हि प्रतोदं च सञ्जग्राह पितामहः ।
तत उत्थाय भगवांस्तान्हयाननिलोपमान् ॥ ७८ ॥
बभाषे च तदा स्थाणुमारोहेति सुरोत्तमः ।
ततस्तमिषुमादाय विष्णुसोमाग्निसम्भवम् ॥ ७९ ॥
आरुरोह तदा स्थाणुर्धनुषा कम्पयन्परान् ।

आपके सिवाय किसीको सारथी नहीं देखते हैं । आप सब देवतोंमें श्रेष्ठ और जगत्के स्वामी हैं, इस लिये आपही शिवके घोडोंको हांकिये। आपके सारथी बननेसे देवतोंकी विजय और दानवोंका नाश होगा । (७१—७४)

हमने सुना है, कि देवतोंके वचन सुन ब्रह्मा सारथी बननेको प्रसन्न होगये ॥ (७४)

ब्रह्मा बोले, हे देवताओ ! जो तुमने कहा उसको हम मानते हैं ! अब हम युद्ध करते हुए, शिवके घोडोंको हांकेंगे तब सब जगत्के कर्त्ता भगवान् ब्रह्मा देवतोंकी प्रार्थनासे लोकपूजित शिवके सारथी बने, ब्रह्माके बैठते हुए सब घोडोंने प्रणाम किया। तब तेजस्वी शिवजी भी रथ पर बैठे ॥ ( ७५-७७ )

तब भगवान् ब्रह्माने कोडा और रास हाथमें लेकर उन वायुके समान वेग वाले घोडोंको उठाया । तब शिवने ब्रह्मासे कहा. तुम भी रथमें बैठो । तब शिवने विष्णु, चन्द्रमा और अग्नि-

उवाच राजन्संग्रामेऽध्युषिते पर्युपस्थिते ॥ ४ ॥
कर्णस्य यच्छ संग्रामे मद्रराज हयोत्तमान्।
त्वयाभिगुप्तो राधेयो विजेष्यति धनञ्जयम् ॥ ५ ॥
इत्युक्तो रथमास्थाय तथेति प्राह भारत।
शल्येऽभ्युपगते कर्णः सारथिं सुमनाब्रवीत् ॥ ६ ॥
त्वं सूत स्यन्दनं मह्यं कल्पयेत्यसकृत्त्वरन्।
ततो जैत्रं रथवरं गन्धर्वनगरोपमम् ॥ ७ ॥
विधिवत्कल्पितं भद्रं जयेत्युक्त्वा न्यवेदयत्।
तं रथं रथिनां श्रेष्ठः कर्णोऽभ्यर्च्य यथाविधि ॥ ८ ॥
सम्पादितं ब्रह्मविदा पूर्वमेव पुरोधसा।
कृत्वा प्रदक्षिणं यत्नादुपस्थाय च भास्करम् ॥ ९ ॥
समीपस्थं मद्रराजमारोह त्वमथाब्रवीत्।
ततः कर्णस्य दुर्धर्षं स्यन्दनप्रवरं महत् ॥ १० ॥
आरुरोह महातेजाः शल्यः सिंह इवाचलम्।
ततः शल्याश्रितं दृष्ट्वा कर्णः स्वं रथमुत्तमम् ॥ ११ ॥
अध्यतिष्ठद्यथाम्भोदं विद्युद्वन्तं दिवाकरः।
तावेकरथमारूढावादित्याग्निसमत्विषौ ॥ १२ ॥

वचन सुन पराक्रमी दुर्योधन बोले, हे राजन् शल्य! प्रातःकाल होते ही आपको युद्धमें जाना होगा। अब प्रातः-काल होगया आप राधापुत्रके घोडे हांकिये। ये आपसे रक्षित होकर युद्धमें अर्जुनको जीतेंगे॥ ऐसा कहकर दुर्यो-धनने शल्यको कर्णका रथ दिखा दिया और शल्यने घोडोंकी रास पकडली, तब कर्णने शल्यसे कहा। हे सारथे! तुम हमारे रथको शीघ्र ठीक करो॥ (४-७)

तब शल्यने गन्धर्व नगरके समान विशाल रथको ठीक करके कर्णसे कहा कि रथ तैयार है। तब महारथ कर्णने विधिपूर्वक उस रथकी पूजा की और वेद जाननेवाले पुरोहितकी आज्ञानुसार सूर्यको प्रणाम कर उस रथपर बैठे और पास खडे शल्यसे कहा तुम भी बैठो, तब शल्य उस घोर रूपी रथ पर बैठे। ७-१०

महातेजस्वी शल्य इस प्रकार रथपर चढे जैसे सिंह पर्वतके शिखरपर चढता है; कर्ण शल्यको अपने रथपर बैठा देख बहुत प्रसन्न हुए और बिजलीके सहित मेघके ऊपर दीखनेवाले सूर्यके समान शोभित होने लगे; एक रथपर बैठे कर्ण

तुष्टमासीज्जगत्सर्वं देवताश्च नरोत्तम ॥ ८९ ॥
ऋषयस्तत्र देवेशं स्तुवन्तो बहुभिः स्तवैः ।
तेजश्चास्मै वर्धयन्तो राजन्नासन्पुनः पुनः ॥ ९० ॥
गन्धर्वाणां सहस्राणि प्रयुतान्यर्बुदानि च ।
वादयन्ति प्रयाणेऽस्य वाद्यानि विविधानि च ॥ ९१ ॥
ततोऽभिरूढे वरदे प्रयाते चासुरान्प्रति ।
साधुसाध्विति विश्वेशः स्मयमानोऽभ्यभाषत ॥ ९२ ॥
याहि देव यतो दैत्याश्चोदयाश्वानतन्द्रितः ।
पश्य बाह्वोर्बलं मेऽद्य निघ्नतः शात्रवान्रणे ॥ ९३ ॥
ततोऽश्वांश्चोदयामास मनोमारुतरंहसः ।
येन तत्त्रिपुरं राजन्दैत्यदानवरक्षितम् ॥ ९४ ॥
पिबद्भिरिव चाकाशं तैर्हयैर्लोकपूजितैः ।
जगाम भगवान्क्षिप्रं जयाय त्रिदिवौकसाम् ॥ ९५ ॥
प्रयाते रथमास्थाय त्रिपुराभिमुखे भवे ।
ननाद सुमहानादं वृषभः पूरयन्दिशः ॥ ९६ ॥
वृषभस्यास्य निनदं श्रुत्वा भयकरं महत् ।
विनाशमगमंस्तत्र तारकाः सुरशत्रवः ॥ ९७ ॥
अपरेऽवस्थितास्तत्र युद्धायाभिमुखास्तदा ।

के गुण वर्णन करने लगे । जगत्के सुख देनेवाले शिवके चलनेसे सब जगत् शान्त और देवता प्रसन्न हुए ॥ हे राजन् ! अनेक ऋषियोंने शिवका तेज बढानेको अनेक स्तोत्र बनाये । अनेक गन्धर्व अनेक प्रकारके बाजे बजाने लगे ॥ ( ८७—९१ )

जब वरदान देनेवाले शिव दानवोंको मारने चले, तब सब देवता साधु साधु कहने लगे ॥ शिवने ब्रह्मासे कहा, हे देवराज ! तुम सावधान होकर जहां दैत्य है वहां घोडोंको हांको और शत्रुओंको मारते हुए हमारे बाहुबलको देखो ॥ तब ब्रह्माने वायु और मनके समान शीघ्र चलनेवाले घोडे आकाशको उडते हुएके समान शीघ्र चलाए और दानवोंके नगर में पहुंचे । मार्गमें शिवका बैल अपने शब्दसे दशों दिशाओंको पूरित करने लगा ॥ ( ९२—९६ )

बैलका भयङ्कर शब्द सुनकर कोई दानव मर गये और कई दानव युद्ध करनेको भी खडे होगये ॥ जब शिवने

भीमसेनं च राधेय माद्रीपुत्रौ यमावपि ।
जयश्च तेऽस्तु भद्रं ते प्रयाहि पुरुषर्षभ ॥ २१ ॥
पाण्डुपुत्रस्य सैन्यानि कुरु सर्वाणि भस्मसात् ।
ततस्तूर्यसहस्राणि भेरीणामयुतानि च ॥ २२ ॥
वाद्यमानान्यरोचन्त मेघशब्दो यथा दिवि ।
प्रतिगृह्य तु तद्वाक्यं रथस्थो रथसत्तमः ॥ २३ ॥
अभ्यभाषत राधेयः शल्यं युद्धविशारदम् ।
चोदयाश्वान्महाबाहो यावद्धन्मि धनञ्जयम् ॥ २४ ॥
भीमसेनं यमौ चोभौ राजानं च युधिष्ठिरम् ।
अद्य पश्यतु मे शल्य बाहुवीर्यं धनञ्जयः ॥ २५ ॥
अस्यतः कङ्कपत्राणां सहस्राणि शतानि च ।
अद्य क्षेप्स्याम्यहं शल्य शरान्परमतेजनान् ॥ २६ ॥
पाण्डवानां विनाशाय दुर्योधनजयाय च ।
शल्य उवाच— सूतपुत्र कथं नु त्वं पाण्डवानवमन्यसे ॥ २७ ॥
सर्वास्त्रज्ञान्महेष्वासान्सर्वानेव महाबलान् ।
अनिवर्तिनो महाभागानजय्यान्सत्यविक्रमान् ॥ २८ ॥
अपि सन्तनयेयुर्ये भयं साक्षाच्छतक्रतोः ।

---

नकुल, सहदेव इनमेंसे किसी एकको मार डालो, इनके मरनेहीमे हमारी विजय होगी। ईश्वर तुम्हारा कल्याण करें, तुम युद्ध करो पाण्डवोंकी सब सेनाको भस्म करो। उसी समय जैसे आकाशमें मेघ गरजते हैं तैसेही सेनामें अनेक भेरे और नगाडे बजने लगे ॥ (२०-२३)

महारथ कर्णने दुर्योधनके वचनको स्वीकार किया। फिर बुद्धिमान् शल्यसे बोले, हे महाबाहो! आप हमारे घोडों-को शीघ्र हांको हम युधिष्ठिर, भीम, अर्जुन, नकुल और सहदेवको मारेंगे। हे शल्य! आज सहस्रों बाण छोडते मेरे बाहुबल को अर्जुन देखे। हे शल्य! आज हम पाण्डवोंका नाश और दुर्यो-धनकी विजयके लिये तीक्ष्ण बाण चलावेंगे। (२३-२७)

शल्य बोले, हे सुतपुत्र! सब शस्त्र जाननेवाले महापराक्रमी बलवान् पाण्ड-वोंकी निन्दा क्यों करता है? सब पाण्डव कभी युद्धमें नहीं हटते, वे महापराक्रमी और बलवान् हैं; उन्हें कोई नहीं जीत सकता, वे साक्षात् इन्द्रसे भी नहीं भय करते। हे राधापुत्र! जब तू मेघ और

तुष्टमासीज्जगत्सर्वं देवताश्च नरोत्तम　　॥ ८९ ॥
ऋषयस्तत्र देवेशं स्तुवन्तो बहुभिः स्तवैः ।
तेजश्चास्मै वर्धयन्तो राजन्नासन्पुनः पुनः　　॥ ९० ॥
गन्धर्वाणां सहस्राणि प्रयुतान्यर्बुदानि च ।
वादयन्ति प्रयाणेऽस्य वाद्यानि विविधानि च ॥ ९१ ॥
ततोऽधिरूढे वरदे प्रयाते चासुरान्प्रति ।
साधुसाध्विति विश्वेशः स्मयमानोऽभ्यभाषत॥ ९२ ॥
याहि देव यतो दैत्याश्चोदयाश्वानतन्द्रितः ।
पश्य बाह्वोर्बलं मेऽद्य निघ्नतः शात्रवान्रणे　　॥ ९३ ॥
ततोऽश्वांश्चोदयामास मनोमारुतरंहसः ।
येन तत्त्रिपुरं राजन्दैत्यदानवरक्षितम्　　॥ ९४ ॥
पिबद्भिरिव चाकाशं तैर्हयैर्लोकपूजितैः ।
जगाम भगवान्क्षिप्रं जयाय त्रिदिवौकसाम् ॥ ९५ ॥
प्रयाते रथमास्थाय त्रिपुराभिमुखे भवे ।
ननाद सुमहानादं वृषभः पूरयन्दिशः　　॥ ९६ ॥
वृषभस्यास्य निनदं श्रुत्वा भयकरं महत् ।
विनाशमगमंस्तत्र तारकाः सुरशात्रवः　　॥ ९७ ॥
अपरेऽवस्थितास्तत्र युद्धायाभिमुखास्तदा ।

के गुण वर्णन करने लगे । जगत्के सुख देनेवाले शिवके चलनेसे सब जगत् शान्त और देवता प्रसन्न हुए ॥ हे राजन् ! अनेक ऋषियोंने शिवका तेज बढानेको अनेक स्तोत्र बनाये । अनेक गन्धर्व अनेक प्रकारके बाजे बजाने लगे ॥ ( ८७—९१ )

जब वरदान देनेवाले शिव दानवोंको मारने चले, तब सब देवता साधु साधु कहने लगे ॥ शिवने ब्रह्मासे कहा, हे देवराज ! तुम सावधान होकर जहां दैत्य है वहां घोडोंको हांको और शत्रुओंको मारते हुए हमारे बाहुबलको देखो ॥ तब ब्रह्माने वायु और मनके समान शीघ्र चलनेवाले घोडे आकाशको उडते हुएके समान शीघ्र चलाए और दानवोंके नगर में पहुंचे । मार्गमें शिव का बैल अपने शब्दसे दशों दिशाओंको पूरित करने लगा ॥ ( ९२—९६ )

बैलका भयङ्कर शब्द सुनकर कोई दानव मर गये और कई दानव युद्ध करनेको भी खडे होगये ॥ जब शिवने

भीमसेनं च राधेय माद्रीपुत्रौ यमावपि ।
जयश्च तेऽस्तु भद्रं ते प्रयाहि पुरुषर्षभ ॥ २१ ॥
पाण्डुपुत्रस्य सैन्यानि कुरु सर्वाणि भस्मसात् ।
ततस्तूर्यसहस्राणि भेरीणामयुतानि च ॥ २२ ॥
वाद्यमानान्यरोचन्त मेघशब्दो यथा दिवि ।
प्रतिगृह्य तु तद्वाक्यं रथस्थो रथसत्तमः ॥ २३ ॥
अभ्यभाषत राधेयः शल्यं युद्धविशारदम् ।
चोदयाश्वान्महाबाहो यावद्धन्मि धनञ्जयम् ॥ २४ ॥
भीमसेनं यमौ चोभौ राजानं च युधिष्ठिरम् ।
अद्य पश्यतु मे शल्य बाहुवीर्यं धनञ्जयः ॥ २५ ॥
अस्यतः कङ्कपत्राणां सहस्राणि शतानि च ।
अद्य क्षेप्स्याम्यहं शल्य शरान्परमतेजनान् ॥ २६ ॥
पाण्डवानां विनाशाय दुर्योधनजयाय च ।
शल्य उवाच— सूतपुत्र कथं नु त्वं पाण्डवानवमन्यसे ॥ २७ ॥
सर्वास्त्रज्ञान्महेष्वासान्सर्वानेव महाबलान् ।
अनिवर्तिनो महाभागानजय्यान्सत्यविक्रमान् ॥ २८ ॥
अपि सन्तनयेयुर्ये भयं साक्षाच्छतक्रतोः ।

नकुल, सहदेव इनमेंसे किसी एकको मार डालो, इनके मरनेहीसे हमारी विजय होगी। ईश्वर तुम्हारा कल्याण करें, तुम युद्ध करो पाण्डवोंकी सब सेनाको भस्म करो। उसी समय जैसे आकाशमें मेघ गरजते हैं तैसेही सेनामें अनेक भेरे और नगाडे बजने लगे ॥ (२०-२३)

महारथ कर्णने दुर्योधनके वचनको स्वीकार किया। फिर बुद्धिमान् शल्यसे बोले, हे महाबाहो! आप हमारे घोडोंको शीघ्र हाको हम युधिष्ठिर, भीम, अर्जुन, नकुल और सहदेवको मारेंगे। हे शल्य! आज सहस्रों बाण छोडते मेरे बाहुबल को अर्जुन देखे। हे शल्य! आज हम पाण्डवोंका नाश और दुर्योधनकी विजयके लिये तीक्ष्ण बाण चलावेंगे। (२३-२७)

शल्य बोले, हे सुतपुत्र! सब शस्त्र जाननेवाले महापराक्रमी बलवान् पाण्डवोंकी निन्दा क्यों करता है? सब पाण्डव कभी युद्धमें नहीं हटते, वे महापराक्रमी और बलवान् हैं; उन्हें कोई नहीं जीत सकता, वे साक्षात् इन्द्रसे भी नहीं भय करते। हे राधापुत्र! जब तू मेघ और

पुराणि तानि कालेन जग्मुरेकतां तदा ।
एकीभावं गते चैव त्रिपुरत्वमुपागते ॥ १०८ ॥
बभूव तुमलो हर्षो देवतानां महात्मनाम् ।
ततो देवगणाः सर्वे सिद्धाश्च परमर्षयः ॥ १०९ ॥
जयेति वाचो मुमुचुः संस्तुवन्तो महेश्वरम् ।
ततोऽग्रतः प्रादुरभूत्त्रिपुरं निघ्नतोऽसुरान् ॥ ११० ॥
अनिर्देश्योग्रवपुषो देवस्यासह्यतेजसः ।
स तद्विकृष्य भगवान्दिव्यं लोकेश्वरो धनुः ॥ १११ ॥
त्रैलोक्यसारं तमिषुं मुमोच त्रिपुरं प्रति ।
उत्सृष्टे वै महाभाग तस्मिन्निषुवरे तदा ॥ ११२ ॥
महानार्तस्वरो ह्यासीत्पुराणां पततां भुवि ।
तान्सोऽसुरगणान्दग्ध्वा प्राक्षिपत्पश्चिमार्णवे॥ ११३ ॥
एवं तु त्रिपुरं दग्धं दानवाश्चाप्यशेषतः ।
महेश्वरेण क्रुद्धेन त्रैलोक्यस्य हितैषिणा ॥ ११४ ॥
स चात्मक्रोधजो वह्निर्हाहेत्युक्त्वा निवारितः ।
मा कार्षीर्भस्मसाल्लोकानिति त्र्यक्षोऽब्रवीच्च तम्॥११५॥
ततः प्रकृतिमापन्ना देवा लोकास्तथर्षयः ।

---

मन्त्रसे युक्त करके त्रिपुरासुरकी चिन्ता करी । हे महाराज ! जब शिवने धनुष चढाया तब वे तीनों नगर इकट्टे होगये। उसी दिनसे उसका नाम त्रिपुर हुआ, तब सब देवता सिद्ध और महाऋषि बहुत प्रसन्न हुए और जय जय कहने लगे । (१०६–११०)

जब असुरोंके मारनेवाले, घोर रूप-धारी असह्य तेजवाले शिवजीके पास वे त्रिपुर आये तब महा तेजस्वी शिवने अपने दिव्य धनुषको खींचा । हे महाभाग ! तब शिवने त्रिपुरासुरकी ओर वह तीनों लोकोंमें श्रेष्ठ बाण चलाया। उस बाणके छूटते ही वे तीनों नगर नष्ट होगये, और घोर शब्द होने लगा, तब शिवने उन तीनों नगरोंके दैत्योंको भस्म करके पश्चिमके समुद्रमें डालदिया॥११०-११३

शिवने त्रिपुरासुरको मार तीन लोकके कल्याणके लिये तब सब दानवोंको मार डाला, फिर अपने क्रोधसे उत्पन्न हुई अग्निसे कहा तुम हमारे पास चले आओ। तीनों लोकोंको भस्म मत करो । ऐसे कहकर अग्निको अपने पास बुला लिया ॥ अनन्तर सब देवता और ऋषि सावधान

अलं मनुष्यस्य सुखाय वर्तितुं तथा हि युद्धे निहतः परैर्गुरुः ॥ १९॥
हुताशनादित्यसमानतेजसं पराक्रमे विष्णुपुरन्दरोपमम् ।
नये बृहस्पत्युशनोः सदा समं न चैनमस्त्रं तदुपास्तदुःसहम् ॥२०॥
सम्प्राक्रुष्टे रुदितस्त्रीकुमारे पराभूते पौरुषे धार्तराष्ट्रे ।
मया कृत्यमिति जानामि शल्य प्रयाहि तस्माद् द्विषतामनीकम्॥२१॥
यत्र राजा पाण्डवः सत्यसन्धो व्यवस्थितो भीमसेनार्जुनौ च ।
वासुदेवः सात्यकिः सृञ्जयाश्च यमौ च कस्तान्विषहेन्मदन्यः ॥ २२ ॥
तस्मात्क्षिप्रं मद्रपते प्रयाहि रणे पञ्चालान्पाण्डवान्सृञ्जयांश्च ।
तान्वा हनिष्यामि समेत्य सङ्ख्ये यास्यामि वा द्रोणपथा यमाय ॥२३॥
नत्वेवाहं न गमिष्यामि मध्ये तेषां शूराणामिति मां शल्य विद्धि ।
मित्रद्रोहो मर्षणीयो न मेऽयं त्यक्त्वा प्राणाननुयास्यामि द्रोणम्॥२४ ॥
प्राज्ञस्य मूढस्य च जीवितान्ते नास्ति प्रमोक्षोऽन्तकसत्कृतस्य ।
अतो विद्वन्नभियास्यामि पार्थान्दिष्टं न शक्यं व्यतिवर्तितुं वै ॥ २५ ॥
कल्याणवृत्तः सततं हि राजा वैचित्रवीर्यस्य सुतो ममासीत् ।

रक्षा करनेमें समर्थ नहीं हैं। इन सब गुणोंसे भरे हुए साक्षात् गुरु द्रोणाचार्य ही शत्रुओंके हाथसे मारे गये! (१७-१९

वह तेजमें अग्नि, पराक्रममें विष्णु और इन्द्र, नीतिमें बृहस्पति और शुक्रके समान थे। वह भी घोर शस्त्रसे न बच सके॥ इस समय दुर्योधनकी सेनाके वीरोंकी स्त्रियां और लडके रोरहे हैं, और दुर्योधनका कुछ उपाय नहीं चलता, इसलिये हमारे रथको पाण्डवोंकी सेनामें ले चलो, हम सबको मारेंगे॥ जिस सेनामें साक्षात् धर्मराज युधिष्ठिर, भीमसेन, अर्जुन, नकुल, सहदेव, सात्यकि, श्रीकृष्ण और साक्षात् धृष्टद्युम्न खडे हों, वहां हमारे सिवाय और दूसरा कौन जा सक्ता है? (२०-२२)

इसलिये, हे शल्य! तुम हमारे रथको शीघ्र सृञ्जय, पाञ्चाल और पाण्डवोंकी ओर हांको। या तो मै इन सबको मारूंगा, या द्रोणाचार्यके समान मैं भी मर जाऊंगा॥ मै अपने मित्र दुर्योधनके द्रोहियों पर क्षमा नहीं कर सक्ता, इस लिये रथको शीघ्र हांको! यातो हम ही उन्हें मारेंगे, या मर जायंगे॥ हे विद्वान्! मूर्ख और पण्डित दोनों ही यमराजके यहां जाते है और इसे उलट फेरको देख भी नहीं सक्ते; इसलिये आज पाण्डवोंसे युद्ध करनेको जाते हैं॥ (२३-२५)

विचित्रवीर्यपुत्र धृतराष्ट्रके पुत्र राजा दुर्योधन सदा हमारा कल्याण करते

विजयश्चैव संग्रामे संयच्छाद्य हयोत्तमान् ॥ १२५ ॥
इमं चाप्यपरं भूय इतिहासं निबोध मे ।
पितुर्मम सकाशे यद्ब्राह्मणः प्राह धर्मवित् ॥ १२६ ॥
श्रुत्वा चैतद्वचश्चित्रं हेतुकार्यार्थसंहितम् ।
कुरु शल्य विनिश्चित्य मा भूदत्र विचारणा॥ १२७ ॥
भार्गवाणां कुले जातो जमदग्निर्महायशाः ।
तस्य रामेति विख्यातः पुत्रस्तेजोगुणान्वितः॥ १२८॥
स तीव्रं तप आस्थाय प्रसादयितवान्भवम् ।
अस्त्रहेतोः प्रसन्नात्मा नियतः संयतेन्द्रियः ॥ १२९ ॥
तस्य तुष्टो महादेवो भक्त्या च प्रशमेन च ।
हृद्गतं चास्य विज्ञाय दर्शयामास शङ्करः ॥ १३० ॥
महेश्वर उवाच— राम तुष्टोऽस्मि भद्रं ते विदितं मे तवेप्सितम् ।
कुरुष्व पूतमात्मानं सर्वमेतदवाप्स्यसि ॥ १३१ ॥
दास्यामि ते तदास्त्राणि यदा पूतो भविष्यसि ।
अपात्रमसमर्थं च दहन्त्यस्त्राणि भार्गव ॥ १३२ ॥
इत्युक्तो जामदग्न्यस्तु देवदेवेन शूलिना ।

---

तुम्हारे बलसे हम, कर्ण और हमारा राज्य स्थिर हैं; इस लिये आप कर्णके घोडे हांकिये ॥ अब हम आपसे एक दूसरा इतिहास कहते है, यह हमारे पितासे एक ब्राह्मणने कहा था। इस प्रयोजन भरे इतिहासको सुनकर आप विना विचारे कर्णके सारथी बनिये ॥ (१२४–१२७)

भार्गवके कुलमें जमदग्नि नाम एक मुनि हुए, उनके महातेजस्वी जगत्प्रसिद्ध परशुराम नामक पुत्र हुआ, परशुराम अपनी इन्द्रियोंको वशमें करके अस्त्रोंके लिये शिवका घोर तप करने लगे, उनकी भक्ति और नियमसे प्रसन्न होकर तथा अतःकरणका अभिप्राय जानकर शिव प्रगट हुए ॥ (१२८–१३०)

शिवजी बोले, हे परशुराम! हम तुम्हारा अभिप्राय जानकर प्रगट हुए, अब तुम अपनी आत्माको पवित्र करो, तुम्हारा प्रयोजनभी सिद्ध होगा ॥ हे भार्गव! जब तुम पवित्र होजाओगे, तब हम तुम्हें शस्त्र देंगे, क्योंकि अयोग्य और सामर्थ्य हीन मनुष्यको अस्त्र भस्म कर देते है ॥ ( १३१–१३२ )

शूलधारी देवताके देवता महात्मा शिव के वचन सुन परशुराम शिर से

यदुसदनमुपेन्द्रपालितं त्रिदशमिवामरराजरक्षितम् ।
प्रसभमतिविलोड्य को हरेत्पुरुषवरावरजामृतेऽर्जुनात् ॥ ३४ ॥
त्रिभुवनविभुमीश्वरेश्वरं क इह पुमान्भवमाह्वयेद्युधि ।
मृगवधकलहे ऋतेऽर्जुनात्सुरपतिवीर्यसमप्रभावतः ॥ ३५ ॥
असुरसुरमहोरगान्नरान्गरुडपिशाचसयक्षराक्षसान् ।
इषुभिरजयदग्निगौरवात्स्वभिलषितं च हविर्ददौ जयः ॥ ३६ ॥
स्मरसि ननु यदा परैर्हृतः स च धृतराष्ट्रसुतोऽपि मोक्षितः ।
दिनकरसदृशैः शरोत्तमैर्युधा कुरुषु बहून्विनिहत्य तानरीन् ॥ ३७ ॥
प्रथममपि पलायिते त्वयि प्रियकलहा धृतराष्ट्रसूनवः ।
स्मरसि ननु यदा प्रमोचिताः खचरगणानवजित्य पाण्डवैः ॥ ३८ ॥
समुदितबलवाहनाः पुनः पुरुषवरेण जिताः स्थ गोग्रहे ।
सगुरुगुरुसुताः सभीष्मकाः किमु न जितः स तदा त्वयार्जुनः ॥३९॥
इदमपरमुपस्थितं पुनस्तव निधनाय सुयुद्धमद्य वै ।
यदि न रिपुभयात्पलायसे समरगतोऽद्य हतोऽसि सूतज ॥ ४० ॥
सञ्जय उवाच— इति बहुपरुषं प्रभाषति प्रमनसि मद्रपतौ रिपुस्तवम् ।

के सिवाय ऐसा कौन वीर है जो देवतोंके सहित इन्द्रसे रक्षित स्वर्गके समान यादवोंके घरसे सुभद्राको ला सक्ता? ऐसा कौन वीर है, जो एक हरिनके लिये देवोंके देव शिवका निरादर करके उनसे युद्ध करे, यह बल इन्द्रके समान अर्जुनमें ही है ॥ (३३-३५)

देवता, राक्षस, पिशाच, गरुड और सर्पोंको मारकर उन्होंने अग्निको तृप्त किया, क्या तुम्हें यह स्मरण नहीं है? जब गन्धर्वोंने कौरवोंको मारकर दुर्योधनको पकड लिया था, तब अर्जुनने सूर्यकी किरणोंके समान अपने तेज बाणोंसे उन्हें मारकर दुर्योधनको छुडाया था, जब धृतराष्ट्रके पुत्र आप ही युद्ध करने लगे, और वहां पकडे गये, तब पाण्डवोंने उन्हें छुडाया ॥ (३६-३८)

क्या तुम्हें स्मरण नहीं है, कि जब तुम लोग विराट नगर पर चढे थे, तब एकले अर्जुनने भीष्म, द्रोणाचार्य और तुम्हें जीत लिया था; तुमने तभी अर्जुनको क्यों नहीं मारा? हे सूतपुत्र! अब तुम्हारे मरनेके लिये दूसरा युद्ध आगया, यदि आज तुम डरकर नहीं भागोगे, तो यहीं मर जाओगे ॥ (३९-४०)

सञ्जय बोले; महाप्रतापी मद्रराज शल्यके ऐसे कठोर वचन सुन, शत्रुनाशन कुरुसेनापति कर्ण बोले, मत मत

रामं भार्गवमाहूय सोऽभ्यभाषत शङ्करः ॥ १४२ ॥
रिपून्भार्गव देवानां जहि सर्वान्समागतान् ।
लोकानां हितकामार्थं मत्प्रीत्यर्थं तथैव च ॥ १४३ ॥
एवमुक्तः प्रत्युवाच त्र्यम्बकं वरदं प्रभुम् ।
राम उवाच— का शक्तिर्मम देवेश अकृतास्त्रस्य संयुगे ॥ १४४ ॥
निहन्तुं दानवान्सर्वान्कृतास्त्रान्युद्धदुर्मदान् ।
महेश्वर उवाच— गच्छ त्वं मदनुज्ञातो निहनिष्यसि शात्रवान् ॥ १४५ ॥
विजित्य च रिपून्सर्वान्गुणान्प्राप्स्यसि पुष्कलान् ।
एतच्छ्रुत्वा तु वचनं प्रतिगृह्य च सर्वशः ॥ १४६ ॥
रामः कृतस्वस्त्ययनः प्रययौ दानवान्प्रति ।
अब्रवीद्देवशत्रूंस्तान्महादर्पबलान्वितान् ॥ १४७ ॥
मम युद्धं प्रयच्छध्वं दैत्या युद्धमदोत्कटाः ।
प्रेषितो देवदेवेन वो विजेतुं महासुराः ॥ १४८ ॥
इत्युक्ता भार्गवेणाथ दैत्या युद्धं प्रचक्रमुः ।
स तान्निहत्य समरे दैत्यान्भार्गवनन्दनः ॥ १४९ ॥
वज्राशनिसमस्पर्शैः प्रहारैरेव भार्गवः ।

कीजिये ॥ ( १३९-१४१ )

तब शिवने प्रतिज्ञा की, कि हम तुम्हारे शत्रुओंका नाश करेंगे। अनन्तर परशुरामसे कहा, हे भार्गव! तुम देवतोंके शत्रुओंको मारो, इनके मारनेसे जगत्की और हमारी प्रसन्नता होगी॥ शिवके वचन सुन परशुराम त्रिनेत्रधारी शिवजीसे बोले, हे वरदायक देवराज! विना अस्त्र जाने हमारी क्या शक्ति है जो हम महा शस्त्रधारी दानवोंसे युद्ध करने जायंगे। ( १४२-१४५ )

शिवजी बोले, हे परशुराम! तुम हमारी आज्ञासे युद्ध करने जाओ, तुम सब दानवोंका नाश कर सकोगे इससे तुम्हें बहुत गुण प्राप्त होंगे। शिवके ऐसे वचन सुन परशुरामने स्वीकार किया॥ अनन्तर स्वस्तिवाचन कराकर परशुराम युद्ध करनेको चले, और दानवोंसे बोले, हे अभिमानसे भरे हुए मतवाले दानवो! तुम लोग हमारे सङ्गमें युद्ध करो, हमें तुम लोगोंको जीतनेके लिये भगवान् शिवने भेजा है। १४५-१४८

उनके ऐसे वचन सुन दैत्य युद्ध करने लगे॥ तब उन सबको युद्धमें मारकर भृगुकुलश्रेष्ठ परशुरामने उन सबको अपने वज्रके समान बाणोंसे मार

शतं ग्रामवरांश्चैव दद्यामर्जुनदर्शिने ।
तथा तस्मै पुनर्दद्यां श्वेतमश्वतरीरथम् ॥ ५ ॥
युक्तमञ्जनकेशीभिर्यो मे ब्रूयाद्धनञ्जयम् ।
न चेत्तदभिमन्येत पुरुषोऽर्जुनदर्शिवान् ॥ ६ ॥
अन्यं वास्मै पुनर्दद्यां सौवर्णं हस्तिषड्गवम् ।
तथाप्यस्मै पुनर्दद्यां स्त्रीणां शतमलंकृतम् ॥ ७ ॥
श्यामानां निष्ककण्ठीनां गीतवाद्यविपश्चिताम् ।
न चेत्तदभिमन्येत पुरुषोऽर्जुनदर्शिवान् ॥ ८ ॥
तस्मै दद्यां शतं नागाञ्शतं ग्रामाञ्शतं रथान् ।
सुवर्णस्य च मुख्यस्य हयाग्र्याणां शतं शतान् ॥ ९ ॥
ऋद्ध्या गुणैः सुदान्तांश्च धुर्यवाहान्सुशिक्षितान् ।
तथा सुवर्णशृङ्गीणां गोधेनूनां चतुःशतम् ॥ १० ॥
दद्यां तस्मै सवत्सानां यो मे ब्रूयाद्धनञ्जयम् ।
न चेत्तदभिमन्येत पुरुषोऽर्जुनदर्शिवान् ॥ ११ ॥
अन्यदस्मै वरं दद्यां श्वेतान्पञ्चशतान्हयान् ।
हेमभाण्डपरिच्छन्नान्सुमृष्टमणिभूषणान् ॥ १२ ॥
सुदान्तानपि चैवाहं दद्यामष्टादशापरान् ।
रथं च शुभ्रं सौवर्णं दद्यां तस्मै स्वलंकृतम् ॥ १३ ॥

उसपर भी वह प्रसन्न न हो, तो कांस-की दोहनी सहित सौ गौ दूंगा॥ (१-४)

यदि इससे भी वह प्रसन्न न हो तो सौ गांव और अंजनके समान केशवाली खचरिओंका सफेद रथ दूंगा॥ यदि अर्जुनको दिखानेवाला मनुष्य इसपर भी न प्रसन्न हो, तो उसे मैं हाथीके समान छः बैलवाला छकडा सोनेसे भर-कर दूंगा। और आभूषण पहने सौ स्त्री दूंगा ॥ (५—७)

अर्जुनको दिखलानेवाले मनुष्यको नाचने गानेमें निपुण कण्ठमें सोनेका आभूषण धारण किये श्यामवर्णकी सोलह वर्षकी अनेक स्त्री दूंगा । सौ हाथी, सौ ग्राम, सौ रथ और सुवर्ण भूषित सौ घोडे दूगा ॥ वे घोडे ऋद्धि और गुणसे भरे, सुशिक्षित और रथ ले चलनेमें समर्थ होंगे । अर्जुनके दिखलानेवालेको चार सौ सुवर्ण शृङ्गवाली सवत्स गायें दूंगा ॥ यदि इसपर भी प्रसन्न न हो तो सुन्दर रत्न और सुवर्णसे भूषित पांच सौ सफेद घोडे दूंगा ॥ (८—१२)

नापि सूतकुले जातं कर्णं मन्ये कथञ्चन ॥ १५८ ॥
देवपुत्रमहं मन्ये क्षत्रियाणां कुलोद्भवम् ।
विसृष्टमवबोधार्थं कुलस्येति मतिर्मम ॥ १५९ ॥
सर्वथा न ह्ययं शल्य कर्णः सूतकुलोद्भवः ।
सकुण्डलं सकवचं दीर्घबाहुं महारथम् ॥ १६० ॥
कथमादित्यसदृशं मृगी व्याघ्रं जनिष्यति ।
यथा ह्यस्य भुजौ पीनौ नागराजकरोपमौ ॥ १६१ ॥
वक्षः पश्य विशालं च सर्वशत्रुनिबर्हणम् ।
नत्वेष प्राकृतः कश्चित्कर्णो वैकर्त्तनो वृषः ॥ १६२ ॥
महात्मा ह्येष राजेन्द्र रामशिष्यः प्रतापवान् ॥१६३॥ [१६०४]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां कर्णपर्वणि त्रिपुरवधोपाख्याने चतुस्त्रिंशोऽध्यायः॥३४॥

दुर्योधन उवाच– एवं स भगवान्देवः सर्वलोकपितामहः ।
सारथ्यमकरोत्तत्र ब्रह्मा रुद्रोऽभवद्रथी ॥ १ ॥
रथिनोऽभ्यधिको वीर कर्त्तव्यो रथसारथिः ।
तस्मात्त्वं पुरुषव्याघ्र नियच्छ तुरगान्युधि ॥ २ ॥
यथा देवगणैस्तत्र वृत्तो यत्नात्पितामहः ।
तथास्माभिर्भवान्यत्नात्कर्णादभ्यधिको वृतः ॥ ३ ॥

जब कर्णमें कोई दोष होता तो भृगुनन्दन परशुराम उसे शस्त्रास्त्र नहीं देते। इससे हम कर्णको सूतपुत्रभी नहीं मानते। हमें यह निश्चय है, कि कर्ण हमारे शत्रुओंके मारनेके लिये क्षत्रियोंके कुलमें देवताके वीर्यसे उत्पन्न हुए हैं। हे शल्य! महाबाहु महारथ कर्ण कवच और कुण्डलसहित उत्पन्न हुए, इससे ये कदापि सूतपुत्र नहीं है ॥ (१५८–१६०)

देखिये कर्णके हाथ मतवाले हाथीके सूंडके समान है । सूर्यके समान तेजस्वी सिंहपुत्रको हरिणी कैसे उत्पन्न कर सक्ती है ? देखो शत्रुनाशन कर्णकी छाती कितनी ऊंची है । हे राजेन्द्र ! प्रतापी कर्ण साधारण मनुष्य नहीं है । ये परशुरामके शिष्य और महा प्रतापी है॥ (१६१–१६३) [१६०४]

कर्णपर्वमें पैंतीस अध्याय समाप्त ।

कर्णपर्वमें छत्तीस अध्याय ।

दुर्योधन बोले, इस प्रकार भगवान सर्वलोककर्त्ता ब्रह्माने शिवके घोडे हांके थे, और शिवने अधिक गुणवाले ब्रह्माको अपना सारथी बनाया था । तैसे ही हम लोगोंने आपको कर्णसे

दध्मौ सागरसम्भूतं सुस्वरं शङ्खमुत्तमम् ॥ २२ ॥
ता वाचः सूतपुत्रस्य तथा युक्ता निशम्य तु ।
दुर्योधनो महाराज संहृष्टः सानुगोऽभवत् ॥ २३ ॥
ततो दुन्दुभिनिर्घोषो मृदङ्गानां च सर्वशः ।
सिंहनादः सवादित्रः कुञ्जराणां च निःस्वनः ॥२४॥
प्रादुरासीत्तदा राजन्सैन्येषु पुरुषर्षभ ।
योधानां सम्प्रहृष्टानां तथा समभवत्स्वनः ॥ २५ ॥
तथा प्रहृष्टे सैन्ये तु प्लवमानं महारथम् ।
विकत्थमानं च तदा राधेयमरिकर्षणम् ॥
मद्रराजः प्रहस्येदं वचनं प्रत्यभाषत ॥ २६ ॥ [१७५६]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां कर्णपर्वणि कर्णावलेपेऽष्टत्रिंशोऽध्यायः॥ ३८ ॥

शल्य उवाच— मा सूतपुत्र दानेन सौवर्णं हस्तिषड्गवम् ।
प्रयच्छ पुरुषायाद्य द्रक्ष्यसि त्वं धनञ्जयम् ॥ १ ॥
बाल्यादिह त्वं त्यजसि वसु वैश्रवणो यथा ।
अयत्नेनैव राधेय द्रष्टास्यद्य धनञ्जयम् ॥ २ ॥
परान्सृजसि यद्वित्तं किञ्चित्त्वं बहु मूढवत् ।
अपात्रदाने ये दोषास्तान्मोहान्नावबुध्यसे ॥ ३ ॥

---

इत्यादि ॥ (१७-२१)

ऐसे वचन कहकर कर्णने समुद्रसे उत्पन्न हुआ उत्तम शब्दवाला शङ्ख बजाया ॥ (२२)

हे महाराज ! कर्णके सब वचन सुन दुर्योधन अपने भाईयोंके साथ बहुत प्रसन्न हुए। तब नगाडे, मृदङ्ग और अनेक भेर बजने लगे; हाथी घोडे और वीर गर्जने लगे ॥ महाराज पुरुषसिंह ! तब सब वीर प्रसन्न होकर गर्जने लगे ॥ जब इसप्रकार सेना प्रसन्न हुई और शत्रुनाशन कर्ण गर्जने लगे, तब मद्रराज शल्य हंसकर कर्णसे बोले॥ (२३-२६)

कर्णपर्वमें अडतीस अध्याय समाप्त। [ १७५६]

कर्णपर्वमें उनतालिस अध्याय।

हे सूतपुत्र ! तुम काहेको बैल, छकडे और हाथी दान करोगे ? अर्जुन आप ही तुम्हारे पास आ जावेंगे ॥ हे राधापुत्र ! तुम तो जन्महीसे कुबेरके समान दानी हो, परन्तु अब तुम विना दानके ही अर्जुनको देख लोगे॥ तुम जो मूर्खके समान बातें कर रहेहो, सो अपात्रदानके

प्रत्युवाच महाबाहुरदीनात्मा सुतस्तव ।
मावमंस्था महाबाहो कर्णं वैकर्तनं रणे ॥ १३ ॥
सर्वशस्त्रभृतां श्रेष्ठं सर्वशास्त्रार्थपारगम् ।
यस्य ज्यातलनिर्घोषं श्रुत्वा भयकरं महत् ॥ १४ ॥
पाण्डवेयानि सैन्यानि विद्रवन्ति दिशो दश ।
प्रत्यक्षं ते महाबाहो यथा रात्रौ घटोत्कचः ॥ १५ ॥
मायाशतानि कुर्वाणो हतो मायापुरस्कृतः ।
न चातिष्ठत बीभत्सुः प्रत्यनीके कथञ्चन ॥ १६ ॥
एतांश्च दिवसान्सर्वान्भयेन महताबृतः ।
भीमसेनश्च बलवान्धनुष्कोट्याभिचोदितः ॥ १७ ॥
उक्तश्च संज्ञया राजन्मूढ औदरिको यथा ।
माद्रीपुत्रौ तथा शूरौ येन जित्वा महारणे ॥ १८ ॥
कमप्यर्थं पुरुस्कृत्य न हतौ युधि मारिष ।
येन वृष्णिप्रवरिस्तु सात्यकिः सात्वतां वरः ॥ १९ ॥
निर्जित्य समरे शूरो विरथश्च बलात्कृतः ।
सृञ्जयाश्चेतरे सर्वे धृष्टद्युम्नपुरोगमाः ॥ २० ॥

सञ्जय बोले, हे शत्रुनाशन ! ऐसे वचन सुन महा पराक्रमी दुर्योधन बोले, हे महाबाहो ! आप युद्धमें कर्णका निरादर न कीजियेगा, क्योंकि कर्ण सब शस्त्रधारियोंमें श्रेष्ठ और शास्त्रको जानने वाले है । जिसके धनुषके घोर शब्दको सुनकर पाण्डवोंकी सेना चारों ओर को भागने लगती है । हे महाबाहो ! देखो उस दिन रात्रिके युद्धमें घटोत्कच किस प्रकार मारा था, उसने सैकडों माया करी, तोभी कर्णने अनेक माया प्रगट कर उसे मारा है ॥ (१३—१६)

अर्जुन भी कर्णसे युद्ध नहीं कर सके, अर्जुन इनसे सदा डरते हैं । भीमसेनको जीत कर इन्होंने धनुषके कोनेसे पकड लिया था और मूढ और औदरिक कहके उनका अपमान किया था । हे राजेन्द्र ! इन्होंने महारथी नकुल और सहदेवको दरिद्रके समान जीत लिया था और किसी विशेष कारणसे उन्हें जीता छोड दिया था ! इन्होंने यदुकुलश्रेष्ठ महापराक्रमी सात्यकिको जीतकर रथ हीन कर दिया था । इन्होंने महारथ धृष्टद्युम्नका रथ काट दिया था, और उनके सहित सब सृञ्जयवंशी क्षत्रियोंको जीत लिया था । इन्होंने सदको युद्धमें

त्वं तु मित्रमुखः शत्रुर्मां भीषयितुमिच्छसि ॥ ११ ॥
न मामस्मादभिप्रायात्कश्चिदद्य निवर्तयेत्।
अपीन्द्रो वज्रमुद्यम्य किमु मर्त्यः कथञ्चन ॥ १२ ॥
सञ्जय उवाच— इति कर्णस्य वाक्यान्ते शल्यः प्राहोत्तरं वचः।
चुकोपयिषुरत्यर्थं कर्णं मद्रेश्वरः पुनः ॥ १३ ॥
यदा वै त्वां फाल्गुनवेगयुक्ता ज्याचोदिता हस्तवता विसृष्टाः।
अन्वेतारः कङ्कपत्राः शिताग्रास्तदा तप्स्यस्यर्जुनस्यानुयोगात् ॥ १४ ॥
यदा दिव्यं धनुरादाय पार्थः प्रतापयन्पृतनां सव्यसाची।
त्वां मर्दयिष्यन्निशितैः पृषत्कैस्तदा पश्चात्तप्स्यसे सूतपुत्र॥ १५ ॥
बालश्चन्द्रं मातुरङ्के शयानो यथा कश्चित्प्रार्थयतेऽपहर्तुम्।
तद्वन्मोहाद् द्योतमानं रथस्थं सम्प्रार्थयस्यर्जुनं जेतुमद्य ॥ १६ ॥
त्रिशूलमाश्रित्य सुतीक्ष्णधारं सर्वाणि गात्राणि विघर्षसि त्वम्।
सुतीक्ष्णधारोपमकर्मणा त्वं युयुत्ससे योऽर्जुनेनाद्य कर्ण ॥ १७ ॥
क्रुद्धं सिंहं केसरिणं बृहन्तं बालो मूढः क्षुद्रमृगस्तरस्वी।
समाह्वयेत्तद्वदेतत्तवाद्य समाह्वानं सूतपुत्रार्जुनस्य ॥ १८ ॥

बलसे अर्जुनसे युद्ध करना चाहते हैं। तुम भीतरसे शत्रु और ऊपरसे मित्र होकर हमें डराना चाहते हो। ऐसी ऐसी बातें कहकर साक्षात् वज्रधारी इन्द्र भी हमें नहीं लौटा सकते, फिर मनुष्यकी तो सामर्थ ही क्या है ? (११-१२)

सञ्जय बोले, हे राजन्! कर्णके वचन सुन मद्रराज शल्य कर्णको बहुत कोपयुक्त करनेके लिये बोले, हे कर्ण! जिस समय महाबाहु अर्जुनके धनुपसे छूटे हुए अति शीघ्र चलानेवाले तीक्ष्ण, कंक पत्र युक्त बाण तुम्हारी ओर चलेंगे, तब तुम अर्जुनके मिलापमे पश्चाचाप करने लगोगे॥ हे सूतपुत्र! जिस समय दिव्य धनुप धारण करके अर्जुन तुम्हें तेज बाणोंसे मारेंगे, तब तुम पछताओगे॥ जैसे कोई माताकी गोदमें सोया बालक चन्द्रमाके प्राप्त करनेकी इच्छा करता है, तैसेही तुम रथमें बैठनेवाले,तेजस्वी अर्जुनके मारनेकी इच्छा करते हो॥ १३-१६

हे कर्ण! तुम जो तीक्ष्ण धारवाले शस्त्रके समान पराक्रमी अर्जुनसे युद्धकी इच्छा करते हो वह तेरा कर्म तीक्ष्ण धारवाले त्रिशूलसे अपने देहका घर्षण करनेके समान भयंकर है॥ हे सूतपुत्र कर्ण! हिरनका मूर्ख बच्चा जैसे केसर युक्त महापराक्रमी सिंहको युद्ध करनेके लिये बुलावे, तैसे ही तू भी बलवान्

एष सारथ्यमातिष्ठे राधेयस्य यशस्विनः ।
युध्यतः पाण्डवाग्र्येण यथा त्वं वीर मन्यसे ॥ २९ ॥
समयश्च हि मे वीर कश्चिद्वैकर्तनं प्रति ।
उत्सृजेयं यथाश्रद्धमहं वाचोऽस्य सन्निधौ ॥ ३० ॥
सञ्जय उवाच— तथेति राजन्पुत्रस्ते सह कर्णेन मारिष ।
अब्रवीन्मद्रराजानं सर्वक्षत्रस्य सन्निधौ ॥ ३१ ॥
सारथ्यस्याभ्युपगमाच्छल्येनाश्वासितस्तदा ।
दुर्योधनस्तदा हृष्टः कर्णं तमभिपस्वजे ॥ ३२ ॥
अब्रवीच्च पुनः कर्णं स्तूयमानः सुतस्तव ।
जहि पार्थान्रणे सर्वान्महेन्द्रो दानवानिव ॥ ३३ ॥
स शल्येनाभ्युपगते हयानां संनियच्छने ।
कर्णो हृष्टमना भूयो दुर्योधनमभाषत ॥ ३४ ॥
नातिहृष्टमना ह्येष मद्रराजोऽभिभाषते ।
राजन्मधुरया वाचा पुनरेनं ब्रवीहि वै ॥ ३५ ॥
ततो राजा महाप्राज्ञः सर्वास्त्रकुशलो बली ।
दुर्योधनोऽब्रवीच्छल्यं मद्रराजं महीपतिम् ॥ ३६ ॥
पूरयन्निव घोषेण मेघगम्भीरया गिरा ।

---

ऊपर प्रसन्न है ॥ हे वीर ! अब हम तेरी इच्छाके अनुसार अर्जुनसे युद्ध करते हुए महात्मा राधापुत्रके सारथी बनते है; परन्तु हम कर्णसे एक प्रतिज्ञा करा-ना चाहते है। हमारी जो इच्छा होगी सो हम इन्हें कहेंगे ॥ (२८-३०)

सञ्जय बोले, हे महाराज ! शल्यके ऐसे वचन सुन कर्णके सहित दुर्योधनने सब क्षत्रियोंके समीप उनके वचनका स्वीकार किया। शल्यके द्वारा सारथ्यका स्वीकार होनेपर दुर्योधन बहुत प्रसन्न हुए और कर्णसे मिले, फिर कर्णकी प्रशंसा करके बोले, जैसे इन्द्र दानवोंको जीतते है, ऐसे ही तुम सब पाण्डवोंको जीतो ॥ (३१—३३)

कर्ण यह सुनकर कि शल्य हमारे सारथी बनेंगे, बहुत प्रसन्न हुए और दुर्योधनसे बोले, हे राजन् ! शल्य प्रसन्न होकर नहीं बोलते, इस लिये आप उन्हें मीठी वाणीसे फिर प्रसन्न कीजिये ॥ तब सब अस्त्रोंके जाननेवाले बुद्धिमान महा पराक्रमी राजा दुर्योधन मद्रराज शल्यसे बोले ॥ (३४—३६)

राजा दुर्योधन मेघके समान गम्भीर

कामतोयप्रदं लोके नरपर्जन्यमर्जुनम् ॥ २६ ॥
यथा च स्वगृहस्थः श्वा व्याघ्रं वनगतं भषेत् ।
तथा त्वं भषसे कर्ण नरव्याघ्रं धनञ्जयम् ॥ २७ ॥
शृगालोऽपि वने कर्ण शशैः परिवृतो वसन् ।
मन्यते सिंहमात्मानं यावत्सिंहं न पश्यति ॥ २८ ॥
तथा त्वमपि राधेय सिंहमात्मानमिच्छसि ।
अपश्यञ्शत्रुदमनं नरव्याघ्रं धनञ्जयम् ॥ २९ ॥
व्याघ्रं त्वं मन्यसेऽऽत्मानं यावत्कृष्णौ न पश्यसि ।
समास्थितावेकरथे सूर्याचन्द्रमसाविव ॥ ३० ॥
यावद्गाण्डीवघोषं त्वं न शृणोषि महाहवे ।
तावदेव त्वया कर्ण शक्यं वक्तुं यथेच्छसि ॥ ३१ ॥
रथशब्दधनुःशब्दैर्नादयन्तं दिशो दश ।
नर्दन्तमिव शार्दूलं दृष्ट्वा क्रोष्टा भविष्यसि ॥ ३२ ॥
नित्यमेव शृगालस्त्वं नित्यं सिंहो धनञ्जयः ।
वीरप्रद्वेषणान्मूढ तस्मात्क्रोष्टेव लक्ष्यसे ॥ ३३ ॥
यथाखुः स्याद्बिडालश्च श्वा व्याघ्रश्च बलाबले ।
यथा शृगालः सिंहश्च यथा च शशकुञ्जरौ ॥ ३४ ॥

समान युद्ध करनेके लिये बुलाता है ॥ (२४—२६)

जैसे घरमें बैठा कुत्ता शेरकी ओर भोंकता है, तैसे ही तू पुरुषसिंह अर्जुनको युद्ध करनेको पुकारता है ॥ जैसे सिंहको बिना देखे वनमें बैठा स्यार खरगोशोंके बीचमें सिंह बनता है, तैसे ही तुम कौरवोंके बीचमें गर्ज रहे हो। हे राधापुत्र ! इसी प्रकारसे तुम भी पुरुषसिंह अर्जुनको बिना देखे सिंह बन गये हो, तुम तभी तक सिंह बन रहे हो, कि जबतक एक रथपर बैठे हुए सूर्य और चन्द्रमाके समान कृष्ण और अर्जुनको नहीं देखते ॥ (२७—३०)

जबतक तुम गाण्डीवका शब्द नहीं सुनते, तबतक जो इच्छा हो सो बको ॥ अभी तो तुम सिंह बन रहे हो, पर धनुष और रथका शब्द करते हुए अर्जुनको देखते ही स्यार होजाओगे ॥ हे मूर्ख ! तू सदाका स्यार अर्जुन सदा सिंह है ॥ इसी लिये तू मुझे स्यार समान दीख पडता है ॥ बलमें जैसे मूसा और बिलार, कुत्ता और शेर, जैसे स्यार और सिंह; खरगोश और मतवाला हाथी;

शल्य उवाच— आत्मनिन्दात्मपूजा च परनिन्दा परस्तवः ।
अनाचरितमार्याणां वृत्तमेतच्चतुर्विधम् ॥ ४५ ॥
यत्तु विद्वन्प्रवक्ष्यामि प्रत्ययार्थमहं तव ।
आत्मनः स्तवसंयुक्तं तन्निबोध यथातथम् ॥ ४६ ॥
अहं शक्रस्य सारथ्ये योग्यो मातलिवत्प्रभो ।
अप्रमादात्प्रयोगाच्च ज्ञानविद्याचिकित्सनैः ॥ ४७ ॥
ततः पार्थेन संग्रामे युध्यमानस्य तेऽनघ ।
वाहयिष्यामि तुरगान्विज्वरो भव सूतज ॥ ४८ ॥ [१६५२]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां कर्णपर्वणि
शल्यसारथ्यस्वीकारे पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

दुर्योधन उवाच— अयं ते कर्ण सारथ्यं मद्रराजः करिष्यति ।
कृष्णादभ्यधिको यन्ता देवेशस्येव मातलिः ॥ १ ॥
यथा हरिहयैर्युक्तं संगृह्णाति स मातलिः ।
शल्यस्तथा तवाद्यायं संयन्ता रथवाजिनाम् ॥ २ ॥
योधे त्वयि रथस्थे च मद्रराजे च सारथौ ।
रथश्रेष्ठो ध्रुवं संख्ये पार्थानभिभविष्यति ॥ ३ ॥
सञ्जय उवाच— ततो दुर्योधनो भूयो मद्रराजं तरस्विनम् ।

शल्य बोले, आर्योंका आचार यह है, कि अपनी प्रशंसा दूसरोंकी निन्दा अथवा अपनी निन्दा वा दूसरोंकी प्रशंसा नहीं करना ॥ तथापि हे विद्वन्! तुम्हारे निश्चय के लिये हम जो कुछ कहते हैं, यद्यपि उस में हमारी प्रशंसा है तौभी तुम सुनो ॥ मैं इन्द्रके सारथी मातलीके समान घोडोंका हांकना, फिराना, लौटाना, पहुंचाना और उनके रोगोंकी चिकित्साको जानता हूं ॥ हे पापरहित सूतपुत्र! जब तुम अर्जुनसे युद्ध करोगे, तब मैं तुम्हारे घोडोंको हांकूंगा, तुम निश्चिन्त रहो ॥ (४५-४८) [१६५२]

कर्णपर्वमें पैंतीस अध्याय समाप्त।

कर्णपर्वमें छत्तीस अध्याय।

दुर्योधन बोले, हे कर्ण! जैसे इन्द्रके मातली सारथी है, तैसे ही शल्य तुम्हारे सारथी बनेंगे, ये कृष्णसे बहुत अधिक गुणवान हैं; जैसे मातलि घोडोंको हांकते हैं तैसे ही शल्यभी घोडे हांकना जानते हैं ॥ रथिश्रेष्ठ तुम जहां योद्धा और शल्य सारथी है तहां पांडवोंका अवश्य ही पराजय होगा ॥ ( १-३ )

सञ्जय बोले, मद्रराज शल्यके ऐसे

आहेयो विषवानुग्रो नराश्वद्विपसङ्घहा ॥ ७ ॥
घोररूपो महारौद्रस्तनुत्रास्थिविदारणः ।
निर्भिद्यां येन रुष्टोऽहमपि मेरुं महागिरिम् ॥ ८ ॥
तमहं जातु नास्येयमन्यस्मिन्फाल्गुनादृते ।
कृष्णाद्वा देवकीपुत्रात्सत्यं चापि शृणुष्व मे ॥ ९ ॥
तेनाहमिषुणा शल्य वासुदेवधनञ्जयौ ।
योत्स्ये परमसंक्रुद्धस्तत्कर्म सदृशं मम ॥ १० ॥
सर्वेषां वृष्णिवीराणां कृष्णे लक्ष्मीः प्रतिष्ठिता ।
सर्वेषां पाण्डुपुत्राणां जयः पार्थे प्रतिष्ठितः ॥ ११ ॥
उभयं तु समासाद्य को निवर्तितुमर्हति ।
तावेतौ पुरुषव्याघ्रौ समेतौ स्यन्दने स्थितौ ॥ १२ ॥
मामेकमभिसंयातौ सुजातं पश्य शल्य मे ।
पितृष्वसामातुलजौ भ्रातरावपराजितौ ॥ १३ ॥
मणी सूत्र इव प्रोतौ द्रष्टासि निहतौ मया ।
अर्जुने गाण्डिवं कृष्णे चक्रं तार्क्ष्यकपी ध्वजौ ॥ १४ ॥
भीरूणां त्रासजननं शल्य हर्षकरं मम ।
त्वं तु दुष्प्रकृतिर्मूढो महायुद्धेष्वकोविदः ॥ १५ ॥

पूजा जाता है। यह सर्पमय बाण अनेक हाथी घोडे और वीरोंको मार सकता है। यह घोररूपी और महाभयानक बाण है। इसीसे क्रोध करके सुमेरुको भी तोड सक्ता हूं, इससे बडे बडे वीरोंके कवच कट जाते हैं ॥ ( ४-८ )

इस बाणको हम देवकीपुत्र कृष्ण और अर्जुनके सिवाय दूसरे पर नहीं छोडेंगे ॥ हम सत्य कहते हैं कि आज क्रोध करके अर्जुन और कृष्णके सङ्ग इस बाणसे युद्ध करेंगे। सब यदुवंशियों की कृष्ण शोभा है, इसी प्रकार पाण्डवों का जय अर्जुनमें प्रतिष्ठित है ॥ इन दोनों वीरोंके आगे जाकर कौन युद्धसे हटेगा ? और ये दोनों पुरुषसिंह मामा फूफूके भाई हैं। आज दोनों ही मुझसे युद्ध करनेको चले आते हैं ॥ (९-१३)

हे शल्य ! तुम आज मेरे जन्मकी सफलता देखो, क्योंकि गरुड और हनुमानकी ध्वजावाले गाण्डीव और चक्रधारी ये दोनों वीर आज मेरे बाणों से इस प्रकार छिद जायंगे, जैसे सूत्रप्रोत दो मणि छिद जाती हैं ॥ कृष्णार्जुनके शस्त्रास्त्र डरपोकोंकी भीतिको बढाते

अभ्राजेतां यथा मेघं सूर्याग्नी सहितौ दिवि ।
संस्तूयमानौ तौ वीरौ तदास्तां द्युतिमत्तमौ ॥ १३ ॥
ऋत्विक्सदस्यैरिन्द्राग्नी स्तूयमानाविवाध्वरे ।
स शल्यसंगृहीताश्वे रथे कर्णः स्थितो बभौ ॥ १४ ॥
धनुर्विस्फारयन्घोरं परिवेषीव भास्करः ।
आस्थितः स रथश्रेष्ठं कर्णं शरगभस्तिमान् ॥ १५ ॥
प्रबभौ पुरुषव्याघ्रो मन्दरस्थ इवांशुमान् ।
तं रथस्थं महाबाहुं युद्धायामिततेजसम् ॥ १६ ॥
दुर्योधनस्तु राधेयमिदं वचनमब्रवीत् ।
अकृतं द्रोणभीष्माभ्यां दुष्करं कर्म संयुगे ॥ १७ ॥
कुरुष्वाधिरथे वीर मिषतां सर्वधन्विनाम् ।
मनोगतं मम ह्यासीद्भीष्मद्रोणौ महारथौ ॥ १८ ॥
अर्जुनं भीमसेनं च निहन्ताराविति ध्रुवम् ।
ताभ्यां यदकृतं वीर वीरकर्म महामृधे ॥ १९ ॥
तत्कर्म कुरु राधेय वज्रपाणिरिवापरः ।
गृहाण धर्मराजं वा जहि वा त्वं धनञ्जयम् ॥ २० ॥

और शल्य अग्नि और सूर्यके समान शोभित हुए। वह रथ अग्नि और बिजलीसे युक्त मेघके समान शोभित हुआ। १० १३

जैसे ऋषि और मुनियोंकी स्तुति सुनकर अग्नि और इन्द्र प्रसन्न होते हैं, तैसे ही कर्ण और शल्य प्रसन्न हुए, तब शल्यने कर्णके घोडोंकी राम पकडी। कर्ण रथपर बैठकर अपने धनुष्यको घुमाने लगे, उस समय धनुष बाणधारी कर्ण परिवेषसे युक्त सूर्यके समान शोभित हुए, महातेजस्वी कर्ण रथमें बैठकर मन्दराचलपर उदय होते हुए, सूर्यके समान शोभित होने लगे। (१३-१६)

युद्धको जाते हुए महातेजस्वी कर्णसे दुर्योधन बोले, कि हे कर्ण! जो भीष्म और द्रोणाचार्यने भी नहीं किया, सो घोर कर्म तुम धनुषधारियोंके सन्मुख युद्धमें आज करो। हम जानते थे, कि भीष्म और द्रोणाचार्य महारथ हैं, यह भी मुझको निश्चय था कि, ये दोनों अर्जुन और भीमसेनको मारेंगे, हे वीर! इस घोर युद्धमें इन दोनोंने जो कर्म नहीं किया, तुम उस घोर कर्मको करो। हे राधापुत्र! तुम दूसरे इन्द्रके समान युद्ध करो। १६-२०

चाहे युधिष्ठिरको पकड लो, चाहे अर्जुनको मार डालो, चाहे भीमसेन

आहेयो विषवानुग्रो नराश्वद्विपसङ्घहा ॥ ७ ॥
घोररूपो महारौद्रस्तनुत्रास्थिविदारणः ।
निर्भिद्यां येन रुष्टोऽहमपि मेरुं महागिरिम् ॥ ८ ॥
तमहं जातु नास्येयमन्यस्मिन्फाल्गुनादृते ।
कृष्णाद्वा देवकीपुत्रात्सत्यं चापि शृणुष्व मे ॥ ९ ॥
तेनाहमिषुणा शल्य वासुदेवधनञ्जयौ ।
योत्स्ये परमसंक्रुद्धस्तत्कर्म सदृशं मम ॥ १० ॥
सर्वेषां वृष्णिवीराणां कृष्णे लक्ष्मीः प्रतिष्ठिता ।
सर्वेषां पाण्डुपुत्राणां जयः पार्थे प्रतिष्ठितः ॥ ११ ॥
उभयं तु समासाद्य को निवर्तितुमर्हति ।
तावेतौ पुरुषव्याघ्रौ समेतौ स्यन्दने स्थितौ ॥ १२ ॥
मामेकमभिसंयातौ सुजातं पश्य शल्य मे ।
पितृष्वसामातुलजौ भ्रातरावपराजितौ ॥ १३ ॥
मणी सूत्र इव प्रोतौ द्रष्टासि निहतौ मया ।
अर्जुने गाण्डिवं कृष्णे चक्रं तार्क्ष्यकपी ध्वजौ ॥ १४ ॥
भीरूणां त्रासजननं शल्य हर्षकरं मम ।
त्वं तु दुष्प्रकृतिर्मूढो महायुद्धेष्वकोविदः ॥ १५ ॥

पूजा जाता है। यह सर्पमय बाण अनेक हाथी घोडे और वीरोंको मार सकता है। यह घोररूपी और महाभयानक बाण है। इसीसे क्रोध करके सुमेरुको भी तोड सक्ता हूं, इससे बडे बडे वीरोके कवच कट जाते हैं ॥ (४-८)

इस बाणको हम देवकीपुत्र कृष्ण और अर्जुनके सिवाय दूसरे पर नहीं छोडेंगे ॥ हम सत्य कहते है कि आज क्रोध करके अर्जुन और कृष्णके सङ्ग इस बाणसे युद्ध करेंगे। सब यदुवंशियों की कृष्ण शोभा है, इसी प्रकार पाण्डवों का जय अर्जुनमें प्रतिष्ठित है ॥ इन दोनों वीरोंके आगे जाकर कौन युद्धसे हटेगा ? और ये दोनों पुरुषसिंह मामा फूफूके भाई है। आज दोनों ही मुझसे युद्ध करनेको चले आते हैं ॥ (९-१३)

हे शल्य ! तुम आज मेरे जन्मकी सफलता देखो, क्योंकि गरुड और हनुमानकी ध्वजावाले गाण्डीव और चक्रधारी ये दोनों वीर आज मेरे बाणों से इस प्रकार छिद जायंगे, जैसे सूत्रप्रोत दो मणि छिद जाती है ॥ कृष्णार्जुनके शस्त्रास्त्र डरपोकोंकी भीतिको बढाते

यदा श्रोष्यसि निर्घोषं विस्फूर्जितमिवाशनेः ॥ २९ ॥
राधेय गाण्डिवस्याजौ तदा नैवं वदिष्यसि ।
यदा द्रक्ष्यसि भीमेन कुञ्जरानीकमाहवे ॥ ३० ॥
विशीर्णदन्तं निहतं तदा नैवं वदिष्यसि ।
यदा द्रक्ष्यसि संग्रामे धर्मपुत्रं यमौ तथा ॥ ३१ ॥
शितैः पृषत्कैः कुर्वाणानभ्रच्छायामिवाम्बरे ।
अस्यतः क्षिण्वतश्चारीँल्लघुहस्तान्दुरासदान् ।
पार्थिवानपि चान्यांस्त्वं तदा नैवं वदिष्यसि ॥ ३२ ॥
सञ्जय उवाच— अनादृत्य तु तद्वाक्यं मद्रराजेन भाषितम् ।
याहीत्येवाब्रवीत्कर्णो मद्रराजं तरस्विनम् ॥ ३३ ॥ [१६८५]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां कर्णपर्वणि शल्यसंवादे षट्त्रिंशोऽध्यायः ॥ ३६ ॥

सञ्जय उवाच— दृष्ट्वा कर्णं महेष्वासं युयुत्सुं समवस्थितम् ।
चुक्रुशुः कुरवः सर्वे हृष्टरूपाः समन्ततः ॥ १ ॥
ततो दुन्दुभिनिर्घोषैर्भेरीणां निनदेन च ।
बाणशब्दैश्च विविधैर्गर्जितैश्च तरस्विनाम् ॥ २ ॥
निर्ययुस्तावका युद्धे मृत्युं कृत्वा निवर्तनम् ।
प्रयाते तु ततः कर्णे योधेषु मुदितेषु च ॥ ३ ॥

विजलीके समान अर्जुनके धनुषका शब्द सुनेगा तब ऐसा नहीं कहेगा। जब तुम देखोगे कि भीमसेन हाथियोंकी सेनाका नाश कर रहे हैं; तब ऐसा न कहोगे, जब तुम देखोगे कि युधिष्ठिर, नकुल और सहदेवने अपने बाणोंसे मेघके समान आकाशको छा लिया है, तब ऐसा नहीं कहोगे, जब तुम इनको अनेक राजाओं और शत्रुओंको मारते देखोगे तब ऐसा न कहोगे॥ (२९-३२)

सञ्जय बोले मद्रराज शल्यके वचनोंका निरादर कर कर्णने कहा. चलो चलो ॥ (३३) [१६८५]

कर्णपर्वमें छतीस अध्याय समाप्त।

कर्णपर्वमें सैंतीस अध्याय।

सञ्जय बोले, हे राजन् धृतराष्ट्र! महाधनुषधारी कर्णको युद्धकी ओर जाते देख कौरवोंकी सेना प्रसन्न हो गर्जने लगी॥ तब अनेक प्रकारके भेर और नगारे बजने लगे। धनुषोंकी टङ्कार होने लगी और घोडे, हाथी चिंघाडने लगे॥ तुम्हारे पुत्र मृत्युका निश्चय करके युद्ध करनेको चले। (१—३)

हे राजन्! जिस समय कर्ण युद्ध

दुरात्मा मद्रको नित्यं नित्यमानृतिकोऽनृजुः ।
यावदन्त्यं हि दौरात्म्यं मद्रकेष्विति नः श्रुतम् ॥ २४ ॥
पिता पुत्रश्च माता च श्वश्रूश्वशुरमातुलाः ।
जामाता दुहिता भ्राता नप्तान्ये ते च बान्धवाः ॥ २५ ॥
वयस्याभ्यागताश्चान्ये दासीदासं च सङ्गतम् ।
पुम्भिर्विमिश्रा नार्यश्च ज्ञाताज्ञाताः स्वयेच्छया ॥ २६ ॥
येषां गृहेष्वशिष्टानां सक्तुमत्स्याशिनां तथा ।
पीत्वा सीधुसगोमांसं क्रन्दन्ति च हसन्ति च ॥ २७ ॥
गायन्ति चाप्यबद्धानि प्रवर्त्तन्ते च कामतः ।
कामप्रलापिनोऽन्योन्यं तेषु धर्मः कथं भवेत् ॥ २८ ॥
मद्रकेष्ववलिप्तेषु प्रख्याताशुभकर्मसु ।
नापि वैरं न सौहार्दं मद्रकेण समाचरेत् ॥ २९ ॥
मद्रके सङ्गतं नास्ति मद्रको हि सदामलः ।
मद्रकेषु च संसृष्टं शौचं गान्धारकेषु च ॥ ३० ॥
राजयाजकयाज्ये च नष्टं दत्तं हविर्भवेत् ।

वाले हैं, इन क्षुद्र वाक्य कहनेवाले नराधमोंसे न कभी मित्रता करनी चाहिये, न विश्वास करना चाहिये॥ (२१–२३)

हमने सुना है, कि मद्रदेशके मनुष्य दुरात्मा, असत्यवादी और कुटिल होते हैं। जगत्में जितने पाप और दुष्टता है, ये सब उन्होंमें भरे रहते है ॥ पिता, माता, भाई, पुत्र, मामा, श्वसुर, जमाई, बेटी और पोते भी उस देशमें अपने बन्धुओंसे प्रेम नहीं करते। चाहे अभ्यागत हो, चाहे मित्र हो, चाहे दासी हो, चाहे दास हो, कोई किसीका मोह नहीं करता। स्त्रियां अपनी इच्छानुसार जाने और बिन जाने मनुष्योंके साथ घूमा करती हैं। और सत्तु मिश्रित मत्स्य खानेवाले उन अशिष्ट पुरुषोंके घरमें गोमांसको खाकर मद्य पीती हैं हंसती हैं, और खेलती है तथा अबद्ध गाती हैं और इच्छानुसार क्रीडा करती है। अनेक पुरुष कामके वशमें होकर अनेक प्रकार क्रीडा करते है, ऐसे दुष्टोंमें धर्म कहांसे आया ? (२४–२८)

मदमत्त और जिनकी पापकर्मोंमें ख्याति है ऐसे मद्रदेशवालोंसे मित्रता और वैर दोनों ही न करना चाहिये ॥ ये लोग बडे मैले रहते हैं, और गन्धार देशियोंके समान ये भी अपवित्र रहते हैं। इस लिये इनका संग कभी नहीं करना

यदा श्रोष्यसि निर्घोषं विस्फूर्जितमिवाशनेः ॥ २९ ॥
राधेय गाण्डिवस्याजौ तदा नैवं वदिष्यसि ।
यदा द्रक्ष्यसि भीमेन कुञ्जरानीकमाहवे ॥ ३० ॥
विशीर्णदन्तं निहतं तदा नैवं वदिष्यसि ।
यदा द्रक्ष्यसि संग्रामे धर्मपुत्रं यमौ तथा ॥ ३१ ॥
शितैः पृषत्कैः कुर्वाणानभ्रच्छायामिवाम्बरे ।
अस्यतः क्षिण्वतश्चारीँल्लघुहस्तान्दुरासदान् ।
पार्थिवानपि चान्यांस्त्वं तदा नैवं वदिष्यसि ॥ ३२ ॥

सञ्जय उवाच— अनादृत्य तु तद्वाक्यं मद्रराजेन भाषितम् ।
याहीत्येवाब्रवीत्कर्णो मद्रराजं तरस्विनम् ॥ ३३ ॥ [१६८५]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां कर्णपर्वणि शल्यसंवादे षट्त्रिंशोऽध्यायः ॥ ३६ ॥

सञ्जय उवाच— दृष्ट्वा कर्णं महेष्वासं युयुत्सुं समवस्थितम् ।
चुक्रुशुः कुरवः सर्वे हृष्टरूपाः समन्ततः ॥ १ ॥
ततो दुन्दुभिनिर्घोषैर्भेरीणां निनदेन च ।
बाणशब्दैश्च विविधैर्गर्जितैश्च तरस्विनाम् ॥ २ ॥
निर्ययुस्तावका युद्धे मृत्युं कृत्वा निवर्तनम् ।
प्रयाते तु ततः कर्णे योधेषु मुदितेषु च ॥ ३ ॥

---

बिजलीके समान अर्जुनके धनुषका शब्द सुनेगा तब ऐसा नहीं कहेगा। जब तुम देखोगे कि भीमसेन हाथियोंकी सेनाका नाश कर रहे हैं; तब ऐसा न कहोगे, जब तुम देखोगे कि युधिष्ठिर, नकुल और सहदेवने अपने बाणोंसे मेघके समान आकाशको छा लिया है, तब ऐसा नहीं कहोगे, जब तुम इनको अनेक राजाओं और शत्रुओंको मारते देखोगे तब ऐसा न कहोगे॥ (२९-३२)

सञ्जय बोले, मद्रराज शल्यके वचनोंका निरादर कर कर्णने कहा चलो चलो ॥ (३३) [१६८५]

कर्णपर्वमें छत्तीस अध्याय समाप्त ।

कर्णपर्वमें सैंतीस अध्याय ।

सञ्जय बोले, हे राजन् धृतराष्ट्र ! महाधनुषधारी कर्णको युद्धकी ओर जाते देख कौरवोंकी सेना प्रसन्न हो गर्जने लगी ॥ तब अनेक प्रकारके भेर और नगारे बजने लगे । धनुषोंकी टङ्कार होने लगी और घोडे, हाथी चिंघाडने लगे ॥ तुम्हारे पुत्र मृत्युका निश्चय करके युद्ध करनेको चले । (१—३)

हे राजन् ! जिस समय कर्ण युद्ध

सुवीरकं याच्यमाना मद्रिका कर्षति स्फिचौ ॥ ३८ ॥
अदातुकामा वचनमिदं वदति दारुणम्।
मा मां सुवीरकं कश्चिद्याचतां दयितं मम ॥ ३९ ॥
पुत्रं दद्यां पतिं दद्यां न तु दद्यां सुवीरकम्।
गौर्यो बृहत्यो निर्ह्रीका माद्रिकाः कम्बलावृताः॥ ४० ॥
घस्मरा नष्टशौचाश्च प्राय इत्यनुशुश्रुम।
एवमादि मयान्यैर्वा शक्यं वक्तुं भवेद्बहु ॥ ४१ ॥
आकेशाग्रान्नखाग्राच्च वक्तव्येषु कुकर्मसु।
मद्रकाः सिंधुसौवीरा धर्मं विद्युः कथन्विह ॥ ४२ ॥
पापदेशोद्भवा म्लेच्छा धर्माणामविचक्षणाः।
एष मुख्यतमो धर्मः क्षत्रियस्येति नः श्रुतम् ॥ ४३ ॥
यदाजौ निहतः शेते सद्भिः समभिपूजितः।
आयुधानां साम्पराये यन्मुच्येयमहं ततः ॥ ४४ ॥
ममैष प्रथमः कल्पो निधने स्वर्गमिच्छतः।
सोऽयं प्रियः सखा चास्मि धार्त्तराष्ट्रस्य धीमतः॥४५॥
तदर्थे हि मम प्राणा यच्च मे विद्यते वसु।

स्त्री के पास कोई कांजी मांगनेके लिये जाय सो वे चूतड हिलाती हैं। देनेकी इच्छा न होनेसे कहती हैं, कि हमसे कोई हमारी प्यारी कांजीको मत मांगो हम पतिको देंगी, पुत्रको देंगी, परन्तु प्यारी कांजी न देंगी॥ हमने सुना है कि उस देशकी स्त्रियां गौरवर्णवाली, बडे शरीरवाली, निर्लज्ज, कम्बलधारिणी और बहुत खानेवाली तथा बहुत मलीन हैं। उनके विषयमें हम क्या और कोई भी बहुत कह सकता है? (३७—४१)

मद्र सिन्धु और सौवीर देशके मनुष्योंका शरीर केशोंसे लेकर पावोंके नाखूनके अग्रभागतक बुरे कुकर्मोंसे भरा है। वे लोग धर्मको क्या जाने! तुम पापदेशमें उत्पन्न हुए और म्लेच्छ हो, तुम धर्मको क्या जानो॥ शस्त्रोंकी युद्धमें हत और सत्पुरुषोंसे पूजित होकर रणभूमिमें दीर्घ निद्रामें सोजाना यही क्षत्रियोंका परम धर्म है, ऐसा हमने सुना है। शस्त्रोंका चलना जिस युद्धमें चल रहा है ऐसे युद्धमें मरकर मैं स्वर्ग जाऊंगा यह हमारा प्रथम सङ्कल्प है॥ (४२-४५)

दुर्योधन मेरा प्यारा मित्र है, हे पापदेशी! मैं उस बुद्धिमान मित्रके

तस्यार्थसिद्ध्यर्थमहं त्यजामि प्रियान्भोगान्दुस्त्यजं जीवितं च ॥२६॥
वैयाघ्रचर्माणमकूजनाक्षं हेमत्रिकोशं रजतत्रिवेणुम् ।
रथप्रबर्हं तुरगप्रवर्हैर्युक्तं प्रादान्मह्यमिमं हि रामः ॥ २७ ॥
धनूंषि चित्राणि निरीक्ष्य शल्य ध्वजान्गदाः सायकांश्चोग्ररूपान् ।
असिं च दीप्तं परमायुधं च शङ्खं च शुभ्रं स्वनवन्तमुग्रम् ॥ २८ ॥
पताकिनं वज्रनिपातनिःस्वनं सिताश्वयुक्तं शुभतूणशोभितम् ।
इमं समास्थाय रथं रथर्षभं रणे हनिष्याम्यहमर्जुनं बलात् ॥ २९॥
तं चेन्मृत्युः सर्वहरोऽभिरक्षेत्सदाप्रमत्तः समरे पाण्डुपुत्रम् ।
तं वा हनिष्यामि रणे समेत्य यास्यामि वा भीष्ममुखो यमाय ॥३०॥
यमवरुणकुबेरवासवा वा यदि युगपत्सगणा महाहवे ।
जुगुपिषव इहाद्य पाण्डवं किमु बहुना सह तैर्जयामि तम् ॥ ३१ ॥
सञ्जय उवाच- इति रणरभसस्य कत्थतस्तदुत निशम्य वचः स मद्रराट् ।
अवहसदवमन्य वीर्यवान्प्रतिषिषिधे च जगाद चोत्तरम् ॥ ३२ ॥
शल्य उवाच— विरम विरम कर्ण कत्थनादतिरभसोऽप्यतिवाचमुक्तवान् ।
क्व च हि नरवरो धनञ्जयः क्व पुनरहो पुरुषाधमो भवान् ॥ ३३ ॥

---

रहे हैं, सो आज हम भी उनके लिये अपने प्यारे सुख भोग और न त्यागने योग्य प्राणोंको छोडते हैं ॥ परशुरामने मुझे सिंहके चमडेसे मढा घोर शब्दवाला सोनेके आसन, चांदीके डण्डे और उत्तम घोडोंसे युक्त यह रथ दिया है ॥ हे शल्य ! तुम हमारी विचित्र धनुष, घोर बाण, उत्तम ध्वजा, प्रकाशमान खड्ग, गदा और शब्दवाले हमारे श्वेत शङ्खको देखो ॥ (२६–२८)

आज हम इस उत्तम रथपर बैठकर सफेद घोडोंसे युक्त पताकावाले रथपर बैठे हुए उत्तम तूणीरधारी अर्जुनको पराक्रमसे युद्धमें मारेंगे । वज्रके समान शब्दवाले रथपर बैठे हुए अर्जुनकी यदि सर्वनाशक मृत्यु भी रक्षा करे, तो उसके समेत अर्जुनको मारूंगा, अथवा वही हमें मारेगा ॥ हम बहुत कहां तक कहें, यदि आज साक्षात् इन्द्र, वरुण, यम, और कुबेर भी अपनी सेनाके सहित अर्जुनकी रक्षा करेंगे, तो मैं उनके समेत अर्जुनको मारूंगा ॥ (२९–३१)

सञ्जय बोले, मद्रराज शल्य कर्णके वचन सुन, उनका निरादर कर हंसकर इस प्रकार उत्तर देने लगे ॥ (३२)

शल्य बोले, रे कर्ण ! चुप रह ! तैंने बहुत बक बक की है। भला कहां पुरुष सिंह अर्जुन और कहां अधम तू ॥ अर्जुन

पुनश्चेदीदृशं वाक्यं मद्रराज वदिष्यसि ॥ ५४ ॥
शिरस्ते पातयिष्यामि गदया वज्रकल्पया।
श्रोतारस्त्विदमद्येह द्रष्टारो वा कुदेशज ॥ ५५ ॥
कर्णं वा जघ्नतुः कृष्णौ कर्णो वा निजघान तौ।
एवमुक्त्वा तु राधेयः पुनरेव विशाम्पते।
अब्रवीन्मद्रराजानं याहियाहीत्यसम्भ्रमम् ॥ ५६ ॥ [१८४७]

इति श्रीमहाभारते शतसाहस्र्या संहितायां वैयासिक्यां कर्णपर्वणि कर्णमद्राधिपसंवादे चत्वारिंशोऽध्यायः॥४०

सञ्जय उवाच— मारिषाधिरथेः श्रुत्वा वाचो युद्धाभिनन्दिनः।
शल्योऽब्रवीत्पुनः कर्णं निदर्शनमिदं वचः ॥ १ ॥
जातोऽहं यज्वनां वंशे संग्रामेष्वनिवर्तिनाम्।
राज्ञां मूर्धाभिषिक्तानां स्वयं धर्मपरायणः ॥ २ ॥
यथैव मत्तो मद्येन त्वं तथा लक्ष्यसे वृष।
तथाद्य त्वां प्रमाद्यन्तं चिकित्सेयं सुहृत्तया ॥ ३ ॥
इमां काकोपमां कर्ण प्रोच्यमानां निबोध मे।
श्रुत्वा यथेष्टं कुर्यास्त्वं निहीनकुलपांसन ॥ ४ ॥
नाहमात्मनि किञ्चिद्धि किल्बिषं कर्ण संस्मरे।
येन मां त्वं महाबाहो हन्तुमिच्छस्यनागसम् ॥ ५ ॥

धृतराष्ट्रकी इच्छा तथा अपनी कृपासे तुझे जीता छोड देता हूं, यदि फिर ऐसे वचन तुम कहोगे, तो वज्रके समान गदासे तेरा शिर तोड डालूंगा। सब सुननेवाले तुम्हारी दुर्दशाको देखेंगे। चाहे कर्ण अर्जुनको मारे, चाहे अर्जुन कर्णको मारे। हे पृथ्वीनाथ! ऐसा कह-कर राधापुत्रने फिर मद्रराज शल्यसे कहा, कि चलो चलो॥ (५२-५६) [१८४७]

कर्णपर्वमें चालीस अध्याय समाप्त।

कर्णपर्वमें इकतालिस अध्याय।

सञ्जय बोले हे धृतराष्ट्र! महायोद्धा अधिरथपुत्र कर्णके वचन सुन शल्य बोले, हम यज्ञ करनेवाले, युद्धसे न हटने वाले, महात्मा मूर्धाभिषिक्त राजोंके वंशमें उत्पन्न हुए हैं और सब धर्मोंको जाननेवाले है। हे वृष! तू मद्य पीकर मत्त हुएके समान दीख रहा है, सो हम मित्र जानकर तेरी दया करते हैं॥ रे नीच! हम नीच कुलमें उत्पन्न हुए एक कौआ का इतिहास तुमसे कहते हैं, इसको सुन कर जो इच्छा हो सो करना॥ (१-४)

हे महाबाहो! मै अपनेमें ऐसा कोई

भृशमभिरुषितः परन्तपः कुरुपृतनापतिराह मद्रपम् ॥ ४१ ॥
कर्ण उवाच- भवतु भवतु किं विकत्थसे ननु मम तस्य हि युद्धमुद्यतम्।
यदि स जयति मामिहाहवे तत इदमस्तु सुकत्थितं तव ॥ ४२ ॥
सञ्जय उवाच— एवमस्त्विति मद्रेश उक्त्वा नोत्तरमुक्तवान्।
याहि शल्येति चाप्येनं कर्णः प्राह युयुत्सया ॥४३॥
स रथः प्रययौ शत्रूञ्श्वेताश्वः शल्यसारथिः।
निघ्नन्नमित्रान्समरे तमो घ्नन्सविता यथा ॥ ४४ ॥
ततः प्रायात्प्रीतिमान्वै रथेन वैयाघ्रेण श्वेतयुजाथ कर्णः।
स चालोक्य ध्वजिनीं पाण्डवानां धनञ्जयं त्वरया पर्यपृच्छत्॥४५॥१७३०

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां कर्णपर्वणि कर्णशल्यसंवादे सप्तत्रिंशोऽध्यायः ॥३७॥

सञ्जय उवाच— प्रयाणे च ततः कर्णो हर्षयन्वाहिनीं तव।
एकैकं समरे दृष्ट्वा पाण्डवान्पर्यपृच्छत ॥ १ ॥
यो मामद्य महात्मानं दर्शयेच्छ्वेतवाहनम्।
तस्मै दद्यामभिप्रेतं धनं यन्मनसेच्छति ॥ २ ॥
न चेत्तदभिमन्येत तस्मै दद्यामहं पुनः।
शकटं रत्नसम्पूर्णं यो मे ब्रूयाद्धनञ्जयम् ॥ ३ ॥
न चेत्तदभिमन्येत पुरुषोऽर्जुनदर्शिवान्।
शतं दद्यां गवां तस्मै नैत्यकं कांस्यदोहनम् ॥ ४ ॥

---

तुम सच कहते हो, आज हमारा और अर्जुनका युद्ध होगा ! यदि हमको वह मार डालेगा, तो तुम्हारे ये वचन सत्य होंगे ॥ (४१—४२)

सञ्जय बोले, शल्यने कहा तुम जैसा कहते हो वैसा ही होगा। कर्णने कहा रथ हांको। तब शल्यने सूर्यके समान प्रकाशमान रथको अर्जुनकी ओर हांका उस व्याघ्रके चमडेसे मढेहुए श्वेताश्व युक्त रथपर चढकर और पांडवोंकी सेना देखकर कर्ण अर्जुनके विषयमें पूछने लगे ॥ (४३—४५) [१७३०]

कर्णपर्वमें सैंतीस अध्याय समाप्त।

कर्णपर्वमें अडतीस अध्याय।

सञ्जय बोले, हे राजन् धृतराष्ट्र ! कर्णके चलते समय तुम्हारी सब सेना बहुत प्रसन्न हुई और सब पाण्डवोंको ढूंढने लगे ॥ कर्ण बोले, आज हमें जो कोई महात्मा अर्जुनको दिखलावेगा, उसे मैं इच्छानुसार धन दूंगा ॥ यदि उस धनसे प्रसन्न न होगा, तो रत्नोंसे भरा हुआ छकडा उसे दूंगा ॥ यदि

मांसोदनं दधि क्षीरं पायसं मधुसर्पिषी ।
स चोच्छिष्टभृतः काको वैश्यपुत्रैः कुमारकैः ॥ १४ ॥
सदृशान्पक्षिणो दृप्तः श्रेयसश्चाधिचिक्षिपे ।
अथ हंसाः समुद्रान्ते कदाचिदतिपातिनः ॥ १५ ॥
गरुडस्य गतौ तुल्याश्चक्राङ्गा हृष्टचेतसः ।
कुमारकास्तदा हंसान्दृष्ट्वा काकमथाब्रुवन् ॥ १६ ॥
भवानेव विशिष्टो हि पतत्रिभ्यो विहङ्गम ।
प्रतार्यमाणस्तैः सर्वैरल्पबुद्धिभिरण्डजः ॥ १७ ॥
तद्वचः सत्यमित्येव मौर्ख्याद्दर्पाच्च मन्यते ।
तान्सोऽभिपत्य जिज्ञासुः क एषां श्रेष्ठभागिति ॥१८॥
उच्छिष्टदर्पितः काको बहूनां दूरपातिनाम् ।
तेषां यं प्रवरं मेने हंसानां दूरपातिनाम् ॥ १९ ॥
तमाह्वयत दुर्बुद्धिः पताव इति पक्षिणम् ।
तच्छ्रुत्वा प्राहसन्हंसा ये तत्रासन्समागताः ॥ २० ॥
भाषतो बहु काकस्य बलिनः पततां वराः ।
इदमूचुः स्म चक्राङ्गा वचः काकं विहङ्गमाः ॥ २१ ॥
हंसा ऊचुः— वयं हंसाश्चरामेमां पृथिवीं मानसौकसः ।

को प्रतिदिन जूठा देने लगे। मांस, भात, दही, दूध खीर, घी और शहद खाकर वह कौआ बहुत मोटा हुआ और सब पक्षियों का निरादर करने लगा। (१०-१५)

कभी मानससरोवरसे अति शीघ्र गतिवाले हंस भी उस नगरमें आगए, उन हंसोंको गरुडके समान उडते हुए देख कर बनियेके बेटे प्रसन्न होकर कौएसे बोले, हे कौआ! तुम सब पक्षियोंमें श्रेष्ठ हो। उन अल्प बुद्धिवालोंके वह वचन सुन वस्तुतः झूटे होने पर भी मूर्खता और गर्वसे भरे होनेके कारण वह कौआ उन हंसोंके पास जाकर कहने लगा, कि तुम लोगोंमें कौन श्रेष्ठ है सो कहो, इस प्रकार उस उच्छिष्टसे पुष्ट, गर्वसे भरे हुए कौएने उन दूरगामी हंसोंके बीचसे उसको जो अच्छा जान पडा उस हंसको बुलाया और कहा कि, चलो हम दोनों उड्डान करें॥ १५-२०

तब वे बहुत बलवाले हंस कौवाके पास आये और कौवाके वचन सुनकर हंसकर बोले, हम लोग मानससरोवरके रहनेवाले हंस हैं, अब पृथ्वीमें घूमते

युक्तं परमकाम्बोजैर्यो मे ब्रूयाद्धनञ्जयम् ।
न चेत्तदभिमन्येत पुरुषोऽर्जुनदर्शिवान् ॥ १४ ॥
अन्यदस्मै वरं दद्यां कुञ्जराणां शतानि षट् ।
काञ्चनैर्विविधैर्भाण्डैराच्छन्नान्हेममालिनः ॥ १५ ॥
उत्पन्नानपरान्तेषु विनीतान्हस्तिशिक्षकैः ।
न चेत्तदभिमन्येत पुरुषोऽर्जुनदर्शिवान् ॥ १६ ॥
अन्यदस्मै वरं दद्यां वैश्यग्रामांश्चतुर्दश ।
सुस्फीतान्धनसंयुक्तान्प्रत्यासन्नवनोदकान् ॥
अकुतोभयान्सुसम्पन्नान्राजभोज्यांश्चतुर्दश ॥ १७ ॥
दासीनां निष्ककण्ठीनां मागधीनां शतं तथा ।
प्रत्यग्रवयसां दद्यां यो मे ब्रूयाद्धनञ्जयम् ॥ १८ ॥
न चेत्तदभिमन्येत पुरुषोऽर्जुनदर्शिवान् ।
अन्यं तस्मै वरं दद्यां यमसौ कामयेत्स्वयम् ॥ १९ ॥
पुत्रदारान्विहारांश्च यदन्यद्वित्तमस्ति मे ।
तच्च तस्मै पुनर्दद्यां यच्च मनसेच्छति ॥ २० ॥
हत्वा च सहितौ कृष्णौ तयोर्वित्तानि सर्वशः ।
तस्मै दद्यामहं यो मे प्रब्रूयात्केशवार्जुनौ ॥ २१ ॥
एता वाचः सुबहुशः कर्ण उच्चारयन्युधि ।

इसी प्रकार शिक्षित अठारह घोडे और एक सुवर्णका सुन्दर रथ दूंगा। ॥ उनमें काम्बोजदेशके घोडे जुत रहेंगे। यदि इसपर भी वह प्रसन्न न हो, तो सुवर्णकी माला, अम्बारी और झूल सहित अपरान्तदेशमें उत्पन्न हुए छःसौ हाथी दूंगा, उन शिक्षित हाथियोंके सङ्ग छःसौ महावतभी दूंगा ॥ (१३-१६)

यदि इसपर भी वह प्रसन्न न हो, तो वन और जलके निकट धन और अन्नसे भरे धनियोंके चौदह गांव दूंगा; इसी प्रकार निर्भय क्षत्रियोंके भी चौदह गांव दूंगा ॥ जो मुझे अर्जुनको बतावेगा, उसे नवीन अवस्था और सोनेके आभूषणवाली मगधदेशमें उत्पन्न हुई सौ दासी दूंगा ॥ यदि इसपर भी वह मनुष्य प्रसन्न न हो, तो जो कुछ वह मांगे वही उसे दूंगा। मैं उत्तम स्त्री, पुत्र और सुख भोग जो कुछ मांगे सो उसे दे दूंगा ॥ जो मुझे कृष्ण और अर्जुनको बतावेगा, मैं कृष्ण अर्जुनको मारकर उन दोनोंका धन उसीको दे दूंगा !

प्रदिशध्वं यथान्यायं केन हंसाः पताम्यहम् ।
ते वै ध्रुवं विनिश्चित्य पतध्वं न मया सह ॥ ३१ ॥
पातैरेभिः खलु खगाः पतितुं खे निराश्रये ।
एवमुक्ते तु काकेन प्रहस्यैको विहङ्गमः ॥ ३२ ॥
उवाच काकं राधेय वचनं तन्निबोध मे ।

हंस उवाच— शतमेकं च पातानां त्वं काक पतिता ध्रुवम् ॥ ३३ ॥
एकमेव तु यं पातं विदुः सर्वे विहङ्गमाः ।
तमहं पतिता काक नान्यं जानामि कञ्चन ॥ ३४ ॥
पत त्वमपि ताम्राक्ष येन पातेन मन्यसे ।
अथ काकाः प्रजहसुर्ये तत्रासन्समागताः ॥ ३५ ॥
कथमेकेन पातेन हंसः पातशतं जयेत् ।
एकेनैव शतस्यैष पातेनाभिपतिष्यति ॥ ३६ ॥
हंसस्य पतितं काको बलवानाशुविक्रमः ।
प्रपेततुः स्पर्धया च ततस्तौ हंसवायसौ ॥ ३७ ॥
एकपाती च चक्राङ्गः काकः पातशतेन च ।
पतिता वाथ चक्राङ्गः पतिता वाथ वायसः ॥ ३८ ॥
विसिस्मापयिषुः पातैराचक्षाणोऽऽत्मनः क्रियाः ।

इन कही हुई गतियोंमेंसे किसी एकसे आकाशमें उड़ूंगा। तुम लोग निश्चय करके कहो कि मैं कौनसी गतिसे उड़ूं? परन्तु तुम लोगोंको भी निराधार आकाश में उमी चालसे उडना होगा। ३०—३२

कौआके वचन सुन एक हंस हंसकर बोला, हे कौवा! तू एकसौ एक चालका उडना जानता है, परन्तु और सब पक्षी एकही प्रकारसे उडते हैं; मैं उसी एक चालसे उड़ूंगा, क्योंकि मैं दूसरी चालको नहीं जानता। हे रक्तनेत्रवाले कौवा! तेरी इच्छा हो तो उसही चालसे हमारे सङ्ग उड। (३२—३५)

वहां आये हुए सब कौवें हंसके वचन सुन हंसकर कहने लगे, इस कौआकी एकसौ एक गतियोंको एक गतिसे हंस कैसे जीतेगा? कौआ बडा बलवान् और हंस बडे दुर्बल है। तब वे दोनों कौवा और हंस उडे। उनको उडता देख सब पक्षी कहने लगे कि देखें, सौ चाल वाला कौआ पहले गिरता है, वा एक चालवाला हंस। सब पक्षियों को आश्चर्य देकर कौआ हंसके सङ्ग उडने लगा॥ (३५—३७)

यत्त्वं प्रेरयसे वित्तं वहु तेन खलु त्वया।
शक्यं बहुविधैर्यज्ञैर्यष्टुं सूत यजस्व तैः ॥ ४ ॥
यच्च प्रार्थयसे हन्तुं कृष्णौ मोहाद्वृथैव तत्।
नहि शुश्रुम सम्मर्दे क्रोष्ट्रा सिंहौ निपातितौ ॥ ५ ॥
अप्रार्थितं प्रार्थयसे सुहृदो नहि सन्ति ते।
ये त्वां निवारयन्त्याशु प्रपतन्तं हुताशने ॥ ६ ॥
कार्याकार्यं न जानीषे कालपक्वोऽस्यसंशयम्।
बद्धबद्धमकर्णीयं को हि ब्रूयाज्जिजीविषुः ॥ ७ ॥
समुद्रतरणं दोर्भ्यां कण्ठे बद्ध्वा यथा शिलाम्।
गिर्यग्राद्वा निपतनं तादृक्तव चिकीर्षितम् ॥ ८ ॥
सहितः सर्वयोधैस्त्वं व्यूढानीकैः सुरक्षितः।
धनञ्जयेन युध्यस्व श्रेयश्चेत्प्राप्तुमिच्छसि ॥ ९ ॥
हितार्थं धार्तराष्ट्रस्य ब्रवीमि त्वां न हिंसया।
श्रद्धस्वैवं मया प्रोक्तं यदि तेऽस्ति जिजीविषा॥ १० ॥

कर्ण उवाच-- स्वबाहुवीर्यमाश्रित्य प्रार्थयाम्यर्जुनं रणे।

दोषको नहीं जानते॥ हे सूत! तुम जो बहुत धन दिया चाहते हो, उससे तुम अनेक यज्ञ कर सकते हो॥(१-४)

तुम जो कृष्ण और अर्जुनको मारने को कहते हो, सो तुम्हारी मूर्खताकी बात है; क्योंकि हम इस बातको नहीं सुन सकते कि, युद्धमें स्यारने सिंहोंको मारा॥ तू न प्राप्त होनेकी वस्तुको मांगता है, क्या तेरा कोई भी मित्र नहीं, जो तुझे जलती हुई आगमें गिरनेसे बचावे? तू करने और न करने योग्य कामको नहीं जानता। इसका कारण यही है कि तेरा अब काल आगया है। [illegible] जीनेकी इच्छा करनेवाला मनुष्य [illegible] कहने और सुननेके अयोग्य [illegible] कहे॥ (५-७)

दिगम्बराम्भसः कर्ण समुद्रस्था विदुर्जनाः ॥ ४८ ॥
विदूरपातात्तोयस्य किं पुनः कर्ण वायसः ।
अथ हंसोऽप्यतिक्रम्य मुहूर्तमिति चेति च ॥ ४९ ॥
अवेक्षमाणस्तं काकं नाशकद्व्यपसर्पितुम् ।
अतिक्रम्य च चक्राङ्गः काकं तं समुदैक्षत ॥ ५० ॥
यावद्गत्वा पतत्येष काको मामिति चिन्तयन् ।
ततः काको भृशं श्रान्तो हंसमभ्यागमत्तदा ॥ ५१ ॥
तं तथा हीयमानं तु हंसो दृष्ट्वाब्रवीदिदम् ।
उज्जिहीर्षुर्निमज्जन्तं स्मरन्सत्पुरुषव्रतम् ॥ ५२ ॥

हंस उवाच— बहूनि पतितानि त्वमाचक्षाणो मुहुर्मुहुः ।
पातस्य व्याहरंश्चेदं न नो गुह्यं प्रभाषसे ॥ ५३ ॥
किं नाम पतितं काक यत्त्वं पतसि साम्प्रतम् ।
जलं स्पृशसि पक्षाभ्यां तुण्डेन च पुनः पुनः ॥ ५४ ॥
प्रब्रूहि कतमे तत्र पाते पतसि वायस ।
एह्येहि काक शीघ्रं त्वमेष त्वां प्रतिपालये ॥ ५५ ॥

शल्य उवाच— स पक्षाभ्यां स्पृशन्नार्तस्तुण्डेन च जलं तदा ।
दृष्टो हंसेन दुष्टात्मान्निदं हंसं ततोऽब्रवीत् ॥ ५६ ॥
अपश्यन्नंभसः पारं निपतंश्च श्रमान्वितः ।

और आकाशके समान बडा है॥ हे कर्ण! उस कौवाको समुद्रका कहीं अन्त न जान पडा, तब कौआ उसही अपार समुद्रमें गिर पडा। ( ४६—४९ )

हंस भी थोडी देर उड कर इधर उधर कौवाको देखने लगा, ज्योंही कौवाको न पाया, तब विचारने लगा, कि कौवाको निकालना चाहिये। थका हुआ कौआके पास फिर हंस गया, डूबते हुए लज्जित कौवाको देख महात्मा ओंका स्मरण करके हस बोला, हे कौवा! तैने हमसे उडनेकी अनेक चाल बताई थी, परन्तु यह चाल छिपा रक्खी थी; यह जो तुम अपनी चोंच और पङ्खोंसे जलमें फडफडा रहे हो इस चालका क्या नाम है? हे कौवा! जिस चालसे अब उड रहे हो, सो उनमेंसे जो हमको बताई थीं कौनसी है? अब तू मत डर हम तुझे बचानेको आते है॥ ४९--५५

शल्य बोले, रे कर्ण! जब वह कौआ पङ्खों और चोंचमें जलको छूने लगा जब कौवाने समुद्रका पार न देखा और

यथानृतं च सत्यं च यथा चापि विषामृते ।
तथा त्वमपि पार्थश्च प्रख्यातावात्मकर्मभिः ॥ ३५ ॥[१७९१]

इति श्रीमहाभारते शतसाहस्त्र्यां संहितायां वैयासिक्यां कर्णपर्वणि
कर्णशल्याधिक्षेपे एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

सञ्जय उवाच— आधिक्षिप्तस्तु राधेयः शल्येनामिततेजसा ।
शल्यमाह सुसंक्रुद्धो वाक्शल्यमवधारयन् ॥ १ ॥

कर्ण उवाच— गुणान्गुणवतां शल्य गुणवान्वेत्ति नागुणः ।
त्वं तु शल्य गुणैर्हीनः किं ज्ञास्यसि गुणागुणम् ॥ २ ॥
अर्जुनस्य महास्त्राणि क्रोधं वीर्यं धनुः शरान् ।
अहं शल्याभिजानामि विक्रमं च महात्मनः ॥ ३ ॥
तथा कृष्णस्य माहात्म्यमृषभस्य महीक्षिताम् ।
यथाहं शल्य जानामि न त्वं जानासि तत्तथा ॥ ४ ॥
एवमेवात्मनो वीर्यमहं वीर्यं च पाण्डवे ।
जानन्नेवाह्वये युद्धे शल्य गाण्डीवधारिणम् ॥ ५ ॥
अस्ति चायमिषुः शल्य सुपुङ्खो रक्तभोजनः ।
एकतूणीशयः पत्री सुधौतः समलंकृतः ॥ ६ ॥
शेते चन्दनचूर्णेषु पूजितो बहुलाः समाः ।

झूट और सत्य, विष और अमृत है; ऐसे ही तुम और अर्जुन भी जगत्में प्रसिद्ध हो ॥ (३१–३५) [१७९१]

कर्णपर्वमें चालीस अध्याय समाप्त ।

कर्णपर्वमें इकतालिस अध्याय ।

सञ्जय बोले, हे राजन् धृतराष्ट्र ! महा तेजस्वी शल्यके वचन सुन कर्णको बडा क्रोध हुआ और बोला, हे शल्य ! गुणवान्के गुणको गुणी ही जानता है । तुम गुणहीन गुणीको क्या पहचानो ? हे शल्य ! महात्मा अर्जुनके महान् अस्त्र, क्रोध, वीर्य धनुष और बाणोंको तथा उस महात्माके पराक्रमको हम जान सक्ते हैं ॥ (१–२)

हे शल्य ! उसी प्रकार राजाओंमें श्रेष्ठ कृष्णका माहात्म्य मैं जैसा जानता हूं वैसा तुम नहीं जानते हो ॥ हे शल्य ! मैं गाण्डीव धारी अर्जुनके पराक्रमको तथा मेरे पराक्रमको अच्छी प्रकार जानता हूं और यह सब जानकर ही युद्धके लिये अर्जुनको बुलाता हूं ॥ मेरा एक यह बाण सदा रुधिर पीता है देखो इसके कैसे सुन्दर पङ्ख है ! यह सदा तूणीरमें रहता है, सदा चन्दनमें

न कश्चिद्वमन्येऽहमापदो मां समुद्धर।
तमेवंवादिनं दीनं विलपन्तमचेतनम् ॥ ६६ ॥
काककाकेति वाश्चन्तं निमज्जन्तं महार्णवे।
कृपयादाय हंसस्तं जलक्लिन्नं सुदुर्दशम् ॥ ६७ ॥
पद्भ्यामुत्क्षिप्य वेगेन पृष्ठमारोपयच्छनैः।
आरोप्य पृष्ठं हंसस्तं काकं तूर्णं विचेतनम् ॥ ६८ ॥
आजगाम पुनर्द्वीपं स्पर्धया पेततुर्यतः।
संस्थाप्य तं चापि पुनः समाश्वास्य च खेचरम् ॥६९ ॥
गतो यथेप्सितं देशं हंसो मन इवाशुगः।
एवमुच्छिष्टपुष्टः स काको हंसपराजितः ॥ ७० ॥
बलं वीर्यं महत्कर्ण त्यक्त्वा क्षान्तिमुपागतः।
उच्छिष्टभोजनः काको यथा वैश्यकुले पुरा ॥ ७१ ॥
एवं त्वमुच्छिष्टभृतो धार्त्तराष्ट्रैर्न संशयः।
सदृशाञ्छ्रेयसश्चापि सर्वान्कर्णावमन्यसे ॥ ७२ ॥
द्रोणद्रौणिकृपैर्गुप्तो भीष्मेणान्यैश्च कौरवैः।
विराटन[illegible] धीस्तदा ॥ ७३ ॥

भग्नावदीर्णः सन्त्रासादवद्धं वहु भाषसे ।
संस्तौषि तौ तु केनापि हेतुना त्वं कुदेशज ॥ १६ ॥
तौ हत्वा समरे हन्ता त्वामद्य सहबान्धवम् ।
पापदेशज दुर्बुद्धे क्षुद्र क्षत्रियपांसन ॥ १७ ॥
सुहृद्भूत्वा रिपुः किं मां कृष्णाभ्यां भीषयिष्यसि ।
तौ व..ममाद्य हन्तारौ हनिष्ये वापि तावहम्॥ १८ ॥
नाहं बिभेमि कृष्णाभ्यां विजानन्नात्मनो बलम् ।
वासुदेवसहस्रं वा फाल्गुनानां शतानि वा ॥ १९ ॥
अहमेको हनिष्यामि जोषमास्व कुदेशज ।
स्त्रियो बालाश्च वृद्धाश्च प्रायः क्रीडागता जनाः॥ २० ॥
या गाथाः सम्प्रगायन्ति कुर्वन्तोऽध्ययनं यथा ।
ता गाथाः शृणु मे शल्य मद्रकेषु दुरात्मसु ॥ २१ ॥
ब्राह्मणैः कथिताः पूर्व यथावद्राजसन्निधौ ।
श्रुत्वा चैकमना मूढ क्षम वा ब्रूहि चोत्तरम् ॥ २२ ॥
मित्रध्रुङ् मद्रको नित्यं यो नो द्वेष्टि स मद्रकः ।
मद्रके सङ्गतं नास्ति क्षुद्रवाक्ये नराधमे ॥ २३ ॥

---

है परन्तु उनसे मुझे हर्ष ही होता है। हे शल्य! तुम मूर्ख हो और महा युद्धोंकी विद्या नहीं जानते हो, इसीलिये इस उत्साहके समयमें डरावने वचन कहते हो। हे दुष्ट देशमें उत्पन्न हुए शल्य! तू किस कारणसे अर्जुनको अवध्य बताता है? और किस लिये अर्जुन की स्तुति करता है? (१४-१६)

रे पापबुद्धे! दुष्ट देशीय क्षत्रियाधम! आज मैं कृष्ण और अर्जुनको मार कर तुझे भी बन्धु बान्धवोंके सहित मारूंगा॥ तू ऊपरसे मित्र और भीतरसे हमारा शत्रु है। आज कृष्ण और अर्जुन को मारूंगा अथवा वेही मुझे मारेंगे॥ मैं हजार कृष्ण और सौ अर्जुनोंसे भी नहीं भय करता, क्योंकि मैं अपने बाहुबलको जानता हूं। हे कुदेशीय! तू चुप रह, मैं एकला ही कृष्ण और अर्जुनको मारूंगा। (१७-२०)

प्रायः बालक, बूढे, स्त्री और नाचने गानेवाले मनुष्य मद्र देशके मनुष्योंको जैसे कहते हैं सो हमसे सुन। हे मूर्ख! राजोंके पास आके ब्राह्मण लोग जैसा तुम लोगोंका वर्णन करते हैं, उसको सुनकर चुप रहो, या उत्तर दो॥ मद्र देशके मनुष्य मित्रद्रोही और हमारे द्वेष करने

न कश्चिद्वसन्येऽहमापदो मां समुद्धर ।
तमेवंवादिनं दीनं विलपन्तमचेतनम् ॥ ६६ ॥
काककाकेति वाशन्तं निमज्जन्तं महार्णवे ।
कृपयादाय हंसस्तं जलक्लिन्नं सुदुर्दशम् ॥ ६७ ॥
पद्भ्यामुत्क्षिप्य वेगेन पृष्ठमारोपयच्छनैः ।
आरोप्य पृष्ठं हंसस्तं काकं तूर्णं विचेतनम् ॥ ६८ ॥
आजगाम पुनर्द्वीपं स्पर्धया पेततुर्यतः ।
संस्थाप्य तं चापि पुनः समाश्वास्य च खेचरम् ॥६९ ॥
गतो यथेप्सितं देशं हंसो मन इवाशुगः ।
एवमुच्छिष्टपुष्टः स काको हंसपराजितः ॥ ७० ॥
बलं वीर्यं महत्कर्ण त्यक्त्वा क्षान्तिमुपागतः ।
उच्छिष्टभोजनः काको यथा वैश्यकुले पुरा ॥ ७१ ॥
एवं त्वमुच्छिष्टभृतो धार्त्तराष्ट्रैर्न संशयः ।
सदृशाञ्श्रेयसश्चापि सर्वान्कर्णावमन्यसे ॥ ७२ ॥
द्रोणद्रौणिकृपैर्गुप्तो भीष्मेणान्यैश्च कौरवैः ।
विराटनगरे पार्थमेकं किं नावधीस्तदा ॥ ७३ ॥
यत्र व्यस्ताः समस्ताश्च निर्जिताः स्थ किरीटिना ।

नहीं करूंगा । तुम इस आपत्तिसे मेरा उद्धार करो ॥ (६३—६६)

दीन और दुर्बल कौवाके वचन सुन हंसने उस दुर्द्दशामें पडे हुए और जलमें भींगे हुए कौवाको कृपा करके उठा लिया। हे सखे ! उसको पावोंसे उठाकर ऊपरको फेंक दिया और फिर अपनी पीठ पर रख लिया । फिर जहांसे उडे-थे, उसी स्थानमें आकर हंसने कौवाको पृथ्वीमें डाल दिया, और समझाकर मनके समान शीघ्रवेगी हंस अपने देश को चले गये । (६६—७०)

इस प्रकार जूंठ खानेवाले कौवाको हंसने जीत लिया । जैसे बनियोंका जूंठा खानेवाला कौआ बल और अभि मानको छोडकर शान्त होगया था,इसी प्रकार तू भी धृतराष्ट्रके पुत्रोंका जूंठ खानेवाला है, इसीसे सबका निरादर करता है, द्रोणाचार्य,अश्वत्थामा, कृपा-चार्य और भीष्मसे रक्षित होकर तैंने एकले अर्जुनको विराट नगरमें क्यों नहीं मारा था ? (७०—७३)

जिस समय तुम सबको अलग अलग और एक स्थानपर सारोंके समान सिंह

भग्नावदीर्णः सन्त्रासादवद्धं बहु भाषसे ।
संस्तौषि तौ तु केनापि हेतुना त्वं कुदेशज ॥ १६ ॥
तौ हत्वा समरे हन्ता त्वामद्य सहबान्धवम् ।
पापदेशज दुर्बुद्धे क्षुद्र क्षत्रियपांसन ॥ १७ ॥
सुहृद्भूत्वा रिपुः किं मां कृष्णाभ्यां भीषयिष्यसि ।
तौ वा मामद्य हन्तारौ हनिष्ये वापि तावहम्॥ १८ ॥
नाहं बिभेमि कृष्णाभ्यां विजानन्नात्मनो बलम् ।
वासुदेवसहस्रं वा फाल्गुनानां शतानि वा ॥ १९ ॥
अहमेको हनिष्यामि जोषमास्व कुदेशज ।
स्त्रियो बालाश्च वृद्धाश्च प्रायः क्रीडागता जनाः॥ २० ॥
या गाथाः सम्प्रगायन्ति कुर्वन्तोऽध्ययनं यथा ।
ता गाथाः श्रृणु मे शल्य मद्रकेषु दुरात्मसु ॥ २१ ॥
ब्राह्मणैः कथिताः पूर्वं यथावद्राजसन्निधौ ।
श्रुत्वा चैकमना मूढ क्षम वा ब्रूहि चोत्तरम् ॥ २२ ॥
मित्रध्रुङ् मद्रको नित्यं यो नो द्वेष्टि स मद्रकः ।
मद्रके सङ्गतं नास्ति क्षुद्रवाक्ये नराधमे ॥ २३ ॥

है परन्तु उनसे मुझे हर्ष ही होता है। हे शल्य ! तुम मूर्ख हो और महा युद्धोंकी विद्या नहीं जानते हो,इसीलिये इस उत्साहके समयमे डरावने वचन कहते हो। हे दुष्ट देशमें उत्पन्न हुए शल्य ! तू किस कारणसे अर्जुनको अवध्य बताता है ? और किस लिये अर्जुन की स्तुति करता है ? (१४-१६)

रे पापबुद्धे ! दुष्ट देशीय क्षत्रियाधम ! आज मैं कृष्ण और अर्जुनको मार कर तुझे भी बन्धु बान्धवोंके सहित मारूंगा।। तू ऊपरसे मित्र और भीतरसे हमारा शत्रु है। आज कृष्ण और अर्जुन को मारूंगा अथवा वेही मुझे मारेंगे ॥ मैं हजार कृष्ण और सौ अर्जुनोंसे भी नहीं भय करता, क्योंकि मैं अपने बाहुबलको जानता हूं। हे कुदेशीय ! तू चुप रह, मैं एकला ही कृष्ण और अर्जुनको मारूंगा। (१७-२०)

प्रायः बालक, बूढे, स्त्री और नाचने गानेवाले मनुष्य मद्र देशके मनुष्योंको जैसे कहते है सो हमसे सुन। हे मूर्ख ! राजोंके पास आके ब्राह्मण लोग जैसा तुम लोगोंका वर्णन करते है, उसको सुनकर चुप रहो, या उत्तर दो ॥ मद्र देशके मनुष्य मित्रद्रोही और हमारे द्वेष करने

यदा त्वं युधि विक्रान्तौ वासुदेवधनञ्जयौ ।
द्रष्टास्येकरथे कर्ण तदा नैवं वदिष्यसि ॥ ८३ ॥
यदा शरशतैः पार्थो दर्पं तव वधिष्यति ।
तदा त्वमन्तरं द्रष्टा आत्मनश्चार्जुनस्य च ॥ ८४ ॥
देवासुरमनुष्येषु प्रख्यातौ यौ नरोत्तमौ ।
तौ मावमंस्था मौर्ख्यात्त्वं खद्योत इव रोचनौ ॥८५ ॥
सूर्याचन्द्रमसौ यद्वत्तद्वदर्जुनकेशवौ ।
प्राकाश्येनाभिविख्यातौ त्वं तु खद्योतवन्नृषु ॥ ८६ ॥
एवंविद्वन्मावमंस्थाः सूतपुत्राच्युतार्जुनौ ।
नृसिंहौ तौ महात्मानौ जोषमास्स्व विकत्थने ॥८७ ॥१९३४

इति श्रीमहाभारते० कर्णपर्वणि कर्णशल्यसंवादे हंसकाकीयोपाख्याने एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

सञ्जय उवाच—मद्राधिपस्याभिरथिर्महात्मा वचो निशम्याप्रियमप्रतीतः ।
उवाच शल्यं विदितं ममैतद्यथाविधावर्जुनवासुदेवौ ॥ १ ॥
शौरे रथं वाहयतोऽर्जुनस्य बलं महास्त्राणि च पाण्डवस्य ।
अहं विजानामि यथावदद्य परोक्षभूतं तव तत्तु शल्य ॥ २ ॥

कर्ण ! जब तुम एक रथ पर बैठे हुए महारथ पराक्रमी अर्जुन और कृष्णको देखोगे तब ऐसा नहीं कह सकोगे ॥ जब अर्जुन अपने सैकडों बाणोंसे तेरे अभिमान को नाश करेंगे तब तुझे अपने और अर्जुनके पराक्रममें अन्तर जान पडेगा ॥ (८२-८४)

कृष्ण और अर्जुन देवता, असुर और मनुष्योंमें प्रसिद्ध है। वे सूर्य और चन्द्रमा के समान है।। और तू जुगनूके समान है इस लिये तू उनकी निन्दा मत करे। कृष्ण और अर्जुन अपने तेजसे सूर्य और चन्द्रमाके समान प्रसिद्ध है और तुम्हें सब मनुष्य जुगनूके समान मानते है ॥ हे सूतपुत्र ! कृष्ण और अर्जुन मनुष्योंमें सिंहके समान हैं। तुम उनकी निन्दा मत करो और चुप रहो ॥ (८५-८७)

कर्णपर्वमें इकतालीस अध्याय समाप्त। १९३४

कर्णपर्वमें बियालिस अध्याय।

सञ्जय बोले, हे राजन् धृतराष्ट्र ! महात्मा कर्णने मद्रराजके कठोर वचन सुन इस प्रकार उत्तर दिया, कृष्ण और अर्जुनमें जो बल और बुद्धि है उसको हम अच्छे प्रकारसे जानते हैं। हे शल्य ! अर्जुनका रथ हांकनेवाले कृष्ण और महात्मा अर्जुनके बल, शस्त्र, बुद्धि और पराक्रमको जैसा मै जानता हूं तैसा तुम नहीं जानते॥ मै आज बेडर होकर उन

भयावदीर्णः सन्त्रासादबद्धं बहु भाषसे ।
संस्तौषि तौ तु केनापि हेतुना त्वं कुदेशज ॥ १६ ॥
तौ हत्वा समरे हन्ता त्वामद्य सहबान्धवम् ।
पापदेशज दुर्बुद्धे क्षुद्र क्षत्रियपांसन ॥ १७ ॥
सुहृद्भूत्वा रिपुः किं मां कृष्णाभ्यां भीषयिष्यसि ।
तौ वाऽसमाद्य हन्तारौ हनिष्ये वापि तावहम्॥ १८ ॥
नाहं बिभेमि कृष्णाभ्यां विजानन्नात्मनो बलम् ।
वासुदेवसहस्रं वा फाल्गुनानां शतानि वा ॥ १९ ॥
अहमेको हनिष्यामि जोषमास्व कुदेशज ।
स्त्रियो बालाश्च वृद्धाश्च प्रायः क्रीडागता जनाः॥ २० ॥
या गाथाः सम्प्रगायन्ति कुर्वन्तोऽध्ययनं यथा ।
ता गाथाः शृणु मे शल्य मद्रकेषु दुरात्मसु ॥ २१ ॥
ब्राह्मणैः कथिताः पूर्वं यथावद्राजसन्निधौ ।
श्रुत्वा चैकमना मूढ क्षम वा ब्रूहि चोत्तरम् ॥ २२ ॥
मित्रध्रुङ् मद्रको नित्यं यो नो द्वेष्टि स मद्रकः ।
मद्रके सङ्गतं नास्ति क्षुद्रवाक्ये नराधमे ॥ २३ ॥

हैं परन्तु उनसे मुझे हर्ष ही होता है। हे शल्य! तुम मूर्ख हो और महा युद्धोंकी विद्या नहीं जानते हो, इसीलिये इस उत्साहके समयमें डरावने वचन कहते हो। हे दुष्ट देशमें उत्पन्न हुए शल्य! तू किस कारणसे अर्जुनको अवध्य बताता है? और किस लिये अर्जुन की स्तुति करता है? (१४-१६)

रे पापबुद्धे! दुष्ट देशीय क्षत्रियाधम! आज मैं कृष्ण और अर्जुनको मार कर तुझे भी बन्धु बान्धवोंके सहित मारूंगा॥ तू ऊपरसे मित्र और भीतरसे हमारा शत्रु है। आज कृष्ण और अर्जुन को मारूंगा अथवा वेही मुझे मारेंगे॥ मैं हजार कृष्ण और सौ अर्जुनोंसे भी नहीं भय करता, क्योंकि मैं अपने बाहुबलको जानता हूं। हे कुदेशीय! तू चुप रह, मैं एकला ही कृष्ण और अर्जुनको मारूंगा। (१७-२०)

प्रायः बालक, बूढे, स्त्री और नाचने गानेवाले मनुष्य मद्र देशके मनुष्योंको जैसे कहते हैं सो हमसे सुन। हे मूर्ख! राजोंके पास आके ब्राह्मण लोग जैसा तुम लोगोंका वर्णन करते हैं, उसको सुनकर चुप रहो, या उत्तर दो॥ मद्र देशके मनुष्य मित्रद्रोही और हमारे द्वेष करने

सोऽभिमन्ये क्षत्रियाणां प्रवीरान्प्रतापिता बलवान्वै विमर्दः ॥१०॥
शल्योग्रधन्वानमहं वरिष्ठं तरस्विनं भीममसह्यवीर्यम् ।
सत्यप्रतिज्ञं युधि पाण्डवेयं धनञ्जयं मृत्युमुखं नयिष्ये ॥ ११ ॥
अस्त्रं ततोऽन्यत्प्रतिपन्नमद्य येन क्षेप्स्ये समरे शत्रुपूगान् ।
प्रतापिनं बलवन्तं कृतास्त्रं तमुग्रधन्वानममितौजसं च ॥ १२ ॥
क्रूरं शूरं रौद्रममित्रसाहं धनञ्जयं संयुगेऽहं हनिष्ये ।
अपाम्पतिर्वेगवानप्रमेयो निमज्जयिष्यन्बहुलाः प्रजाश्च ॥ १३ ॥
महावेगं संकुरुते समुद्रो वेला चैनं धारयत्यप्रमेयम् ।
प्रमुञ्चन्तं बाणसङ्घानमेयान्मर्मच्छिदो वीरहणः सुपत्रान् ॥ १४ ॥
कुन्तीपुत्रं यत्र योत्स्यामि युद्धे ज्याकर्षतामुत्तममद्य लोके ।
एवं बलेनातिबलं महास्त्रं समुद्रकल्पं सुदुरापमुग्रम् ॥ १५ ॥
शरौघिणं पार्थिवान्मज्जयन्तं वेलेव पार्थमिषुभिः संसहिष्ये ।
अद्याहवे यस्य न तुल्यमन्यं मन्ये मनुष्यं धनुराददानम् ॥ १६ ॥
सुरासुरान्युधि वै यो जयेत तेनाद्य मे पश्य युद्धं सुघोरम् ।
अतीव मानी पाण्डवो युद्धकामो ह्यमानुषैरेष्यति मे महास्त्रैः ॥१७॥

मुझे उन्होंने कहे हुए अस्त्रोंका स्मरण नहीं होता है। हे शल्य! जो कुरुकुलमें सर्वविनाशक भयङ्कर वैर उत्पन्न हुआ है, हमें निश्चय है, कि इससे सब पृथ्वीके वीर क्षत्रियोंका नाश होजायगा ॥ हे शल्य! आज मै महा पराक्रमी, महा-धनुषधारी, सत्यप्रतिज्ञ अर्जुनको युद्धमें अवश्य मारूंगा ॥ अब मेरे पास ऐसा एक अस्त्र आया है, कि जो मुझे परशु-रामसे नहीं मिला है जिससे शत्रुओंके झुण्ड नाश हो सकते है उसी बाणसे महाधनुषधारी, महातेजस्वी, क्रूर, शूर, भयङ्कर और शत्रुओंके जीतनेवाले अर्जुनको भी मारूंगा ॥ (९-१३)

जैसे अनेक प्रजाके संहार के लिये बढनेवाले वेगवान् समुद्रको उसका तट रोक देता है, तैसे ही आज मैं मर्म-भेदी घोर बाण चलानेवाले महापराक्रमी अर्जुनको युद्धमें मार सकूंगा। धनुष खींचने वालोंमें श्रेष्ठ, समुद्रके समान गम्भीर, महापराक्रमी, कुन्तिपुत्र अर्जुन को आज हम युद्धमें अपने बाणोंसे अवश्य मारेंगे। अपने वेगसे राजोंको मारते हुए समुद्रके समान अर्जुनको पर्वतके समान हम रोकेंगे; हम इस सेना में उसके समान धनुषधारी किसीको नहीं देखते ॥ (१३-१६)

जो महाअभिमानी अर्जुन देवता और

शूद्रसंस्कारको विप्रो यथा याति पराभवम् ॥ ३१ ॥
यथा ब्रह्मद्विषो नित्यं गच्छन्तीह पराभवम् ।
तथैव सङ्गतं कृत्वा नरः पतति मद्रकैः ॥ ३२ ॥
मद्रके सङ्गतं नास्ति हतं वृश्चिक ते विषम् ।
आथर्वणेन मन्त्रेण यथा शान्तिः कृता मया ॥ ३३ ॥
इति वृश्चिकदष्टस्य विषवेगहतस्य च ।
कुर्वन्ति भेषजं प्राज्ञाः सत्यं तच्चापि दृश्यते ॥ ३४ ॥
एवं विद्वञ्जोपमास्व शृणु चात्रोत्तरं वचः ।
वासांस्युत्सृज्य नृत्यन्ति स्त्रियो या मद्यमोहिताः॥ ३५ ॥
मैथुनेऽसंयताश्चापि यथाकामवराश्च ताः ।
तासां पुत्रः कथं धर्मं मद्रको वक्तुमर्हति ॥ ३६ ॥
यास्तिष्ठन्त्यः प्रमेहन्ति यथैवोष्ट्रदशेरकाः ।
तासां विभ्रष्टधर्माणां निर्लज्जानां ततस्ततः ॥ ३७ ॥
त्वं पुत्रस्तादृशीनां हि धर्मं वक्तुमिहेच्छसि ।

चाहिये ॥ जैसे जिस यज्ञका याजक राजा है ऐसे यज्ञमें दिया हुआ हविर्द्रव्य नष्ट होता है, जैसे शूद्रका संस्कार करने वाला ब्राह्मण पराभूत हो जाता है; जैसे ब्राह्मणोंसे द्वेष करनेवाला नित्य पराजित होजाता है; वैसे ही मद्रदेशियोंका मित्र भी पतित होता है ॥ (२९-३२)

हे शल्य ! बीछूसे काटे जानेपर उसके विषसे पीडित पुरुषको विष बाधासे मुक्त करनेके लिये ज्ञानी लोग कोई मन्त्ररूप औषध करते है, वह मन्त्र यह है- "हे वृश्चिक ! मद्रदेशके लोगोंकी संगतिसे अवश्य पतन होता है, इस वास्ते उनका संग सब कोई छोड देते है, इसी प्रकार जिस कारण मैंने आथर्वण मंत्रसे तेरे विषकी शान्ति की है, अतः तेरा विष अब पूर्णतासे नष्ट हुआ है ।" हे शल्य ! इस मंत्रमें मद्रदेशके लोगोंके विषयमें कहा हुआ सब सत्य ही है ॥ हे विद्वन् ! यह समझ कर आप चुप रहिये । मद्रकी स्त्रियां मद्य पीकर नङ्गी होकर नाचने लगती है, और मैथुनके लिये अनेक प्रकार पुरुषकी इच्छा करती है । उनका पुत्र मद्रदेशी किस प्रकार धर्म कह सक्ता है ॥ (३३-३६)

जिस देशकी निर्लज्ज और अधर्मिनी स्त्री गधीके समान या ऊटनीके समान खडी होकर मूतती है तुम उन्हीं धर्म भ्रष्ट निर्लज्ज स्त्रियोंके पुत्र होकर धर्म कहनेकी इच्छा करते हो । जिस देशकी

मानी कृतास्त्रः कृतहस्तयोगो दिव्यास्त्रविच्छ्वेतहयः प्रमाथी॥ २५ ॥
तस्याहमद्यातिरथस्य कायाच्छिरो हरिष्यामि शितैः पृषत्कैः।
योत्स्याम्येनं शल्य धनञ्जयं वै मृत्युं पुरस्कृत्य रणे जयं वा ॥ २६ ॥
अन्यो हि न ह्येकरथेन मर्त्यो युध्येत यः पाण्डवमिन्द्रकल्पम्।
तस्याहवे पौरुषं पाण्डवस्य ब्रूयां हृष्टः समितौ क्षत्रियाणाम्॥ २७ ॥
किं त्वं मूर्खः प्रसभं मूढचेता ममावोचः पौरुषं फाल्गुनस्य।
अप्रियो यः पुरुषो निष्ठुरो हि क्षुद्रः क्षेप्ता क्षमिणश्चाक्षमावान्॥२८॥
हन्यामहं त्वादृशानां शतानि क्षमाम्यहं क्षमया कालयोगात्।
अवोचस्त्वं पाण्डवार्थे प्रियाणि प्रधर्षयन्मां मूढवत्पापकर्मन्॥ २९ ॥
मयार्जवे जिह्ममतिर्हतस्त्वं मित्रद्रोही साप्तपदं हि मैत्रम्।
कालस्त्वयं प्रत्युपयाति दारुणो दुर्योधनो युद्धमुपागमद्यत् ॥ ३० ॥
अस्यार्थसिद्धिं त्वभिकांक्षमाणस्तन्मन्यसे यत्र नैकान्त्यमस्ति।
मित्रं मिन्देर्नन्दतेः प्रीयतेर्वा सन्त्रायतेर्मिनुतेर्मोदतेर्वा ॥ ३१ ॥

---

मेरे सिवाय ऐसा कौन पराक्रमी, दिव्य अस्त्रोंके जाननेवाला, शीघ्र बाण चलानेवाला और शत्रुनाशन वीर है जो सफेद घोडेवाले बलवान् अर्जुनसे लड सके॥ हे शल्य! आज मैं युद्धमें मरूंगा, या दुर्योधनकी जीतही होगी। मै अपने तेजबाणोंसे आज अर्जुनका शिर काटकर पृथ्वीमें गिरा दूंगा, मेरे सिवाय और ऐसा कोई वीर नहीं है जो रथमें बैठकर एकला इन्द्रतुल्य अर्जुनसे युद्ध करे। यद्यपि अर्जुन मेरा वैरी है तौभी मै उसके बलको सब क्षत्रियोंके आगे वर्णन करता हूं॥ (२५-२७)

तुम मूर्ख पागल कठोर और क्रोधी हो तुम हमसे अर्जुनके पराक्रमका क्या वर्णन करते हो? तुम मेरे अप्रिय करने वाले, निष्ठुर, और नीच है। मैं क्षमावान् हूं तुम क्षमावान् न होने पर भी मेरी सदा निन्दा करते हो। हे मूर्ख! हे पापी! मैं तेरे ऐसे सौ मनुष्योंको मार सकता हूं, परन्तु देशकाल परिस्थितिके विचारसे क्षमाके वशमें होकर कुछ नहीं कर सकता, तुम हमें डराता है और पाण्डवोंकी प्रशंसा करता है॥ मै तेरे साथ सरलता से व्यवहार करता हूं तौभी तुम मेरे साथ कुटिलता करते हो। ऐसा कहा है, कि सप्तपद साथ चलनेमे मैत्री होती है, इस नियमसे तुम मेरा मित्र बना परंतु तू मेरे सरीखे मित्रका द्रोह करता है॥ यह समय बडा कठोर है, आज दुर्योधन युद्ध करनेको जाते है॥ इस सब प्रकारसे अपने मित्र दुर्योधनकी सहायता करेंगे,

व्यक्तं त्वमप्युपहितः पाण्डवैः पापदेशज ॥ ४६ ॥
यथा चामित्रवत्सर्वं त्वमस्मासु प्रवर्त्तसे ।
कामं न खलु शक्योऽहं त्वद्विधानां शतैरपि ॥ ४७ ॥
संग्रामाद्विमुखः कर्त्तुं धर्मज्ञ इव नास्तिकैः ।
सारङ्ग इव घर्मार्त्तः कामं विलप शुष्य च ॥ ४८ ॥
नाहं भीषयितुं शक्यः क्षत्रवृत्ते व्यवस्थितः ।
तनुत्यजां नृसिंहानामाहवेष्वनिवर्तिनाम् ॥ ४९ ॥
या गतिर्गुरुणा प्रोक्ता पुरा रामेण तां स्मरे ।
तेषां त्राणार्थमुद्यन्तं वधार्थं द्विषतामपि ॥ ५० ॥
विद्धि मामास्थितं वृत्तं पौरूरवसमुत्तमम् ।
न तद्भूतं प्रपश्यामि त्रिषु लोकेषु मद्रप ॥ ५१ ॥
यो मामस्मादभिप्रायाद्वारयेदिति मे मतिः ।
एवं विद्वञ्जोषमास्व त्रासात्किं बहु भाषसे ॥ ५२ ॥
न त्वां हत्वा प्रदास्यामि क्रव्याद्भ्यो मद्रकाधम ।
मित्रप्रतीक्षया शल्य धृतराष्ट्रस्य चोभयोः ॥ ५३ ॥
अपवादतितिक्षाभिस्त्रिभिरेतैर्हि जीवसि ।

लिये अपना धन और जीविततक भी दे सकता हूं । हे पापदेशोत्पन्न शल्य ! तू पाण्डवोंका मित्र और हमारा शत्रु है । जैसे धर्मज्ञको नास्तिक धर्मसे विमुख नहीं करता है वैसेही तेरे ऐसे सकडोंके कहनेपर भी मैं युद्धसे विमुख नहीं होऊंगा, तुम धूपसे पीडित हरिनके समान कण्ठ शुष्क होने तक कहते रहो परन्तु मैं क्षत्र धर्ममें स्थित होनेके कारण पाण्डवोंसे नहीं डरूंगा । ( ४५-४९ )

मैं युद्धमें शरीर छोडनेवाले, युद्धसे न हटनेवाले पुरुषसिंह क्षत्रियोंके धर्ममें स्थित हूं, सो कदापि नहीं डरूंगा । शत्रुओंका नाश और मित्रोंका उद्धार करनेके लिये परशुरामने जो विद्या मुझे बतायी है, सो सब मुझे याद है । हे मद्रराज ! मैं पुरूरवावंशी क्षत्रियोंके धर्मको मानता हूं । सो तीन लोकमें अपने समान कोई वीर नहीं देखता । हे विद्वन् ! ऐसा कोई नहीं है जो मुझको युद्धमें लौटा सके, यह विचारकर तुम चुप होजाओ; बहुत बकनेमें क्या होगा ? ( ४९-५२ )

हे मद्रकाधम ! मैं धृतराष्ट्र और दुर्योधनके हितमें तेरा मांस काटकर पक्षियोंको नहीं खिलाना चाहता । हे मद्रराज ! मैं अपने दुर्नाम दुर्योधन और

कदाचिद्विजयस्याहमस्त्रहेतोरटन्नृप ॥ ३८ ॥
अज्ञानाद्धि क्षिपन्बाणान्घोररूपान्भयानकान् ।
होमधेन्वा वत्समस्य प्रमत्त इषुणाहनम् ॥ ३९ ॥
चरन्तं विजने शल्य ततोऽनुव्याजहार माम् ।
यस्मात्त्वया प्रमत्तेन होमधेन्वा हतः सुतः ॥ ४० ॥
श्वभ्रे ते पततां चक्रमिति मां ब्राह्मणोऽब्रवीत् ।
युध्यमानस्य संग्रामे प्राप्तस्यैकायनं भयम् ॥ ४१ ॥
तस्माद्बिभेमि बलवद्ब्राह्मणव्याहृतादहम् ।
एते हि सोमराजान ईश्वराः सुखदुःखयोः ॥ ४२ ॥
अदां तस्मै गोसहस्रं बलीवर्दांश्च षट्शतान् ।
प्रसादं न लभे शल्य ब्राह्मणान्मद्रकेश्वर ॥ ४३ ॥
ईषादन्तान्सप्तशतान्दासीदासशतानि च ।
ददतो द्विजमुख्यो मे प्रसादं न चकार सः ॥ ४४ ॥
कृष्णानां श्वेतवत्सानां सहस्राणि चतुर्दश ।
आहरं न लभे तस्मात्प्रसादं द्विजसत्तमात ॥ ४५ ॥
ऋद्धं गृहं सर्वकामैर्यच्च मे वसु किञ्चन ।

हे शल्य ! मै एक दिन अपने विजय नामक धनुपसे अस्त्रोंके अभ्यासके लिये घूम रहा था तो मैं ने उस धनुपसे अज्ञानतामें बडे घोर भयङ्कर बाण छोड दिये। हे शल्य ! तब एक मुनीश्वरकी गौका बच्चा चर रहा था, मैंने भूलसे उसे मार डाला । तब मुनिने मुझे शाप दिया कि तैंने भूलसे मेरी गौका बच्चा मारा

सबको सुख दुःख दे सकते हैं, उनके शापसे मै आज बहुत डर रहा हू ॥ हे मद्रराज शल्य ! फिर मैंने उन्हें छःसौ बैल, और एक सहस्र गौ दीं परन्तु वह ब्राह्मण प्रसन्न न हुआ। फिर मैंने सात सौ दासी और एकसौ दास दिये तो भी वह ब्राह्मण श्रेष्ठ महामुनि मुझसे [illegible] न हुआ ! फिर मैंने चौदह सहस्र

अवश्यं तु मया वाच्यं बुद्ध्यता त्वद्धिताहितम् ।
विशेषतो रथस्थेन राज्ञश्चैव हितैषिणा ॥ ६ ॥
समं च विषमं चैव रथिनश्च बलाबलम् ।
श्रमः खेदश्च सततं हयानां रथिना सह ॥ ७ ॥
आयुधस्य परिज्ञानं रुतं च मृगपक्षिणाम् ।
भारश्चाप्यतिभारश्च शल्यानां च प्रतिक्रिया ॥ ८ ॥
अस्त्रयोगश्च युद्धं च निमित्तानि तथैव च ।
सर्वमेतन्मया ज्ञेयं रथस्यास्य कुटुम्बिना ॥ ९ ॥
अतस्त्वां कथये कर्ण निदर्शनमिदं पुनः ।
वैश्यः किल समुद्रान्ते प्रभूतधनधान्यवान् ॥ १० ॥
यज्वा दानपतिः क्षान्तः स्वकर्मस्थोऽभवच्छुचिः ।
बहुपुत्रः प्रियापत्यः सर्वभूतानुकम्पकः ॥ ११ ॥
राज्ञो धर्मप्रधानस्य राष्ट्रे वसति निर्भयः ।
पुत्राणां तस्य बालानां कुमाराणां यशस्विनाम् ॥१२॥
काको बहूनामभवदुच्छिष्टकृतभोजनः ।
तस्मै सदा प्रयच्छन्ति वैश्यपुत्राः कुमारकाः ॥ १३ ॥

भी दोष नहीं देखता हूं, कि जिससे तुम मुझ निपराधीको मारनेके लिये उद्यत हुए हो ॥ राजाके हितैषी सारथीको उचित है कि रथमें बैठे हुए वीरको हानि लाभ बतावें, इसलिए यह इतिहास कहना हमको बहुत आवश्यक है । सारथीको नीचा ऊंचा मार्ग, घोडोंकी थकाई, पसीना और शत्रुका बल रथीसे कहना चाहिये। शस्त्र और हरिण तथा पक्षियोंका शकुन अधिक बोझ और बाणोंके घावकी पीडा आदि सारथीको कहनी चाहिये । मैं इस रथका सारथी हूं, इस लिये शकुन, युद्ध और शस्त्रोंको मुझे देखना चाहिये। हे कर्ण! इसीलिये हम तुमसे यह इतिहास कहते हैं । (५-१०)

समुद्रके तटपर एक महाधनधान्यवान् बनिया रहता था । वह अपने धर्मके अनुसार अनेक यज्ञ और दान किया करता था, तथा क्षमावान्, अपने कर्ममें रत और पवित्र था । उसके अनेक प्यारे बेटी बेटा थे और सब प्राणियोंपर दया करता था॥ धर्मात्मा राजा उस राष्ट्रपर राज्य करते थे, इस लिए वह निर्भय होकर निवास करता था, उसके बालक यशस्वी पुत्रोंका जूठ खानेवाला एक कौआ था । वे वैश्यके पुत्र उस कौआ

कदाचिद्विजयस्याहमस्त्रहेतोरटन्नृप ॥ ३८ ॥
अज्ञानाद्धि क्षिपन्बाणान्घोररूपान्भयानकान्।
होमधेन्वा वत्समस्य प्रमत्त इषुणाहनम् ॥ ३९ ॥
चरन्तं विजने शल्य ततोऽनुव्याजहार माम्।
यस्मात्त्वया प्रमत्तेन होमधेन्वा हतः सुतः ॥ ४० ॥
श्वभ्रे ते पततां चक्रमिति मां ब्राह्मणोऽब्रवीत्।
युध्यमानस्य संग्रामे प्राप्तस्यैकायनं भयम् ॥ ४१ ॥
तस्माद्बिभेमि बलवद्ब्राह्मणव्याहृतादहम्।
एते हि सोमराजान ईश्वराः सुखदुःखयोः ॥ ४२ ॥
अदां तस्मै गोसहस्रं बलीवर्दाश्च षट्शतान्।
प्रसादं न लभे शल्य ब्राह्मणान्मद्रकेश्वर ॥ ४३ ॥
ईषादन्तान्सप्तशतान्दासीदासशतानि च।
ददतो द्विजमुख्यो मे प्रसादं न चकार सः ॥ ४४ ॥
कृष्णानां श्वेतवत्सानां सहस्राणि चतुर्दश।
आहरं न लभे तस्मात्प्रसादं द्विजसत्तमात ॥ ४५ ॥
ऋद्धं गृहं सर्वकामैर्यच्च मे वसु किञ्चन।

हे शल्य! मैं एक दिन अपने विजय नामक धनुषसे अस्त्रोंके अभ्यासके लिये घूम रहा था तो मैं ने उस धनुषसे अज्ञानतामें बडे घोर भयङ्कर बाण छोड दिये। हे शल्य! तब एक मुनीश्वरकी गौका बच्चा चर रहा था, मैंने भूलसे उसे मार डाला। तब मुनिने मुझे शाप दिया कि तैंने भूलसे मेरी यज्ञकी गौका बच्चा मारा इससे तू जब जगत्में घोर युद्ध करेगा, तब ही पृथ्वीमें तेरे रथका पहिया अटक जायगा सो उसही शापसे आज मैं बहुत डर रहा हूं ॥ (३८-४१)

ब्राह्मणोंका राजा सोम है और ब्राह्मण सबको सुख दुःख दे सकते हैं, उनके शापसे मैं आज बहुत डर रहा हूं ॥ हे मद्रराज शल्य! फिर मैंने उन्हें छःसौ बैल, और एक सहस्र गौ दीं परन्तु वह ब्राह्मण प्रसन्न न हुआ। फिर मैंने सात सौ दासी और एकसौ दास दिये तो भी वह ब्राह्मण श्रेष्ठ महामुनि मुझसे प्रसन्न न हुआ! फिर मैंने चौदह सहस्र सफेद बछडे वाली काली गाय दीं, तो भी उस ब्राह्मणने प्रसन्न होकर इस शापका उद्धार न किया ॥ (४२-४५)

मैंने सब सुख और धनसे भरा अपना घर भी उसको देना चाहा परन्तु तो

पक्षिणां च वयं नित्यं दूरपातेन पूजिताः ॥ २२ ॥
कथं हंसं नु बलिनं चक्राङ्गं दूरपातिनम् ।
काको भूत्वा निपतने समाह्वयसि दुर्मते ॥ २३ ॥
कथं त्वं पतिता काक सहास्माभिर्ब्रवीहि तत् ।
अथ हंसवचो मूढः कुत्सयित्वा पुनः पुनः ॥
प्रजगादोत्तरं काकः कत्थनो जातिलाघवात् ॥ २४ ॥

काक उवाच— शतमेकं च पातानां पतितास्मि न संशयः ।
शतयोजनमेकैकं विचित्रं विविधं तथा ॥ २५ ॥
उड्डीनमवडीनं च प्रडीनं डीनमेव च ।
निडीनमथ सण्डीनं तिर्यग्डीनगतानि च ॥ २६ ॥
विडीनं परिडीनं च पराडीनं सुडीनकम् ।
अभिडीनं महाडीनं निर्डीनमतिडीनकम् ॥ २७ ॥
अवडीनं प्रडीनं च सण्डीनं डीनडीनकम् ।
सण्डीनोड्डीनडीनं च पुनर्डीनविडीनकम् ॥ २८ ॥
सम्पातं समुदीषं च ततोऽन्यद्व्यतिरिक्तकम् ।
गतागतं प्रतिगतं बह्वीश्च निकुलीनकाः ॥ २९ ॥
कर्त्तास्मि मिषतां वोऽद्य ततो द्रक्ष्यथ मे बलम् ।
तेषामन्यतमेनाहं पतिष्यामि विहायसम् ॥ ३० ॥

रहते हैं और सब पक्षियोंसे अधिक उडते हैं । अरे दुर्बुद्धे ! तू कौआ होकर हंसोंके समान कैसे उडेगा ? रे मूर्ख नीच कौए ! तू हमारे समान कैसे उड सकेगा ? (२०—२४)

हंसोंके वचन सुन मूर्ख कौआ अपनी जातिकी नीचताके अनुसार उनकी निन्दा करके कहने लगा, हम तुम्हारे समान नहीं उड सकते । मैं एकसौएक प्रकारसे उडना जानता हूं और एक एक चालसे सौसौ चार सौ कोस उड सकता हूं. मेरी गति बहुत विचित्र और अद्भुत है, उनके नाम सुनो ॥ उड्डीन, अवडीन, प्रडीन, डीन, निडीन, सण्डीन तिर्यग्डीन, विडीन, परिडीन, पराडीन, सुडीन, अभिडीन, महाडीन, निर्डीन, अतिडीन, अवडीन, प्रडीन, सण्डीन, डीनडीन, सण्डीनोड्डीन, डीन, पुनर्डीन, विडीन, सम्पात, समुदीप, अतिरिक्त, गतागत, प्रतिगत, अनेक निकुलीन, इत्यादि और भी अनेक गति हम जानते हैं ॥ २५–२९

अब तुम लोग हमारा बल देखो, मैं

अथ काकस्य चित्राणि पतितानि मुहुर्मुहुः ॥ ३९ ॥
दृष्ट्वा प्रमुदिताः काका विनेदुरधिकैः स्वरैः ।
हंसांश्चावहसन्ति स्म प्रावदन्नप्रियाणि च ॥ ४० ॥
उत्पत्योत्पत्य च मुहुर्मुहूर्तमिति चेति च ।
वृक्षाग्रेभ्यः स्थलेभ्यश्च निपतन्त्युत्पतन्ति च ॥ ४१ ॥
कुर्वाणा विविधान्रावानाशंसन्तो जयं यथा ।
हंसस्तु मृदुनैकेन विक्रान्तुमुपचक्रमे ॥ ४२ ॥
प्रत्यहीयत काकाच्च मुहूर्तमिव मारिष ।
अवमन्य च हंसांस्तानिदं वचनमब्रुवन् ॥ ४३ ॥
योऽसावुत्पतितो हंसः सोऽसावेवं प्रहीयते ।
अथ हंसः स तच्छ्रुत्वा प्रापतत्पश्चिमां दिशम् ॥ ४४ ॥
उपर्युपरि वेगेन सागरं मकरालयम् ।
ततो भीः प्राविशत्काकं तदा तत्र विचेतसम् ॥ ४५ ॥
द्वीपद्रुमानपश्यन्तं निपातार्थे श्रमान्वितम् ।
निपतेयं क्व नु श्रान्त इति तस्मिञ्जलार्णवे ॥ ४६ ॥
अविषह्यः समुद्रो हि बहुसत्वगणालयः ।
महासत्वशतोद्भासी नभसोऽपिविशिष्यते ॥ ४७ ॥
गाम्भीर्याद्धि समुद्रस्य न विशेषं हि सूतज ।

थोडे समयमें कौआकी विचित्र गतियोंको देखकर सब कौवें प्रसन्न होकर और ऊंचे स्वरसे कांव कांव करने लगे। और हंसोंकी हंसी तथा निन्दा करने लगे। वे सब उडने लगे और कहीं वृक्षके ऊपर तथा भूमिपर जाकर कौएकी विजयके लिये अनेक प्रकारके शब्द करने लगे। ( ३९-४२ )

हंस अपनी एकही कोमल गतिसे जाने लगा, तो मुहूर्तभर कौआके पीछे रह गया, यह देख सब कौवें उस हंसकी निन्दा करके ऐसा बोले, यह हंस कौआके पीछे रह गया। हंसने कौवेंका वचन सुन पश्चिमकी ओर गमन किया। और मकरालय समुद्रके ऊपर ऊपर उडने लगा। जब कौआने विश्रांतिके लिये तीरके वृक्षोंको नहीं देखा तब वह डर गया और समुद्रमें गिरने लगा और मूर्च्छित होगया॥ ( ४२-४६ )

गिरते हुए कौआने द्वीपके वृक्षोंको देखा और विचारने लगा, कि किस पर गिरूं यह समुद्र सहस्रों जन्तुओंसे भरा

तत एषां समाचारः संवासाद्विदितो मम ॥ ९ ॥
शाकलं नाम नगरमापगा नाम निम्नगा।
जर्त्तिका नाम वाहीकास्तेषां वृत्तं सुनिन्दितम् ॥ १० ॥
धानागौड्यासवं पीत्वा गोमांसं लशुनैः सह।
अपूपमांसवाट्यानामाशिनः शीलवर्जिताः ॥ ११ ॥
गायन्त्यथ च नृत्यन्ति स्त्रियो मत्ता विवाससः।
नगरागारवप्रेषु बहिर्माल्यानुलेपनाः ॥ १२ ॥
मत्तावगीतैर्विविधैः खरोष्ट्रनिनदोपमैः।
अनावृता मैथुने ताः कामचाराश्च सर्वशः ॥ १३ ॥
आहुरन्योन्यसूक्तानि प्रब्रुवाणा मदोत्कटाः।
हे हते हे हतेत्येवं स्वामिभर्तृहतेति च ॥ १४ ॥
आक्रोशन्त्यः प्रनृत्यन्ति व्रात्याः पर्वस्वसंयताः।
तासां किलावलिप्तानां निवसन्कुरुजाङ्गले ॥ १५ ॥
कश्चिद्वाहीकदुष्टानां नातिहृष्टमना जगौ।
सा नूनं बृहती गौरी सूक्ष्मकम्बलवासिनी ॥ १६ ॥

वाहीक देशोंमें गया था, तब ही मैंने सब का आचार देखा ॥ आपगा नामक नदी के तटपर शाकल नामक नगर है, उस में जर्तिक नामक वाहीक जातिके नीच मनुष्य वसते हैं, उनका चरित्र बहुत बुरा है ॥ वे सब धान और गुडका मद्य बनाकर पीते हैं। और लहसनके साथ गोमांसको खाते हैं, और नित्य ही मांस और भुने हुए जौ खाते है, उनका शील बुरा हैं ॥ ( ९—११ )

वहांकी स्त्री अपने शरीरमें चन्दनादि सुगन्ध लगाना छोडकर मद्य पीकर और नङ्गी होकर घर द्वार और नगरके बाहर नाचती और गाती है ॥ उन स्त्रियोंका स्वर ऊंट और गधोंके समान होता है, वे उन्मत्त होकर गाती है, वे मैथुनसे कभी तृप्त नहीं होतीं और इच्छानुसार वर्तन करती है ॥ वहांकी स्त्रियां विनोद करती हुई परस्पर कहती हैं कि तुम पतिसे ताडित है। वे पर्वके समय नाचती, गाती और गाली देती हैं ॥ ( १२—१५ )

किसी समय उन दुष्ट और मदमत्त स्त्रियोंका पति कुरुजांगल देशमें रहता था, एकदिन वह पुरुष उदास चित्तसे उन वाहीक स्त्रियोंके सम्बन्धमें इस प्रकार गीत गाने लगा। " अरे! वह सूक्ष्म कम्बल पहनने वाली मेरी स्थूल स्त्री शय्यापर

पातवेगप्रमथितो हंसं काकोऽब्रवीदिदम् ॥ ५७ ॥
वयं काकाः कुतो नाम चरामः काकवाशिकाः ।
हंस प्राणैः प्रपद्ये त्वामुदकान्तं नयस्व माम् ॥ ५८ ॥
स पक्षाभ्यां स्पृशन्नार्तस्तुण्डेन च महार्णवे ।
काको दृढपरिश्रान्तः सहसा निपपात ह ॥ ५९ ॥
सागराम्भसि तं दृष्ट्वा पतितं दीनचेतसम् ।
म्रियमाणमिदं काकं हंसो वाक्यमुवाच ह ॥ ६० ॥
शतमेकं च पातानां पतास्यहमनुस्मर ।
श्लाघमानस्त्वमात्मानं काक भाषितवानसि ॥ ६१ ॥
स त्वमेकशतं पातं पतन्नभ्यधिको मया ।
कथमेवं परिश्रान्तः पतितोऽसि महार्णवे ॥ ६२ ॥
प्रत्युवाच ततः काकः सीदमान इदं वचः ।
उपरिष्टं तदा हंसमभिवीक्ष्य प्रसादयन् ॥ ६३ ॥

काक उवाच— उच्छिष्टदर्पितो हंस मन्येऽऽत्मानं सुपर्णवत् ।
अवमन्य बहूंश्चाहं काकानन्यांश्च पक्षिणः ॥ ६४ ॥
प्राणैर्हंस प्रपद्ये त्वां द्वीपान्तं प्रापयस्व माम् ।
यद्यहं स्वस्तिमान्हंस स्वं देशं प्राप्नुयां विभो ॥ ६५ ॥

थक कर गिर गया, तब हंससे बोला, हे हंस ! मैं कौवा हूं, तुम्हारे समान कैसे उड सकता हूं ? अब हमारा प्राण जाता है, तुम बचाओ ऐसा कहकर वह कौवा अपने पंख और मुखसे जलको स्पर्श करता हुआ श्रान्त होकर समुद्रके जलमें सहसा गिर पडा ॥ (५६–५९)

समुद्रमें मरते डूबते कौवाको देख हंसने यों कहा, हे कौवा ! तुझे तो एकसौ एक प्रकारसे उडना आता है। तैंने अपनी पहले बडी प्रशंसा की थी, मैं एक ही चालसे उडा और तू एकसौ एक चाल जानने पर भी थक कर क्यों गिरा ? (६०—६२)

तब रोता हुआ कौवा उडते हुए हंससे बोला, हे हंस ! मैं तुम्हारी शरण हूं, इसलिये मेरी रक्षा करो, हे हंस ! मैं जूठ खाकर बहुत अभिमानी होगया था, इसीसे मैंने अपनेको गरुडके समान माना था और कौवे आदि पक्षियोंका अनादर करने लगा, हे हंस ! अब मेरा प्राण जाता है, तुम मुझे जलसे पार करो. जो मैं जीता हुआ घर पहुंच जाउंगा तो फिर कभी किसी पक्षीका निरादर

तत एषां समाचारः संवासाद्विदितो मम ॥ ९ ॥
शाकलं नाम नगरमापगा नाम निम्नगा ।
जर्त्तिका नाम वाहीकास्तेषां वृत्तं सुनिन्दितम् ॥ १० ॥
धानागौड्यासवं पीत्वा गोमांसं लशुनैः सह ।
अपूपमांसवाट्यानामाशिनः शीलवर्जिताः ॥ ११ ॥
गायन्त्यथ च नृत्यन्ति स्त्रियो मत्ता विवाससः ।
नगरागारवप्रेषु बहिर्माल्यानुलेपनाः ॥ १२ ॥
मत्तावगीतैर्विविधैः खरोष्ट्रनिनदोपमैः ।
अनावृता मैथुने ताः कामचाराश्च सर्वशः ॥ १३ ॥
आहुरन्योन्यसूक्तानि प्रब्रुवाणा मदोत्कटाः ।
हे हते हे हतेत्येवं स्वामिभर्तृहतेति च ॥ १४ ॥
आक्रोशन्त्यः प्रनृत्यन्ति व्रात्याः पर्वस्वसंयताः ।
तासां किलावलिप्तानां निवसन्कुरुजाङ्गले ॥ १५ ॥
कश्चिद्वाहीकदुष्टानां नातिहृष्टमना जगौ ।
सा नूनं बृहती गौरी सूक्ष्मकम्बलवासिनी ॥ १६ ॥

वाहीक देशोंमें गया था, तब ही मैंने सब का आचार देखा ॥ आपगा नामक नदी के तटपर शाकल नामक नगर है, उस में जर्तिक नामक वाहीक जातिके नीच मनुष्य बसते हैं, उनका चरित्र बहुत बुरा है ॥ वे सब धान और गुडका मद्य बनाकर पीते हैं। और लहसनके साथ गोमांसको खाते है, और नित्य ही मांस और भुने हुए जौ खाते है, उनका शील बुरा है ॥ (९—११)

वहांकी स्त्री अपने शरीरमें चन्दनादि सुगन्ध लगाना छोडकर मद्य पीकर और नङ्गी होकर घर द्वार और नगरके बाहर नाचती और गाती है ॥ उन स्त्रियोंका स्वर ऊंट और गधोंके समान होता है, वे उन्मत्त होकर गाती हैं, वे मैथुनसे कभी तृप्त नहीं होतीं और इच्छानुसार वर्तन करती है ॥ वहांकी स्त्रियां विनोद करती हुई परस्पर कहती हैं कि तुम पतिसे ताडित है। वे पर्वके समय नाचती, गाती और गाली देती है ॥ (१२—१५)

किसी समय उन दुष्ट और मदमत्त स्त्रियोंका पति कुरुजांगल देशमें रहता था, एकदिन वह पुरुष उदास चित्तसे उन वाहीक स्त्रियोंके सम्बन्धमें इस प्रकार गीत गाने लगा। "अरे! वह सूक्ष्म कम्बल पहनने वाली मेरी स्थूल स्त्री शय्यापर

शृगाला इव सिंहेन क ते वीर्यमभूत्तदा ॥ ७४ ॥
भ्रातरं निहतं दृष्ट्वा समरे सव्यसाचिना ।
पश्यतां कुरुवीराणां प्रथमं त्वं पलायितः ॥ ७५ ॥
तथा द्वैतवने कर्ण गन्धर्वैः समभिद्रुतः ।
कुरून्समग्रानुत्सृज्य प्रथमं त्वं पलायितः ॥ ७६ ॥
हत्वा जित्वा च गन्धर्वांश्चित्रसेनमुखान्रणे ।
कर्ण दुर्योधनं पार्थः सभार्यं सममोक्षयत् ॥ ७७ ॥
पुनः प्रभावः पार्थस्य पौराणः केशवस्य च ।
कथितः कर्ण रामेण सभायां राजसंसदि ॥ ७८ ॥
सततं च त्वमश्रौषीर्वचनं द्रोणभीष्मयोः ।
अवध्यौ वदतः कृष्णौ सन्निधौ च महीक्षिताम् ॥७९॥
कियन्तस्तत्प्रवक्ष्यामि येन येन धनञ्जयः ।
त्वत्तोऽतिरिक्तः सर्वेभ्यो भूतेभ्यो ब्राह्मणो यथा ॥८०॥
इदानीमेव द्रष्टासि प्रधाने स्यन्दने स्थितौ ।
पुत्रं च वसुदेवस्य कुन्तीपुत्रं च पाण्डवम् ॥ ८१ ॥
यथाश्रयत चक्राङ्गं वायसो बुद्धिमास्थितः ।
तथाश्रयस्व वार्ष्णेयं पाण्डवं च धनञ्जयम् ॥ ८२ ॥

---

रूपी अर्जुनने जीत लिया था, तब तेरा पराक्रम कहां गया था ? जब सब कौरवोंके बीचमें अर्जुनने तुम्हारे भाईको मार डाला था तब तुम पहले ही युद्ध छोड कर भाग गये थे ॥ हे कर्ण ! जिस समय वनमें गन्धर्वोंके सङ्ग युद्ध हुआ था, तब सब कौरवोंको छोडकर पहले तूही युद्धसे भागा था ॥ उस समय स्त्रियोंके सहित दुर्योधनको अर्जुनहीने छुडाया था और उसके शत्रुओंको मारा था ॥ (७४-७७)

हे कर्ण ! परशुरामने भी राजसभामें अर्जुन और कृष्णका पराक्रम कहा था ॥ जिस समय भीष्म और द्रोणाचार्यने राजसभामें यह कहा था कि कृष्ण और अर्जुन अवध्य हैं, तब क्या तैने नहीं सुना था ? जैसे सब मनुष्योंमें ब्राह्मण श्रेष्ठ है, तैसे ही तुमसे और सब क्षत्रियोंसे अर्जुन श्रेष्ठ है । तुम इसी समय सब मनुष्योंमें श्रेष्ठ रथमें बैठे हुए कृष्ण और अर्जुनको देखोगे ॥ (७८-८१)

जैसे अपनी बुद्धिके अभिमानसे कौआ हंसके साथ उडा था, तैसे ही तू भी अर्जुन और कृष्णके साथ युद्ध कर ॥ हे

इत्युक्त्वा ब्राह्मणः साधुरुत्तरं पुनरुक्तवान् ॥ २४ ॥
वाहीकेष्वविनीतेषु प्रोच्यमानं निबोध तत् ।
तत्र स्म राक्षसी गीतिः सदा कृष्णचतुर्दशीम्॥ २५ ॥
नगरे शाकले स्फीते आहत्य निशि दुन्दुभिम् ।
कदा वाहेयिका गाथाः पुनर्गास्यामि शाकले ॥ २६ ॥
गव्यस्य तृप्ता मांसस्य पीत्वा गौडं सुरासवम् ।
गौरीभिः सह नारीभिर्बृहतीभिः स्वलंकृता ॥ २७ ॥
पलाण्डुगण्डूषयुतान्खादन्ती चैडकान्बहून् ।
वाराहं कौक्कुटं मांसं गव्यं गार्दभमौष्ट्रिकम् ॥ २८ ॥
ऐडं च ये न खादन्ति तेषां जन्म निरर्थकम् ।
इति गायन्ति ये मत्ताः सीधुना शाकलाश्च ये ॥२९॥
सबालवृद्धाः क्रन्दन्तस्तेषु धर्मः कथं भवेत् ।
इति शल्य विजानीहि हन्त भूयो ब्रवीमि ते ॥ ३० ॥
यदन्योऽप्युक्तवानस्मान्ब्राह्मणः कुरुसंसदि ।
पञ्च नद्यो वहन्त्येता यत्र पीलुवनान्युत ॥ ३१ ॥
शतद्रुश्च विपाशा च तृतीयैरावती तथा ।
चन्द्रभागा वितस्ता च सिन्धुषष्ठा बहिर्गिरेः ॥ ३२ ॥

वर्णन किया ॥ ( २१–२४ )

तब फिर वह ब्राह्मण बोला, वाहीक लोग बडे दुष्ट हैं, उनका चरित्र हमसे सुनो। वहीं कृष्ण पक्षकी चतुर्दशीको नगाडा बजाकर राक्षसी गीत गाती है, कि इस शाकल नगरमें आज बहुत गाय बैल मारे गये है, उनसे प्रसन्न होकर मैं गीत गा रही हूं। अब फिर ये गीत कब गाऊंगी ? मै अब गोमांस खाकर और गुडका मद्य पीकर तृप्त होगई और सोलह वर्षकी स्त्रियोंके सङ्ग नाचकरभी तृप्त होगयी, अब गधे ऊंट और मृगोंका मांस तथा प्याज खाऊंगी। उस देशके मनुष्यभी मद्यसे उन्मत्त होकर गाते हैं कि जो मूर्ख भेडका मांस नहीं खाते उनका जन्म निरर्थक है। ( २४-२९ )

हे शल्य ! जिस देशके बूढे और बालक इसी प्रकार सीधूमद्यसे मत्त होकर बकते है, वे धर्मको कैसे जानेंगे ? हम तुमसे कुछ और कहते है। इसी प्रकार एक दूसरे ब्राह्मणने कहा था, कि जहां पीलू और दाखका बहुत वन हैं; उसी देशमें सतलज, ब्यासा, इरावती, चिनाब, झेलम और छटी सिन्धुनदी बहती है।

तौ चाप्यहं शस्त्रभृतां वरिष्ठौ व्यपेतभीर्योधयिष्यामि कृष्णौ ।
सन्तापयत्यभ्यधिकं नु रामाच्छापोऽद्य मां ब्राह्मणसत्तमाच्च ॥ ३ ॥
अवसं वै ब्राह्मणच्छद्मनाहं रामे पुरा दिव्यमस्त्रं चिकीर्षुः ।
तत्रापि मे देवराजेन विघ्नो हितार्थिना फाल्गुनस्यैव शल्य ॥ ४ ॥
कृतो विभेदेन ममोरुमेत्य प्रविश्य कीटस्य तनुं विरूपाम् ।
ममोरुमेत्य प्रबिभेद कीटः सुप्ते गुरौ तत्र शिरो निधाय ॥ ५ ॥
ऊरुप्रभेदाच्च महान्बभूव शरीरतो मे घनशोणितौघः ।
गुरोर्भयाच्चापि न चेलिवानहं ततो विबुद्धो ददृशे स विप्रः ॥ ६ ॥
स धैर्ययुक्तं प्रसमीक्ष्य मां वै न त्वं विप्रः कोऽसि सत्यं वदेति ।
तस्मै तदात्मानमहं यथावदाख्यातवान्सूतवदेत्य शल्य ॥ ७ ॥
स मां निशम्याथ महातपस्वी संशप्तवान्रोषपरीतचेताः ।
सूतोपधावाप्तमिदं तवास्त्रं न कर्मकाले प्रतिभास्यति त्वाम् ॥ ८ ॥
अन्यत्र तस्मात्तव मृत्युकालादब्राह्मणे ब्रह्म नहि ध्रुवं स्यात् ।
तदद्य पर्याप्तमतीव चास्त्रमस्मिन्संग्रामे तुमुलेऽतीव भीमे ॥ ९ ॥
योऽयं शल्य भातिप्रपन्नः प्रकर्षणः सर्वहरोऽतिभीमः ।

---

शस्त्र जाननेवालोंमें श्रेष्ठ कृष्ण और अर्जुनसे युद्ध करूंगा। केवल ब्राह्मण श्रेष्ठ परशुरामके शापका मुझे भय है ॥ १-३

हे शल्य! मैं ब्राह्मण बनकर परशुरामसे दिव्य अस्त्र सीखने गया था। वहां अर्जुनके हित चाहनेवाले इन्द्रने मेरे सीखनेमें अनेक विघ्न किये, एक दिन परशुराम मेरी जांघपर सिर रखकर सोते थे। उसी समय इन्द्र कीडा बनकर मेरी जांघ काटने लगा॥ उसके काटनेसे मेरे शरीरसे बहुत रुधिर निकला परन्तु गुरुके डरसे मैंने अपनी जांघ हटाई नहीं, तब रामने उठकर मुझे देखा॥ (४-६)

उन्होंने मुझे अत्यन्त धीरजवान देख कर कहा, कि तू ब्राह्मण नहीं है, सत्य बता तू कौन है? तब मैंने उनसे सत्य सत्य कह दिया कि मैं सूत हूं, महातपस्वी परशुरामने मेरे वचन सुन बहुत क्रोध किया और शाप दिया कि तूने जो मुझसे दिव्य अस्त्र सीखे हैं, सो समयपर काम नहीं आवेंगे, क्यों कि किसी प्रकारका भी ज्ञान ब्राह्मण के सिवाय अन्य पुरुषमें स्थिर नहीं रहता और उस समय अर्थात् जब तुम्हें शस्त्रोंका स्मरण नहीं रहे, तभी जानना कि हमारी मृत्यु आगयी। ( ७—९ )

सो आज इस मुनीश्वरके वचनके अनुसार ऐसे भयानक तुमुल संग्राममें समय

इत्युक्त्वा ब्राह्मणः साधुरुत्तरं पुनरुक्तवान् ॥ २४ ॥
वाहीकेष्वविनीतेषु प्रोच्यमानं निबोध तत् ।
तत्र स्म राक्षसी गीतिः सदा कृष्णचतुर्दशीम् ॥ २५ ॥
नगरे शाकले स्फीते आहत्य निशि दुन्दुभिम् ।
कदा वाहेयिका गाथाः पुनर्गास्यामि शाकले ॥ २६ ॥
गव्यस्य तृप्ता मांसस्य पीत्वा गौडं सुरासवम् ।
गौरीभिः सह नारीभिर्बृहतीभिः स्वलंकृता ॥ २७ ॥
पलाण्डुगण्डूषयुतान्खादन्ती चैडकान्बहून् ।
वाराहं कौक्कुटं मांसं गव्यं गार्दभमौष्ट्रिकम् ॥ २८ ॥
ऐडं च ये न खादन्ति तेषां जन्म निरर्थकम् ।
इति गायन्ति ये मत्ताः सीधुना शाकलाश्च ये ॥२९॥
सबालवृद्धाः क्रन्दन्तस्तेषु धर्मः कथं भवेत् ।
इति शल्य विजानीहि हन्त भूयो ब्रवीमि ते ॥ ३० ॥
यदन्योऽप्युक्तवानस्मान्ब्राह्मणः कुरुसंसदि ।
पञ्च नद्यो वहन्त्येता यत्र पीलुवनान्युत ॥ ३१ ॥
शतद्रुश्च विपाशा च तृतीयैरावती तथा ।
चन्द्रभागा वितस्ता च सिन्धुषष्ठा बहिर्गिरेः ॥ ३२ ॥

वर्णन किया ॥ ( २१-२४ )

तब फिर वह ब्राह्मण बोला, वाहीक लोग बडे दुष्ट हैं, उनका चरित्र हमसे सुनो। वहीं कृष्ण पक्षकी चतुर्दशीको नगाडा बजाकर राक्षसी गीत गाती है, कि इस शाकल नगरमें आज बहुत गाय बैल मारे गये हैं, उनसे प्रसन्न होकर मैं गीत गा रही हूं। अब फिर ये गीत कब गाऊंगी ? मैं अब गोमांस खाकर और गुडका मद्य पीकर तृप्त होगई और सोलह वर्षकी स्त्रियोंके सङ्ग नाचकरभी तृप्त होगयी, अब गधे ऊंट और मृगोंका मांस तथा प्याज खाऊंगी। उस देशके मनुष्यभी मद्यसे उन्मत्त होकर गाते हैं कि जो मूर्ख भेडका मांस नहीं खाते उनका जन्म निरर्थक है। ( २४-२९ )

हे शल्य ! जिस देशके बूढे और बालक इसी प्रकार सीधूमद्यसे मत्त होकर बकते है, वे धर्मको कैसे जानेंगे ? हम तुमसे कुछ और कहते हैं। इसी प्रकार एक दूसरे ब्राह्मणने कहा था, कि जहां पीलू और दाखका बहुत बन है; उसी देशमें सतलज, व्यासा, इरावती, चिनाव, झेलम और छठी सिन्धुनदी बहती है।

तस्यास्त्रमस्त्रैः प्रतिहत्य सङ्ख्ये बाणोत्तमैः पातयिष्यामि पार्थम् ।
सहस्ररश्मिप्रतिमं ज्वलन्तं दिशश्च सर्वाः प्रतपन्तमुग्रम् ॥ १८ ॥
तमोनुदं मेघ इवातिमात्रं धनञ्जयं छादयिष्यामि बाणैः ।
वैश्वानरं धूमशिखं ज्वलन्तं तेजस्विनं लोकमिमं दहन्तम् ॥ १९ ॥
पर्जन्यभूतः शरवर्षैर्यथाग्निं तथा पार्थं शमयिष्यामि युद्धे ।
आशीविषं दुर्धरमप्रमेयं सुतीक्ष्णदंष्ट्रं ज्वलनप्रभावम् ॥ २० ॥
क्रोधप्रदीप्तं त्वहितं महान्तं कुन्तीपुत्रं शमयिष्यामि भल्लैः ।
प्रमाथिनं बलवन्तं प्रहारिणं प्रभञ्जनं मातरिश्वानमुग्रम् ॥ २१ ॥
युद्धे सहिष्ये हिमवानिवाचलो धनञ्जयं क्रुद्धममृष्यमाणम् ।
विशारदं रथमार्गेषु शक्तं धुर्यं नित्यं समरेषु प्रवीरम् ॥ २२ ॥
लोके वरं सर्वधनुर्धराणां धनञ्जयं संयुगे संसहिष्ये ।
अद्याहवे यस्य न तुल्यमन्यं मन्ये मनुष्यं धनुराददानम् ॥ २३ ॥
सर्वामिमां यः पृथिवीं विजिग्ये तेन प्रयोद्धास्मि समेत्य सङ्ख्ये ।
यः सर्वभूतानि सदैवकानि प्रस्थेऽजयत्खाण्डवे सव्यसाची ॥ २४ ॥
को जीवितं रक्षमाणो हि तेन युयुत्सेद्वै मानुषो मामृतेऽन्यः ।

राक्षसोंको युद्धमें जीतनेमें समर्थ है, वह आज मेरे साथ अमानुष अस्त्रोंसे युद्ध करनेके लिये आयेंगे, आज मैं उन्हींसे घोर युद्ध करूंगा तुम देख ॥ सूर्यके समान तेजस्वी सब दिशाओंको तपाते हुए अर्जुनके बाणोंको अपने बाणोंसे काटकर उन्हें मारूंगा ॥ जैसे मेघ सूर्यको छिपा देते हैं तैसे ही मैं वीरोंका नाश करते हुए, ज्वाला और धुएंके सहित अग्निके समान तेजस्वी अर्जुनको अपने बाणोंसे छिपा दूंगा; अग्निरूपी अर्जुनको मेघके समान अपनी बाण वर्षासे ठण्डा कर दूंगा ॥ (१७-२०)

अर्जुन तीक्ष्ण दाढ़ोंवाले विषीले सांप-के समान क्रोधी है, मैं उसे आज अपने तीक्ष्ण भल्ल बाणोंसे शान्त करूंगा । महापराक्रमी, महाशस्त्रधारी, शत्रुओंका नाश करनेवाले, महा क्रोधी, कुन्तीपुत्र अर्जुनको आज मैं अपने बाणोंसे मारूंगा, युद्धमें वीर महारथ, महाक्रोधी और महाबलवान् अर्जुनकी बाण वर्षाको आज हम हिमाचल पर्वतके समान स्थिर होकर सहेंगे । आज जगत्में उसके समान धनुषधारी कोई नहीं है, जिस अर्जुनने इस समस्त पृथ्वीको जीत लिया है और जिसने खाण्डव वनमें सब प्राणियोंको मारकर अग्निको तृप्त किया था, आज हम उसी अर्जुनसे युद्ध करेंगे ॥ (२०-२४)

आरट्टा मना वाहीका न तेष्वार्यो द्व्यहं वसेत् ।
वहिश्च नाम हीकश्च विपाशायां पिशाचकौ ॥ ४१ ॥
तयोरपत्यं वाहीका नैषा सृष्टिः प्रजापतेः ।
ते कथं विविधान्धर्माञ्ज्ञास्यन्ते हीनयोनयः ॥ ४२ ॥
कारस्करान्माहिषकान्कालिङ्गान्केरलांस्तथा ।
कर्कोटकान्वीरकांश्च दुर्धर्मांश्च विवर्जयेत् ॥ ४३ ॥
इति तीर्थानुसर्त्तारं राक्षसी काचिदब्रवीत् ।
एकरात्रशयी गेहे महोलूखलमेखला ॥ ४४ ॥
आरट्टा नाम ते देशा वाहीकं नाम तज्जलम् ।
ब्राह्मणापसदा यत्र तुल्यकालाः प्रजापतेः ॥ ४५ ॥
वेदा न तेषां वेद्यश्च यज्ञा यजनमेव च ।
व्रात्यानां दासमीयानामन्नं देवा न भुञ्जते ॥ ४६ ॥
प्रस्थला मद्रगान्धारा आरट्टा नामतः खशाः ।
वसातिसिन्धुसौवीरा इति प्रायोऽतिकुत्सिताः॥४७॥[२०४०]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां कर्णपर्वणि कर्णशल्यसंवादे चतुश्चत्वारिंशोऽध्यायः ४४

पर्वतसे निकल कर पांच नदियां वह रही हैं, उसको आरट्ट नामक वाहीक कहते हैं, उस स्थलमें दो दिन भी आर्यको वसना उचित नहीं । विपाशाके तटपर वहि और हीक नाम दो पिशाच रहते है । सब वाहीक लोग उन पिशाचोंकी संतति हैं, प्रजापतिकी संतति नहीं है, तो ये सृष्टिमें नीच मनुष्य अनेक प्रकारके धर्मको क्या जानें ? ( ३८-४२)

कारस्कर, माहिषक, कालिङ्ग,केरल, कर्कोटक, वीरक और दुर्द्धर्मदेशके मनुष्योंको नहीं छूना चाहिये ॥ इस प्रकार तीर्थोंमें घूमते हुए एक ब्राह्मणसे एक राक्षसीने कहा था, वह ब्राह्मण रात्रिभर एक स्थानमें रहता था और केवल लंगोटी ही रखता था ॥ हे पृथ्वीनाथ ! उस देशका नाम आरट्ट और वहींके जलका नाम वाहीक है, उस देशमें भी प्राचीन कालसे नीच ब्राह्मण उत्पन्न होते हैं । उनमें कोई वेदपाठ, वेदी,यजन वा यज्ञ करनेवाला नहीं है । वे सब संस्कारों से हीन हैं, और शूद्रसे अन्य स्त्रियोंमें उत्पन्न होते हैं, इस लिये देवता और पितर उनका पिण्डदान ग्रहण नहीं करते ॥ प्रस्थल, मद्र, गान्धार, आरट्ट, खश, वसाति, सिन्धु और सौवीर ये अति नीच है ॥ (४३-४७)[२०४०]

कर्णपर्वमें चौवालिस अध्याय समाप्त ।

तस्यास्त्रमस्त्रैः प्रतिहत्य सङ्ख्ये बाणोत्तमैः पातयिष्यामि पार्थम् ।
सहस्ररश्मिप्रतिमं ज्वलन्तं दिशश्च सर्वाः प्रतपन्तमुग्रम् ॥ १८ ॥
तमोनुदं मेघ इवातिमात्रं धनञ्जयं छादयिष्यामि बाणैः ।
वैश्वानरं धूमशिखं ज्वलन्तं तेजस्विनं लोकमिमं दहन्तम् ॥ १९ ॥
पर्जन्यभूतः शरवर्षैर्यथाग्निं तथा पार्थं शमयिष्यामि युद्धे ।
आशीविषं दुर्धरमप्रमेयं सुतीक्ष्णदंष्ट्रं ज्वलनप्रभावम् ॥ २० ॥
क्रोधप्रदीप्तं त्वहितं महान्तं कुन्तीपुत्रं शमयिष्यामि भल्लैः ।
प्रमाथिनं बलवन्तं प्रहारिणं प्रभञ्जनं मातरिश्वानमुग्रम् ॥ २१ ॥
युद्धे सहिष्ये हिमवानिवाचलो धनञ्जयं क्रुद्धममृष्यमाणम् ।
विशारदं रथमार्गेषु शक्तं धुर्यं नित्यं समरेषु प्रवीरम् ॥ २२ ॥
लोके वरं सर्वधनुर्धराणां धनञ्जयं संयुगे संसहिष्ये ।
अद्याहवे यस्य न तुल्यमन्यं मन्ये मनुष्यं धनुराददानम् ॥ २३ ॥
सर्वामिमां यः पृथिवीं विजिग्ये तेन प्रयोद्धास्मि समेत्य सङ्ख्ये ।
यः सर्वभूतानि सदैवकानि प्रस्थेऽजयत्खाण्डवे सव्यसाची ॥ २४ ॥
को जीवितं रक्षमाणो हि तेन युयुत्सेद्वै मानुषो मामृतेऽन्यः ।

राक्षसोंको युद्धमें जीतनेमें समर्थ है, वह आज मेरे साथ अमानुष अस्त्रोंसे युद्ध करनेके लिये आयेंगे, आज मैं उन्हींसे घोर युद्ध करूंगा तुम देख ॥ सूर्यके समान तेजस्वी सब दिशाओंको तपाते हुए अर्जुनके बाणोंको अपने बाणोंसे काटकर उन्हें मारूंगा ॥ जैसे मेघ सूर्यको छिपा देते हैं तैसे ही मैं वीरोंका नाश करते हुए, ज्वाला और धुएंके सहित अग्निके समान तेजस्वी अर्जुनको अपने बाणोंसे छिपा दूंगा; अग्निरूपी अर्जुनको मेघके समान अपनी बाण वर्षासे ठण्ढा कर दूंगा ॥ (१७-२०)

अर्जुन तीक्ष्ण दंष्ट्रावाले विषैले सांप-के समान क्रोधी है, मैं उसे आज अपने तीक्ष्ण भल्ल बाणोंसे शान्त करूंगा। महा पराक्रमी, महाशस्त्रधारी, शत्रुओंका नाश करनेवाले, महा क्रोधी, कुन्ती पुत्र अर्जुनको आज मैं अपने बाणोंसे मारूंगा, युद्धमें वीर महारथ, महाक्रोधी और महाबलवान अर्जुनकी बाण वर्षाको आज हम हिमाचल पर्वतके समान स्थिर होकर सहेंगे। आज जगत्में उसके समान धनुषधारी कोई नहीं है. जिस अर्जुनने इस समस्त पृथ्वीको जीत लिया है और जिसने खाण्डव वनमें सब प्राणियोंको मारकर अग्निको तृप्त किया था, आज हम उसी अर्जुनसे युद्ध करेंगे ॥ (२०-२४)

ब्रवीमि ते सर्वमिदं ममास्ति तच्चापि सर्वं मम वेत्ति राजा ।
शत्रुः शदेः शासतेर्वा श्यतेर्वा शृणातेर्वा श्वसतेः सीदतेर्वा ॥३२॥
उपसर्गाद्बहुधा सूदतेश्च प्रायेण सर्वं त्वयि तच्च मह्यम् ।
दुर्योधनार्थं तव च प्रियार्थं यशोर्थमात्मार्थमपीश्वरार्थम् ॥ ३३ ॥
तस्मादहं पाण्डववासुदेवौ योत्स्ये यत्नात्कर्म तत्पश्य मेऽद्य ।
अस्त्राणि पश्याद्य ममोत्तमानि ब्राह्माणि दिव्यान्यथ मानुषाणि॥ ३४ ॥
आसादयिष्याम्यहमुग्रवीर्यं द्विपो द्विपं मत्तमिवातिमत्तः ।
अस्त्रं ब्राह्मं मनसा युद्धयजेयं क्षेप्स्ये पार्थायाप्रमेयं जयाय ।
तेनापि मे नैव मुच्येत युद्धे न चेत्पतेद्विषमे मेऽद्य चक्रम् ॥ ३५ ॥

वैवस्वताद्दण्डहस्ताद्वरुणाद्वापि पाशिनः ।
सगदाद्वा धनपतेः सवज्राद्वापि वासवात् ।
अन्यस्मादपि कस्माचिदमित्रादाततायिनः ॥ ३६ ॥
इति शल्य विजानीहि यथा नाहं विभेम्यतः ।
तस्मान्न मे भयं पार्थान्नापि चैव जनार्दनात् ॥ ३७ ॥
सह युद्धं हि मे ताभ्यां साम्पराये भविष्यति ।

---

क्योंकि जो आपत्तियोंसे बचावे, चित्तको प्रसन्न करे और सब प्रकारकी सहायता करे, उसे ही मित्र कहते हैं ॥ (२८–३१)

मैंने जो मित्रोंके गुण कहे सो हममें सब हैं और राजा दुर्योधन भी हमारे सब गुणोंको जानते हैं । शत्रुका अर्थ काटने, निकालने, मारने और रुलाने वालेका है और उपसर्ग लगानेमे उसहीका अर्थ नाश करनेवालेका होजाता है सो ये सब गुण हमारी ओरसे तुममें भरे हैं ॥ दुर्योधनके यश, कल्याण अपने सुख और ईश्वरके लिये आज मै कृष्ण और अर्जुनसे युद्ध करूंगा ॥ आज तुम हमारे पराक्रमको तथा हमारे दिव्य, ब्राह्म और मानुष अस्त्रोंको देखो ॥ ३२–३४

जैसे महामतवाला हाथी महा मतवाले हाथीको जीतता है तैसे ही आज मैं महा पराक्रमी अर्जुनको युद्धमें जीतूंगा । आज मै अपने मनसे निश्चय करके पराक्रमी अर्जुनकी ओर ब्रह्मास्त्र चलाऊंगा, यदि वह भी मेरे लिये ब्रह्मास्त्र चलावेंगे तब दोनों शस्त्रोंका घोर युद्ध होगा ॥ दण्ड-धारी यम, फांसीधारी वरुण, गदाधारी कुबेर और वज्रधारी इन्द्र अथवा अन्य किसी शत्रुसे भी मै कुछ नहीं डरता, तब कृष्ण और अर्जुनकी तो बात ही क्या है ? हे राजन ! आज उन्हीं कृष्ण अर्जुनसे हमारा युद्ध होगा । (३५-३८)

हन्त शल्य विजानीहि हन्त भूयो ब्रवीमि ते।
यदप्यन्योऽब्रवीद्वाक्यं वाहीकानां च कुत्सितम् ॥ १० ॥
सती पुरा हृता काचिदारट्टात्किल दस्युभिः।
अधर्मतश्चोपयाता सा तानभ्यशपत्ततः ॥ ११ ॥
बालां बन्धुमतीं यन्मामधर्मेणोपगच्छथ।
तस्मान्नार्यो भविष्यन्ति बन्धक्यो वै कुलस्य च ॥ १२ ॥
न चैवास्मात्प्रमोक्षध्वं घोरात्पापान्नराधमाः।
तस्मात्तेषां भागहरा भागिनेया न सूनवः ॥ १३ ॥
कुरवः सहपाञ्चालाः शाल्वा मत्स्याः सनैमिषाः।
कोसलाः काशपौण्ड्राश्च कालिङ्गा मागधास्तथा ॥ १४ ॥
चेदयश्च महाभागा धर्मं जानन्ति शाश्वतम्।
नानादेशेषु सन्तश्च प्रायो वाह्यालयादृते ॥ १५ ॥
आमत्स्येभ्यः कुरुपाञ्चालदेश्या आनैमिषाचेदयो ये विशिष्टाः।
धर्मं पुराणमुपजीवन्ति सन्तो मद्रानृते पाञ्चनदांश्च जिह्मान् ॥ १६ ॥
एवं विद्वान्धर्मकथासु राजंस्तूष्णींभूतो जडवच्छल्य भूयः।

वाणी मैं ने वहीं सुनी थी। हे शल्य! समस्त पृथ्वीसे वाहीक नीच हैं ॥ (५-९)

हे शल्य! हमने कहा सो तुमने सुना! अब और कहते हैं सुनो। उस ब्राह्मणने वाहीकोंकी निन्दा करके यह भी कहा था, कि आरट्ट देशमें एक पतिव्रता स्त्रीको उस के पतिसे चोरोंने छीन ली! और उससे अधर्मका बर्ताव किया तब उस सतीने आरट्टको शाप दिया, "तैने अधर्मसे मुझे मेरे पतिसे छीन लिया, इस लिये तुम्हारे देशकी सब स्त्रियां कुलटा और वेश्या होजायंगी॥ हे नराधम लोगो! तुम उस घोर पापसे कभी निवृत्त न हो जायंगे।" इसलिये उनके धनका पुत्र भागी नहीं होता, परन्तु भगिनीका पुत्र भागी होता है॥ (१०-१३)

कुरु, शाल्व, पाञ्चाल, मत्स्य, नैमिष, कौशल, काश, पौंड्र, कालिङ्ग, मागध, और चेदिदेशके उत्पन्न हुए महात्मा मनुष्य ही शाश्वत धर्मको जानते हैं, सब देशोंमें दुष्ट और साधु रहते हैं परन्तु वाहीक केवल दुष्ट ही हैं। मत्स्यदेशसे लेकर कुरु और पाञ्चाल देशके मनुष्य और मद्र देशको छोडकर अन्य देशके महात्मा लोग सनातन धर्मसे अपनी वृत्ति चलाते हैं॥ (१४-१६)

हे राजेन्द्र! आप पण्डित, प्रजाके स्वामी और सब पाप पुण्यके छठे भागके

तत्सर्वमस्मै सत्कृत्य प्रयच्छामि न चेच्छति ॥ ४६ ॥
ततोऽब्रवीन्मां याचन्तमपराधं प्रयत्नतः ।
व्याहृतं यन्मया सूत तत्तथा न तदन्यथा ॥ ४७ ॥
अनृतोक्तं प्रजां हन्यात्ततः पापमवाप्नुयाम् ।
तस्माद्धर्माभिरक्षार्थं नानृतं वक्तुमुत्सहे ॥ ४८ ॥
मा त्वं ब्रह्मगतिं हिंस्याः प्रायश्चित्तं कृतं त्वया ।
मद्वाक्यं नानृतं लोके कश्चित्कुर्यात्समाप्नुहि ॥ ४९ ॥
इत्येतत्ते मया प्रोक्तं क्षिप्तेनापि सुहृत्तया ।
जानामि त्वां विक्षिपन्तं जोषमास्स्वोत्तरं शृणु ॥५०॥१९८४

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां कर्णपर्वणि कर्णशल्यसंवादे द्वाचत्वारिंशोऽध्यायः ॥४२

सञ्जय उवाच— ततः पुनर्महाराज मद्रराजमरिन्दमः ।
अभ्यभाषत राधेयः संनिवार्योत्तरं वचः ॥ १ ॥
यत्त्वं निदर्शनार्थं मां शल्य जल्पितवानसि ।
नाहं शक्यस्त्वया वाचा विभीषयितुमाहवे ॥ २ ॥
यदि मां देवताः सर्वा योधयेयुः सवासवाः ।
तथापि मे भयं न स्यात्किमु पार्थात्सकेशवात्॥ ३ ॥

भी वह प्रसन्न न हुआ। जब मैंने बहुत ही प्रार्थना की तो उस ब्राह्मणने कहा कि, हे सूत ! हमने जो कहा है सो वैसा ही होगा हमारी वाणी मिथ्या नहीं होती, हम यदि झूट बोलें तो प्रजाका नाश होजाय और उससे हमें पापका भागी होना पडेगा। इस लिये हम लोग मूल धर्मकी रक्षाके लिये सदा सत्य ही बोलते है ॥ (४६-४८)

तुम ब्राह्मणोंके वाक्योंको मिथ्या मत करो और प्रायश्चित करो. ब्राह्मणोंके वाक्यको जगत्में कोई नहीं उठा सक्ता॥ तुमको अपना शत्रु और दक दक करने वाला जानकर भी हमने मित्रतासे यह कथा सुनायी; अब हमारे वचन सुनो और चुप रहो ॥ (४९-५०) [१९८४]

कर्णपर्वमें बियालिस अध्याय समाप्त ।

कर्णपर्वमें तैतालिस अध्याय ।

सञ्जय बोले, हे महाराज ! उसके पश्चात् शत्रुनाशन राधापुत्र मद्रराजको चुप करके फिर बोले, हे शल्य ! तुमने जो हमको अपने वचनोंसे डराना चाहा था, सो हम डरने योग्य नहीं हैं॥ यदि सब देवतोंके सहित साक्षात् इन्द्र भी मुझसे लडनेको आवे तो भी मैं नहीं डरूंगा और अर्जुन कृष्णकी तो कथा

राजयाजकयाज्यानां मद्रकाणां च यन्मलम् ।
तद्भवेद्वै तव मलं यद्यस्मान्न विमुञ्चसि ॥ २६ ॥
इति रक्षोपसृष्टेषु विषवीर्यहतेषु च ।
राक्षसं भैषजं प्रोक्तं संसिद्धवचनोत्तरम् ॥ २७ ॥
ब्राह्मं पाञ्चालाः कौरवेयास्तु धर्म्यं सत्यं मत्स्याः शूरसेनाश्च यज्ञम् ।
प्राच्या दासा वृषला दाक्षिणात्याः स्तेना वाहीकाः सङ्करा वै सुराष्ट्राः २८
कृतघ्नता परवित्तापहारो मद्यपानं गुरुदारावमर्दः ।
वाक्पारुष्यं गोवधो रात्रिचर्या बहिर्गेहं परवस्त्रोपभोगः ॥ २९ ॥
येषां धर्मस्तान्प्रति नास्त्यधर्मो ह्यारट्टानां पञ्चनदान्धिगस्तु ।
अथोदीच्याश्चाङ्गका मागधाश्च शिष्टान्धर्मानुपजीवन्ति वृद्धाः ॥ ३० ॥
प्राचीं दिशं श्रिता देवा जातवेदःपुरोगमाः ।
दक्षिणां पितरो गुप्तां यमेन शुभकर्मणा ॥ ३१ ॥
प्रतीचीं वरुणः पाति पालयानः सुरान्बली ।
उदीचीं भगवान्सोमो ब्राह्मणैः सह रक्षति ॥ ३२ ॥

तेलियोंसे पण्ढ और पण्ढोंसे राजपुरोहित नीच है। राजपुरोहितका जो यज्ञ कराता है, और जो मद्र देशके मनुष्योंका भोजन करता है, इन दोनोंको जो पाप होता है, सो तुम्हें हमें न छोडनेसे होगा॥ ( २२-२६ )

यह राक्षसोंका बल नाश करनेवाला वा विषकी पीडा हटानेवाला मन्त्र अथवा औषधि है यह सिद्ध वचन है॥ पञ्चालदेशीय वेदोंके भक्त; कुरुदेशीय धर्मयुक्त कर्म करनेवाले, मत्स्यदेशीय सत्यका आचरण करनेवाले, शूरसेनदेशीय यज्ञ करनेवाले, पूर्वके दास; दक्षिण देशके धर्मात्मा; वाहीक चोर; सौराष्ट्र देशके मनुष्य वर्णसङ्कर है॥ कृतघ्नता, परद्रव्यापहार, चोरी, मद्य पीना, गुरुकी स्त्रीसे अधर्म करना, कठोर वचन कहना, गाय मारना, रात्रिको बाहर घूमना, दूसरेके वस्त्र पहनना-जिनके येही धर्म है, उन आरट्ट और पञ्चनद देशके मनुष्योंको धिक्कार है। (२७-३०)

पाञ्चाल, कुरु, नैमिष और मत्स्य देशके मनुष्य भी धर्मको जानते है। इसी प्रकार उत्तर मगध, अङ्ग और मगध देशके उत्तम मनुष्य धर्म पालन करते हैं। पूर्वमें अग्नि आदि देवता रहते हैं। और यमराजसे रक्षित दक्षिण दिशामें पितर निवास करते हैं। बलवान् वरुण पश्चिमके देवतोंकी रक्षा करते हैं। उत्तर दिशाकी भगवान् चन्द्रमा ब्राह्मणोंके

तत्सर्वमस्मै सत्कृत्य प्रयच्छामि न चेच्छति ॥ ४६ ॥
ततोऽब्रवीन्मां याचन्तमपराधं प्रयत्नतः ।
व्याहृतं यन्मया सूत तत्तथा न तदन्यथा ॥ ४७ ॥
अनृतोक्तं प्रजां हन्यात्ततः पापमवाप्नुयाम् ।
तस्माद्धर्माभिरक्षार्थं नानृतं वक्तुमुत्सहे ॥ ४८ ॥
मा त्वं ब्रह्मगतिं हिंस्याः प्रायश्चित्तं कृतं त्वया ।
मद्वाक्यं नानृतं लोके कश्चित्कुर्यात्समाप्नुहि ॥ ४९ ॥
इत्येतत्ते मया प्रोक्तं क्षिप्तेनापि सुहृत्तया ।
जानामि त्वां विक्षिपन्तं जोषमास्स्वोत्तरं शृणु ॥५०॥१९८४

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां कर्णपर्वणि कर्णशल्यसंवादे द्वाचत्वारिंशोऽध्यायः ॥४२

सञ्जय उवाच— ततः पुनर्महाराज मद्रराजमरिन्दमः ।
अभ्यभाषत राधेयः संनिवार्योत्तरं वचः ॥ १ ॥
यत्त्वं निदर्शनार्थं मां शल्य जल्पितवानसि ।
नाहं शक्यस्त्वया वाचा विभीषयितुमाहवे ॥ २ ॥
यदि मां देवताः सर्वा योधयेयुः सवासवाः ।
तथापि मे भयं न स्यात्किमु पार्थात्सकेशवात् ॥ ३ ॥

भी वह प्रसन्न न हुआ। जब मैंने बहुत ही प्रार्थना की तो उस ब्राह्मणने कहा कि, हे सूत! हमने जो कहा है सो वैसा ही होगा हमारी वाणी मिथ्या नहीं होती, हम यदि झूट बोलें तो प्रजाका नाश होजाय और उससे हमें पापका भागी होना पडेगा। इस लिये हम लोग मूल धर्मकी रक्षाके लिये सदा सत्य ही बोलते हैं ॥ (४६-४८)

तुम ब्राह्मणोंके वाक्योंको मिथ्या मत करो और प्रायश्चित करो. ब्राह्मणोंके वाक्यको जगत्में कोई नहीं उठा सकता॥ तुमको अपना शत्रु और बक बक करने वाला जानकर भी हमने मित्रतासे यह कथा सुनायी; अब हमारे वचन सुनो और चुप रहो॥ (४९-५०) [१९८४]

कर्णपर्वमें बियालिस अध्याय समाप्त।

कर्णपर्वमें तैंतालिस अध्याय।

सञ्जय बोले, हे महाराज! उसके पश्चात् शत्रुनाशन राधापुत्र मद्रराजको चुप करके फिर बोले, हे शल्य! तुमने जो हमको अपने वचनोंसे डराना चाहा था, सो हम डरने योग्य नहीं हैं॥ यदि सब देवतोंके सहित साक्षात् इन्द्र भी मुझसे लडनेको आवें तो भी मैं नहीं डरूंगा और अर्जुन कृष्णकी तो कथा

अङ्गे प्रवर्तते कर्ण येषामधिपतिर्भवान् ॥ ४० ॥
रथातिरथसंख्यायां यत्त्वां भीष्मस्तदाब्रवीत् ।
तान्विदित्वात्मनो दोषान्निर्मन्युर्भव मा क्रुधः ॥ ४१ ॥
सर्वत्र ब्राह्मणाः सन्ति सन्ति सर्वत्र क्षत्रियाः ।
वैश्याः शूद्रास्तथा कर्ण स्त्रियः साध्व्यश्च सुव्रताः ॥४२॥
रमन्ते चोपहासेन पुरुषाः पुरुषैः सह ।
अन्योन्यमवरक्षन्तो देशे देशे समैथुनाः ॥ ४३ ॥
परवाच्येषु निपुणः सर्वो भवति सर्वदा ।
आत्मवाच्यं न जानीते जानन्नपि च मुह्यति ॥ ४४ ॥
सर्वत्र सन्ति राजानः स्वं स्वं धर्ममनुव्रताः ।
दुर्मनुष्यान्निगृह्णन्ति सन्ति सर्वत्र धार्मिकाः ॥ ४५ ॥
न कर्ण देशसामान्यात्सर्वः पापं निषेवते ।
यादृशाः स्वस्वभावेन देवा अपि न तादृशाः ॥ ४६ ॥
सञ्जय उवाच— ततो दुर्योधनो राजा कर्णशल्याववारयत ।
सखिभावेन राधेयं शल्यं श्वाञ्जल्यकेन च ॥ ४७ ॥
ततो निवारितः कर्णो धार्तराष्ट्रेण मारिष ।
कर्णोऽपि नोत्तरं प्राह शल्योऽप्यभिमुखः परान् ।

आयेको छोडना, अपनी स्त्री और पुत्रोंको वेचना, ये सब अङ्गदेशके मनुष्योंके धर्म हैं और तुम उसी देशके राजा हो ॥ रथ संख्यामें जो कुछ भीष्मने तुममें दोष बताये थे। अपने उन सब दोषोंको विचारकर चुप होजाओ क्रोध मत करो॥ सब देशोंमें ब्राह्मण, क्षत्री, वैश्य, शूद्र और उत्तम चरित्रवाली पतिव्रता स्त्री है। सब देशके मनुष्य परस्पर उपहासमे रमते है और सब देशमें स्त्री पुरुष मैथुन करते है ॥ (४०-४३)

दूसरेके दोष कहनेमें सब निपुण होते हैं, परन्तु अपने दोषोंको कोई नहीं जानते हैं, और कोई जानकर भुला देते हैं ॥ स्वधर्मके अनुसार रहनेवाले तथा दुष्टोंको दण्ड देनेवाले धर्मात्मा राजा सब देशोंमें हैं॥ हे कर्ण! सब देश भरके मनुष्य पापी नहीं है। जैसे सब देवता एक स्वभावके नहीं होते, तैसे ही सब मनुष्यभी एक स्वभावके नहीं है ॥ (४४-४६)

सञ्जय बोले, हे राजन्! तब राजा दुर्योधनने कर्णको मित्रभावसे और राजा शल्यको हाथ जोडकर शान्त किया ॥ हे राजन्! दुर्योधनसे निवारित होकर

ऋते कर्णसहस्रेण शक्या जेतुं परे युधि ॥ १ ॥

सञ्जय उवाच— तथा ब्रुवन्तं परुषं कर्णो मद्राधिपं तदा ।
परुषं द्विगुणं भूयः प्रोवाचाप्रियदर्शनम् ॥ २ ॥

कर्ण उवाच— इदं तु मे त्वमेकाग्रः शृणु मद्रजनाधिप ।
सन्निधौ धृतराष्ट्रस्य प्रोच्यमानं मया श्रुतम् ॥ ३ ॥
देशांश्च विविधांश्चित्रान्पूर्ववृत्तांश्च पार्थिवान् ।
ब्राह्मणाः कथयन्ति स्म धृतराष्ट्रनिवेशने ॥ ४ ॥
तत्र वृद्धः पुरावृत्ताः कथाः काश्चिद् द्विजोत्तमः ।
वाहीकदेशं मद्रांश्च कुत्सयन्वाक्यमब्रवीत् ॥ ५ ॥
बहिष्कृता हिमवता गङ्गया च बहिष्कृताः ।
सरस्वत्या यमुनया कुरुक्षेत्रेण चापि ये ॥ ६ ॥
पञ्चानां सिन्धुषष्ठानां नदीनां येऽन्तराश्रिताः ।
तान्धर्मबाह्यानशुचीन्वाहीकानपि वर्जयेत् ॥ ७ ॥
गोवर्धनो नाम वटः सुभद्रं नाम चत्वरम् ।
एतद्राजकुलद्वारमाकुमारात्स्मराम्यहम् ॥ ८ ॥
कार्येणात्यर्थगूढेन वाहीकेषूषितं मया ।

---

जीतनेमें समर्थ हूं, अर्थात् तुझसे हजारोंके समान मै एकला हूं ॥ ( १ )

सञ्जय बोले, शल्यके कठोर वचन सुन कर्णने उनसे दुगुने कठोर वचन उन्हें फिर कहे ॥ कर्ण बोले, हे मद्रदेशीय महाराज! मैने जो धृतराष्ट्रके आगे कहा गया वचन सुना है, वह तुमसे कहता हूं, उसे सुनो ॥ अनेक देशोंमें घूमते हुए ब्राह्मण राजा धृतराष्ट्रमें आकर चित्र विचित्र अनेक देश और भूतकालीन राजाओंकी कथाएं कहते थे ॥ एक दिन एक बूढा ब्राह्मण राजा धृतराष्ट्रके पास आकर वाहीक देश और मद्रदेशी मनुष्योंकी निन्दा करता हुआ कहने लगा ॥ ( २—५ )

गङ्गा, यमुना, सरस्वती, कुरुक्षेत्र, और हिमाचलमे जो देश दूर है, तिनका तथा रावी, चिनाब, झेलम, सतलज, व्यासा, और सिन्धु तटके देशसे जो दूर रहते हैं, तथा जो वाहीक देशमें रहते है उनको छूना नहीं चाहिये, हमने अपनी बालक अवस्थामे देखा है कि, ऊपर कहे देशोंमे अलग, गौओंको मारना और मद्यके वर्तनोंको घरमें रखना ही राजोंका चिन्ह है ॥ ( ६—८ )

मै एक अत्यन्त गुप्त कार्यमे उन

कथं पाण्डुसुताश्चापि प्रत्यव्यूहन्त मामकान् ॥ ७ ॥
कथं चैव महद्युद्धं प्रावर्तत सुदारुणम् ।
क्व च बीभत्सुरभवद्यत्कर्णोऽयाद्युधिष्ठिरम् ॥ ८ ॥
को ह्यर्जुनस्य सान्निध्ये शक्तोऽभ्येतुं युधिष्ठिरम् ।
सर्वभूतानि यो ह्येकः खाण्डवे जितवान्पुरा ।
कस्तमन्यस्तु राधेयात्प्रतियुद्ध्येज्जिजीविषुः ॥ ९ ॥

सञ्जय उवाच— शृणु व्यूहस्य रचनामर्जुनश्च यथा गतः ।
परिवार्य नृपं स्वं स्वं संग्रामश्चाभवद्यथा ॥ १० ॥
कृपः शारद्वतो राजन्मागधाश्च तरस्विनः ।
सात्वतः कृतवर्मा च दक्षिणं पक्षमाश्रिताः ॥ ११ ॥
तेषां प्रपक्षे शकुनिरुलूकश्च महारथः ।
सादिभिर्विमलप्रासैस्तवानीकमरक्षताम् ॥ १२ ॥
गान्धारिभिरसम्भ्रान्तैः पार्वतीयैश्च दुर्जयैः ।
शलभानामिव व्रातैः पिशाचैरिव दुर्दृशैः ॥ १३ ॥
चतुर्विंशत्सहस्राणि रथानामनिवर्तिनाम् ।
संशप्तका युद्धशौण्डा वामं पार्श्वमपालयन् ॥ १४ ॥
समन्वितास्तव सुतैः कृष्णार्जुनजिघांसवः ।

हमारे पुत्रोंसे युद्ध करनेको कैसा व्यूह बनाया ? यह घोर युद्ध किस प्रकार हुआ ? और जिस समय युधिष्ठिरकी ओर कर्ण चले थे, तब अर्जुन कहां था ? क्योंकि अर्जुनके पास रहनेसे युधिष्ठिरके पास जानेकी किसकी शक्ति है ? एकले अर्जुनने खाण्डव वनमें सब प्राणियोंको जीता था। कर्णके सिवाय और ऐसा कौन वीर है, जो जीनेकी इच्छा करके अर्जुनसे युद्ध करे ? (७-९)

सञ्जय बोले, हे राजन् ! आप व्यूहों की रचना और अर्जुन आदि सब राजोंका युद्ध सुनिये। आपके व्यूहके दहने पक्षमें कृपाचार्य, महापराक्रमी मागध और यदुकुलश्रेष्ठ कृतवर्मा खडे हुए॥ उस पक्षके पास महारथ शकुनि और उलूक तेज प्रास धारण करनेवाले घुडचढे वीरोंके सहित स्थित होकर तेरी सेनाकी रक्षा करने लगे॥ उनके पास महापराक्रमी गान्धार देशकी सेना और भयानक रूपवाले पिशाचोंके समान दीखनेवाले पर्वतवासी वीर खडे हुए॥ बांये पक्षमें युद्धमे न भागनेवाले महापराक्रमी चौबीस सहस्र संशप्तक वीर

मामनुस्मरती शेते वाहीकं कुरुजाङ्गले ।
शतद्रुकामहं तीर्त्वा तां च रम्यामिरावतीम् ॥ १७ ॥
गत्वा स्वदेशं द्रक्ष्यामि स्थूलशङ्खाः शुभाः स्त्रियः ।
मनःशिलोज्ज्वलापाङ्गयो गौर्यस्त्रिककुदाञ्जनाः ॥१८॥
कम्बलाजिनसंवीताः क्रन्दन्त्यः प्रियदर्शनाः ।
मृदङ्गानकशङ्खानां मर्दलानां च निःस्वनैः ॥ १९ ॥
खरोष्ट्राश्वतरैश्चैव मत्ता यास्यामहे सुखम् ।
शमीपीलुकरीराणां वनेषु सुखवर्त्मसु ॥ २० ॥
अपूपान्सक्तुपिण्डांश्च प्राश्नन्तो मथितान्वितान् ।
पथिसु प्रबला भूत्वा कदा सम्पततोऽध्वगान् ॥ २१ ॥
चेलापहारं कुर्वाणास्ताडयिष्याम भूयसः ।
एवंशीलेषु व्रात्येषु वाहिकेषु दुरात्मसु ॥ २२ ॥
कश्चेतयानो निवसेन्मुहूर्त्तमपि मानवः ।
ईदृशा ब्राह्मणेनोक्ता वाहीका मोघचारिणः ॥ २३ ॥
येषां षड्भागहर्ता त्वमुभयोः शुभपापयोः ।

सोती हुई कुरुजांगलदेशवासी मुझ वाहीक का अवश्य स्मरण करती होगी। इस लिये शतद्रुको और रम्य इरावती नदी को उतार कर तथा अपने देशमें जाकर बडी हड्डीसे युक्त कपालवाली उन सुन्दर स्त्रियोंको देखूंगा॥ अहा! उनके आख कैसे मनःशीलके समान उज्ज्वल है, वे गौरवर्णवाली स्त्रियां आखोंमें अच्छा अञ्जन लगाती है, ऐसी सुन्दर स्त्रियोंको मे कब देखूंगा॥ निश्चयसे उस समय वे स्त्रियां कम्बल और अजिन पहन कर मृदङ्ग, आनक, शङ्ख तथा मर्दल आदि बाजे बजाकर उनके तालमें गीत गाती होगी। उन मदमत्त स्त्रियोंके पास गर्दभ खच्चर और ऊंटोंके ऊपर बैठ कर पीलु शमी और करीरों के वन में कब जाऊगा॥" ( १६—२० )

उस देशके मूर्ख दुरात्मा मनुष्य यही इच्छा करते हैं, कि हम लोग, कब जंगलमें जाकर मांस, सत्तू अन्न और मठा खाते हुए पथिकोंके वस्त्र छीनेंगे और उन्हे मारेंगे। इस प्रकार शील और धर्म-वाह्य वर्तनेवाले उस देशके मनुष्योंके सङ्ग क्षणभर भी नहीं रहना चाहिये। हे शल्य! उन वाहीक देशोंके लोगोंमे तुम षष्ठांश लेते हो इसलिये तुम इनके पुण्य और पापका भी भागी है॥ इस प्रकार उस ब्राह्मणने वाहीक देशके दुष्ट मनुष्योंका

अन्वयुस्तद्रथानीकं क्षरन्त इव तोयदाः ॥ २३ ॥
ते ध्वजैर्वैजयन्तीभिर्ज्वलद्भिः परमायुधैः ।
सादिभिश्चास्थिता रेजुर्द्रुमवन्त इवाचलाः ॥ २४ ॥
तेषां पदातिनागानां पादरक्षाः सहस्रशः ।
पट्टिशासिधराः शूरा बभूवुरनिवर्तिनः ॥ २५ ॥
सादिभिः स्यन्दनैर्नागैरधिकं समलंकृतैः ।
स व्यूहराजो विबभौ देवासुरचमूपमः ॥ २६ ॥
बार्हस्पत्यः सुविहितो नायकेन विपश्चिता ।
नृत्यतीव महाव्यूहः परेषां भयमादधत् ॥ २७ ॥
तस्य पक्षप्रपक्षेभ्यो निष्पतन्ति युयुत्सवः ।
हस्त्यश्वरथमातङ्गाः प्रावृषीव बलाहकाः ॥ २८ ॥
ततः सेनामुखे कर्णं दृष्ट्वा राजा युधिष्ठिरः ।
धनञ्जयममित्रघ्नमेकवीरमुवाच ह ॥ २९ ॥
पश्यार्जुनमहाव्यूहं कर्णेन विहितं रणे ।
युक्तं पक्षैः प्रपक्षैश्च परानीकं प्रकाशते ॥ ३० ॥
तदेतद्वै समालोक्य प्रत्यमित्रं महद्बलम् ।
यथा नाभिभवत्यस्मांस्तथा नीतिर्विधीयताम् ॥ ३१ ॥

ऐसी शोभा बढी जैसी बर्षती हुई मेघकी ॥ महावत, वैजयन्ती माला, चमकते हुए शस्त्र और वीरोंके सहित वे हाथी वृक्षवाले पर्वतोंके समान दीखने लगे ॥ उन हाथियोंके पैरोंकी रक्षाके लिये सहस्रों युद्धसे न लौटनेवाले खड्ग आदि शस्त्र धारण करके वीर चले ॥ २२-२५

घोडे, सजे हुए हाथी, रथ और पैदलोंसे भरा हुआ उस सेनाका व्यूह देवासुर संग्रामकी सेनाके समान शोभित हुआ ॥ बुद्धिमान् कर्णने यह जो शत्रुओंको भय देनेवाला व्यूह बनाया, इस का नाम बार्हस्पत्य व्यूह है। इसमें घोडे, हाथी, नाचते हुएके समान दीखते थे॥ उसके पक्ष और पक्षोंके समीप हाथी, घोडे और रथोंपर चढे हुए वीर वर्षाकालके मेघके समान चलने लगे ॥ २६-२८

कर्णको सेनाके मुखमें खडा देख महाराज युधिष्ठिरने शत्रुनाशन महावीर अर्जुनसे कहा॥ हे अर्जुन! यह देखो कर्णने पक्ष और प्रतिपक्षके सहित कैसा उत्तम व्यूह बनाया है। यह सेना जिस प्रकार हमारी सेनाको दुःख न दे सके, ऐसा उपाय करो॥ २९—३१

मामनुस्मरती शेते वाहीकं कुरुजाङ्गले ।
शतद्रुकामहं तीर्त्वा तां च रम्यामिरावतीम् ॥ १७ ॥
गत्वा स्वदेशं द्रक्ष्यामि स्थूलशङ्खाः शुभाः स्त्रियः ।
मनःशिलोज्ज्वलापाङ्ग्यो गौर्यस्त्रिककुदाञ्जनाः ॥१८॥
कम्बलाजिनसंवीताः क्रन्दन्त्यः प्रियदर्शनाः ।
मृदङ्गानकशङ्खानां मर्दलानां च निःस्वनैः ॥ १९ ॥
खरोष्ट्राश्वतरैश्चैव मत्ता यास्यामहे सुखम् ।
शमीपीलुकरीराणां वनेषु सुखवर्त्मसु ॥ २० ॥
अपूपान्सक्तुपिण्डांश्च प्राश्नन्तो मथितान्वितान् ।
पथिसु प्रबला भूत्वा कदा सम्पततोऽध्वगान् ॥ २१ ॥
चेलापहारं कुर्वाणास्ताडयिष्याम भूयसः ।
एवंशीलेषु व्रात्येषु वाहिकेषु दुरात्मसु ॥ २२ ॥
कश्चेतयानो निवसेन्मुहूर्त्तमपि मानवः ।
ईदृशा ब्राह्मणेनोक्ता वाहीका मोघचारिणः ॥ २३ ॥
येषां षड्भागहर्ता त्वमुभयोः शुभपापयोः ।

सोती हुई कुरुजांगलदेशवासी मुझ वाहीक का अवश्य स्मरण करती होगी । इस लिये शतद्रुको और रम्य इरावती नदी को उतार कर तथा अपने देशमें जाकर बडी हड्डीसे युक्त कपालवाली उन सुन्दर स्त्रियोंको देखूंगा ॥ अहा! उनके आंख कैसे मनःशीलके समान उज्ज्वल हैं, वे गौरवर्णवाली स्त्रियां आखोंमें अच्छा अञ्जन लगाती हैं, ऐसी सुन्दर स्त्रियोंको मैं कब देखूंगा ॥ निश्चयसे उस समय वे स्त्रियां कम्बल और अजिन पहन कर मृदङ्ग, आनक, शङ्ख तथा मर्दल आदि बाजे बजाकर उनके तालमें गीत गाती होंगी। उन मदमत्त स्त्रियोंके पास गर्दभ खच्चर और ऊंटोंके ऊपर बैठ कर पीलु शमी और करीरों के वन में कब जाऊंगा ॥ " ( १६—२० )

उस देशके मूर्ख दुरात्मा मनुष्य यही इच्छा करते है, कि हम लोग, कब जंगलमें जाकर मांस, सत्तू अन्न और मठा खाते हुए पथिकोंके वस्त्र छीनेंगे और उन्हे मारेंगे । इस प्रकार शील और धर्म-बाह्य वर्तनेवाले उस देशके मनुष्योंके सङ्ग क्षणभर भी नहीं रहना चाहिये । हे शल्य! उन वाहीक देशोंके लोगोंमे तुम षष्ठांश लेते हो इसलिये तुम इनके पुण्य और पापका भी भागी है ॥ इस प्रकार उस ब्राह्मणने वाहीक देशके दुष्ट मनुष्योंका

अथ तं रथमायान्तं दृष्ट्वात्यद्भुतदर्शनम्।
उवाचाधिरथिं शल्यः पुनस्तं युद्धदुर्मदम् ॥ ४० ॥
अयं स रथ आयातः श्वेताश्वः कृष्णसारथिः।
दुर्वारः सर्वसैन्यानां विपाकः कर्मणामिव ॥ ४१ ॥
निघ्नन्नमित्रान्कौन्तेयो यं कर्ण परिपृच्छसि।
श्रूयते तुमुलः शब्दो यथा मेघस्वनो महान् ॥ ४२ ॥
ध्रुवमेतौ महात्मानौ वासुदेवधनञ्जयौ।
एष रेणुः समुद्भूतो दिवमावृत्य तिष्ठति ॥ ४३ ॥
चक्रनेमिप्रणुन्नेव कम्पते कर्ण मेदिनी।
प्रवात्येष महावायुरभितस्तव वाहिनीम् ॥ ४४ ॥
क्रव्यादा व्याहरन्त्येते मृगाः क्रन्दन्ति भैरवम्।
पश्य कर्ण महाघोरं भयदं लोमहर्षणम् ॥ ४५ ॥
कबन्धं मेघसङ्काशं भानुमावृत्य संस्थितम्।
पश्य यूथैर्बहुविधैर्मृगाणां सर्वतोदिशम् ॥ ४६ ॥
बलिभिर्दृप्तशार्दूलैरादित्योऽभिनिरीक्ष्यते।
पश्य कङ्कांश्च गृध्रांश्च समवेतान्सहस्रशः ॥ ४७ ॥
स्थितानभिमुखान्घोरानन्योन्यमभिभाषतः।

उस विचित्र रथको आते देख अधिरथपुत्र युद्धदुर्मद कर्णसे शल्य बोले, देखो सफेद घोडे और कृष्ण सारथीके सहित प्रारब्धके समान सब सेनासे निवारण न करने योग्य अर्जुनका रथ चला आता है॥ हे कर्ण! तुम जिस अर्जुनको पूछ रहे थे, यह मेघके समान उसीके रथका शब्द आरहा है और वही कुन्तीपुत्र अर्जुन शत्रुओंको नाश करते हुए चले आते हैं। वह देखो महात्मा कृष्ण और अर्जुनके रथकी धूल उडकर आकाशको चली जाती है। यह देखो उनके रथके पहियोंसे पृथ्वी कांपने लगी। तुम्हारी सेनाके चारों ओर घोर वायु चलने लगा॥ (४०—४४)

हे कर्ण! यह देखो मांस खानेवाले जन्तु बोलने लगे और हरिन रोने लगे। यह घोर शकुन लोकके नाश करनेका है, यह देखो शिर कटे मनुष्यके समान मेघने सूर्यको घेर रक्खा है॥ हमारी सेनाके चांई ओर हरिनोंके झुण्ड चले जाते हैं। यह देखो अनेक शार्दूल सूर्यकी ओर देख रहे हैं, ये देखो सहस्र गिद्ध और कंकपक्षी यहां इकट्टे हुए हैं।

आरट्टा नाम ते देशा नष्टधर्मा न तान्व्रजेत्।
व्रात्यानां दासमीयानां वाहीकानामयज्वनाम् ॥ ३३ ॥
न देवाः प्रतिगृह्णन्ति पितरो ब्राह्मणास्तथा।
तेषां प्रणष्टधर्माणां वाहीकानामिति श्रुतिः ॥ ३४ ॥
ब्राह्मणेन तथा प्रोक्तं विदुषा साधु संसदि।
काष्ठकुण्डेषु वाहीका मृन्मयेषु च भुञ्जते ॥ ३५ ॥
सक्तुमद्यावलिप्तेषु श्वावलीढेषु निर्घृणाः।
आविकं चौष्ट्रिकं चैव क्षीरं गार्दभमेव च ॥ ३६ ॥
तद्विकारांश्च वाहीकाः खादन्ति च पिबन्ति च।
पुत्रसङ्करिणो जाल्माः सर्वान्नक्षीरभोजनाः ॥ ३७ ॥
आरट्टा नाम वाहीकाः वर्जनीया विपश्चिता।
हन्त शल्य विजानीहि हन्त भूयो ब्रवीमि ते ॥ ३८ ॥
यदन्योऽप्युक्तवान्मह्यं ब्राह्मणः कुरुसंसदि।
युगन्धरे पयः पीत्वा प्रोष्य चाप्यच्युतस्थले ॥ ३९ ॥
तद्वद्भूतिलये स्नात्वा कथं स्वर्गं गमिष्यति।
पञ्च नद्यो वहन्त्येता यत्र निःसृत्य पर्वतात् ॥ ४० ॥

उन देशोंका नाम आरट्ट है। वहांके मनुष्य अधर्मी होते हैं, इस लिये उन देशोंमें नहीं जाना चाहिये। २९-३३

अधर्मी, उपनयनादि संस्कार हीन, शूद्रादिकोंसे अन्यजातीय स्त्रियोंमें जन्म लेने वाले, यज्ञ रहित, वाहीकोंके पिण्डादिकोंको देवता ब्राह्मण और पितर नहीं ग्रहण करते॥ उस ब्राह्मणने यहभी कहा कि अधर्मी वाहीक मिट्टी और काठके वर्तनोंमें खाते हैं, उन्हीं सत्तू और मद्य लगे वर्तनोंको कुत्ता चाट जाता है फिर उसीमें वे लोग बकरी, गधी और ऊंटनीका दूध तथा उनके दूधसे बने हुए घृतादि पदार्थ सेवन करते हैं और पीते हैं, उनको कोई अभक्ष्य अन्न नहीं है। उनकी संतति व्यभिचारसे उत्पन्न होती है, इसलिये हे शल्य! अत्यन्त दोषी आरट्ट नामक वाहीक देश को नहीं जाना चाहिये। (३३-३८)

हे शल्य! हम तुमसे और वर्णन करते हैं, सुनो। किसी समय एक ब्राह्मणने मुझसे महाराज धृतराष्ट्रकी सभामें कहा था, कि युगन्धर नगरमें दूध पीना, अच्युत स्थलमें रहना और भूतिलयमें स्नान करना इन तीनोंके करनेसे स्वर्ग कैसे प्राप्त हो सकता है? जिस स्थानमें

सपताका रथाश्चैते पञ्चालानां महात्मनाम् ॥ ५६ ॥
पश्य कुन्तीसुतं वीरं बीभत्सुमपराजितम् ।
प्रधर्षयितुमायान्तं कपिप्रवरकेतनम् ॥ ५७ ॥
एष ध्वजाग्रे पार्थस्य प्रेक्षणीयः समन्ततः ।
दृश्यते वानरो भीमो द्विषतामघवर्धनः ॥ ५८ ॥
एतच्चक्रं गदा शार्ङ्गं शङ्खः कृष्णस्य धीमतः ।
अत्यर्थं भ्राजते कृष्णे कौस्तुभस्तु मणिस्ततः ॥ ५९ ॥
एष शार्ङ्गगदापाणिर्वासुदेवोऽतिवीर्यवान् ।
वाहयन्नेति तुरगान्पाण्डुरान्वातरंहसः ॥ ६० ॥
एतत्कूजति गाण्डीवं विकृष्टं सव्यसाचिना ।
एते हस्तवता मुक्ता घ्नन्त्यमित्राञ्शिताः शराः ॥ ६१ ॥
विशालायतताम्राक्षैः पूर्णचन्द्रनिभाननैः ।
एषा भूः कीर्यते राज्ञां शिरोभिरपलायिनाम् ॥ ६२ ॥
एते सुपरिघाकाराः पुण्यगन्धानुलेपनाः ।
उद्यतायुधशौण्डानां पात्यन्ते सायुधा भुजाः ॥ ६३ ॥
निरस्तनेत्रजिह्वाश्च वाजिनः सह सादिभिः ।

का कन कन शब्द हो रहा है॥ ५१-५५

इधर देखो पताका युक्त रथों पर बैठे हुए महात्मा पाञ्चाल विमानों पर बैठे हुए देवतोंके समान विराज रहे हैं। और देखो शत्रुओंको कंपाते हुए हनुमानकी ध्वजायुक्त रथ पर बैठे महायोद्धा अर्जुन चले आते है। ये देखो अर्जुनकी ध्वजा पर शत्रुओंको भय चढानेवाले भयानक रूपधारी हनुमान बैठे हैं॥ (५६—५८)

ये देखो इसी रथ पर श्रीकृष्णके शार्ङ्ग धनुष, चक्र, पांचजन्य शङ्ख रक्खे हैं। उनके हृदयमें कौस्तुभ मणि कैसी शोभा देरही है, यही शार्ङ्ग धनुष, कौमोदकी गदा और सुदर्शन चक्रधारी श्रीकृष्ण अर्जुनके सफेद घोडोंको हांक रहे हैं। ये देखो अर्जुनके गाण्डीव धनुषका शब्द भी यहां आने लगा, और ये शीघ्र बाण चलानेवाले अर्जुनके बाण तुम्हारी सेनाके वीरोंको मारने लगे॥ (५९—६१)

ये देखो कमल नेत्र,सुन्दर मुखवाले, युद्धसे न भागनेवाले, राजोंके शिर कट कट कर पृथ्वीमें गिरने लगे॥ ये देखो चन्दन और अगर लगे बडे परिघ समान सुन्दर शस्त्रधारी वीरोंके हाथ कट कट

आरट्टा नाम ते देशा नष्टधर्मा न तान्व्रजेत् ।
व्रात्यानां दासमीयानां वाहीकानामयज्वनाम् ॥ ३३ ॥
न देवाः प्रतिगृह्णन्ति पितरो ब्राह्मणास्तथा ।
तेषां प्रणष्टधर्माणां वाहीकानामिति श्रुतिः ॥ ३४ ॥
ब्राह्मणेन तथा प्रोक्तं विदुषा साधु संसदि ।
काष्ठकुण्डेषु वाहीका मृन्मयेषु च भुञ्जते ॥ ३५ ॥
सक्तुमद्यावलिप्तेषु श्वावलीढेषु निर्घृणाः ।
आविकं चौष्ट्रिकं चैव क्षीरं गार्दभमेव च ॥ ३६ ॥
तद्विकारांश्च वाहीकाः खादन्ति च पिबन्ति च ।
पुत्रसङ्करिणो जाल्माः सर्वान्नक्षीरभोजनाः ॥ ३७ ॥
आरट्टा नाम वाहीकाः वर्जनीया विपश्चिता ।
हन्त शल्य विजानीहि हन्त भूयो ब्रवीमि ते ॥ ३८ ॥
यदन्योऽप्युक्तवान्मह्यं ब्राह्मणः कुरुसंसदि ।
युगन्धरे पयः पीत्वा प्रोष्य चाप्यच्युतस्थले ॥ ३९ ॥
तद्वद्भूतिलये स्नात्वा कथं स्वर्गं गमिष्यति ।
पञ्च नद्यो वहन्त्येता यत्र निःसृत्य पर्वतात् ॥ ४० ॥

---

उन देशोंका नाम आरट्ट है । वहांके मनुष्य अधर्मी होते है, इस लिये उन देशोंमें नहीं जाना चाहिये । २९-३३

अधर्मी, उपनयनादि संस्कार हीन, शूद्रादिकोंसे अन्यजातीय स्त्रियोंमें जन्म लेने वाले, यज्ञ रहित, वाहीकोंके पिण्डादिकोंको देवता ब्राह्मण और पितर नहीं ग्रहण करते ॥ उस ब्राह्मणने यहभी कहा कि अधर्मी वाहीक मिट्टी और काठके वर्तनोंमें खाते है, उन्हीं सत्तू और मद्य लगे वर्तनोंको कुत्ता चाट जाता है, फिर उसीमें वे लोग बकरी, गधी और ऊंटनीका दूध तथा उनके दूधसे बने हुए घृतादि पदार्थ सेवन करते है और पीते है, उनको कोई अभक्ष्य अन्न नहीं है। उनकी संतति व्यभिचारसे उत्पन्न होती है, इसलिये हे शल्य! अत्यन्त दोषी आरट्ट नामक वाहीक देश को नहीं जाना चाहिये । (३३-३८)

हे शल्य! हम तुमसे और वर्णन करते है, सुनो । किसी समय एक ब्राह्मणने हमसे महाराज धृतराष्ट्रकी सभामें कहा था, कि युगन्धर नगरमें दूध पीना, अच्युत स्थलमें रहना और भूतिलयमें स्नान करना इन तीनोंके करनेसे स्वर्ग कैसे प्राप्त हो सकता है? जिस स्थानमें

तं चेद्धन्तासि राधेय त्वं नो राजा भविष्यसि ॥ ७२ ॥
एष संशप्तकाहूतस्तानेवाभिमुखो गतः ।
करोति कदनं चैषां संग्रामे द्विषतां बली ॥ ७३ ॥
इति ब्रुवाणं मद्रेशं कर्णः प्राहातिमन्युना ।
पश्य संशप्तकैः क्रुद्धैः सर्वतः समभिद्रुतः ॥ ७४ ॥
एष सूर्य इवाम्भोदैश्छन्नः पार्थो न दृश्यते ।
एतदन्तोऽर्जुनः शल्य निमग्नो योधसागरे ॥ ७५ ॥
शल्य उवाच— वरुणं कोऽम्भसा हन्यादिन्धनेन च पावकम् ।
को वानिलं निगृह्णीयात्पिबेद्वा को महार्णवम् ॥ ७६ ॥
ईदृग्रूपमहं मन्ये पार्थस्य युधि विग्रहम् ।
नहि शक्योऽर्जुनो जेतुं युधि सेन्द्रैः सुरासुरैः ॥ ७७ ॥
अथवा परितोषस्ते वाचोक्त्वा सुमना भव ।
न स शक्यो युधा जेतुमन्यं कुरु मनोरथम् ॥ ७८ ॥
बाहुभ्यामुद्धरेद्भूमिं दहेत्क्रुद्ध इमाः प्रजाः ।
पातयेत्त्रिदिवाद्देवान्योऽर्जुनं समरे जयेत् ॥ ७९ ॥

और गाण्डीव धनुष है यदि उस अर्जुनको आज मारोगे तो तुम ही हमारे राजा हो जाओगे ॥ देखो अर्जुनको संशप्तक सेनाने पुकारा और ये उनसे युद्ध करनेको जाते हैं। आह! अर्जुनने अनेक संशप्तकोंको मार भी डाला ॥ (६९—७३)

मद्रराज शल्यके वचन सुन कर्णने महाक्रोध करके कहा, ये देखो संशप्तकों ने क्रोध करके अर्जुनको चारों ओरसे घेर लिया ॥ अब अर्जुन मेघमें छिपे सूर्यके समान नहीं दिखाई देते। हे शल्य! ये देखो इस सेनासमुद्रमें अर्जुन डूबाही चाहता है ॥ (७४—७५)

शल्य बोले, जलसे वरुणको और इन्धनसे अग्निको कौन मार सक्ता है। भला समुद्रको कौन पीसक्ता है? और वायुको कौन रोक सक्ता है? मै इन्हीं सबके समान अर्जुनको भी मानता हूं। उन्हें राक्षस और देवतोंके सहित इन्द्र भी नहीं जीत सक्ते और यदि तुम वचनोंहीसे जीत समझते हो तो अपने मनमें कहकर प्रसन्न हुआ करो। अर्जुनको युद्धमें जीत सकते नहीं हो, इस लिये कोई दूसरा मनोरथ करो ॥ जो अर्जुनको युद्धमें मार सके वह अपने हाथोंपर पृथ्वीको उठा सकता है और क्रोध करके प्रजाको भस्म कर सक्ता है और देवतोंको स्वर्गसे गिरा सक्ता है ॥ (७६ ७९)

कर्ण उवाच — हन्त शल्य विजानीहि हन्त भूयो ब्रवीमि ते ।
उच्यमानं मया सम्यक्त्वमेकाग्रमनाः शृणु ॥ १ ॥
ब्राह्मणः किल नो गेहमध्यगच्छत्पुरातिथिः ।
आचारं तत्र सम्प्रेक्ष्य प्रीतो वचनमब्रवीत् ॥ २ ॥
मया हिमवतः शृङ्गमेकेनाध्युषितं चिरम् ।
दृष्टाश्च बहवो देशा नानाधर्मसमावृताः ॥ ३ ॥
न च केन च धर्मेण विरुध्यन्ते प्रजा इमाः ।
सर्वे हि तेऽब्रुवन्धर्मं यदुक्तं वेदपारगैः ॥ ४ ॥
अटना तु ततो देशान्नानाधर्मसमाकुलान् ।
आगच्छता महाराज वाहीकेषु निशामितम् ॥ ५ ॥
तत्र वै ब्राह्मणो भूत्वा ततो भवति क्षत्रियः ।
वैश्यः शूद्रश्च वाहीकस्ततो भवति नापितः ॥ ६ ॥
नापितश्च ततो भूत्वा पुनर्भवति ब्राह्मणः ।
द्विजो भूत्वा च तत्रैव पुनर्दासोऽभिजायते ॥ ७ ॥
भवन्त्येककुले विप्राः प्रसृष्टाः कामचारिणः ।
गान्धारा मद्रकाश्चैव वाहीकाश्चाल्पचेतसः ॥ ८ ॥
एतन्मया श्रुतं तत्र धर्मसङ्करकारकम् ।
कृत्स्नामटित्वा पृथिवीं वाहीकेषु विपर्ययः ॥ ९ ॥

---

कर्णपर्वमें पचालिस अध्याय ।

कर्ण बोले, हे शल्य ! हमने जो कहा, सो तुमने सुना ? अब हम और कहते हैं एकाग्रचित्त होकर सुनो ॥ पूर्वकालमें एक अतिथि ब्राह्मण हमारे घर आया था, वह हमारे आचारको देख बहुत प्रसन्न हुआ और कहने लगा, कि मैं एकला ही हिमाचलके शिखर और अनेक देशोंमें घूमा हूं, वेद जाननेवाले ब्राह्मणोंने जैसा धर्म कहा है सो मैं तुमसे कहता हूं । यह सब प्रजा धर्मसे विरुद्ध नहीं रहती, अर्थात् सब जगत्के मनुष्य कुछ न कुछ धर्म कहते है ॥ (१-४)

हे महाराज ! हम अनेक देशोंमें घूमते हुए वाहीकदेशमें पहुंचे, उस देशमें जो जन्म लेता है, सो पहले ब्राह्मण, फिर क्षत्री, फिर वैश्य, फिर शूद्र, फिर नाई होता है; नाईसे ब्राह्मण और ब्राह्मणोंसे दास होजाता है ॥ एक वंशके अनेक ब्राह्मण अधर्म करने लगते है । गान्धार, वाहीक और मद्रदेशके मनुष्य मूर्ख होते है ॥ ये धर्म संकर कारक

धृतराष्ट्र उवाच— तथा व्यूढेष्वनीकेषु संसक्तेषु च सञ्जय।
संशप्तकान्कथं पार्थो गतः कर्णश्च पाण्डवान् ॥ १ ॥
एतद्विस्तरशो युद्धं प्रब्रूहि कुशलो ह्यसि।
नहि तृप्यामि वीराणां शृण्वानो विक्रमान्रणे ॥ २ ॥

सञ्जय उवाच— तदास्थितमवज्ञाय प्रत्यमित्रबलं महत्।
अव्यूहतार्जुनो व्यूहं पुत्रस्य तव दुर्नये ॥ ३ ॥
तत्सादिनागकलिलं पदातिरथसंकुलम्।
धृष्टद्युम्नमुखं व्यूहमशोभत महद्बलम् ॥ ४ ॥
पारावतसवर्णाश्वश्चन्द्रादित्यसमद्युतिः।
पार्षतः प्रबभौ धन्वी कालो विग्रहवानिव ॥ ५ ॥
पार्षतं जुगुपुः सर्वे द्रौपदेया युयुत्सवः।
दिव्यवर्मायुधधराः शार्दूलसमविक्रमाः ॥ ६ ॥
सानुगा दीप्तवपुषश्चन्द्रं तारागणा इव।
अथ व्यूढेष्वनीकेषु प्रेक्ष्य संशप्तकान्रणे ॥ ७ ॥
क्रुद्धोऽर्जुनोऽभिदुद्राव व्याक्षिपन्गाण्डिवं धनुः।

कर्णपर्वमें सैंतालिस अध्याय।

धृतराष्ट्र बोले, हे सञ्जय! इस प्रकार सेना मिलनेके पश्चात् अर्जुनने संशप्तकों की और कर्णने पाण्डवोंकी सेनाके सङ्ग कैसे युद्ध किया? तुम इस विषयमें कुशल हो, इस लिये हमसे विस्तारपूर्वक कहो; हम वीरोंका पराक्रम सुनकर तृप्त नहीं होते ॥ (१—२)

सञ्जय बोले, तुम्हारे पुत्रकी बडी भारी सेनाका व्यूह देखकर अर्जुनने भी अपनी सेनाका व्यूह बनाया॥ उस हाथी, घोडे और पैदलोंसे भरे हुए पाण्डवोंकी सेनाके व्यूहके मुखमें सेनापति धृष्टद्युम्न खडे होकर शोभित होने लगे॥ उस समय कबूतर रङ्गके समान घोडोंके रथ पर चढे हुए, धनुषधारी धृष्टद्युम्नका तेज सूर्य और चन्द्रमाके समान बना। उस समय धृष्टद्युम्नको सब देहधारी कालके समान देखने लगे॥ शार्दूलके समान पराक्रमी दिव्य कवच और शस्त्रधारी द्रौपदीके पांचों पुत्र अपने मामा धृष्टद्युम्नकी रक्षा करने लगे॥ (३—६)

उस समय शस्त्रधारी द्रौपदीके पुत्रादि अनेक वीरोंके बीचमें खडे हुए धृष्टद्युम्न तारोंके बीच चन्द्रमाके समान शोभित हुए। इस प्रकार व्यूह रचना होनेपर अर्जुन भी क्रोध करके अपने धनुषको घुमाते हुए संशप्तकोंसे युद्ध करनेको

त्वं तस्य गोप्ता च जनस्य राजा षड्भागहर्त्ता शुभदुष्कृतस्य ॥१७॥
अथवा दुष्कृतस्य त्वं हर्त्ता तेषामरक्षिता ।
रक्षिता पुण्यभाग्राजा प्रजानां त्वं ह्यपुण्यभाक् ॥ १८ ॥
पूज्यमाने पुरा धर्मे सर्वदेशेषु शाश्वते ।
धर्मं पाञ्चनदं दृष्ट्वा धिगित्याह पितामहः ॥ १९ ॥
व्रात्यानां दासमीयानां कृतेऽप्यशुभकर्मणाम् ।
ब्रह्मणा निन्दिते धर्मे स त्वं लोके किमब्रवीः ॥ २० ॥
इति पाञ्चनदं धर्ममवमेने पितामहः ।
स्वधर्मस्थेषु वर्णेषु सोऽप्येतान्नाभ्यपूजयत् ॥ २१ ॥
हन्त शल्य विजानीहि हन्त भूयो ब्रवीमि ते ।
कल्माषपादः सरसि निमज्जन्राक्षसोऽब्रवीत् ॥ २२ ॥
क्षत्रियस्य मलं भैक्ष्यं ब्राह्मणस्याव्रतं मलम् ।
मलं पृथिव्या वाहीकाः स्त्रीणां मद्रस्त्रियो मलम् ॥ २३ ॥
निमज्जमानमुद्धृत्य कश्चिद्राजा निशाचरम् ।
अपृच्छत्तेन चाख्यातं प्रोक्तवांस्तन्निबोध मे ॥ २४ ॥
मानुषाणां मलं म्लेच्छा म्लेच्छानामौष्ट्रिका मलम् ।
औष्ट्रिकाणां मलं षण्ढाः षण्ढानां राजयाजकाः ॥२५॥

भागी हो, अथवा तुम केवल प्रजाके अधर्महीके भागी हो, क्योंकि प्रजाकी रक्षा नहीं करते। प्रजाकी रक्षा करनेवाला राजा धर्मका भागी होता है। ब्रह्माने सब देशोंमें सनातन धर्मको देख और पञ्जाबमें नीच धर्मको देख उस देशको बहुत धिक्कार दिया। तुम्हारा देश पतित है, उस देशके मनुष्य सब दास और महापापी होते हैं। तुम भी उसी देशमें उत्पन्न हुए हो, तुम धर्म क्या जानो? तुम्हारे देशकी ब्रह्माने निन्दा की है। उस देशके धर्माचरण करनेवाले मनुष्य भी उत्तम नहीं माने जाते हैं। १७-२१

हे शल्य! हमने जो कहा, सो आपने समझा? और भी कहते हैं, उसे सुनो। कल्माषपाद नाम राक्षसने तलावमें स्नान करते हुए यह कहा था, जैसे क्षत्रियोंमें भीख मांगनेवाला क्षत्रिय, ब्राह्मणोंमें व्रतहीन ब्राह्मण और स्त्रियोंमें मद्र देशकी स्त्रियां नीच है, वैसे ही पृथ्वीमें वाहीक देश नीच है। किसी राजाने उस राक्षस को जलसे निकाला और पूछा, उसने जो कुछ उत्तर दिया सो हम तुमसे कहते हैं। मनुष्योंमें म्लेच्छ, म्लेच्छोंमें तेली,

हृष्टसेनाः सुसरंब्धा रथानीकप्रहारिणः ।
कोसलैः काश्यमत्स्यैश्च कारूषैः केकयैरपि ॥ १७ ॥
शूरसेनैः शूरवरैर्युयुधुर्युद्धदुर्मदाः ।
तेषामन्तकरं युद्धं देहपाप्मासुनाशनम् ॥ १८ ॥
क्षत्रविट्शूद्रवीराणां धर्म्यं स्वर्ग्यं यशस्करम् ।
दुर्योधनोऽथ सहितो भ्रातृभिर्भरतर्षभ ॥ १९ ॥
गुप्तः कुरुप्रवीरैश्च मद्राणां च महारथैः ।
पाण्डवैः सह पाञ्चालैश्चेदिभिः सात्यकेन च ॥ २० ॥
युध्यमानं रणे कर्णं कुरुवीरोऽभ्यपालयत् ।
कर्णोऽपि निशितैर्बाणैर्विनिहत्य महाचमूम् ॥ २१ ॥
प्रमृद्य च रथश्रेष्ठान्युधिष्ठिरमपीडयत ।
विवस्त्रायुधदेहासून्कृत्वा शत्रून्सहस्रशः ॥ २२ ॥
युक्त्वा स्वर्गयशोभ्यां च स्वेभ्यो मुदमुदावहत् ।
एवं मारिष संग्रामो नरवाजिगजक्षयः ।
कुरूणां सृञ्जयानां च देवासुरसमोऽभवत् ॥ २३ ॥ [२१९८]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां कर्णपर्वणि
सकुलयुद्धे त्रिचत्वारिंशोऽध्यायः ॥ ४७ ॥

बैठे हुए वीरोंको मारने लगे। ये लोग कोसल, काशी, मत्स्य, कारुष, कैकय और शूरसेन देशके अत्यन्त शूर क्षत्रियोंसे युद्ध करने लगे। यह धर्मके अनुसार होनेवाला घोर युद्ध क्षत्री, वैश्य और वीर शूद्रोंको स्वर्ग पहुंचानेवाला, यश देनेवाला और पाप, प्राण तथा देहका नाश करनेवाला हुआ ॥ ( १५-१९)

हे भरतकुल सिंह! अनन्तर राजा दुर्योधन अपने भाइयोंके समेत कुरु और मद्रदेशके महारथ वीरोंके सहित चेदि, कैकय, पांचाल, सात्यकि और पाण्डवोंके वीरोंसे युद्ध करते हुए कर्णकी रक्षा करने लगे। कर्ण भी अपने तेज बाणोंसे पाण्डवोंकी सेनाको मार कर युधिष्ठिरसे युद्ध करने गये, अनेक वीरोंको वस्त्र शस्त्र और कवचोंसे रहित करके तथा अनेकोंको स्वर्ग पहुंचाकर अपनी सेनाको प्रसन्न किया। हे धृतराष्ट्र! इस प्रकार यह सृञ्जय और कुरुवंशी क्षत्रियोंका नाश करनेवाला तथा हाथी, घोडोंका नाश करनेवाला युद्ध देवासुर संग्रामके तुल्य हुआ ॥ (१९—२३) [२१९८]

कर्णपर्वमें सैंतालिस अध्याय समाप्त ।

त्वं तस्य गोप्ता च जनस्य राजा षड्भागहर्त्ता शुभदुष्कृतस्य ॥१७॥
अथवा दुष्कृतस्य त्वं हर्त्ता तेषामरक्षिता ।
रक्षिता पुण्यभाग्राजा प्रजानां त्वं ह्यपुण्यभाक् ॥ १८ ॥
पूज्यमाने पुरा धर्मे सर्वदेशेषु शाश्वते ।
धर्मं पाञ्चनदं दृष्ट्वा धिगित्याह पितामहः ॥ १९ ॥
व्रात्यानां दाशमीयानां कृतेऽप्यशुभकर्मणाम् ।
ब्रह्मणा निन्दिते धर्मे स त्वं लोके किमब्रवीः ॥ २० ॥
इति पाञ्चनदं धर्ममवमेने पितामहः ।
स्वधर्मस्थेषु वर्णेषु सोऽप्येतान्नाभ्यपूजयत् ॥ २१ ॥
हन्त शल्य विजानीहि हन्त भूयो ब्रवीमि ते ।
कल्माषपादः सरसि निमज्जन्राक्षसोऽब्रवीत् ॥ २२ ॥
क्षत्रियस्य मलं भैक्ष्यं ब्राह्मणस्याव्रतं मलम् ।
मलं पृथिव्या बाहीकाः स्त्रीणां मद्रस्त्रियो मलम् ॥ २३ ॥
निमज्जमानमुद्धृत्य कश्चिद्राजा निशाचरम् ।
अपृच्छत्तेन चाख्यातं प्रोक्तवांस्तन्निबोध मे ॥ २४ ॥
मानुषाणां मलं म्लेच्छा म्लेच्छानामौष्ट्रिका मलम् ।
औष्ट्रिकाणां मलं षण्ढाः षण्ढानां राजयाजकाः ॥२५॥

---

भागी हो, अथवा तुम केवल प्रजाके अधर्महीके भागी हो, क्योंकि प्रजाकी रक्षा नहीं करते। प्रजाकी रक्षा करनेवाला राजा धर्मका भागी होता है। ब्रह्माने सब देशोंमें सनातन धर्मको देख और पञ्जाबमें नीच धर्मको देख उस देशको बहुत धिक्कार दिया॥ तुम्हारा देश पतित है, उस देशके मनुष्य सब दास और महापापी होते हैं। तुम भी उसी देशमें उत्पन्न हुए हो, तुम धर्म क्या जानो? तुम्हारे देशकी ब्रह्माने निन्दा की है। उस देशके धर्माचरण करनेवाले मनुष्य भी उत्तम नहीं माने जाते हैं। १७-२१

हे शल्य! हमने जो कहा, सो आपने समझा? और भी कहते हैं, उसे सुनो। कल्माषपाद नाम राक्षसने तलावमें स्नान करते हुए यह कहा था, जैसे क्षत्रियोंमें भीख मांगनेवाला क्षत्रिय, ब्राह्मणोंमें व्रतहीन ब्राह्मण और स्त्रियोंमें मद्र देशकी स्त्रियां नीच हैं, वैसे ही पृथ्वीमें वाहीक देश नीच है'। किसी राजाने उस राक्षसको जलसे निकाला और पूछा, उसने जो कुछ उत्तर दिया सो हम तुमसे कहते हैं। मनुष्योंमें म्लेच्छ, म्लेच्छोंमें तेली,

हृष्टसेनाः सुसंरब्धा रथानीकप्रहारिणः।
कोसलैः काश्यमत्स्यैश्च कारूषैः केकयैरपि ॥ १७ ॥
शूरसेनैः शूरवरैर्युयुधुर्युद्धदुर्मदाः।
तेषामन्तकरं युद्धं देहपाप्मासुनाशनम् ॥ १८ ॥
क्षत्रविट्शूद्रवीराणां धर्म्यं स्वर्ग्यं यशस्करम्।
दुर्योधनोऽथ सहितो भ्रातृभिर्भरतर्षभ ॥ १९ ॥
गुप्तः कुरुप्रवीरैश्च मद्राणां च महारथैः।
पाण्डवैः सह पाञ्चालैश्चेदिभिः सात्यकेन च ॥ २० ॥
युध्यमानं रणे कर्णं कुरुवीरोऽभ्यपालयत्।
कर्णोऽपि निशितैर्बाणैर्विनिहत्य महाचमूम् ॥ २१ ॥
प्रमृद्य च रथश्रेष्ठान्युधिष्ठिरमपीडयत।
विवस्त्रायुधदेहासून्कृत्वा शत्रून्सहस्रशः ॥ २२ ॥
युक्त्वा स्वर्गयशोभ्यां च स्वेभ्यो मुदमुदावहत्।
एवं मारिष संग्रामो नरवाजिगजक्षयः।
कुरूणां सृञ्जयानां च देवासुरसमोऽभवत् ॥ २३ ॥ [२११८]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां कर्णपर्वणि
सकुलयुद्धे त्रिचत्वारिंशोऽध्यायः ॥ ४७ ॥

बैठे हुए वीरोंको मारने लगे। ये लोग कोसल, काशी, मत्स्य, कारुप, कैकय और शूरसेन देशके अत्यन्त शूर क्षत्रियों से युद्ध करने लगे। यह धर्मके अनुसार होनेवाला घोर युद्ध क्षत्री, वैश्य और वीर शूद्रोंको स्वर्ग पहुंचानेवाला, यश देनेवाला और पाप, प्राण तथा देहका नाश करनेवाला हुआ॥ (१५-१९)

हे भरतकुल सिंह! अनन्तर राजा दुर्योधन अपने भाइयोंके समेत कुरु और मद्रदेशके महारथ वीरोंके सहित चेदि, कैकय, पांचाल, सात्यकि और पाण्डवोंके वीरोंसे युद्ध करते हुए कर्णकी रक्षा करने लगे। कर्ण भी अपने तेज बाणोंसे पाण्डवोंकी सेनाको मार कर युधिष्ठिरसे युद्ध करने गये, अनेक वीरोंको वस्त्र शस्त्र और कवचोंसे रहित करके तथा अनेकोंको स्वर्ग पहुंचाकर अपनी सेनाको प्रसन्न किया। हे धृतराष्ट्र! इस प्रकार यह सृञ्जय और कुरुवंशी क्षत्रियोंका नाश करनेवाला तथा हाथी, घोडोंका नाश करनेवाला युद्ध देवासुर संग्रामके तुल्य हुआ॥ (१९-२३) [२११८]

कर्णपर्वमें सैंतालिस अध्याय समाप्त।

तथा रक्षःपिशाचाश्च हिमवन्तं नगोत्तमम् ।
गुह्यकाश्च महाराज पर्वतं गन्धमादनम् ॥ ३३ ॥
ध्रुवः सर्वाणि भूतानि विष्णुः पाति जनार्दनः ।
इङ्गितज्ञाश्च मगधाः प्रेक्षितज्ञाश्च कोसलाः ॥ ३४ ॥
अर्धोक्ताः कुरुपाञ्चालाः शाल्वाः कृत्स्नानुशासनाः ।
पार्वतीयाश्च विषमा यथैव शिबयस्तथा ॥ ३५ ॥
सर्वज्ञा यवना राजञ्शूराश्चैव विशेषतः ।
म्लेच्छाः स्वसंज्ञानियता नानुक्तमितरे जनाः॥ ३६ ॥
प्रतिरब्धास्तु वाहीका न च केचन मद्रकाः ।
स त्वमेतादृशः शल्य नोत्तरं वक्तुमर्हसि ॥
पृथिव्यां सर्वदेशानां मद्रको मलमुच्यते ॥ ३७ ॥
सीधोः पानं गुरुतल्पावमर्दो भ्रूणहत्या परवित्तापहारः ।
येषां धर्मरतान्प्रति नास्त्यधर्म आरट्टजान्पाञ्चनदान्धिगस्तु॥३८ ॥
एतज्ज्ञात्वा जोषमास्स्व प्रतीपं मा स्म वै कृथाः ।
मा त्वां पूर्वमहं हत्वा हनिष्ये केशवार्जुनौ ॥ ३९ ॥
शल्य उवाच— आतुराणां परित्यागः स्वदारसुतविक्रयः ।

सहित रक्षा करते हैं । पर्वत श्रेष्ठ हिमाचल पर राक्षस और पिशाच, तथा गन्धमादन पर गुह्यक रहते हैं, ध्रुव भी उत्तर ही दिशामें रहते हैं । भगवान् विष्णु सब जगत्की रक्षा करते हैं । (३०-३४)

मगध देशके मनुष्य शरीरके चिन्होंसे मनुष्यको पहचानते हैं । कोशल देशीय देखकर; कुरु और पाञ्चाल देशके मनुष्य आधी बात सुनकर; शाल्वदेशके मनुष्य सब बात सुनकर। पर्वत निवासी दुःखसे साध्य और शिबि देशके मनुष्य भी शाल्व देशके मनुष्योंके तुल्य हैं॥ हे राजन्! यवन सर्वज्ञ और बडे शूरवीर होते हैं । जिन मनुष्योंको हमने नहीं कहा, वे सब म्लेच्छ हैं । हे शल्य ! वाहीक और मद्र देशके मनुष्य कठोरवादी होते हैं । अब तुम हमारे इस वचनके उत्तर देने योग्य नहीं रहे । पृथ्वीके सब देशोंका मल मद्र देश है, मद्य पीना, गुरुके पलङ्ग पर सोना, गर्भ गिराना और दूसरोंका धन छीनना ही इनका धर्म है । ऐसे आरट्ट और पञ्चनद देशियोंको धिक्कार है, यह समझ कर तुम चुप होजाओ, नहीं तो पहले तुम्हें मारकर फिर कृष्ण और अर्जुनको मारेंगे । (३५-३९)

शल्य बोले, हे कर्ण ! आतुरान्

अथ कर्णो भृशं क्रुद्धः शीघ्रमस्त्रमुदीरयत्।
जघान पाण्डवीं सेनामासुरीं मघवानिव ॥ ९ ॥
स पाण्डवबलं कर्णः प्रविश्य विसृजञ्छरान्।
प्रभद्रकाणां प्रवरानहनत्सप्तसप्ततिम् ॥ १० ॥
ततः सुपुङ्खैर्निशितै रथश्रेष्ठो रथेषुभिः।
अवधीत्पञ्चविंशत्या पाञ्चालान्पञ्चविंशतिम् ॥ ११ ॥
सुवर्णपुंङ्खैर्नाराचैः परकायविदारणैः।
चेदिकानवधीद्वीरः शतशोऽथ सहस्रशः ॥ १२ ॥
तं तथा समरे कर्म कुर्वाणमतिमानुषम्।
परिवव्रुर्महाराज पाञ्चालानां रथव्रजाः ॥ १३ ॥
ततः सन्धाय विशिखान्पञ्च भारत दुःसहान्।
पाञ्चालानवधीत्पञ्च कर्णो वैकर्तनो वृषः ॥ १४ ॥
भानुदेवं चित्रसेनं सेनाबिन्दुं च भारत।
तपनं शूरसेनं च पाञ्चालानहनद्रणे ॥ १५ ॥
पाञ्चालेषु च शूरेषु वध्यमानेषु सायकैः।
हाहाकारो महानासीत्पाञ्चालानां महाहवे ॥ १६ ॥
परिवव्रुर्महाराज पाञ्चालानां रथा दश।
पुनरेव च तान्कर्णो जघानाशु पतत्रिभिः ॥ १७ ॥

---

तब कर्णने क्रोध करके अपने तेज बाणोंसे पाण्डवोंकी सेनाको इस प्रकार मारना आरम्भ किया, जैसे इन्द्र राक्षसोंका नाश करते हैं। कर्णने पाण्डवोंकी सेनामें अनेक वीरोंको मार डाला, और अपने तेज बाणोंसे सतहत्तर प्रभद्रक वंशी प्रधान वीरोंको मारा ॥ उसी समय महारथ कर्णने अपने तेज पचीस बाणोंसे पञ्चाल देशके पचीस क्षत्रियोंको मारा और शत्रुओंको नाश करनेवाले उत्तम पङ्ख युक्त तेज बाणोंसे चेदि देशके सहस्रों क्षत्रियोंको मारा ॥ (९-१२)

महारथ कर्णको इस प्रकार घोर कर्म करते देख पञ्चाल देशके महारथ युद्ध करनेको आये ॥ हे भारत! तब कर्णने अपने धनुष पर पांच बाण चढाये और उनसे पांच पाञ्चाल क्षत्रियोंको मारा ॥ उन पांचोंके नाम ये थे, भानुदेव, चित्रसेन, बिंदु, तपन, शूरसेन, इन प्रधान पांच वीरोंके मरनेसे पांचाल सेनामें हाहाकार होने लगा। (१३—१६)

इसके पश्चात् दश महारथ पाञ्चाल

ततः प्रहस्य राधेयः पुनर्याहीत्यचोदयत ॥ ४८ ॥ [२०८८]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां कर्णपर्वणि कर्णशल्यसंवादे पञ्चचत्वारिंशोऽध्यायः ॥४५

सञ्जय उवाच— ततः परानीकसहं व्यूहमप्रतिमं कृतम् ।
समीक्ष्य कर्णः पार्थानां धृष्टद्युम्नाभिरक्षितम् ॥ १ ॥
प्रययौ रथघोषेण सिंहनादरवेण च ।
वादित्राणां च निनदैः कम्पयन्निव मेदिनीम् ॥ २ ॥
वेपमान इव क्रोधाद्युद्धशौण्डः परन्तपः ।
प्रतिव्यूह्य महातेजा यथावद्भरतर्षभ ॥ ३ ॥
व्यधमत्पाण्डवीं सेनामासुरीं मघवानिव ।
युधिष्ठिरं चाभ्यहनदपसव्यं चकार ह ॥ ४ ॥
धृतराष्ट्र उवाच— कथं सञ्जय राधेयः प्रत्यव्यूहत पाण्डवान् ।
धृष्टद्युम्नमुखान्सर्वान्भीमसेनाभिरक्षितान् ॥ ५ ॥
सर्वानेव महेष्वासानजय्यानमरैरपि ।
के च प्रपक्षौ पक्षौ वा मम सैन्यस्य सञ्जय ॥ ६ ॥
प्रविभज्य यथान्यायं कथं वा समवस्थिताः ।

कर्ण चुप रह गये और शल्यने शत्रुओंकी सेनाकी ओर अपना मुख किया। तब फिर कर्णने हंसकर शल्यसे कहा कि रथ हांको ॥ (४७—४८)[२०८८]

कर्णपर्वमें पचालिस अध्याय समाप्त ।

कर्णपर्वमें छियालिस अध्याय ।

सञ्जय बोले, हे राजन् धृतराष्ट्र! तब कर्णने सेनासे बाहर निकलकर धृष्टद्युम्नका बनाया हुआ पाण्डवोंकी सेनाका घोर व्यूह देखा. और देखा कि, धृष्टद्युम्न उसकी रक्षा कर रहे हैं ॥ कर्ण अनेक प्रकारके बाजे और रथके शब्दसे पृथ्वीको कंपाते हुए उस सेनाकी ओर चले । हे भरतकुलसिंह ! महाबली, महायोद्धा कर्ण उस समय क्रोधसे कांप रहे थे, तब उन्होंने अपनी सेनाका व्यूह बनाया ॥ इसके पश्चात् जैसे इन्द्र राक्षसोंकी सेनाका नाश करते हैं, तैसे ही कर्ण पाण्डवोंकी सेनाको मारने लगे, और युधिष्ठिरके रथको बांये करके उनके शरीरमें अनेक बाण मारे ॥ (१-४)

धृतराष्ट्र बोले, हे सञ्जय ! एकले कर्णने भीमसेनसे रक्षित धृष्टद्युम्न आदि वीरोंसे कैसे युद्ध किया ? ये सब वीर महाधनुषधारी महायोद्धा और देवतोंसे भी हारने योग्य नहीं हैं. हमारी सेनाके पक्ष और प्रपक्ष कौन हुए ? तथा व्यूहमें कौन कौन वीर कहां खडे हुए ? पाण्डवोंने

विव्याध चैनं दशभिः क्रुद्धो नृत्यन्निवेषुभिः ।
कर्णं च तूर्णं विव्याध त्रिसप्तत्या शितैः शरैः ॥ २६ ॥
भानुसेनं च दशभिः साश्वसूतायुधध्वजम् ।
पश्यतां सुहृदां मध्ये कर्णपुत्रमपातयत् ॥ २७ ॥
क्षुरप्रणुन्नं तत्तस्य शिरश्चन्द्रनिभाननम् ।
शुभदर्शनमेवासीन्नालभ्रष्टमिवाम्बुजम् ॥ २८ ॥
हत्वा कर्णसुतं भीमस्तावकान्पुनरार्दयत् ।
कृपहार्दिक्ययोश्छित्त्वा चापौ तावप्यथार्दयत्॥ २९ ॥
दुःशासनं त्रिभिर्विध्वा शकुनिं षड्भिरायसैः ।
उलूकं च पतत्रिं च चकार विरथावुभौ ॥ ३० ॥
सुषेणं च हतोऽसीति ब्रुवन्नादत्त सायकम् ।
तमस्य कर्णश्चिच्छेद त्रिभिश्चैनमताडयत् ॥ ३१ ॥
अथान्यं परिजग्राह सुपर्वाणं सुतेजनम् ।
सुषेणायासृजद्भीमस्तमप्यस्याच्छिनद्वृषः ॥ ३२ ॥
पुनः कर्णस्त्रिसप्तत्या भीमसेनमथेषुभिः ।
पुत्रं परीप्सन्विव्याध क्रूरं क्रूरैर्जिघांसया ॥ ३३ ॥

दिया ॥ फिर क्रोध करके सुषेणके शरीरमें दश और कर्णके शरीरमें तिहत्तर बाण मारे ॥ (२३–२६)

अनन्तर भानुसेनके शरीरमें दश बाण मारकर उसके घोडे सारथी और ध्वजा को काट दिया ॥ फिर सब बंधुओंके बीचमें उसका शिर काट कर पृथ्वीमें गिरा दिया । भानुसेनका चन्द्रमुखवाला सिर इस प्रकार कटकर पृथ्वीमें गिरा जैसे डण्डीसे टूट कर कमल गिरता है ॥ कर्णके पुत्रको मार कर भीमसेन अन्य वीरोंसे युद्ध करने लगे । उन्होंने कृपाचार्य और हार्दिक्यके धनुष काटकर उनकी ओर अनेक बाण चलाये ॥२७-२९

दुःशासनके हृदयमें तीन बाण और शकुनिके छः बाण मारे । इसके पश्चात् अपने तेज बाणोंसे उलूक और पतत्रिको रथहीन कर दिया ॥ इसके पश्चात् वृषसेनकी ओर तीक्ष्ण बाण चलाकर कहा कि तुम मर गये। कर्णने उस बाणको अपने बाणसे काट दिया और भीमसेनके हृदयमें तीन बाण मारे ॥ तब भीमसेनने दूसरा तेज बाण सुषेणकी ओर चलाया, कर्णने उसको भी काट गिराया ॥ ३०-३२

अनन्तर कर्णने अपने पुत्रकी रक्षाके लिये घोर पराक्रमी भीमसेनके हृदयमें

तेषां प्रपक्षाः काम्बोजाः शकाश्च यवनैः सह ॥ १५ ॥
निदेशात्सूतपुत्रस्य सरथाः साश्वपत्तयः ।
आह्वयन्तोऽर्जुनं तस्थुः केशवं च महाबलम् ॥ १६ ॥
मध्ये सेनामुखे कर्णोऽप्यवातिष्ठत दंशितः ।
चित्रवर्माङ्गदः स्रग्वी पालयन्वाहिनीमुखम् ॥ १७ ॥
रक्षमाणैः सुसंरब्धैः पुत्रैः शस्त्रभृतां वरः ।
वाहिनीं प्रमुखे वीरः सम्प्रकर्षन्नशोभत ॥ १८ ॥
अभ्यवर्तन्महाबाहुः सूर्यवैश्वानरप्रभः ।
महाद्विपस्कन्धगतः पिङ्गाक्षः प्रियदर्शनः ॥ १९ ॥
दुःशासनो वृतः सैन्यैः स्थितो व्यूहस्य पृष्ठतः ।
तमन्वयान्महाराज स्वयं दुर्योधनो नृपः ॥ २० ॥
चित्रास्त्रैश्चित्रसन्नाहैः सोदर्यैरभिरक्षितः ।
रक्ष्यमाणो महावीर्यैः सहितैर्मद्रकेकयैः ॥ २१ ॥
अशोभत महाराज देवैरिव शतक्रतुः ।
अश्वत्थामा कुरूणां च ये प्रवीरा महारथाः ॥ २२ ॥
नित्यमत्ताश्च मातङ्गाः शूरैर्म्लेच्छैः समन्विताः ।

---

खडे हुए ॥ (१०—१४)

वहीं तुम्हारे अनेक पुत्र भी स्थित हुए; उन्होंने अर्जुन और कृष्णके मारनेकी इच्छा करी थी । उसके समीप काम्बोज, शक और यवन सेना खडी हुई ॥ कर्णकी आज्ञासे रथ और घोडोंपर चढे सब वीर अर्जुन और महापराक्रमी कृष्णको पुकारने लगे ॥ सेनाके मुखमें माला, कवच और बाजू पहनकर और सब शस्त्र लेकर कर्ण खडे हुए और सेनाके मुखकी रक्षा करने लगे, उनके पास सब शस्त्रधारियोंमें श्रेष्ठ उनके महारथ पुत्र खडे हुए ॥ (१५–१९)

सेनाके पिछले भागमें मतवाले हाथियोंपर चढकर महाबलवान् पिङ्गाक्ष और प्रियदर्शन तथा सूर्य और अग्निके समान तेजस्वी दुःशासन अनेक वीरोंके सहित खडे हुए, इनकी रक्षा करनेको साक्षात् राजा दुर्योधन खडे हुए, कवच और विचित्र शस्त्रधारी मद्र और केकयदेशके वीर इनकी रक्षा करने लगे ॥ (२०–२१)

हे राजन् ! उस समय राजा दुर्योधनकी ऐसी शोभा हुई जैसे देवताओंके सहित इन्द्रकी । और अश्वत्थामा आदि सब वीर मतवाले हाथियोंपर चढ राजा दुर्योधनकी रक्षा करने लगे। उस सेनाकी

ध्वजमेकेषुणोन्मथ्य त्रिभिस्तं हृद्यताडयत् ॥ ४२ ॥
अथावसन्नः स्वरथे मुहूर्तात्पुनरुत्थितः ।
स रणे युयुधानेन विसूताश्वरथध्वजः ॥ ४३ ॥
कृतो जिघांसुः शैनेयं खड्गचर्मधृगभ्ययात् ।
तस्य चापततः शीघ्रं वृषसेनस्य सात्यकिः ॥ ४४ ॥
वाराहकर्णैर्दशभिरविध्यदसिचर्मणी ।
दुःशासनस्तु तं दृष्ट्वा विरथं व्यायुधं कृतम् ॥ ४५ ॥
आरोप्य स्वरथं तूर्णमपोवाह रणातुरम् ।
अथान्यं रथमास्थाय वृषसेनो महारथः ॥ ४६ ॥
द्रौपदेयांस्त्रिसप्तत्या युयुधानं च पञ्चभिः ।
भीमसेनं चतुःषष्ट्याः सहदेवं च पञ्चभिः ॥ ४७ ॥
नकुलं त्रिंशता बाणैः शतानीकं च सप्तभिः ।
शिखण्डिनं च दशभिर्धर्मराजं शतेन च ॥ ४८ ॥
एतांश्चान्यांश्च राजेन्द्र प्रवीराञ्जयगृद्धिनः ।
अभ्यर्दयन्महेष्वासः कर्णपुत्रो विशाम्पते ॥ ४९ ॥
कर्णस्य युधि दुर्धर्षस्ततः पृष्ठमपालयत् ।
दुःशासनं च शैनेयो नवैर्नवभिरायसैः ॥ ५० ॥

और एकसे ध्वजा काट दी, फिर तीन बाण उसके हृदयमें मारे ॥ उन बाणोंके लगनेसे क्षण भरके लिये उन्हें मूर्च्छा होगयी; अनन्तर उस सारथी और घोडे रहित रथसे खड्ग और ढाल लेकर उतरे और सात्यकिको मारनेके लिये दौडे। (३९ ४४)

सात्यकिने उन्हें आते देख वराहकर्ण नामक दश बाणोंसे खड्ग और ढाल काटके गिरा दिया। दु शासनने वृषसेन को रथ और शस्त्रहीन देखकर अपने रथ पर चढा लिया और युद्धमे हटा दिया।

अनन्तर महारथ वृषसेन दूसरे रथपर चढकर युद्धमें आये और द्रौपदीपुत्रोंके तीन तीन, सात्यकिके पांच, भीमसेनके चौंसठ और सहदेवके ऊपर पांच बाण मारे नकुलके तीस, शतानीकके सात, शिखण्डीके दस और महाराज युधिष्ठिर के ऊपर सौ बाण मारे ॥ ( ४४-४८ )

हे राजन् ! और भी सब वीरोंको वृषसेनने अपने बाणोंसे युद्धमें व्याकुल कर दिया; इसके पश्चात फिर महाबली वृषसेन कर्णके रथकी रक्षा करने लगे। फिर सात्यकिने दुःशासनके हृदयमें नौ

एवमुक्तोऽर्जुनो राज्ञा प्राञ्जलिर्नृपमब्रवीत् ।
यथा भवानाह तथा तत्सर्वं न तदन्यथा ॥ ३२ ॥
यस्त्वस्य विहितो घातस्तं करिष्यामि भारत ।
प्रधानवध एवास्य विनाशस्तं करोम्यहम् ॥ ३३ ॥

युधिष्ठिर उवाच– तस्मात्त्वमेव राधेयं भीमसेनः सुयोधनम् ।
वृषसेनं च नकुलः सहदेवोऽपि सौबलम् ॥ ३४ ॥
दुःशासनं शतानीको हार्दिक्यं शिनिपुङ्गवः ।
धृष्टद्युम्नो द्रोणसुतं स्वयं योत्स्याम्यहं कृपम् ॥ ३५ ॥
द्रौपदेया धार्त्तराष्ट्राञ्शिष्टान्सह शिखण्डिना ।
ते ते च तांस्तानहितानस्माकं घ्नन्तु मामकाः ॥ ३६ ॥

सञ्जय उवाच – इत्युक्तो धर्मराजेन तथेत्युक्त्वा धनञ्जयः ।
व्यादिदेश स्वसैन्यानि स्वयं चागाच्चमूमुखम् ॥ ३७ ॥
अग्निर्वैश्वानरः पूर्वो ब्रह्मेन्दुः समितां गतः ।
तस्माद्यः प्रथमं जातस्तं देवा ब्राह्मणा विदुः ॥ ३८ ॥
ब्रह्मेशानेन्द्रवरुणान्क्रमशो योऽवहत्पुरा ।
तमाद्यं रथमास्थाय प्रयातौ केशवार्जुनौ ॥ ३९ ॥

---

महाराजके वचन सुन अर्जुन हाथ जोडकर बोले, हे महाराज ! आप जैसा कहते हैं वैसा ही होगा ॥ हे भारत ! इस व्यूहको तोडनेका उपाय उस सेनाके प्रधान वीर कर्णको मारनाही है, सो हम करते हैं ॥ ( ३२– ३३ )

महाराज युधिष्ठिर बोले, आज तुम राधापुत्र कर्णसे, भीमसेन दुर्योधनसे, वृषसेनसे नकुल, शकुनिसे सहदेव, दुःशासनसे शतानीक, कृतवर्मासे सात्यकि, धृष्टद्युम्न अश्वत्थामासे युद्ध करें और कृपाचार्यसे हम आप लडेंगे और हमारे सब पुत्र शिखण्डीके सहित धृतराष्ट्रके पुत्रोंसे युद्ध करें । ये सब वीर हमारे उन सब शत्रुओंका नाश करें । (३४–३६)

सञ्जय बोले, धर्मराज युधिष्ठिरके ऐसे वचन सुन अर्जुनने कहा, ऐसाही होगा । इसके पश्चात् सब वीरोंको महाराजकी आज्ञा सुनाकर आप व्यूहके मुखकी ओर गये, जिस रथमें पहले अग्नि, ब्रह्मा, चन्द्रमा आदि देवता घोडे बनकर जुडे थे और जो रथ पहले अग्निसे उत्पन्न हुआ था, जिसकी ब्राह्मण बहुत प्रशंसा करते हैं । जिसपर क्रमसे ब्रह्मा, शिव, इन्द्र और वरुण चढे थे, उसी आदि रथपर चढकर कृष्ण और अर्जुन चले ॥ ३७-३९

अरुणाभ्रावृताकारं तस्मिन्देशे बभौ वियत् ॥ ५९ ॥
नृत्यन्निव हि राधेयश्चापहस्तः प्रतापवान् ।
यैर्विद्धः प्रत्यविद्ध्यत्तानेकैकं त्रिगुणैः शरैः ॥ ६० ॥
शतैश्च दशभिश्चैतान्पुनर्विध्वा ननाद च ।
साश्वसूतरथाश्छन्नास्ततस्ते विवरं ददुः ॥ ६१ ॥
तान्प्रमथ्य महेष्वासान्राधेयः शरवृष्टिभिः ।
गजानीकमसम्बाधं प्राविशच्छत्रुकर्शनः ॥ ६२ ॥
स रथांस्त्रिशतं हत्वा चेदीनामनिवर्त्तिनाम् ।
राधेयो निशितैर्बाणैस्ततोऽभ्याच्छेद्युधिष्ठिरम् ॥ ६३ ॥
ततस्ते पाण्डवा राजञ्छिखण्डी चससात्यकिः ।
राधेयात्परिरक्षन्तो राजानं पर्यवारयन् ॥ ६४ ॥
तथैव तावकाः सर्वे कर्णं दुर्वारणं रणे ।
यत्ताः शूरा महेष्वासाः पर्यरक्षन्त सर्वशः ॥ ६५ ॥
नानावादित्रघोषाश्च प्रादुरासन्विशाम्पते ।
सिंहनादश्च सञ्जज्ञे शूराणामभिगर्जताम् ॥ ६६ ॥
ततः पुनः समाजग्मुरभीताः कुरुपाण्डवाः ।

---

आकाश, अन्तरिक्ष, पृथ्वी और दिशा बाणोंसे पूरित होगई, आकाश लाल बादलोंसे पूरित सा दीखने लगा॥ उस समय महाप्रतापी धनुषधारी कर्ण नाचते हुए मनुष्यके समान दीखते थे, जिसने कर्णके शरीरमें जो बाण मारे थे, कर्णने उनसे त्रिगुने उसको बाण मारे, तब कर्णने फिर दश दश और सौ सौ बाणोंसे सब वीरोंको मारा और सिंहनाद करने लगे। (५८-६१)

उस समय कर्णने पाण्डवोंके घोडे, रथ और सारथियोंको बाणोंसे व्याकुल कर दिया। तब पाण्डवोंके वीर कर्णके आगेसे हट गये, कर्ण भी उन सब वीरोंको जीतकर हाथियोंकी सेनामें पहुंचे॥ महापराक्रमी कर्णने अपने बाणोंसे रथमें बैठे हुए तीन सौ चेदिदेशी रथी क्षत्रियोंको मारा और फिर युधिष्ठिरसे युद्ध करने लगे॥ (६१-६३)

हे राजन्! भीमसेन, नकुल, सहदेव, शिखण्डी और सात्यकि युधिष्ठिरकी रक्षा करनेको दौडे। इसी प्रकार तुम्हारी ओरके वीर चारों ओरसे महायोद्धा कर्णकी रक्षा करने लगे॥ हे राजन्! उस समय दोनों ओरसे अनेक प्रकारके बाजे बजने लगे। इसी प्रकार वीर लोग

रञ्जिताश्चामरायुक्तास्तव कर्ण महारथे ॥ ४८ ॥
प्रवराः प्रज्वलन्त्येते ध्वजश्चैव प्रकम्पते ।
सवेपथून्हयान्पश्य महाकायान्महाजवान् ॥ ४९ ॥
प्लवमानान्दर्शनीयानाकाशे गरुडानिव ।
ध्रुवमेषु निमित्तेषु भूमिमाश्रित्य पार्थिवाः ॥ ५० ॥
स्वप्स्यन्ति निहताः कर्ण शतशोऽथ सहस्रशः ।
शङ्खानां तुमुलः शब्दः श्रूयते लोमहर्षणः ॥ ५१ ॥
आनकानां च राधेय मृदङ्गानां च सर्वशः ।
बाणशब्दान्बहुविधान्नराश्वगजवाजिनाम् ॥ ५२ ॥
ज्यातलत्रेषुशब्दांश्च शृणु कर्ण महात्मनाम् ।
हेमरूप्यप्रसृष्टानां वाससां शिल्पिनिर्मिताः ॥ ५३ ॥
नानावर्णा रथे भान्ति श्वसनेन प्रकम्पिताः ।
सहेमचन्द्रताराकाः पताकाः किङ्किणीयुताः ॥ ५४ ॥
पश्य कर्णार्जुनस्यैताः सौदामिन्य इवाम्बुदे ।
ध्वजाः कणकणायन्ते वातेनाभिसमीरिताः ॥ ५५ ॥
विभ्राजन्ति रथे कर्ण विमाने देवते यथा ।

---

हे कर्ण ! यह देखो ये सब मांस खाने वाले पक्षी परस्पर बोलते हुए तुम्हारी ओर चले आते हैं । ( ४५-४८ )

ये देखो तुम्हारे पहियोंकी हालसे अग्नि निकलने लगी है और इससे चामर जलने लगे हैं । ये देखो तुम्हारे शीघ्र चलने और बडे शरीर वाले घोडे कांपने लगे और तुम्हारी ध्वजा हिलने लगी और पहिये प्रकाशित होने लगे । ये देखो तुम्हारे गरुडके समान शीघ्र चलनेवाले सुन्दर घोडे कांप रहे हैं । इन शकुनोंसे हमें निश्चय होता है, कि आज पृथ्वीमें सहस्रों राजा मर कर सोवेंगे । ( ४८-५१ )

ये देखो अनेक शङ्खोंका घोर शब्द होरहा है, इससे वैरीके रूएं खडे हुए जाते हैं । इसी प्रकार भेर, नगारे, बाण, हाथी और घोडोंके शब्द चारों ओर हो रहे हैं । ये देखो धनुष और महात्माओं के तालोंका कैसा शब्द होता है ? सोने और चांदिके तारोंसे गुहे हुए वस्त्र परस्पर किस प्रकार घिस रहे हैं, ये देखो चन्द्रमा, सूर्य और तारे आदिके चिन्होंसे युक्त घण्टा लगी अनेक रथोंकी पताका फहरा रही है । ये देखो अर्जुनके रथपर मेघमें बिजलीके समान अनेक ध्वजाएं

स तान्प्रमृद्याभ्यपतत्पुनरेव युधिष्ठिरम् ।
मन्त्रौषधिक्रियातीतो व्याधिरत्युल्वणो यथा ॥ ८ ॥
स राजगृद्धिभी रुद्धः पाण्डुपञ्चालकेकयैः ।
नाशकत्तानतिक्रान्तुं मृत्युर्ब्रह्मविदो यथा ॥ ९ ॥
ततो युधिष्ठिरः कर्णमदूरस्थं निवारितम् ।
अब्रवीत्परवीरघ्नं क्रोधसंरक्तलोचनः ॥ १० ॥
कर्ण कर्ण वृथादृष्टे सूतपुत्र वचः शृणु ।
सदा स्पर्धसि संग्रामे फाल्गुनेन तरस्विना ॥ ११ ॥
तथास्मान्बाधसे नित्यं धार्तराष्ट्रमते स्थितः ।
यद्बलं यच्च ते वीर्यं प्रद्वेषो यस्तु पाण्डुषु ॥ १२ ॥
तत्सर्वं दर्शयस्वाद्य पौरुषं महदास्थितः ।
युद्धश्रद्धां च तेऽद्याहं विनेष्यामि महाहवे ॥ १३ ॥
एवमुक्त्वा महाराज कर्णं पाण्डुसुतस्तदा ।
सुवर्णपुङ्खैर्दशभिर्विव्याधायस्मयैः शरैः ॥ १४ ॥
तं सूतपुत्रो दशभिः प्रत्यविद्ध्यदरिन्दमः ।
वत्सदन्तैर्महेष्वासः प्रहसन्निव भारत ॥ १५ ॥

रोगको रोकता है, ऐसेही प्रलयकालमें क्रोध भरे यमराजके समान कर्णको पाञ्चाल और पाण्डवोंने घेर लिया॥ जैसे मन्त्र और औषधियोंको न मानकर रोग बढता है तैसे ही सब वीरोंको जीतकर कर्ण युधिष्ठिरकी ओर दौडे ॥ जैसे योगीको मृत्यु नहीं मार सकती तैसे ही रथकी रक्षा करते हुए पाञ्चाल और पाण्डव कर्णको न मार सके ॥ (७-९)

अनन्तर शत्रुनाशन कर्णको रुका देख महाराज युधिष्ठिर क्रोधकर बोले, रे सूतपुत्र कर्ण ! तू वृथा ही इधरको दौडा चला आता है ! तू हमारे वचन सुन । तू सदा बली अर्जुनके सङ्ग युद्ध करनेकी इच्छा करता है, सदा ही धृतराष्ट्रपुत्रके मतमें रहकर हमारी हानि किया करता है; आज तुझे जो कुछ बल पराक्रम हो, सो दिखला ! तेरे मनमें पाण्डवोंकी ओरसे जो कुछ वैर या द्वेष हो, सो दिखला; आज हम इस घोर-युद्धमें तेरी युद्धकी इच्छा नाश कर देंगे ॥ (१०—१३)

ऐसा कहकर महाराज युधिष्ठिरने सोनेके पङ्खवाले दश बाण चलाए ॥ शत्रुनाशन बडे धनुषवाले कर्णने भी हंसकर दश वत्सदन्त बाण युधिष्ठिरकी ओर

पतिताः पात्यमानाश्च क्षितौ क्षीणाश्च शेरते ॥ ६४ ॥
एते पर्वतशृङ्गाणां तुल्यरूपा हता द्विपाः ।
संछिन्नभिन्नाः पार्थेन प्रचरन्त्यद्रयो यथा ॥ ६५ ॥
गन्धर्वनगराकारा रथा हतनरेश्वराः ।
विमानानीव पुण्यानि स्वर्गिणां निपतन्त्यमी ॥ ६६ ॥
व्याकुलीकृतमत्यर्थं पश्य सैन्यं किरीटिना ।
नानामृगसहस्राणां यूथं केसरिणा यथा ॥ ६७ ॥
घ्नन्त्येते पार्थिवान्वीराः पाण्डवाः समभिद्रुताः ।
नागाश्वरथपत्त्योघांस्तावकान्समभिघ्नतः ॥ ६८ ॥
एष सूर्य इवाम्भोदैश्छन्नः पार्थो न दृश्यते ।
ध्वजाग्रं दृश्यते त्वस्य ज्याशब्दश्चापि श्रूयते ॥ ६९ ॥
अद्य द्रक्ष्यसि तं वीरं श्वेताश्वं कृष्णसारथिम् ।
निघ्नन्तं शात्रवान्संख्ये यं कर्ण परिपृच्छसि ॥ ७० ॥
अद्य तौ पुरुषव्याघ्रौ लोहिताक्षौ परन्तपौ ।
वासुदेवार्जुनौ कर्ण द्रष्टास्येकरथे स्थितौ ॥ ७१ ॥
सारथिर्यस्य वार्ष्णेयो गाण्डीवं यस्य कार्मुकम् ।

कर पृथ्वीमें गिरे, ये देखो आंख, कान, जीभ और सिर कटे घोडे वीरोंके सहित पृथ्वीमें गिर गये. और गिरे और गिर रहे हैं। ये देखो अनेक हाथी, बाण लगने और शरीर फटनेसे पर्वतोंके समान इधर उधर घूम रहे हैं ॥ (६२-६५)

ये देखो गन्धर्व नगरोंके समान अनेक रथ वीरोंसे खाली हो गये, इस समय इनकी शोभा देव रहित गिरते हुए विमानोंके तुल्य हो रही है। ये देखो जैसे सिंहके डरसे हरिणोंका झुण्ड व्याकुल हो जाता है वैसे ही तुम्हारी सेना अर्जुनके डरनेसे ऐसी ही है ॥ ये देखो सब पाण्डव तुम्हारी सेनाके हाथी, घोडे, रथ और पैदलोंके झुण्डोंको नाश कर रहे हैं ॥ (६६-६८)

ये देखो मेघमें छिपे सूर्यके समान बाणोंमें छिपे अर्जुन नहीं दीखते परन्तु उनकी ध्वजाका अग्रभाग और उनके धनुषका शब्द सुनाई देता है॥ हे कर्ण! जिसको तुम पहले पूछते थे, अब उसी सफेद घोडे और कृष्ण सारथी युक्त अर्जुनको अपनी सेनाका नाश करते देखोगे ॥ तुम अभी एक रथ पर बैठे लाल नेत्रवाले शत्रुनाशन कृष्ण और अर्जुनको देखोगे ॥ जिसके कृष्ण सारथी

स तान्प्रमृद्याभ्यपतत्पुनरेव युधिष्ठिरम् ।
मन्त्रौषधिक्रियातीतो व्याधिरत्युल्बणो यथा ॥ ८ ॥
स राजगृद्धिभी रुद्धः पाण्डुपञ्चालकेकयैः ।
नाशकत्तानतिक्रान्तुं मृत्युर्ब्रह्मविदो यथा ॥ ९ ॥
ततो युधिष्ठिरः कर्णमदूरस्थं निवारितम् ।
अब्रवीत्परवीरघ्नं क्रोधसंरक्तलोचनः ॥ १० ॥
कर्ण कर्ण वृथादृष्टे सूतपुत्र वचः शृणु ।
सदा स्पर्धसि संग्रामे फाल्गुनेन तरस्विना ॥ ११ ॥
तथास्मान्बाधसे नित्यं धार्तराष्ट्रमते स्थितः ।
यद्बलं यच्च ते वीर्यं प्रद्वेषो यस्तु पाण्डुषु ॥ १२ ॥
तत्सर्वं दर्शयस्वाद्य पौरुषं महदास्थितः ।
युद्धश्रद्धां च तेऽद्याहं विनेष्यामि महाहवे ॥ १३ ॥
एवमुक्त्वा महाराज कर्णं पाण्डुसुतस्तदा ।
सुवर्णपुङ्खैर्दशभिर्विव्याधायस्मयैः शरैः ॥ १४ ॥
तं सूतपुत्रो दशभिः प्रत्यविद्ध्यदरिन्दमः ।
वत्सदन्तैर्महेष्वासः प्रहसन्निव भारत ॥ १५ ॥

रोगको रोकता है, ऐसेही प्रलयकालमें क्रोध भरे यमराजके समान कर्णको पाञ्चाल और पाण्डवोंने घेर लिया॥ जैसे मन्त्र और औषधियोंको न मानकर रोग बढता है तैसे ही सब वीरोंको जीतकर कर्ण युधिष्ठिरकी ओर दौडे ॥ जैसे योगीको मृत्यु नहीं मार सकती तैसे ही रथकी रक्षा करते हुए पाञ्चाल और पाण्डव कर्णको न मार सके ॥ (७-९)

अनन्तर शत्रुनाशन कर्णको रुका देख महाराज युधिष्ठिर क्रोधकर बोले, रे सूतपुत्र कर्ण ! तू वृथा ही इधरको दौडा चला आता है ! तू हमारे वचन सुन । तू सदा बली अर्जुनके सङ्ग युद्ध करनेकी इच्छा करता है, सदा ही धृतराष्ट्रपुत्रके मतमें रहकर हमारी हानि किया करता है; आज तुझे जो कुछ बल पराक्रम हो, सो दिखला ! तेरे मनमें पाण्डवोंकी ओरसे जो कुछ वैर या द्वेष हो, सो दिखला; आज हम इस घोर-युद्धमें तेरी युद्धकी इच्छा नाश कर देंगे ॥ (१०—१३)

ऐसा कहकर महाराज युधिष्ठिरने सोने के पङ्खवाले दश बाण चलाए ॥ शत्रु-नाशन बडे धनुषवाले कर्णने भी हंसकर दश वत्सदन्त बाण युधिष्ठिरकी ओर

पश्य कुन्तीसुतं वीरं भीममक्लिष्टकारिणम् ।
प्रभासन्तं महाबाहुं स्थितं मेरुमिवापरम् ॥ ८० ॥
अमर्षी नित्यसंरब्धश्चिरं वैरमनुस्मरन् ।
एष भीमो जयप्रेप्सुर्युधि तिष्ठति वीर्यवान् ॥ ८१ ॥
एष धर्मभृतां श्रेष्ठो धर्मराजो युधिष्ठिरः ।
तिष्ठत्यसुकरः सङ्ख्ये परैः परपुरञ्जयः ॥ ८२ ॥
एतौ च पुरुषव्याघ्रावश्विनाविव सोदरौ ।
नकुलः सहदेवश्च तिष्ठतो युधि दुर्जयौ ॥ ८३ ॥
अमी स्थिता द्रौपदेयाः पञ्च पञ्चाचला इव ।
व्यवस्थिता योद्धुकामाः सर्वेऽर्जुनसमा युधि ॥ ८४ ॥
एते द्रुपदपुत्राश्च धृष्टद्युम्नपुरोगमाः ।
स्फीताः सत्यजितो वीरास्तिष्ठन्ति परमौजसः ॥ ८५ ॥
असाविन्द्र इवासह्यः सात्यकिः सात्वतां वरः ।
युयुत्सुरुपयात्यस्मान्क्रुद्धान्तकसमः पुरः ॥ ८६ ॥
इति संवदतोरेव तयोः पुरुषसिंहयोः ।
ते सेने समसज्जेतां गङ्गायमुनवद्भृशम् ॥ ८७ ॥ [२१७५]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां कर्णपर्वणि कर्णशल्यसंवादे षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

---

ये देखो महायोद्धा भीमसेन मेरु पर्वतके समान खडे हुए तुम्हारी सेना को मार रहे हैं ॥ ये देखो सदाके क्रोधी सदा युद्ध करने वाले महाबाहु कुन्तीपुत्र भीमसेन बहुत दिनका वैर स्मरण कर आज युद्ध करनेको खडे हैं ॥ (८०-८१)

ये देखो सब धर्मधारियोंमें श्रेष्ठ शत्रुओंका नाश करनेवाले युद्धमें शीघ्र बाण चलानेवाले साक्षात् महाराज युधिष्ठिर खडे हैं ॥ ये देखो अश्विनीकुमारों के समान सुन्दर महापराक्रमी युद्धमें न हटनेवाले पुरुषसिंह नकुल और सहदेव खडे हैं ॥ ये देखो अर्जुनके समान योद्धा द्रौपदीके पांचों पुत्र युद्धकी इच्छासे पर्वतोंके समान खडे हैं ॥ (८२—८४)

ये देखो शत्रुओंको जीतनेवाले महातेजस्वी द्रुपदपुत्र धृष्टद्युम्न अपने भाइयोंके सहित खडे हैं ॥ ये देखो इन्द्रके समान योद्धा यदुकुलश्रेष्ठ सात्यकि युद्ध करनेकी इच्छासे क्रोध भरे यमराजके समान चले आते हैं ॥ शल्य और कर्णकी ये बातें होते ही होते दोनों सेना गङ्गायमुनाके समान आमिलीं ॥ (८५-८७)

कर्णपर्वमें छियालिसवां अध्याय समाप्त । [२१७५]

पाण्डवानां महाराज दृष्ट्वा राज्ञः पराक्रमम् ॥ २४ ॥
प्रतिलभ्य तु राधेयः संज्ञां नातिचिरादिव ।
दध्रे राजविनाशाय मनः क्रूरपराक्रमः ॥ २५ ॥
स हेमविकृतं चापं विस्फार्य विजयं महत् ।
अवाकिरदमेयात्मा पाण्डवं निशितैः शरैः ॥ २६ ॥
ततः क्षुराभ्यां पाञ्चाल्यौ चक्ररक्षौ महात्मनः ।
जघान चन्द्रदेवं च दण्डधारं च संयुगे ॥ २७ ॥
तावुभौ धर्मराजस्य प्रवीरौ परिपार्श्वतः ।
रथाभ्याशे चकाशेते चन्द्रस्येव पुनर्वसू ॥ २८ ॥
युधिष्ठिरः पुनः कर्णमविद्ध्यत्त्रिंशता शरैः ।
सुषेणं सत्यसेनं च त्रिभिस्त्रिभिरताडयत् ॥ २९ ॥
शल्यं नवत्या विव्याध त्रिसप्तत्या च सूतजम् ।
तांस्तस्य गोप्तृन्विव्याध त्रिभिस्त्रिभिरजिह्मगैः ॥ ३० ॥
ततः प्रहस्याधिरथिर्विधुन्वानः स कार्मुकम् ।
भित्त्वा भल्लेन राजानं विध्वा षष्ट्यानदत्तदा ॥ ३१ ॥
ततः प्रवीराः पाण्डूनामभ्यधावन्नमर्षिताः ।
युधिष्ठिरं परीप्सन्तः कर्णमभ्यर्दयञ्छरैः ॥ ३२ ॥

अपने राजाका पराक्रम देख पाण्डवोंकी सब सेना गर्जने और हसने लगी, इतने समयमें महा पराक्रमी कर्ण मूर्च्छासे जागे और महाराज युधिष्ठिरको मारनेकी इच्छा की। अनन्तर पराक्रमी कर्णने अपने सुवर्णभूषित विजय नामक धनुष पर टङ्कार देकर युधिष्ठिरकी ओर सहस्रों बाण चलाये ॥ (२३ — २६)

अनन्तर महाराज युधिष्ठिर के रथ के पहियोंकी रक्षा करनेवाले, पञ्चाल देशी चन्द्रदेव और दण्डधारको दश बाणोंसे मार डाला॥ वे दोनों महाराज युधिष्ठिरकी दोनों ओर इस प्रकार मर कर गिरे जैसे चन्द्रमाके पास दो पुनर्वसु ॥ (२७-२८)

महाराजने फिर कर्णके शरीरमें तीस तथा सुषेण और सत्यसेनके शरीरमें तीन तीन बाण मारे ॥ शल्यके शरीरमें नव्वे, कर्णके शरीरमें तिहत्तर और उनके रक्षकोंके तीनतीन बाण मारे ॥ तब अधिरथ पुत्र कर्ण हंसने लगे और अपनी धनुषको घुमाने लगे, अनन्तर युधिष्ठिर के हृदयमें एक बाण मारकर साठ बाण और मारे ॥ (२९–३१)

अनन्तर महाराजकी रक्षा करनेके

अथ संशप्तकाः पार्थमभ्यधावन्वधैषिणः ॥ ८ ॥
विजये धृतसङ्कल्पा मृत्युं कृत्वा निवर्त्तनम् ।
तन्नराश्वौघबहुलं मत्तनागरथाकुलम् ॥ ९ ॥
पत्तिमच्छूरवीरौघं द्रुतमर्जुनमार्दयत् ।
स सम्प्रहारस्तुमुलस्तेषामासीत्किरीटिना ॥ १० ॥
तस्यैव नः श्रुतो यादृङ् निवातकवचैः सह ।
रथानश्वान्ध्वजान्नागान्पत्तीन्रणगतानपि ॥ ११ ॥
इषून्धनूंषि खड्गांश्च चक्राणि च परश्वधान् ।
सायुधानुद्यतान्बाहून्विविधान्यायुधानि च ॥ १२ ॥
चिच्छेद द्विषतां पार्थः शिरांसि च सहस्रशः ।
तस्मिन्सैन्यमहावर्त्ते पातालतलसन्निभे ॥ १३ ॥
निमग्नं तं रथं मत्वा नेदुः संशप्तकास्तथा ।
स पुनस्तानरीन्हत्वा पुनरुत्तरतोऽवधीत् ॥ १४ ॥
दक्षिणेन च पश्चाच्च क्रुद्धो रुद्रः पशूनिव ।
अथ पञ्चालचेदीनां सृञ्जयानां च मारिष ॥ १५ ॥
त्वदीयैः सह संग्राम आसीत्परमदारुणः ।
कृपश्च कृतवर्मा च शकुनिश्चापि सौबलः ॥ १६ ॥

---

चले। इसी प्रकार संशप्तक भी मरनेका निश्चय समझकर अर्जुनको मारनेके लिये उनकी ओर युद्ध करनेको आये ॥ (७-८)

वह हाथी, घोडे, रथ और पदातियोंसे भरी हुई सेना शीघ्र अर्जुनके पास पहुंची। जैसे हमने सुना था, कि निवातकवचोंके सङ्ग अर्जुनने युद्ध किया, तैसे ही संशप्तकोंके सङ्ग किया। अर्जुनने अपने बाणोंसे हाथी, रथ, घोडे, ध्वजा, लडते हुए पदाति, बाण, धनुष, खड्ग, चक्र, परश्वध, शस्त्रोंके सहित उठे हुए हाथ, अनेक प्रकारके शस्त्र और शत्रुओंके सहस्रों शिर काट दिये ॥ (९-१३)

उस समुद्ररूपी सेनामें अर्जुनके रथको डूबता हुआ देख संशप्तक गर्जने लगे। जैसे प्रलयकालमें शिव क्रोध करके प्रजाका नाश करते हैं, तैसे ही अर्जुन पूर्व, पश्चिम, दक्षिण, उत्तर दिशाओंमें घूमकर शत्रुओंको मारने लगे॥(१३-१५)

हे राजन् ! उधर तुम्हारी सेनाके सङ्ग सृञ्जय पाञ्चाल और चेदि देशके क्षत्री घोर युद्ध करने लगे। तुम्हारी ओरसे कृपाचार्य, कृतवर्मा और सुबल-पुत्र शकुनि प्रसन्न हो पाण्डवोंके रथमें

वक्तव्या मारिषान्ये तु न वक्तव्यास्तु मादृशाः ॥५७॥
मादृशान्विब्रुवन्युद्धे एतदन्यच्च लप्स्यसे ।
स्वगृहं गच्छ कौन्तेय यत्र तौ केशवार्जुनौ ॥ ५८ ॥
न हि त्वां समरे राजन्हन्यात्कर्णः कथञ्चन ।
एवमुक्त्वा ततः पार्थं विसृज्य च महाबलः ॥ ५९ ॥
न्यहनत्पाण्डवीं सेनां वज्रहस्त इवासुरीम् ।
ततोऽपायाद् द्रुतं राजन्व्रीडन्निव नरेश्वरः ॥ ६० ॥
अथापयान्तं राजानं मत्वान्वीयुस्तमच्युतम् ।
चेदिपाण्डवपञ्चालाः सात्यकिश्च महारथः ॥ ६१ ॥
द्रौपदेयास्तथा शूरा माद्रीपुत्रौ च पाण्डवौ ।
ततो युधिष्ठिरानीकं दृष्ट्वा कर्णः पराङ्मुखम् ॥ ६२ ॥
कुरुभिः सहितो वीरः प्रहृष्टः पृष्ठतोऽन्वगात् ।
भेरीशङ्खमृदङ्गानां कार्मुकाणां च निःस्वनः ॥ ६३ ॥
बभूव धार्त्तराष्ट्राणां सिंहनादरवस्तथा ।
युधिष्ठिरस्तु कौरव्य रथमारुह्य सत्वरम् ॥ ६४ ॥
श्रुतकीर्तेर्महाराज दृष्टवान्कर्णविक्रमम् ।
काल्यमानं बलं दृष्ट्वा धर्मराजो युधिष्ठिरः ॥ ६५ ॥
स्वान्योधानब्रवीत्क्रुद्धो निघ्नतैतान्किमासत ।

हम लोगोंके सङ्ग युद्ध करनेसे यही दशा होती है। हे महाराज! आप अपने घरको चले जाइये, अथवा कृष्ण और अर्जुनके पास चले जाइये, कर्ण आपको कदापि नहीं मार सकता। ऐसा कहकर बलवान् कर्णने महाराजको छोड दिया॥ अनन्तर जैसे इन्द्र दानवोंका नाश करते हैं; तैसे ही कर्ण पाण्डवोंकी सेनाका नाश करने लगे। (५६–६०)

महाराज भी लज्जित होकर एक ओरको चले गये। महाराजके जानेके पश्चात् कर्णके आगेसे चेदि और पञ्चाल देशके क्षत्री पाण्डवोंके सहित भागे, नकुल, सहदेव, महारथ द्रौपदीके पांचो पुत्र चले गये, पाण्डवोंकी सेनाको भागते देख सब कौरवोंके सहित कर्ण बहुत प्रसन्न हुए और पीछे दौडे॥ (६०–६३)

तब तुम्हारी सेनामें अनेक शङ्ख, भेर, मृदङ्ग बजने लगे, तुम्हारे पुत्र सिंहके समान गर्जने लगे, कुरुकुल श्रेष्ठ युधिष्ठिर भी श्रुतकीर्त्तिके रथपर शीघ्रतासे चढे, फिर कर्णका पराक्रम और अपनी

धृतराष्ट्र उवाच— यत्तत्प्रविश्य पार्थानां सैन्यं कुर्वञ्जनक्षयम् ।
कर्णो राजानमभ्येत्य तन्ममाचक्ष्व सञ्जय ॥ १ ॥
के च प्रवीराः पार्थानां युधि कर्णमवारयन् ।
कांश्च प्रमथ्याधिरथिर्युधिष्ठिरमपीडयत ॥ २ ॥
सञ्जय उवाच— धृष्टद्युम्नमुखान्पार्थान्दृष्ट्वा कर्णो व्यवस्थितान् ।
समभ्यधावत्त्वरितः पाञ्चालाञ्छत्रुकर्षिणः ॥ ३ ॥
तं तूर्णमभिधावन्तं पाञ्चाला जितकाशिनः ।
प्रत्युद्ययुर्महात्मानं हंसा इव महार्णवम् ॥ ४ ॥
ततः शङ्खसहस्राणां निःस्वनो हृदयङ्गमः ।
प्रादुरासीदुभयतो भेरीशब्दश्च दारुणः ॥ ५ ॥
नानाबाणनिपाताश्च द्विपाश्वरथनिःस्वनः ।
सिंहनादश्च वीराणामभवद्दारुणस्तदा ॥ ६ ॥
साद्रिद्रुमार्णवा भूमिः सवाताम्बुदमम्बरम् ।
सार्केन्दुग्रहनक्षत्रा द्यौश्च व्यक्तं विघूर्णिता ॥ ७ ॥
इति भूतानि तं शब्दं मेनिरे ते च विव्यथुः ।
यानि चाप्यल्पसत्त्वानि प्रायस्तानि मृतानि च ॥ ८ ॥

कर्णपर्वमें अडतालिस अध्याय ।

धृतराष्ट्र बोले, हे सञ्जय ! पाण्डवोंकी सेनामें प्रवेश करके और अनेक वीरोंका नाश करके कर्णने धर्मराजसे किस प्रकार युद्ध किया ? सो हमसे कहो । पाण्डवोंके कौन कौनसे वीरोंने युद्ध किया ? और इनको जीत कर कर्ण युधिष्ठिरके पास कैसे पहुंचे ? (१-२)

सञ्जय बोले, हे राजन् ! जब शत्रुनाशन कर्णने धृष्टद्युम्न आदि पाञ्चाल वीरोंको युद्धमें खडा देखा तब क्रोध करके उनकी ओर दौडे ॥ कर्णको देख कर ही पाञ्चाल वीर उनकी ओर इस प्रकार दौडे जैसे हंस सरोवरकी ओर दौडते हैं ॥ उसी समय दोनों ओरसे भेर और शंखोंका भयानक शब्द होने लगा ॥ (३—५)

दोनों ओरसे हाथी, घोडे वीर गर्जने लगे । बाण चलने लगे, और रथोंके पहियोंका शब्द होने लगा ॥ उस शब्दसे वृक्ष और पर्वतोंके सहित पृथ्वी, वायु, मेघ, नक्षत्र, चन्द्रमा और सूर्यके सहित आकाश कांपने लगा ॥ जिन बलवान् जन्तुओंने उस शब्दको सुना वे सब कांपने लगे, और दुर्बल जन्तु मर गये ॥ (६—८)

प्रतिवीरैश्च संमर्दे पत्तिसङ्घाः सहस्रशः ।
विशालायतताम्राक्षैः पद्मेन्दुसदृशाननैः ॥ ७४ ॥
शिरोभिर्युद्धशौण्डानां सर्वतः संवृता मही ।
यथा भुवि तथा व्योम्नि निःस्वनं शुश्रुवुर्जनाः ॥ ७५ ॥
विमानैरप्सरःसङ्घैर्गीतवादित्रनिःस्वनैः ।
हतानभिमुखान्वीरान्वीरैः शतसहस्रशः ॥ ७६ ॥
आरोप्यारोप्य गच्छन्ति विमानेष्वप्सरोगणाः ।
तद् दृष्ट्वा महदाश्चर्यं प्रत्यक्षं स्वर्गलिप्सया ॥ ७७ ॥
प्रहृष्टमनसः शूराः क्षिप्रं जघ्नुः परस्परम् ।
रथिनो रथिभिः सार्धं चित्रं युयुधुराहवे ॥ ७८ ॥
पत्तयः पत्तिभिर्नागाः सह नागैर्हयैर्हयाः ।
एवं प्रवृत्ते संग्रामे गजवाजिनरक्षये ॥ ७९ ॥
सैन्येन रजसा वृत्ते स्वे स्वाञ्जघ्नुः परे परान् ।
कचाकचि युद्धमासीद्दन्तादन्ति नखानखि ॥ ८० ॥
मुष्टियुद्धं नियुद्धं च देहपाप्मासुनाशनम् ।
तथा वर्तति संग्रामे गजवाजिनरक्षये ॥ ८१ ॥
नराश्वनागदेहेभ्यः प्रसृता लोहितापगा ।

---

मुख और कमलके समान नेत्रवाले पदाति शस्त्रोंसे मरकर पृथ्वीमें गिरगये ॥ वीरोंके कटे हुए शिरोंसे पृथ्वी भरगयी। पृथ्वी,आकाश और दशों दिशामें शब्द पूरित होगया ॥ (७३—७५)

आकाशमें विमानोंमें बैठी हुई अप्सरा अनेक प्रकार गीत गाकर बाजे बजाने लगीं । मरे हुए वीरोंको अपने अपने विमानमें बिठलाकर स्वर्गको लेजाने लगीं। इस आश्चर्यको देखकर सब वीर स्वर्ग जानेकी इच्छासे प्रसन्न होकर युद्ध करने लगे। रथी रथीसे विचित्र युद्ध करने लगे ॥ पैदल पैदलोंसे,हाथी हाथीसे,घोडे घोडेसे युद्ध करने लगे ॥ (७६-७९)

जिस समय यह घोर युद्ध होने लगा और दोनों सेनाओंमें धूल उडने लगी, तब पाण्डवों और कौरवोंकी सेना आपस ही में एक दूसरेको मारने लगीं, कोई किसीके बाल पकडकर खींचने लगे और कोई किसीको नखूनोंमे नोचने लगे तथा कोई दांतोंसे काटने लगे ॥ उस मनुष्य हाथी, घोडेके नाश करने वाले युद्धमें वीरोंकी मुक्कामुक्की होने लगी। अनन्तर रुधिरकी नदी बह चली, उसमें हाथी

धृतराष्ट्र उवाच— यत्तत्प्रविश्य पार्थानां सैन्यं कुर्वञ्जनक्षयम् ।
कर्णो राजानमभ्येत्य तन्ममाचक्ष्व सञ्जय ॥ १ ॥
के च प्रवीराः पार्थानां युधि कर्णमवारयन् ।
कांश्च प्रमथ्याधिरथिर्युधिष्ठिरमपीडयत ॥ २ ॥
सञ्जय उवाच— धृष्टद्युम्नमुखान्पार्थान्दृष्ट्वा कर्णो व्यवस्थितान् ।
समभ्यधावत्त्वरितः पाञ्चालाञ्छत्रुकर्षिणः ॥ ३ ॥
तं तूर्णमभिधावन्तं पाञ्चाला जितकाशिनः ।
प्रत्युद्ययुर्महात्मानं हंसा इव महार्णवम् ॥ ४ ॥
ततः शङ्खसहस्राणां निःस्वनो हृदयङ्गमः ।
प्रादुरासीदुभयतो भेरीशब्दश्च दारुणः ॥ ५ ॥
नानाबाणनिपाताश्च द्विपाश्वरथनिःस्वनः ।
सिंहनादश्च वीराणामभवद्दारुणस्तदा ॥ ६ ॥
साद्रिद्रुमार्णवा भूमिः सवाताम्बुदमम्बरम् ।
सार्केन्दुग्रहनक्षत्रा द्यौश्च व्यक्तं विघूर्णिता ॥ ७ ॥
इति भूतानि तं शब्दं मेनिरे ते च विव्यथुः ।
यानि चाप्यल्पसत्त्वानि प्रायस्तानि मृतानि च ॥ ८ ॥

कर्णपर्वमें अडतालिस अध्याय ।

धृतराष्ट्र बोले, हे सञ्जय ! पाण्डवोंकी सेनामें प्रवेश करके और अनेक वीरोंका नाश करके कर्णने धर्मराजसे किस प्रकार युद्ध किया ? सो हमसे कहो । पाण्डवोंके कौन कौनसे वीरोंने युद्ध किया ? और उनको जीत कर कर्ण युधिष्ठिरके पास कैसे पहुंचे ? (१-२)

सञ्जय बोले, हे राजन् ! उस शत्रुनाशन कर्णने धृष्टद्युम्न आदि पांचाल वीरोंको दूरसे खडा देखा तब क्रोध करके उनकी ओर दौडे ॥ कर्णको देख विजयी पाञ्चाल वीर उनकी ओर इस प्रकार दौडे जैसे हंस सरोवरकी ओर दौडते हैं ॥ उसी समय दोनों ओरसे भेर और शंखोंका भयानक शब्द होने लगा ॥ (३—५)

दोनों ओरसे हाथी, घोडे वीर गर्जने लगे । बाण चलने लगे, और रथोंके पहियोंका शब्द होने लगा ॥ उस शब्दसे वृक्ष और पर्वतोंके सहित पृथ्वी, वायु, मेघ, नक्षत्र, चन्द्रमा और सूर्यके सहित आकाश कांपने लगा ॥ जिन बलवान् जन्तुओंने उस शब्दको सुना वे सब कांपने लगे, और दुर्बल जन्तु मर गये । (६—८)

तत्प्रकीर्णरथाश्वेभं नरवाजिसमाकुलम् ॥ ९१ ॥
विध्वस्तवर्मकवचं प्रविद्धायुधकार्मुकम् ।
व्यद्रवत्तावकं सैन्यं लोड्यमानं समन्ततः ।
सिंहार्दितमिवारण्ये यथा गजकुलं तथा ॥ ९२ ॥ [२३५७]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां कर्णपर्वणि नकुलयुद्धे ऊनपञ्चाशत्तमोऽध्यायः ॥४९॥

सञ्जय उवाच— तानभिद्रवतो दृष्ट्वा पाण्डवांस्तावकं बलम् ।
दुर्योधनो महाराज वारयामास सर्वशः ॥ १ ॥
योधांश्च स्वबलं चैव समन्ताद्भरतर्षभ ।
क्रोशतस्तव पुत्रस्य न स्म राजन्न्यवर्तत ॥ २ ॥
ततः पक्षः प्रपक्षश्च शकुनिश्चापि सौबलः ।
तदा सशस्त्राः कुरवो भीममभ्यद्रवन्रणे ॥ ३ ॥
कर्णोऽपि दृष्ट्वा द्रवतो धार्तराष्ट्रान्सराजकान् ।
मद्रराजमुवाचेदं याहि भीमरथं प्रति ॥ ४ ॥
एवमुक्तश्च कर्णेन शल्यो मद्राधिपस्तदा ।
हंसवर्णान्हयानग्र्यान्प्रैषीद्यत्र वृकोदरः ॥ ५ ॥
ते प्रेरिता महाराज शल्येनाहवशोभिना ।

पराक्रमको देख तुम्हारी सेना भाग चली। उस समय तुम्हारी सेनामें सब ओरसे पाण्डवोंके वीर घुसे, तब तुम्हारी सेना इस प्रकार भागी जैसे सिंहोंके घुसनेसे हाथियोंके झुण्ड भागें। किसीका कवच कट गया। किसीका टोप गिर गया। किसीके शस्त्र गिर गये और किसीका धनुष टूट गया। ९०-९२ [२३५७]

कर्णपर्वमें उनचास अध्याय समाप्त।

कर्णपर्वमें पचास अध्याय।

सञ्जय बोले, हे राजन्! पाण्डवोंके भयसे अपनी सेनाको भागते और पाण्डवोंको अपनी सेनाकी ओर आते देख दुर्योधनने रोका॥ हे महाराज! दुर्योधनके पुकारनेपर भी तुम्हारी सेनाके वीर न रुके॥ अनन्तर पक्ष और प्रपक्षकी सेनाके सहित अनेक शस्त्र धारण करके सुबल-पुत्र शकुनि आदि कौरवोंके वीर भीमसेनकी ओर दौडे॥ (१—३)

कर्णने आपके पुत्र आदि सब वीरोंको भागते देख मद्रराज शल्यसे कहा, कि आप हमारे रथको भीमसेनके रथके पास ले चलिये, कर्णके वचन सुन मद्रराज शल्यने हंसके समान वर्णवाले घोडोंको भीमसेनकी ओर हांका। महापराक्रमी शल्यके हांकनेसे कर्णके घोडे वेगसे

चक्ररक्षौ तु कर्णस्य पुत्रौ मारिष दुर्जयौ ।
सुषेणः सत्यसेनश्च त्यक्त्वा प्राणानयुध्यताम् ॥ १८ ॥
पृष्ठगोप्ता तु कर्णस्य ज्येष्ठः पुत्रो महारथः ।
वृषसेनः स्वयं कर्णं पृष्ठतः पर्यपालयत् ॥ १९ ॥
धृष्टद्युम्नः सात्यकिश्च द्रौपदेया वृकोदरः ।
जनमेजयः शिखण्डी च प्रवीराश्च प्रभद्रकाः ॥ २० ॥
चेदिकेकयपञ्चाला यमौ मत्स्याश्च दंशिताः ।
समभ्यधावन्राधेयं जिघांसन्तः प्रहारिणम् ॥ २१ ॥
त एनं विविधैः शस्त्रैः शरधाराभिरेव च ।
अभ्यवर्षन्विमर्दन्तं प्रावृषीवाम्बुदा गिरिम् ॥ २२ ॥
पितरं तु परीप्सन्तः कर्णपुत्राः प्रहारिणः ।
त्वदीयाश्चापरे राजन्वीरा वीरानवारयन् ॥ २३ ॥
सुषेणो भीमसेनस्य छित्त्वा भल्लेन कार्मुकम् ।
नाराचैः सप्तभिर्विद्ध्वा हृदि भीमं ननाद ह ॥ २४ ॥
अथान्यद्धनुरादाय सुदृढं भीमविक्रमः ।
सज्यं वृकोदरः कृत्वा सुषेणस्याच्छिनद्धनुः ॥ २५ ॥

कर्णसे युद्ध करनेको आये, कर्णने उनको भी बाणोंसे मार डाला ॥ हे राजन्! कर्णके पुत्र सुषेण और सत्यसेन जो उनके रथके पहियोंकी रक्षा कर रहे थे, वे भी अपने प्राणकी आशा छोडकर घोर युद्ध करने लगे। कर्णका बडा बेटा वृषसेन कर्णके रथकी पीछेसे रक्षा कर रहा था, वह भी घोर युद्ध करने लगा। (१८-१९)

नकुल और सहदेव शस्त्र लेकर दौडे। जैसे वर्षा कालमें पर्वतके ऊपर मेघ वर्षते हैं, इसी प्रकार वे सब वीर कर्णके ऊपर अनेक प्रकारके बाण वर्षाने लगे ॥ (२०-२२)

हे राजन्! तुम्हारी ओरसे कर्णके पुत्र आदि अनेक वीर उन वीरोंसे युद्ध करने लगे। सुषेणने अपने बाणसे भीमसेनका धनुष काट दिया, और उनके हृदयमें पांच बाण मार कर गर्जने लगे। अनन्तर महाबलवान् भीमसेनने दूसरा धनुष लेकर उस पर रोदा चढाया, और उस बाणसे सुषेणका धनुष काट

दीर्घकालार्जितं क्रोधं मोक्तुकामं त्वयि ध्रुवम् ॥ १५ ॥
ईदृशं नास्य रूपं मे दृष्टपूर्वं कदाचन।
अभिमन्यौ हते कर्ण राक्षसे च घटोत्कचे ॥ १६ ॥
त्रैलोक्यस्य समस्तस्य शक्तः क्रुद्धो निवारणे।
बिभर्ति सदृशं रूपं युगान्ताग्निसमप्रभम् ॥ १७ ॥
सञ्जय उवाच— इति ब्रुवति राधेयं मद्राणामीश्वरे नृप।
अभ्यवर्धत वै कर्णं क्रोधदीप्तो वृकोदरः ॥ १८ ॥
अथागतं तु सम्प्रेक्ष्य भीमं युद्धाभिनन्दिनम्।
अब्रवीद्वचनं शल्यं राधेयः प्रहसन्निव ॥ १९ ॥
यदुक्तं वचनं मेऽद्य त्वया मद्रजनेश्वर।
भीमसेनं प्रति विभो तत्सत्यं नात्र संशयः ॥ २० ॥
एष शूरश्च वीरश्च क्रोधनश्च वृकोदरः।
निरपेक्षः शरीरे च प्राणतश्च बलाधिकः ॥ २१ ॥
अज्ञातवासं वसता विराटनगरे तदा।
द्रौपद्याः प्रियकामेन केवलं बाहुसंश्रयात् ॥ २२ ॥
गूढभावं समाश्रित्य कीचकः सगणो हतः।

शल्य बोले, हे कर्ण! देखो यह महापराक्रमी भीमसेन क्रोध किये, तुम्हारी ओरको चले आते हैं। ये बहुत दिनका इकट्ठा किया हुआ क्रोध आपके ऊपर डालेंगे॥ हे कर्ण! अभिमन्यु और घटोत्कचके मरने पर भी भीमसेनका ऐसा रूप नहीं देखा था, जैसा आज है॥ ये तीनों लोकको क्रोध करके नाश कर सक्ते हैं। इनका रूप इस समय प्रलय कालकी अग्निके समान होरहा है॥ (१५—१७)

सञ्जय बोले, मद्रराज शल्यके ऐसे वचन कहते कहते ही भीमसेन क्रोध करके कर्णके पास पहुंच गये॥ महायोद्धा भीमसेनको अपने पास आया देख राधापुत्र कर्ण हंस कर शल्यसे बोले, हे मद्रराज! आपने जो हमसे भीमसेनके विषयमें कहा सो सब सत्य है॥ ये महापराक्रमी क्रोधी और महायोद्धा हैं; इन्हें अपने शरीर और प्राणका मोह नहीं है; और बलमें भी ये सबसे अधिक है॥ (१८—२१)

ये जिस समय छिपकर विराट नगर में रहते थे, तब द्रौपदीके हितके लिये केवल अपने बाहुबलसे रूप छिपा कर भाइयोंके समेत कीचकको मार डाला था,

सुषेणस्तु धनुर्गृह्य भारसाधनमुत्तमम् ।
नकुलं पञ्चभिर्बाणैर्बाह्वोरुरसि चार्पयत् ॥ ३४ ॥
नकुलस्तं तु विंशत्या विध्वा भारसहैर्दृढैः ।
ननाद बलवन्नादं कर्णस्य भयमादधत् ॥ ३५ ॥
तं सुषेणो महाराज विध्वा दशभिराशुगैः ।
चिच्छेद च धनुः शीघ्रं क्षुरप्रेण महारथः ॥ ३६ ॥
अथान्यद्धनुरादाय नकुलः क्रोधमूर्छितः ।
सुषेणं नवभिर्बाणैर्वारयामास संयुगे ॥ ३७ ॥
स तु बाणैर्दिशो राजन्नाच्छाद्य परवीरहा ।
आजघ्ने सारथिं चास्य सुषेणं च ततस्त्रिभिः ॥ ३८ ॥
चिच्छेद चास्य सुदृढं धनुर्भल्लैस्त्रिभिस्त्रिधा ।
अथान्यद्धनुरादाय सुषेणः क्रोधमूर्छितः ॥ ३९ ॥
आविध्यन्नकुलं षष्ट्या सहदेवं च सप्तभिः ।
तद्युद्धं सुमहद्घोरमासीद्देवासुरोपमम् ॥ ४० ॥
निघ्नतां सायकैस्तूर्णमन्योन्यस्य वधं प्रति ।
सात्यकिर्वृषसेनस्य सूतं हत्वा त्रिभिः शरैः ॥ ४१ ॥
धनुश्चिच्छेद भल्लेन जघानाश्वांश्च सप्तभिः ।

---

पसर बाण मारे ॥ सुषेणने घोर धनुष धारण करके नकुलके हृदय और हाथोंमें अनेक बाण मारे ॥ नकुलने सुषेणके शरीरमें बीस बाण मारे और गर्जने लगे । नकुलके गर्जनेसे कर्ण डरते रहे ॥ (३२-३५)

हे महाराज ! अनन्तर महारथ सुषेणने अपने तेज बाणसे नकुलका धनुष काट दिया, और उनके शरीरमें दस बाण मारे ॥ अनन्तर नकुलने क्रोध करके दूसरा धनुष लिया और सुषेणको नौ बाण मारे, नकुलने अपने बाणोंसे कर दिशाओंको पूरित कर दिया । सुषेणके सारथीको मार डाला और तीन बाण उनके हृदयमें मारे । अनन्तर तीन तेज बाणोंसे उनका धनुष काट दिया। ३६-३९

फिर सुषेणने क्रोध करके दूसरा धनुष लिया और नकुलके शरीरमें साठ और सहदेवके सात बाण मारे । यह युद्ध देवासुर युद्धके समान भयंकर हुआ ॥ एक वीर दूसरेको मारनेकी इच्छासे घोर बाण चलाने लगे । सात्यकिने तीन बाणोंसे वृषसेनके सारथीको मार डाला । एक बाणसे धनुष सात बाणोंसे घोडे

सञ्जय उवाच— ततः प्रायाद्रथेनाशु शल्यस्तत्र विशाम्पते।
यत्र भीमो महेष्वासो व्यद्रावयत वाहिनीम् ॥ ३२ ॥
ततस्तूर्यनिनादश्च भेरीणां च महास्वनः।
उदतिष्ठच्च राजेन्द्र कर्णभीमसमागमे ॥ ३३ ॥
भीमसेनोऽथ संक्रुद्धस्तस्य सैन्यं दुरासदम्।
नाराचैर्विमलैस्तीक्ष्णैर्दिशः प्राद्रावयद्बली ॥ ३४ ॥
स सन्निपातस्तुमुलो घोररूपो विशाम्पते।
आसीद्रौद्रो महाराज कर्णपाण्डवयोर्मृधे ॥ ३५ ॥
ततो मुहूर्ताद्राजेन्द्र पाण्डवः कर्णमाद्रवत्।
समापतन्तं सम्प्रेक्ष्य कर्णो वैकर्त्तनो वृतः ॥ ३६ ॥
आजघान सुसंक्रुद्धो नाराचेन स्तनान्तरे।
पुनश्चैनममेयात्मा शरवर्षैरवाकिरत ॥ ३७ ॥
स विद्धः सूतपुत्रेण च्छादयामास पत्रिभिः।
विव्याध निशितैः कर्णं नवभिर्नतपर्वभिः ॥ ३८ ॥
तस्य कर्णो धनुर्मध्ये द्विधा चिच्छेद पत्रिभिः।
अथैनं छिन्नधन्वानं प्रत्यविध्यत्स्तनान्तरे ॥ ३९ ॥
नाराचेन सुतीक्ष्णेन सर्वावरणभेदिना।

सञ्जय बोले, हे पृथ्वीनाथ! कर्णका ऐसा वचन सुन शल्यने रथको उधर ही हांका जहां भीमसेन तुम्हारी सेना मारते थे। हे राजेन्द्र! जब कर्ण और भीमसेन सन्मुख हुए तब दोनों ओरसे शङ्ख, मृदङ्ग, भेर बजने लगे॥ इतने ही समयमें महा बलवान् भीमसेनने उस घोर सेनाको अपने तीक्ष्ण नाराच बाणोंसे पीडित कर भगा दिया। हे राजेन्द्र! भीमसेन और कर्णका यहां घोर युद्ध हुआ॥ (३२—३५)

हे पृथ्वीनाथ! तब भीमसेन महा दानी कर्णकी ओर दौडे, उनको देख महा पराक्रमी कर्णने क्रोध कर एक बाण भीमसेनको मारा और फिर उनकी ओर अनेक बाण चलाये। तब क्रोध करके भीमसेनने कर्णके हृदयमें नौ बाण मारे, फिर उनकी ओर अनेक बाण चलाये। (३६—३८)

तब कर्णने क्रोध करके अनेक बाणोंसे भीमसेनका धनुष काट दिया और उनके हृदयमें अनेक बाण मारे तथा एक नाराच बाणसे भीमसेनका कवच तोड दिया। तब भीमसेनने दूसरा धनुष

विसूताश्वरथं कृत्वा ललाटे त्रिभिरार्पयत् ।
स त्वन्यं रथमास्थाय विधिवत्कल्पितं पुनः ॥ ५१ ॥
युयुधे पाण्डुभिः सार्धं कर्णस्याप्याययन्बलम् ।
धृष्टद्युम्नस्ततः कर्णमविध्यद्दशभिः शरैः ॥ ५२ ॥
द्रौपदेयास्त्रिसप्तत्या युयुधानस्तु सप्तभिः ।
भीमसेनश्चतुःषष्ट्या सहदेवश्च सप्तभिः ॥ ५३ ॥
नकुलस्त्रिंशता बाणैः शतानीकस्तु सप्तभिः ।
शिखण्डी दशभिर्वीरो धर्मराजः शतेन तु ॥ ५४ ॥
एते चान्ये च राजेन्द्र प्रवीरा जयगृद्धिनः ।
अभ्यर्दयन्महेष्वासं सूतपुत्रं महामृधे ॥ ५५ ॥
तान्सूतपुत्रो विशिखैर्दशभिर्दशभिः शरैः ।
रथेनानुचरन्वीरः प्रत्यविध्यदरिन्दमः ॥ ५६ ॥
तत्रास्त्रवीर्यं कर्णस्य लाघवं च महात्मनः ।
अपश्याम महाभाग तदद्भुतमिवाभवत् ॥ ५७ ॥
न ह्याददानं ददृशुः सन्दधानं च सायकान् ।
विमुञ्चन्तं च संरम्भाददृश्यन्त हतानरीन् ॥ ५८ ॥
द्यौर्वियद्भूर्दिशश्चैव प्रपूर्णा निशितैः शरैः ।

बाण मारे, फिर उनके रथ, सारथी और घोडोंको मार डाला और उनके माथेमें तीन बाण मारे। तब दुःशासन अनेक शस्त्रोंसे भरे रथपर चढे और कर्णका बल बढानेके लिये पाण्डवोंसे युद्ध करने लगे ॥ (४९-५२)

तब धृष्टद्युम्नने क्रोध करके कर्णके शरीरमें दस बाण मारे, द्रौपदीके पुत्रोंने तिहत्तर, सात्यकिने सात, भीमसेनने चौसठ, सहदेवने सात, नकुलने तीस, शतानीकने सात, वीर शिखण्डीने दस, धर्मराज युधिष्ठिरने सौ बाण मारे, इस घोर युद्धमें इनको आदि लेकर और भी अनेक वीर अपनी विजयकी इच्छासे कर्णसे युद्ध करने लगे ॥ (५३-५५)

सूर्यपुत्र कर्णने अपने रथमें बैठे हुए इन सब वीरोंके शरीरमें दश दश बाण मारे ॥ हे महाभाग ! हमने उस समय महापराक्रमी कर्णके शस्त्र बल और शीघ्रताको देखा, उस समय उन्होंने अद्भुत कर्म किया, हमने उस समय कर्णको बाण निकालते, चढाते नहीं देखा केवल शत्रुओंके मरनेसे ज्ञान पडता था, कि कर्ण बाण चला रहे है । (५६-५८)

व्यद्रावयद्भीमसेनो यथेन्द्रो दानवान्पुरा ॥ ४९ ॥ [२४०६]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां कर्णपर्वणि कर्णापयाने पञ्चाशत्तमोऽध्यायः ॥ ५० ॥

धृतराष्ट्र उवाच— सुदुष्करमिदं कर्म कृतं भीमेन सञ्जय ।
येन कर्णो महाबाहू रथोपस्थे निपातितः ॥ १ ॥
कर्णो ह्येको रणे हन्ता पाण्डवान्सृञ्जयैः सह ।
इति दुर्योधनः सूत प्राब्रवीन्मां मुहुर्मुहुः ॥ २ ॥
पराजितं तु राधेयं दृष्ट्वा भीमेन संयुगे ।
ततः परं किमकरोत्पुत्रो दुर्योधनो मम ॥ ३ ॥

सञ्जय उवाच— विमुखं प्रेक्ष्य राधेयं सूतपुत्रं महाहवे ।
पुत्रस्तव महाराज सोदर्यान्समभाषत ॥ ४ ॥
शीघ्रं गच्छत भद्रं वो राधेयं परिरक्षत ।
भीमसेनभयागाधे मज्जन्तं व्यसनार्णवे ॥ ५ ॥
ते तु राज्ञा समादिष्टा भीमसेनं जिघांसवः ।
अभ्यवर्तन्त संक्रुद्धाः पतङ्गाः पावकं यथा ॥ ६ ॥
श्रुतर्वा दुर्धरः क्राथो विवित्सुर्विकटः समः ।
निषङ्गी कवची पाशी तथा नन्दोपनन्दकौ ॥ ७ ॥
दुष्प्रधर्षः सुबाहुश्च वातवेगसुवर्चसौ ।

होनेपर भीमसेनने तुम्हारी सेनाको इस प्रकार भगाया जैसे इन्द्रने राक्षसोंको भगाया था ॥ (४७-४९)[२४०६]

कर्णपर्वमें पचास अध्याय समाप्त ।

कर्णपर्वमें एकावन अध्याय ।

धृतराष्ट्र बोले, हे सञ्जय ! भीमसेनने जो कर्णको मूर्छित करके रथके ऊपर गिराया यह भीमसेनका कर्म दूसरोंसे होना कठिन है ॥ मेरा पुत्र दुर्योधन मुझे बार बार कहता था, कि अकेलाही कर्ण सृञ्जयोंके सहित पाण्डवोंको मार सकता है ॥ परन्तु जब कर्ण इस प्रकार भीमसेनके द्वारा पराजित हुआ तब मेरे पुत्र दुर्योधनने क्या किया ? (१-३)

सञ्जय बोले, हे राजन् ! राधापुत्र कर्णको युद्धसे भगा देख तुम्हारे पुत्रने अपने भाइयोंसे कहा ॥ तुम लोगोंका कल्याण हो, देखो भीमसेन के भयरूपी समुद्रमें कर्ण डूबे जाते हैं ॥ तुम लोग शीघ्र जाकर उनकी रक्षा करो ॥ (४-५)

अपने भाईके वचन सुन वे सब लोग क्रोध कर भीमसेन पर इस प्रकार दौडे जैसे दीपकपर पतङ्ग ॥ श्रुतर्वा, दुर्द्धर, क्राथ, विवित्सु, विकट, सम, निषङ्गी,

युधिष्ठिरमुखाः पार्थाः सूतपुत्रमुखा वयम् ॥ ६७ ॥ [ २२६५ ]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां कर्णपर्वणि सकुलयुद्धेऽष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

सञ्जय उवाच— विदार्य कर्णस्तां सेनां युधिष्ठिरमथाद्रवत् ।
रथहस्त्यश्वपत्तीनां सहस्रैः परिवारितः ॥ १ ॥
नानायुधसहस्राणि प्रेरितान्यरिभिर्वृषः ।
छित्त्वा बाणशतैरुग्रैस्तानविध्यदसम्भ्रमात् ॥ २ ॥
निचकर्त शिरांस्येषां बाहूनूरूंश्च सूतजः ।
ते हता वसुधां पेतुर्भग्नाश्चान्ये विदुद्रुवुः ॥ ३ ॥
द्राविडास्तु निषादास्तु पुनः सात्यकिचोदिताः ।
अभ्यद्रवञ्जिघांसन्तः पत्तयः कर्णमाहवे ॥ ४ ॥
ते विबाहुशिरस्त्राणाः प्रहताः कर्णसायकैः ।
पेतुः पृथिव्यां युगपच्छिन्नं शालवनं यथा ॥ ५ ॥
एवं योधशतान्याजौ सहस्राण्ययुतानि च ।
हतानीयुर्महीं देहैर्यशसापूरयन्दिशः ॥ ६ ॥
अथ वैकर्तनं कर्णं रणे क्रुद्धमिवान्तकम् ।
रुरुधुः पाण्डुपञ्चाला व्याधिं मन्त्रौषधैरिव ॥ ७ ॥

सिंहके समान गर्जने लगे ॥ इसके पश्चात् युधिष्ठिरको आगे करके सब पाण्डव और कर्णको आगे करके हम लोग युद्ध करनेको चले ॥ (६४—६७) [२२६५]

कर्णपर्वमें अड़तालिस अध्याय समाप्त।

कर्णपर्वमें उनचास अध्याय।

सञ्जय बोले, हे राजन् धृतराष्ट्र ! महाबलवान् कर्ण उस सेनाके मुखको तोड़कर सहस्रों हाथी, घोड़े और पदातियोंके सहित युधिष्ठिरकी ओर दौड़े ॥ पाण्डवोंकी ओरसे अनेक प्रकार चलते हुए शस्त्रोंको काटकर सावधान कर्णने सब वीरोंके शरीरमें अपने तेज बाण मारे ॥ किसीका सिर किसीका हाथ और किसीके पैर काट डाले। कोई मर कर पृथ्वीमें सो गया, कोई डरकर भाग गया ॥ (१—३)

सात्यकिकी आज्ञासे फिर कर्णको मारनेके लिये द्राविड और निषाददेशकी सेना चली। जैसे वायु चलनेसे शालके वृक्ष टूटकर पृथ्वीमें गिर जाते हैं, तैसे ही कर्णके बाण लगनेसे सहस्रों वीर मरने लगे। इस प्रकार कर्णने सहस्रों वीरोंको मारकर जगत्में अपना यश फैलाया ॥ (४-६)

जैसे वैद्य मन्त्र और औषधियोंसे

आच्छादयन्दिशः सर्वाः सूर्यस्येवांशवो यथा।
बाणभूते ततस्तस्मिन्सञ्छन्ने च नभस्तले ॥ १६ ॥
यमाभ्यां ददृशे रूपं कालान्तकयमोपमम्।
पराक्रमं तु तं दृष्ट्वा तव सूनोर्महारथाः ॥ १७ ॥
मृत्योरुपान्तिकं प्राप्तौ माद्रीपुत्रौ स्म मेनिरे।
ततः सेनापती राजन्पाण्डवस्य महारथः ॥ १८ ॥
पार्षतः प्रययौ तत्र यत्र राजा सुयोधनः।
माद्रीपुत्रौ ततः शूरौ व्यतिक्रम्य महारथौ ॥ १९ ॥
धृष्टद्युम्नस्तव सुतं वारयामास सायकैः।
तमविध्यदमेयात्मा तव पुत्रो ह्यमर्षणः ॥ २० ॥
पाञ्चाल्यं पञ्चविंशत्या प्रहसन्पुरुषर्षभः।
ततः पुनरमेयात्मा तव पुत्रो ह्यमर्षणः ॥ २१ ॥
विद्ध्वा ननाद पाञ्चाल्यं षष्ट्या पञ्चभिरेव च।
तथास्य सशरं चापं हस्तावापं च मारिष ॥ २२ ॥
क्षुरप्रेण सुतीक्ष्णेन राजा चिच्छेद संयुगे।
तदपास्य धनुश्छिन्नं पाञ्चाल्यः शत्रुकर्शनः ॥ २३ ॥
अन्यदादत्त वेगेन धनुर्भारसहं नवम्।
प्रज्वलन्निव वेगेन संरम्भाद्रुधिरेक्षणः ॥ २४ ॥

थे॥ जिस प्रकार सूर्यकी किरण जगत्में छा जाती हैं ऐसे ही दुर्योधनके बाण सब आकाशमें छागये और चारों ओर बाण ही बाण दीखने लगे। उस समय नकुल और सहदेवने दुर्योधनको यम और मृत्युके समान देखा, तुम्हारे पुत्रका यह पराक्रम देख सब महारथोंने जाना कि नकुल और सहदेव मर गये। १४-१८

तब पाण्डवोंके सेनापति महारथ धृष्टद्युम्न उधरको दौडे जिधर महारथ नकुल और सहदेव दुर्योधनसे युद्ध कर रहे थे। हे महाराज! धृष्टद्युम्नने दुर्योधनकी ओर अनेक बाण चलाये। क्रोधी दुर्योधनने भी धृष्टद्युम्नके शरीरमें अनेक बाण मारे॥ फिर पुरुषसिंह दुर्योधनने धृष्टद्युम्नके शरीरमें पचीस बाण मारे। फिर पैसठ बाण मार कर गर्जने लगे। (१८-२२)

अनन्तर एक बाणसे बाण सहित धनुष और चमडोंका पञ्जा अर्थात् हत्थी काट दी, शत्रुनाशन धृष्टद्युम्नने उस धनुषको फेंक कर एक नवीन धनुष शीघ्रतासे धारण किया। उस समय

आसन्नांश्च तथा योधाञ्शरैरासन्नयोधिभिः ।
छादयामास समरे केशवं चेदमब्रवीत् ॥ १९ ॥
पश्य कृष्ण महाबाहो संशप्तकगणान्बहून् ।
कुर्वाणान्दारुणं कर्म वध्यमानान्सहस्रशः ॥ २० ॥
रथबन्धमिमं घोरं पृथिव्यां नास्ति कश्चन ।
यः सहेत पुमाँल्लोके मदन्यो यदुपुङ्गव ॥ २१ ॥
इत्येवमुक्त्वा बीभत्सुर्देवदत्तमथाधमत् ।
पाञ्चजन्यं च कृष्णोऽपि पूरयन्निव रोदसी ॥ २२ ॥
तं तु शङ्खस्वनं श्रुत्वा संशप्तकवरूथिनी ।
सञ्चचाल महाराज वित्रस्ता चाद्रवद्भृशम् ॥ २३ ॥
पादबन्धं ततश्चक्रे पाण्डवः परवीरहा ।
नागमस्त्रं महाराज सम्प्रकीर्य मुहुर्मुहुः ॥ २४ ॥
ते बद्धाः पादबन्धेन पाण्डवेन महात्मना ।
निश्चेष्टाश्चाभवन्राजन्नश्मसारमया इव ॥ २५ ॥
निश्चेष्टांस्तु ततो योधानवधीत्पाण्डुनन्दनः ।
यथेन्द्रः समरे दैत्यांस्तारकस्य वधे पुरा ॥ २६ ॥
ते वध्यमानाः समरे मुमुचुस्तं रथोत्तमम् ।

अपने रथपर चढ़े हुए अनेक वीरोंको भूमिपर गिराया और अपने समीपवेधी बाणोंसे अनेक पास आये हुए वीरोंको छा लिया और कृष्णसे यों बोले । १६-१९

से सब आकाश और पृथ्वी पूरित होगई ॥ इस शङ्खके शब्दको सुन संशप्तकोंकी सेना कांपने और भयसे भागने लगी । अनन्तर अर्जुनने नाग बाण चलाकर

रथं सोपस्करं छत्रं शक्तिं खड्गं गदां ध्वजम् ॥ ३३ ॥
भल्लैश्चिच्छेद दशभिः पुत्रस्य तव पार्षतः।
तपनीयाङ्गदं चित्रं नागं मणिमयं शुभम् ॥ ३४ ॥
ध्वजं कुरुपतेश्छिन्नं ददृशुः सर्वपार्थिवाः।
दुर्योधनं तु विरथं छिन्नवर्मायुधं रणे ॥ ३५ ॥
भ्रातरः पर्यरक्षन्त सोदरा भरतर्षभ।
तमारोप्य रथे राजन्दण्डधारो जनाधिपः ॥ ३६ ॥
अपाहरदसम्भ्रान्तो धृष्टद्युम्नस्य पश्यतः।
कर्णस्तु सात्यकिं जित्वा राजगृद्धी महाबलः ॥ ३७ ॥
द्रोणहन्तारमुग्रेषुं ससाराभिमुखो रणे।
तं पृष्ठतोऽभ्ययात्तूर्णं शैनेयो वितुदञ्शरैः ॥ ३८ ॥
वारणं जघनोपान्ते विषाणाभ्यामिव द्विपः।
स भारत महानासीद्योधानां सुमहात्मनाम् ॥ ३९ ॥
कर्णपार्षतयोर्मध्ये त्वदीयानां महारणः।
न पाण्डवानां नास्माकं योधः कश्चित्पराङ्मुखः ॥४०॥
प्रत्यदृश्यत्ततः कर्णः पाञ्चालांस्त्वरितो ययौ।

---

सारथीको मार डाला॥ एकसे सुवर्ण भूषित धनुष, एकसे छत्र, रथ, खड्ग और गदा आदि सब शस्त्र काट दिये। अनन्तर धृष्टद्युम्नने दश बाणोंसे तुम्हारे पुत्रके मणिजटित नागको काट दिया। सब वीरोंने देखा कि दुर्योधनकी ध्वजा, रथ, शस्त्र कवच कट गये। हे राजन्! तब उनके भाई उनकी रक्षा करनेको दौडे। ( ३१—३६ )

उसी समय राजा दण्डधारने दुर्योधनको अपने रथपर चढा लिया और सावधान होकर धृष्टद्युम्नके आगेसे हटा दिया, सात्यकिको जीतकर कर्ण भी दुर्योधनकी रक्षाको चले, वहां जाकर द्रोणाचार्यके मारनेवाले धृष्टद्युम्नके ऊपर अनेक बाण वर्षाने लगे। इनके पीछे अनेक बाण वर्षाते हुए सात्यकी दौडे, जैसे मतवाला हाथी किसी हाथी को दांतसे मारता हुआ दौडता है, ऐसेही सात्यकी कर्णके पीछे दौडे। (३६-३९)

हे राजन्! यह वीरोंका घोर युद्ध हुआ जिस समय पाण्डव और दुर्योधनकी विजयके लिये दोनों सेनापति युद्ध करने लगे। तब दोनों ओरसे कोई वीर युद्धमे न भागा॥ हे नरश्रेष्ठ! कर्णको धृष्टद्युम्नकी ओर आते देख अनेक

अर्जुनं हृदये विध्वा विव्याधान्यैस्त्रिभिः शरैः ।
स गाढविद्धो व्यथितो रथोपस्थ उपाविशत् ॥ ३६ ॥
तत उच्चुक्रुशुः सर्वे हतः पार्थ इति स्म ह ।
ततः शङ्खनिनादाश्च भेरीशब्दाश्च पुष्कलाः ॥ ३७ ॥
नानावादित्रनिनदाः सिंहनादाश्च जज्ञिरे ॥
प्रतिलभ्य ततः संज्ञां श्वेताश्वः कृष्णसारथिः ॥ ३८ ॥
ऐन्द्रमस्त्रममेयात्मा प्रादुश्चक्रे त्वरान्वितः ।
ततो बाणसहस्राणि समुत्पन्नानि मारिष ॥ ३९ ॥
सर्वदिक्षु व्यदृश्यन्त निघ्नन्ति तव वाहिनीम् ।
हयान्रथांश्च समरे शस्त्रैः शतसहस्रशः ॥ ४० ॥
वध्यमाने ततः सैन्ये भयं सुमहदाविशत् ।
संशप्तकगणानां च गोपालानां च भारत ॥ ४१ ॥
नहि तत्र पुमान्कश्चिद्योऽर्जुनं प्रत्यविध्यत ।
पश्यतां तत्र वीराणामहन्यत बलं तव । ॥ ४२ ॥
हन्यमानमपश्यंश्च निश्चेष्टं स्म पराक्रमे ।
अयुतं तत्र योधानां हत्वा पाण्डुसुतो रणे ॥ ४३ ॥
व्यभ्राजत महाराज विधूमोऽग्निरिव ज्वलन् ।

निजघान सुसंक्रुद्धश्चेदीनां च महारथान्।
तेषामाददतः प्राणानासीदाधिरथेर्वपुः ॥ ५० ॥
शोणिताभ्युक्षिताङ्गस्य रुद्रस्येवोर्जितं महत्।
तत्र भारत कर्णेन मातङ्गास्ताडिताः शरैः ॥ ५१ ॥
सर्वतोऽभ्यद्रवन्भीताः कुर्वन्तो महदाकुलम्।
निपेतुरुर्व्यां समरे कर्णसायकताडिताः ॥ ५२ ॥
कुर्वन्तो विविधान्नादान्वज्रनुन्ना इवाचलाः।
गजवाजिमनुष्यैश्च निपतद्भिः समन्ततः ॥ ५३ ॥
रथैश्चाधिरथे मार्गे समास्तीर्यत मेदिनी।
नैवं भीष्मो न च द्रोणो नान्ये युधि च तावकाः॥ ५४ ॥
चक्रुः स्म तादृशं कर्म यादृशं वै कृतं रणे।
सूतपुत्रेण नागेषु हयेषु च रथेषु च ॥ ५५ ॥
नरेषु च महाराज कृतं स्म कदनं महत्।
मृगमध्ये यथा सिंहो दृश्यते निर्भयश्चरन् ॥ ५६ ॥
पाञ्चालानां तथा मध्ये कर्णोऽचरदभीतवत्।
यथा मृगगणांस्त्रस्तान्सिंहो द्रावयते दिशः ॥ ५७ ॥
पाञ्चालानां रथव्रातान्कर्णो व्यद्रावयत्तथा।
सिंहास्यं च यथा प्राप्य न जीवन्ति मृगाः क्वचित् ॥ ५८ ॥

बाणोंसे कर्णने व्याकुल कर दिया और उनके शरीरसे प्राण निकाल दिये।४६-५०

हे भारत! उस समय कर्णका शरीर रुधिर भीगे शिवके समान दीखता था, इसी प्रकार उन्होंने अनेक बाणोंसे हाथियोंको मार डाला॥ हाथी कर्णके बाणोंसे व्याकुल होकर पृथ्वीमें गिर गए और अनेक इधर उधरको भाग गये जैसे वज्रके लगनेसे पर्वत गिरते हैं वैसे ही वे हाथी कर्णके बाणोंसे चिल्लाते हुए गिर गये। अनेक मनुष्य और घोडे भी मरकर पृथ्वीमें गिर गये। (५०-५४)

जैसे कर्णने वीरोंको मारा ऐसा भीष्म, द्रोणाचार्य आदि तुम्हारे ओरके किसी योद्धाने नहीं मारा था। हाथी, घोडे और रथोंके बीचमें जैसा कर्णने घोर युद्ध किया ऐसा किसीने नहीं किया था, जैसे हरिणोंके बीचमें सिंह बेडर होकर घूमता है॥ ऐसा ही कर्ण उस सेनाका नाश करते हुए घूमने लगे। सिंहको देख हरिण के समान कर्णको देख पाञ्चाली योद्धा भागने लगे॥ ५४-५८

कृपस्तु शरवर्षं तद्विनिहत्य महास्त्रवित् ।
शिखण्डिनं रणे क्रुद्धो विव्याध दशभिः शरैः ॥ ६ ॥
ततः शिखण्डी कुपितः शरैः सप्तभिराहवे ।
कृपं विव्याध कुपितं कङ्कपत्रैरजिह्मगैः ॥ ७ ॥
ततः कृपः शरैस्तीक्ष्णैः सोऽतिविद्धो महारथः ।
व्यश्वसूतरथं चक्रे शिखण्डिनमथो द्विजः ॥ ८ ॥
हताश्वात्तु ततो यानादवप्लुत्य महारथः ।
खड्गं चर्म तथा गृह्य सत्वरं ब्राह्मणं ययौ ॥ ९ ॥
तमापतन्तं सहसा शरैः सन्नतपर्वभिः ।
छादयामास समरे तदद्भुतमिवाभवत् ॥ १० ॥
तत्राद्भुतमपश्याम शिलानां प्लवनं यथा ।
निश्चेष्टस्तद्रणे राजञ्छिखण्डी समतिष्ठत ॥ ११ ॥
कृपेण च्छादितं दृष्ट्वा नृपोत्तम शिखण्डिनम् ।
प्रत्युद्ययौ कृपं तूर्णं धृष्टद्युम्नो महारथः ॥ १२ ॥
धृष्टद्युम्नं ततो यान्तं शारद्वतरथं प्रति ।
प्रतिजग्राह वेगेन कृतवर्मा महारथः ॥ १३ ॥
युधिष्ठिरमथायान्तं शारद्वतरथं प्रति ।

---

छा लिया ॥ तब शिखण्डी क्रोध करके बाण बर्षाते हुए कृपाचार्यकी ओर दौडे ॥ शस्त्र जाननेवाले कृपाचार्यने शिखण्डीके सब बाण काट दिये । और उनके शरीरमें दश बाण मारे ॥ (४–६)

कृपाचार्यकी ओर दौडे ॥ (७–९)

शिखण्डीको आते देख कृपाचार्यने अनेक बाणोंसे छा दिया । हे राजन् ! जैसे नदीमें तैरते हुए पत्थरोंको देखकर सब मनुष्य आश्चर्य करते हैं, ऐसे ही

एको बहूनभ्यपतद्गरुत्मान्पन्नगानिव ॥ ६७ ॥
तैः कर्णस्याभवद्युद्धं घोररूपं विशाम्पते ।
तादृग्यादृक्पुरा वृत्तं देवानां दानवैः सह ॥ ६८ ॥
तान्समेतान्महेष्वासाञ्शरवर्षौघवर्षिणः ।
एको ऽव्यधमदव्यग्रस्तमांसीव दिवाकरः ॥ ६९ ॥
भीमसेनस्तु संसक्ते राधेये पाण्डवैः सह ।
सर्वतोऽभ्यहनत्क्रुद्धो यमदण्डनिभैः शरैः ॥ ७० ॥
बाह्लीकान्केकयान्मत्स्यान्वासात्यान्मद्रसैन्धवान् ।
एकः सङ्ख्ये महेष्वासो योधयन्बह्वशोभत ।
तत्र मर्मसु भीमेन नाराचैस्ताडिता गजाः ॥ ७१ ॥
प्रपतन्तो हतारोहाः कम्पयन्ति स्म मेदिनीम् ।
वाजिनश्च हतारोहाः पत्तयश्च गतासवः ॥ ७२ ॥
शेरते युधि निर्भिन्ना वमन्तो रुधिरं बहु ।
सहस्रशश्च रथिनः पातिताः पतितायुधाः ॥ ७३ ॥
ते क्षताः समदृश्यन्त भीमभीता गतासवः ।
रथिभिः सादिभिः सूतैः पादातैर्वाजिभिर्गजैः ॥७४॥

पाञ्चाल और पाण्डवोंसे युद्ध करने लगे ॥ हे राजन् ! पहले जैसे देवता और दानवोंका युद्ध हुआ था, ऐसे ही पाण्डव और कर्णका युद्ध हुआ ॥ जैसे अन्धकारको सूर्य नाश करता है ऐसे ही एकले कर्णने सावधान होकर उन वीरोंको अपने बाणोंसे व्याकुल कर दिया ॥ (६७-६९)

जिस समय कर्ण पाण्डवोंसे युद्ध करने लगे, तब यमराजके दण्डके समान बाण छोडते हुए भीमसेन क्रोध करके तुम्हारी सेनाका नाश करने लगे। भीमसेनने अपने बाणोंसे बाह्लिक, केकय, मत्स्य, वासत्य, मद्र और सिन्धुदेशके वीरोंको व्याकुल कर दिया। एकले भीमसेन अनेक वीरोंसे युद्ध करने लगे तब उसकी शोभा बहुत बढी ॥ उन्होंने अनेक हाथियोंको मर्मस्थानमें बाण मारकर गिरा दिया अनेक हाथी, घोडे, वीरोंके सहित पृथ्वीमें गिर गये, इसी प्रकार अनेक पदाति प्राणरहित होकर पृथ्वीमें सोगये इन सबके गिरनेसे पृथ्वी कांपने लगी। अनेक रथी रुधिरमें भींगकर और शस्त्रहीन होकर पृथ्वी में गिर गये। अनेक हाथी, घोडे और रथोंपर चढे वीर तथा पदाति भीमसेनके डरसे पृथ्वीमें गिर गये ॥ (७०-७४)

अभ्यापतदमेयात्मा गौतमस्य रथं प्रति ॥ २२ ॥
दृष्ट्वा च युक्तं तं युद्धे ब्राह्मणं चरितव्रतम् ।
अपयातस्ततस्तूर्णं शिखण्डी राजसत्तम ॥ २३ ॥
सुकेतुस्तु ततो राजन्गौतमं नवभिः शरैः ।
विध्वा विव्याध सप्तत्या पुनश्चैनं त्रिभिः शरैः ॥२४ ॥
अथास्य सशरं चापं पुनश्चिच्छेद मारिष ।
सारथिं च शरेणास्य भृशं मर्मस्वताडयत् ॥ २५ ॥
गौतमस्तु ततः क्रुद्धो धनुर्गृह्य नवं दृढम् ।
सुकेतुं त्रिंशता बाणैः सर्वमर्मस्वताडयत् ॥ २६ ॥
स विह्वलितसर्वाङ्गः प्रचचाल रथोत्तमे ।
भूमिकम्पे यथा वृक्षश्चचाल कम्पितो भृशम् ॥ २७ ॥
चलतस्तस्य कायात्तु शिरो ज्वलितकुण्डलम् ।
सोष्णीषं सशिरस्त्राणं क्षुरप्रेण त्वपातयत् ॥ २८ ॥
तच्छिरः प्रापतद्भूमौ श्येनाहृतमिवामिषम् ।
ततोऽस्य कायो वसुधां पश्चात्प्रापतदच्युत ॥ २९ ॥
तस्मिन्हते महाराज त्रस्तास्तस्य पुरोगमाः ।
गौतमं समरे त्यक्त्वा दुद्रुवुस्ते दिशो दश ॥ ३० ॥

पराक्रमी सुकेतु कृपाचार्य के रथ के ऊपर अनेक बाण बर्षाते हुए वेगसे आये ॥ (२०-२२)

तब कृपाचार्यने क्रोध करके दूसरा नवीन दृढ धनुष धारण किया और सुकेतुके मर्मस्थानमें तीस बाण मारे,

अपारयन्तो मद्बाणान्सिंहशब्दं मृगा इव ।
दीर्यते च महत्सैन्यं सृञ्जयानां महारणे ॥ ८४ ॥
हस्तिकक्षो ह्यसौ कृष्णः केतुः कर्णस्य धीमतः ।
दृश्यते राजसैन्यस्य मध्ये विचरतो मुदा ॥ ८५ ॥
न च कर्णं रणे शक्ता जेतुमन्ये महारथाः ।
जानीते हि भवान्कर्णं वीर्यवन्तं पराक्रमे ॥ ८६ ॥
तत्र याहि यतः कर्णो द्रावयत्येष नो बलम् ।
वर्जयित्वा रणे याहि सूतपुत्रं महारथम् ॥ ८७ ॥
एतन्मे रोचते कृष्ण यथा वा तव रोचते ।
एतच्छ्रुत्वा वचस्तस्य गोविन्दः प्रहसन्निव ॥ ८८ ॥
अब्रवीदर्जुनं तूर्णं कौरवाञ्जहि पाण्डव ।
ततस्तव महासैन्यं गोविन्दप्रेरिता हयाः ॥ ८९ ॥
हंसवर्णाः प्रविविशुर्वहन्तः कृष्णपाण्डवौ ।
केशवप्रेरितैरश्वैः श्वेतैः काञ्चनभूषणैः ॥ ९० ॥
प्रविशद्भिस्तव बलं चतुर्दिशमभिद्यत ।
मेघस्तनितनिर्ह्रादः स रथो वानरध्वजः ॥ ९१ ॥

करनेवाले अनेक संशप्तकोंको मारा, अब ये युद्ध छोड कर भागे जाते हैं ॥ जैसे सिंहके शब्दको सुन कर हिरण भागते हैं, ऐसे ही मेरे बाणोंको न सह कर ये सेना भागी जाती है, ये देखो वह राजाओंकी सेनाके बीचमें घूमते हुए हस्तिकक्षामे युक्त कृष्ण वर्णवाली कर्णकी ध्वजा दीखती है ॥ (८२-८५)

मेरे सिवाय कर्णको युद्धमें और कोई भी महारथी नहीं जीत सक्ता, आप कर्णके बलको जानते ही हैं॥ जहां महारथ कर्ण युद्ध कर रहे हैं वहीं हमारे रथको ले चलो, जहां कर्ण हमारी सेनाको मार रहे हैं आप हमारे रथको शीघ्र वहां ले चलिये ॥ हे कृष्ण ! हमारी तो यही इच्छा है आगे आपकी जो इच्छा हो। (८६-८८)

तो अर्जुनके ऐसे वचन सुन कृष्ण हंसकर बोले, हे अर्जुन ! तुम कौरवोंको युद्धमें जीतो। अनन्तर श्रीकृष्णसे चलाये हुए हंसके समान श्वेतवर्णवाले सुवर्णके भूषणोंसे भूषित अर्जुनके रथके घोडे जब कृष्ण और अर्जुनके रथको लेकर तेरी सेनामें वेगसे प्रवेश करने लगे तब तेरी सेना चारों ओरसे भग्न होने लगी॥ मेघके समान शब्दवाला वानर ध्वजा

सारथिं चास्य तरसा प्राहिणोद्यमसादनम् ।
भल्लेन शितधारेण स हतः प्रापतद्रथात् ॥ ४० ॥
धृष्टद्युम्नस्तु बलवाञ्जित्वा शत्रुं महाबलम् ।
कौरवान्समरे तूर्णं वारयामास सायकैः ॥ ४१ ॥
ततस्ते तावका योधा धृष्टद्युम्नमुपाद्रवन् ।
सिंहनादरवं कृत्वा ततो युद्धमवर्त्तत ॥ ४२ ॥ [ २६१७ ]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां कर्णपर्वणि संकुलयुद्धे चतुष्पञ्चाशत्तमोऽध्यायः॥५४॥

सञ्जय उवाच— द्रौणिर्युधिष्ठिरं दृष्ट्वा शैनेयेनाभिरक्षितम् ।
द्रौपदेयैस्तथा शूरैरभ्यवर्त्तत हृष्टवत् ॥ १ ॥
किरन्निषुगणान्घोरान्स्वर्णपुङ्खाञ्छिलाशितान् ।
दर्शयन्विविधान्मार्गाञ्शिक्षाश्च लघुहस्तवत् ॥ २ ॥
ततः खं पूरयामास शरैर्दिव्यास्त्रमन्त्रितैः ।
युधिष्ठिरं च समरे परिवार्य महास्त्रवित् ॥ ३ ॥
द्रौणायनिशरच्छन्नं न प्राज्ञायत किंचन ।
बाणभूतमभूत्सर्वमायोधनशिरो महत् ॥ ४ ॥
बाणजालं दिवि च्छन्नं स्वर्णजालविभूषितम् ।
शुशुभे भरतश्रेष्ठ वितानमिव विष्ठितम् ॥ ५ ॥

---

बाण चलाये, फिर एक तेज बाणसे कृतवर्माके सारथीको मारकर गिरा दिया। बलवान् धृष्टद्युम्नने अपने बलवान् शत्रु कृतवर्माको जीतकर अन्य कौरवोंको युद्धसे निवारण किया। तब तुम्हारे अनेक योद्धा सिंहके समान गर्जते हुए धृष्टद्युम्नकी ओर दौडे ॥ (३९-४२)

रहे हैं; तब धैर्यसे युक्त होकर उनसे युद्ध करनेको चले गये। अश्वत्थामा अस्त्रोंको शीघ्र छोडते, बाणविद्या और रथकी अनेक गति दिखलाते हुए तथा सुवर्णके पङ्खवाले शिलापर घिसे हुए बाण चलाते हुए युधिष्ठिरकी ओर चले॥ महाअस्त्रोंके जाननेवाले अश्वत्थामाने युधिष्ठिरको

स च्छाद्यमानः समरे शरैः परबलार्दनः ॥ १०० ॥
दर्शयन्रौद्रमात्मानं पाशहस्त इवान्तकः।
निघ्नन्संशप्तकान्पार्थः प्रेक्षणीयतरोऽभवत् ॥ १०१ ॥
ततो विद्युत्प्रभैर्बाणैः कार्तस्वरविभूषितैः।
निरन्तरमिवाकाशमासीच्छन्नं किरीटिना ॥ १०२ ॥
किरीटिभुजनिर्मुक्तैः सम्पतद्भिर्महाशरैः।
समाच्छन्नं बभौ सर्वं काद्रवेयैरिव प्रभो ॥ १०३ ॥
रुक्मपुङ्खान्प्रसन्नाग्राञ्छरान्सन्नतपर्वणः।
अवासृजदमेयात्मा दिक्षु सर्वासु पाण्डवः ॥ १०४ ॥
मही वियद्दिशः सर्वाः समुद्रा गिरयोऽपि वा।
स्फुटन्तीति जना जज्ञुः पार्थस्य तलनिःस्वनात् ॥ १०५ ॥
हत्वा दशसहस्राणि पार्थिवानां महारथः।
संशप्तकानां कौन्तेयः प्रत्यक्षं त्वरितोऽभ्ययात् ॥१०६॥
प्रत्यक्षं च समासाद्य पार्थः काम्बोजरक्षितम्।
प्रममाथ बलाद्बाणैर्दानवानिव वासवः ॥ १०७ ॥
प्रचिच्छेदाशु भल्लेन द्विषतामाततायिनाम्।

क्रमी महारथ संशप्तक अर्जुनके ऊपर बाण वर्षाने लगे ॥ (९६-१००)

हे राजन्! शत्रुनाशन! अर्जुन चारों ओरसे उनके बाणोंमें छिप गये। अनन्तर अर्जुन क्रोध करके इस प्रकार संशप्तकोंका नाश करने लगे, जैसे यमराज फांसि लेकर प्रजाका नाश करते हैं। संशप्तकोंका नाश करते हुए अर्जुनका रूप अत्यन्त सुन्दर दीखता था॥ तब सोनेके पङ्खवाले, बिजलीके समान प्रकाशमान अर्जुनके बाणोंसे समस्त आकाश भर गया॥ उस समय जैसे सर्प और सर्पोंके उडनेसे आकाश दीखना सम्भव है ऐसे ही अर्जुनके बाणोंसे व्याप्त आकाश दीखने लगा॥ ( १००-१०३ )

अर्जुनने तेज धार और सोनेके पङ्खवाले बाणोंसे दशों दिशाओंको पूरित कर दिया॥ अर्जुनके ताल शब्दसे ऐसा जान पडता था, मानों आकाश, पृथ्वी, पर्वत और समुद्र फटे जाते है॥ दश सहस्र संशप्तक वीरोंको मार कर अर्जुन उस सेनासे बाहर हुए, उस सेनासे बाहर होकर अर्जुनने काम्बोज देशकी सेनामें प्रवेश किया और उनको इस प्रकार मारने लगे, जैसे इन्द्र दानवोंको मारते हैं॥ (१०४-१०७)

सुतसोमस्तु नवभिः शतानीकश्च सप्तभिः ।
अन्ये च बहवः शूरा विव्यधुस्तं समन्ततः ॥ १४ ॥
स तु क्रुद्धस्ततो राजन्नाशीविष इव श्वसन् ।
सात्यकिं पञ्चविंशत्या प्राविध्यत शिलीमुखैः ॥ १५ ॥
श्रुतकीर्तिं च नवभिः सुतसोमं च पञ्चभिः ।
अष्टाभिः श्रुतकर्माणं प्रतिविन्ध्यं त्रिभिः शरैः ॥ १६ ॥
शतानीकं च नवभिर्धर्मपुत्रं च पञ्चभिः ।
तथेतरांस्ततः शूरान्द्वाभ्यां द्वाभ्यामताडयत् ॥ १७ ॥
श्रुतकीर्तेस्तथा चापं चिच्छेद निशितैः शरैः ।
अथान्यद्धनुरादाय श्रुतकीर्तिर्महारथः ॥ १८ ॥
द्रौणायनिं त्रिभिर्विद्ध्वा विव्याधान्यैः शितैः शरैः ।
ततो द्रौणिर्महाराज शरवर्षेण मारिष ॥ १९ ॥
छादयामास तत्सैन्यं समन्ताद्भरतर्षभ ।
ततः पुनरमेयात्मा धर्मराजस्य कार्मुकम् ॥ २० ॥
द्रौणिश्चिच्छेद विहसन्विव्याध च शरैस्त्रिभिः ।
ततो धर्मसुतो राजन्प्रगृह्यान्यन्महद्धनुः ॥ २१ ॥
द्रौणिं विव्याध सप्तत्या बाह्वोरुरसि चार्पयन् ।

धर्मने तीन, श्रुतकीर्त्तिने सात, सुतसोमने नौ, और शतानीकने सात बाण चलाये और वीरोंने भी अश्वत्थामाकी ओर चारों ओरसे सहस्रों बाण चलाये ॥ (१०-१४)

महारथ श्रुतकीर्त्तिका धनुष तेजबाणोंसे काट दिया। अनन्तर श्रुतकीर्त्तिने दूसरा धनुष धारण किया ॥ (१५-१८)

हे महाराज ! अनन्तर श्रुतकीर्त्तिने अश्वत्थामाके शरीरमें तीन बाण मार

रथैर्हताश्वसूतैश्च हतारोहैश्च वाजिभिः ॥ ११६ ॥
द्विरदैश्च हतारोहैर्महामात्रैर्हतद्विपैः ।
अन्योन्येन महाराज कृतो घोरो जनक्षयः ॥ ११७ ॥
तस्मिन्प्रपक्षे पक्षे च निहते सव्यसाचिना ।
अर्जुनं जयतां श्रेष्ठं त्वरितो द्रौणिरभ्ययात् ॥ ११८ ॥
विधुन्वानो महच्चापं कार्तस्वरविभूषितम् ।
आददानः शरान्घोरान्स्वरश्मीनिव भास्करः ॥११९॥
क्रोधामर्षविवृत्तास्यो लोहिताक्षो बभौ बली ।
अन्तकाले यथा क्रुद्धो मृत्युः किङ्करदण्डभृत ॥ १२०॥
ततः प्रासृजदुग्राणि शरवर्षाणि सङ्घशः ।
तैर्विसृष्टैर्महाराज व्यद्रवत्पाण्डवी चमूः ॥ १२१ ॥
स दृष्ट्वैव तु दाशार्हं स्यन्दनस्थं विशाम्पते ।
पुनः प्रासृजदुग्राणि शरवर्षाणि मारिष ॥ १२२ ॥
तैः पतद्भिर्महाराज द्रौणिमुक्तैः समन्ततः ।
सञ्छादितौ रथस्थौ तावुभौ कृष्णधनञ्जयौ ॥ १२३ ॥
ततः शरशतैस्तीक्ष्णैरश्वत्थामा प्रतापवान् ।

अनेक घोडों पर चढे वीर मर कर पृथ्वीमें गिर गये । अनेक हाथी, योद्धा और महावतोंके मरनेसे इधर उधर घूमकर मनुष्योंको मारने लगे । (११५-११७)

जिस समय अर्जुनने व्यूहके उस पक्ष और प्रपक्षको नाश कर दिया । तब उनसे युद्ध करनेके लिये अश्वत्थामा दौडे ॥ जैसे सूर्य अपनी किरणोंको जगत्में फैलाते हैं तैसे ही सुवर्ण भूषित धनुषको खींच कर अश्वत्थामा घोर बाण चलाने लगे ॥ क्रोध और पराक्रमसे भरे बलवान् अश्वत्थामाके नेत्र लाल हो रहे थे, और मुह फैल रहा था, उस समय इनका रूप ऐसा दीखता था, जैसे प्रलयकालमें दण्डधारी यमराजका ॥ (११८-१२०)

तब अश्वत्थामाने पाण्डवोंकी सेनाके ऊपर झुंडके झुंड बाणोंकी वर्षा की उससे त्रस्त होकर पांडवोंकी सेना चारों ओर भागने लगी ॥ अश्वत्थामाने रथमें बैठे हुए कृष्णको देखकर इनकी ओर सहस्रों तेज बाण छोडे॥ हे महाराज! अश्वत्थामाके बाणोंसे रथ पर बैठे हुए कृष्ण और अर्जुन छिप गये ॥ अनन्तर प्रतापवान् अश्वत्थामाने अपने सैकडों बाणोंसे कृष्ण और अर्जुनको उद्योग रहित

युधिष्ठिरस्तु त्वरितो द्रोणशिष्यो महारथः ॥ ३१ ॥
अब्रवीद् द्रोणपुत्राय रोषामर्षसमन्वितः ।
नैव नाम तव प्रीतिर्नैव नाम कृतज्ञता ॥ ३२ ॥
यतस्त्वं पुरुषव्याघ्र मामेवाद्य जिघांससि ।
ब्राह्मणेन तपः कार्यं दानमध्ययनं तथा ॥ ३३ ॥
क्षत्रियेण धनुर्नाम्यं स भवान्ब्राह्मणब्रुवः ।
मिषतस्ते महाबाहो युधि जेष्यामि कौरवान् ॥ ३४ ॥
कुरुष्व समरे कर्म ब्रह्मबन्धुरसि ध्रुवम् ।
एवमुक्तो महाराज द्रोणपुत्रः स्मयन्निव ॥ ३५ ॥
युक्तं तत्त्वं च सञ्चिन्त्य नोत्तरं किञ्चिदब्रवीत् ।
अनुक्त्वा च ततः किञ्चिच्छरवर्षेण पाण्डवम् ॥ ३६ ॥
छादयामास समरे क्रुद्धोऽन्तक इव प्रजाः ।
स च्छाद्यमानस्तु तदा द्रोणपुत्रेण मारिष ॥ ३७ ॥
पार्थोऽपयातः शीघ्रं वै विहाय महतीं चमूम् ।
अपयाते ततस्तस्मिन्धर्मपुत्रे युधिष्ठिरे ॥ ३८ ॥
द्रोणपुत्रस्ततो राजन्प्रत्यगात्स महामनाः ।

हीयमाने च कौन्तेये कृष्णे रोषः समाविशत्।
स रोषान्निःश्वसन्राजन्निर्दहन्निव चक्षुषा ॥ १३३ ॥
द्रौणिं ह्यपश्यत्संग्रामे फाल्गुनं च मुहुर्मुहुः।
ततः क्रुद्धोऽब्रवीत्कृष्णः पार्थं सप्रणयं तदा ॥ १३४ ॥
अत्यद्भुतमिदं पार्थ तव पश्यामि संयुगे।
अतिशेते हि यत्र त्वां द्रोणपुत्रोऽद्य भारत ॥ १३५ ॥
कच्चिद्वीर्यं यथापूर्वं भुजयोर्वा बलं तव।
कच्चित्ते गाण्डिवं हस्ते रथे तिष्ठसि चार्जुन ॥ १३६ ॥
कच्चित्कुशलिनौ बाहू मुष्टिर्वा न व्यशीर्यत।
उदीर्यमाणं हि रणे पश्यामि द्रौणिमाहवे ॥ १३७ ॥
गुरुपुत्र इति ह्येनं मानयन्भरतर्षभ।
उपेक्षां कुरु मा पार्थ नायं काल उपेक्षितुम् ॥ १३८ ॥
एवमुक्तस्तु कृष्णेन गृह्य भल्लांश्चतुर्दश।
त्वरमाणस्त्वराकाले द्रौणेर्धनुरथाच्छिनत् ॥ १३९ ॥
ध्वजं छत्रं पताकाञ्च रथं शक्तिं गदां तथा।
जत्रुदेशे च सुभृशं वत्सदन्तैरताडयत् ॥ १४० ॥

अश्वत्थामाकी वृद्धि हुई और अर्जुनका पराक्रम नष्ट हुआ तब कृष्ण एकाएक महा क्रोधमें भर गये, उनके होठ फरकने लगे और नेत्र लाल होगये। १२९-१३३

उन्होंने अश्वत्थामाकी ओर इस प्रकार देखा, मानो भस्म कर देंगे, फिर अर्जुनकी ओर देख कर बोले, हे भारत! हमको तुम्हारी दशा देख बहुत आश्चर्य होता है कि अश्वत्थामा तुम्हारी ओर अनेक बाण चला रहे है और तुम कुछ नहीं करते। हे अर्जुन! कहो तुम्हारी भुजाओं में बल पहलेकासा है या नहीं? कहो तुम्हारे हाथमें गाण्डीव धनुष तो है? तुम रथमें तो बैठे हो? कहो तुम्हारे हाथ तो अच्छे हैं? तुम्हारी मुट्टीमें बल तो है? यह देखो युद्धमें अश्वत्थामाके बलकी कैसी वृद्धि हो रही है ॥ हे कुन्तीपुत्र! तुम इसे अपना गुरुपुत्र जानकर छोडो मत, क्यों कि यह समय किसीको छोडने का नहीं है ॥ ( १३४—१३८ )

कृष्णके वचन सुनते ही अर्जुनने अपने धनुष पर चौदह भल्ल बाण चढाये और उनको छोडकर शीघ्रता सहित अश्वत्थामाका धनुष काट दिया ॥ अनन्तर ध्वजा, छत्र, पताका, रथ, शक्ति और गदाको काट दिया तथा

विव्याध भरतश्रेष्ठ चतुरश्वास्य वाजिनः ॥ ७ ॥
ततः पुनरमेयात्मा तव पुत्रो जनाधिप ।
क्षुरेण सहदेवस्य ध्वजं चिच्छेद काञ्चनम् ॥ ८ ॥
नकुलस्तु ततः क्रुद्धस्तव पुत्रं च सप्तभिः ।
जघान समरे राजन्सहदेवश्च पञ्चभिः ॥ ९ ॥
तावुभौ भरतश्रेष्ठौ ज्येष्ठौ सर्वधनुष्मताम् ।
विव्याधोरसि संक्रुद्धः पञ्चभिः पञ्चभिः शरैः ॥ १० ॥
ततोऽपराभ्यां भल्लाभ्यां धनुषी समकृन्तत ।
यमयोः सहसा राजन्विव्याध च त्रिसप्तभिः ॥ ११ ॥
तावन्ये धनुषी श्रेष्ठे शक्रचापनिभे शुभे ।
प्रगृह्य रेजतुः शूरौ देवपुत्रसमौ युधि ॥ १२ ॥
ततस्तौ रभसौ युद्धे भ्रातरौ भ्रातरं युधि ।
शरैर्ववृषतुर्घोरैर्महामेघौ यथाचलम् ॥ १३ ॥
ततः क्रुद्धो महाराज तव पुत्रो महारथः ।
पाण्डुपुत्रौ महेष्वासौ वारयामास पत्रिभिः ॥ १४ ॥
धनुर्मण्डलमेवास्य दृश्यते युधि भारत ।
सायकाश्चैव दृश्यन्ते निश्चरन्तः समन्ततः ॥ १५ ॥

---

ने क्रोध करके नकुलके शरीरमें नौ बाण और उन चार घोडोंके ऊपर एक एक बाण मारा ॥ अनन्तर तुम्हारे महा पराक्रमी पुत्रने अपने एक क्षुर बाणसे सहदेवके रथकी सोनेकी ध्वजाको काट कर गिरा दिया ॥ (७-८)

बाण मारे ॥ (९-११)

तब वे दोनों वीर इन्द्रधनुपके समान दूसरे धनुष लेकर देवपुत्रोंके समान युद्धमें शोभित हुए और वे दोनों भाई अपने चचेरे भाई दुर्योधन पर इस प्रकार बाण चलाने लगे, जैसे दो बडे मेघ पर्वत पर

यदृच्छयैतत्सम्प्राप्तं स्वर्गद्वारमपावृतम् ।
सुखिनः क्षत्रियाः कर्ण लभन्ते युद्धमीदृशम् ॥ २ ॥
सदृशैः क्षत्रियैः शूरैः शूराणां युध्यतां युधि ।
इष्टं भवति राधेय तदिदं समुपस्थितम् ॥ ३ ॥
हत्वा च पाण्डवान्युद्धे स्फीतामुर्वीमवाप्स्यथ ।
निहता वा परैर्युद्धे वीरलोकमवाप्स्यथ ॥ ४ ॥
दुर्योधनस्य तच्छ्रुत्वा वचनं क्षत्रियर्षभाः ।
हृष्टा नादाननुदन्क्रोशन्वादित्राणि च सर्वशः ॥ ५ ॥
ततः प्रमुदिते तस्मिन्दुर्योधनबले तदा ।
हर्षयंस्तावकान्योधान्द्रौणिर्वचनमब्रवीत् ॥ ६ ॥
प्रत्यक्षं सर्वसैन्यानां भवतां चापि पश्यताम् ।
न्यस्तशस्त्रो मम पिता धृष्टद्युम्नेन पातितः ॥ ७ ॥
स तेनाहममर्षेण मित्रार्थे चापि पार्थिवाः ।
सत्यं वः प्रतिजानामि तद्वाक्यं मे निबोधत ॥ ८ ॥
धृष्टद्युम्नमहत्वाहं न विमोक्ष्यामि दंशनम् ।
अनृतायां प्रतिज्ञायां नाहं स्वर्गमवाप्नुयाम् ॥ ९ ॥
अर्जुनो भीमसेनश्च योधो यो रक्षिता रणे ।

शल्य आदि सब वीरोंसे बोले, हे कर्ण! आज प्रारब्धहीसे तुम लोगोंके लिये स्वर्गका द्वार खुला है, बडे प्रारब्धी क्षत्री ऐसे युद्धको पाते हैं ॥ (१-२)

हे राधापुत्र! अपने समान पराक्रमी से युद्ध करना क्षत्रियोंको बडी प्रारब्धसे प्राप्त होता है। आज वही दिन आगया है तुम लोग पाण्डवोंको मारकर सब जगत्का राज्य करो, अथवा उनके हाथसे मरकर स्वर्गको जाओ ॥ (३-४)

दुर्योधनके वचन सुन सब क्षत्री प्रसन्न होकर गर्जने लगे और अनेक प्रकारके बाजे बजने लगे ॥ जब तुम्हारी सेना इस प्रकार प्रसन्न हुई तब उनका उत्साह बढानेको अश्वत्थामा इस प्रकार बोले ॥ (५-६)

सब सेना और तुम लोगोंके देखते शस्त्रत्यागी मेरे पिताको धृष्टद्युम्नने मार डाला ॥ उस क्रोधसे और अपने मित्र दुर्योधनकी विजयके लिये हम जो सत्य प्रतिज्ञा करते हैं, उसे आपलोग सुनो ॥ धृष्टद्युम्नको बिना मारे मैं कवच नहीं उतारूगा। यदि इस प्रतिज्ञाको मैं सत्य न कर सकूं तो मुझे स्वर्ग प्राप्त न हो।

अशोभत महेष्वासो धृष्टद्युम्नः कृतव्रणः ।
स पञ्चदश नाराचाञ्श्वसतः पन्नगानिव ॥ २५ ॥
जिघांसुर्भरतश्रेष्ठं धृष्टद्युम्नो व्यपासृजत ।
ते वर्म हेमविकृतं भित्त्वा राज्ञः शिलाशिताः ॥ २६ ॥
विविशुर्वसुधां वेगात्कङ्कबर्हिणवाससः ।
सोऽतिविद्धो महाराज पुत्रस्तेऽतिव्यराजत ॥ २७ ॥
वसन्तकाले सुमहान्प्रफुल्ल इव किंशुकः ।
स च्छिन्नवर्मा नाराचप्रहारैर्जर्जरीकृतः ॥ २८ ॥
धृष्टद्युम्नस्य भल्लेन क्रुद्धश्चिच्छेद कार्मुकम् ।
अथैनं छिन्नधन्वानं त्वरमाणो महीपतिः ॥ २९ ॥
सायकैर्दशभी राजन्भ्रुवोर्मध्ये समार्पयत ।
तस्य तेऽशोभयन्वक्त्रं कर्मारपरिमार्जिताः ॥ ३० ॥
प्रफुल्लं पङ्कजं यद्वद्भ्रमरा मधुलिप्सवः ।
तदपास्य धनुश्छिन्नं धृष्टद्युम्नो महामनाः ॥ ३१ ॥
अन्यदादत्त वेगेन धनुर्भल्लांश्च षोडश ।
ततो दुर्योधनस्याश्वान्हत्वा सूतं च पञ्चभिः ॥ ३२ ॥
धनुश्चिच्छेद भल्लेन जातरूपपरिष्कृतम् ।

---

क्रोधके मारे धृष्टद्युम्नके नेत्र लाल होगये॥ अनन्तर महापराक्रमी धृष्टद्युम्नने सांस लेते हुए सांपके समान पन्द्रह बाण अपने धनुष पर चढाये, अनन्तर धृष्टद्युम्नने दुर्योधनके मारनेके लिए वे कंक और मोरके पंखवाले बाण छोड दिये राजा दुर्योधनका सोनेका कवच काट कर और शरीरको छेद कर पृथ्वीमें घुस गये। (२६-२७)

उन पंखवाले बाणोंके लगनेसे राजा दुर्योधनके शरीरसे बहुत [illegible] दुर्योधनके शरीरसे रुधिर बहने लगा, उस समय इनकी शोभा ऐसी बढी, जैसे वसन्त ऋतुमें फूले हुए कचनारकी॥ अनन्तर उन्होंने क्रोध करके धृष्टद्युम्नका धनुष काट दिया। अनन्तर शीघ्रताके सहित दश बाण इनके माथेमें मारे, उन तेज बाणोंसे धृष्टद्युम्नका मुख कमल [illegible] सहित कमलके समान होगया। (२७-३१)

अनन्तर धृष्टद्युम्नने क्रुद्ध होकर इस कटे हुए धनुषको फेंक दिया और दूसरा धनुष लेकर [illegible]

सञ्जय उवाच— एवमेष महानासीत्संग्रामः पृथिवीक्षिताम् ।
क्रुद्धेऽर्जुने तथा कर्णे भीमसेने च पाण्डवे ॥ १ ॥
द्रोणपुत्रं पराजित्य जित्वा चान्यान्महारथान् ।
अब्रवीदर्जुनो राजन्वासुदेवमिदं वचः ॥ २ ॥
पश्य कृष्ण महाबाहो द्रवन्तीं पाण्डवीं चमूम् ।
कर्णं पश्य च संग्रामे कालयन्तं महारथान् ॥ ३ ॥
न च पश्यामि दाशार्ह धर्मराजं युधिष्ठिरम् ।
नापि केतुर्युधां श्रेष्ठ धर्मराजस्य दृश्यते ॥ ४ ॥
त्रिभागश्चावशिष्टोऽयं दिवसस्य जनार्दन ।
न च मां धार्त्तराष्ट्रेषु कश्चिद्युध्यति संयुगे ॥ ५ ॥
तस्मात्त्वं मत्प्रियं कुर्वन्याहि यत्र युधिष्ठिरः ।
दृष्ट्वा कुशलिनं युद्धे धर्मपुत्र सहानुजम् ॥ ६ ॥
पुनर्योद्धास्मि वार्ष्णेय शत्रुभिः सह संयुगे ।
ततः प्रायाद्रथेनाशु बीभत्सोर्वचनाद्धरिः ॥ ७ ॥
यतो युधिष्ठिरो राजा सृञ्जयाश्च महारथाः ।
अयुध्यस्तावकैः सार्धं मृत्युं कृत्वा निवर्तनम् ॥ ८ ॥
ततः संग्रामभूमिं तां वर्तमाने जनक्षये ।

---

युद्ध करने लगे॥ (१५-१७) [२८२०]

कर्णपर्वमें सतावन अध्याय समाप्त ।

कर्णपर्वमें अठावन अध्याय ।

सञ्जय बोले, हे राजन्! इसप्रकार अर्जुन, कर्ण और भीमसेनका युद्ध हुआ। अश्वत्थामा आदि महारथोंको जीतकर अर्जुनने श्रीकृष्णसे कहा ॥ हे महाबाहो कृष्ण! यह देखो हमारी सेना भागी जाती है, यह देखो कर्ण हमारे महारथोंको मार रहे है ॥ हे महाबाहो! हम महाराज युधिष्ठिरको नहीं देखते है और न उनकी ध्वजा ही दिखायी देती है॥ (१–३)

हे कृष्ण! अब दिनके तीन भाग बीत गये, परन्तु कोई वीर मुझसे युद्ध करनेको न आया, इसलिये हमारी प्रसन्नताके लिये आप महाराजके पास हमारा रथ ले चलिये। हम उन्हें भाइयों समेत कुशलता से युक्त देख कर फिर युद्ध करनेको आवेंगे। (४–७)

अर्जुनके वचन सुन कृष्णने शीघ्र घोडोंको हांका उस समय राजा युधिष्ठिर और सृञ्जयवंशी क्षत्री मृत्युको अवश्य होनेवाली जानकर तुम्हारी सेनामें युद्ध

अशोभत महेष्वासो धृष्टद्युम्नः कृतव्रणः ।
स पञ्चदश नाराचाञ्श्वसतः पन्नगानिव ॥ २५ ॥
जिघांसुर्भरतश्रेष्ठं धृष्टद्युम्नो व्यपासृजत ।
ते वर्म हेमविकृतं भित्त्वा राज्ञः शिलाशिताः॥ २६ ॥
विविशुर्वसुधां वेगात्कङ्कबर्हिणवाससः ।
सोऽतिविद्धो महाराज पुत्रस्तेऽतिव्यराजत ॥ २७ ॥
वसन्तकाले सुमहान्प्रफुल्ल इव किंशुकः ।
स च्छिन्नवर्मा नाराचप्रहारैर्जर्जरीकृतः ॥ २८ ॥
धृष्टद्युम्नस्य भल्लेन क्रुद्धश्चिच्छेद कार्मुकम् ।
अथैनं छिन्नधन्वानं त्वरमाणो महीपतिः ॥ २९ ॥
सायकैर्दशभी राजन्भ्रुवोर्मध्ये समार्पयत ।
तस्य तेऽशोभयन्वक्त्रं कर्मारपरिमार्जिताः ॥ ३० ॥
प्रफुल्लं पङ्कजं यद्वद् भ्रमरा मधुलिप्सवः ।
तदपास्य धनुश्छिन्नं धृष्टद्युम्नो महामनाः ॥ ३१ ॥
अन्यदादत्त वेगेन धनुर्भल्लांश्च षोडश ।
ततो दुर्योधनस्याश्वान्हत्वा सूतं च पञ्चभिः ॥ ३२ ॥
धनुश्चिच्छेद भल्लेन जातरूपपरिष्कृतम् ।

क्रोधके मारे धृष्टद्युम्नके नेत्र लाल होगये॥ अनन्तर महापराक्रमी धृष्टद्युम्नने साँस लेते हुए साँपके समान पन्द्रह बाण अपने धनुष पर चढाये, अनन्तर धृष्टद्यु-म्नने दुर्योधनके मारनेके लिये वे कङ्क और मोरके पङ्खवाले बाण छोडे, वे राजा दुर्योधनका सोनेका कवच काट कर और शरीरको फोड कर पृथ्वीमें घुस गये। (२६-२७)

उन फौलादी बाणोंके लगनेसे राजा दुर्योधनके शरीरसे बहुत पीडा हुई, दुर्योधनके शरीरसे रुधिर बहने लगा, उस समय इनकी शोभा ऐसी बढी, जैसे वसन्त ऋतुमें फूले हुए कचनारकी ॥ अनन्तर इन्होंने क्रोध करके धृष्टद्युम्नका धनुष काट दिया। अनन्तर शीघ्रताके सहित दस बाण इनके माथेमें मारे, उन तेज बाणोंसे धृष्टद्युम्नका मुख रस लोभी भौंरोंके सहित कमलके समान होगया॥ (२७-३१)

अनन्तर धृष्टद्युम्नने क्रुद्ध होकर उस कटे हुए धनुषको फेंक दिया और दू-सरा [illegible]

नानाविधानि शस्त्राणि प्रगृह्य जयगृद्धिनः ॥ १७ ॥
जीवन्त इव दृश्यन्ते गतसत्त्वास्तरस्विनः ।
गदाविमथितैर्गात्रैर्मुसलैर्भिन्नमस्तकान् ॥ १८ ॥
गजवाजिरथक्षुण्णान्पश्य योधान्सहस्रशः ।
मनुष्यहयनागानां शरशक्त्यृष्टिपट्टिशैः ॥ १९ ॥
परिघैरायसैर्घोरैरयस्कुन्तैः परश्वधैः ।
शरीरैर्बहुभिश्छिन्नैः शोणितौघपरिप्लुतैः ॥ २० ॥
गतासुभिरमित्रघ्न संवृता रणभूमयः ।
बाहुभिश्चन्दनादिग्धैः साङ्गदैर्हेमभूषितैः ॥ २१ ॥
सतलत्रैः सकेयूरैर्भाति भारत मेदिनी ।
सांगुलित्रैर्भुजाग्रैश्च विप्रविद्धैरलंकृतैः ॥ २२ ॥
हस्तिहस्तोपमैश्छिन्नैरूरुभिश्च तरस्विनाम् ।
बद्धचूडामणिवरैः शिरोभिश्च सकुण्डलैः ॥ २३ ॥
पतितैर्ऋषभाक्षाणां विराजति वसुन्धरा ।
कबन्धैः शोणितादिग्धैश्छिन्नगात्रशिरोधरैः ॥ २४ ॥
भूर्भाति भरतश्रेष्ठ शान्तार्चिर्भिरिवाग्निभिः ।
रथांश्च बहुधा भग्नान्हेमकिङ्किणिनः शुभान् ॥ २५ ॥
वाजिनश्च हतान्पश्य निष्कीर्णान्त्राञ्शराहतान् ।

देखो अनेक शस्त्रधारी [illegible] योद्धा अभी [illegible] से जान [illegible] उन वीरों [illegible] । और [illegible] गया है [illegible] सहस्रों हाथी और [illegible] मर ये वीर श [illegible] गदा [illegible] रोंसे मर [illegible] में [illegible] रिध [illegible] —२ [illegible] । [illegible]

और अङ्गुलित्राण सहित पञ्जे, हाथीके सूडके [illegible] वीरोंकी जांघ कुण्डल और मुकुट [illegible] शिर और बडे नेत्रवाले मर [illegible] गई है ॥ (२१–२४) ये [illegible] हित कबन्ध रुधिरमें भीगे [illegible] हैं। यह भूमि इस [illegible] ती है, जैसे शान्त [illegible] ये घण्टा सहित रथ पडे [illegible] २५ ) [illegible] आदि साजों मे [illegible] पडे हैं। अनेक

तस्मिन्क्षणे नरश्रेष्ठ गजवाजिजनक्षयः ॥ ४१ ॥
प्रादुरासीदुभयतो राजन्मध्यगतेऽहनि ।
पाञ्चालास्तु महाराज त्वरिता विजिगीषवः ॥ ४२ ॥
ते सर्वेऽभ्यद्रवन्कर्णं पतत्त्रिण इव द्रुमम् ।
तांस्तथाधिरथिः क्रुद्धो यतमानान्मनस्विनः ॥ ४३ ॥
विचिन्वन्निव बाणाग्रैः समासादयदग्रगान् ।
व्याघ्रकेतुं सुशर्माणं चित्रं चोग्रायुधं जयम् ॥ ४४ ॥
शुक्लं च रोचमानं च सिंहसेनं च दुर्जयम् ।
ते वीरा रथमार्गेण परिवव्रुर्नरोत्तमम् ॥ ४५ ॥
सृजन्तं सायकान्क्रुद्धं कर्णमाहवशोभिनम् ।
युध्यमानांस्तु तान्शूरान्मनुजेन्द्र प्रतापवान् ॥ ४६ ॥
अष्टाभिरष्टौ राधेयोऽभ्यर्दयन्निशितैः शरैः ।
अथापरान्महाराज सूतपुत्रः प्रतापवान् ॥ ४७ ॥
जघान बहुसाहस्रान्योधान्युद्धविशारदान् ।
जिष्णुं च जिष्णुकर्माणं देवापिं भद्रमेव च ॥ ४८ ॥
दण्डं च राजन्समरे चित्रं चित्रायुधं हरिम् ।
सिंहकेतुं रोचमानं शलभं च महारथम् ॥ ४९ ॥

ज्ञातिभिः सहितांस्तत्र रोदमानैर्मुहुर्मुहुः ॥ ३५ ॥
व्युत्क्रान्तानपरान्योधांश्छादयित्वा तरस्विनः ।
पुनर्युद्धाय गच्छन्ति जयगृद्धाः प्रमन्यवः ॥ ३६ ॥
अपरे तत्र तत्रैव परिधावन्ति मानवाः ।
ज्ञातिभिः पतितैः शूरैर्याच्यमानास्तथोदकम् ॥ ३७ ॥
जलार्थं च गताः केचिन्निष्प्राणा बहवोऽर्जुन ।
सन्निवृत्ताश्च ते शूरास्तान्वै दृष्ट्वा विचेतसः ॥ ३८ ॥
जलं त्यक्त्वा प्रधावन्ति क्रोशमानाः परस्परम् ।
जलं पीत्वा मृतान्पश्य पिबतोऽन्यांश्च मारिष ॥ ३९ ॥
परित्यज्य प्रियानन्ये बान्धवान्बान्धवप्रियाः ।
व्युत्क्रान्ताः समदृश्यन्त तत्र तत्र महारणे ॥ ४० ॥
तथापरान्नरश्रेष्ठ सन्दष्टौष्ठपुटान्पुनः ।
भ्रुकुटीकुटिलैर्वक्त्रैः प्रेक्षमाणान्समन्ततः ॥ ४१ ॥
एवं ब्रुवस्तदा कृष्णो ययौ यत्र युधिष्ठिरः ।
अर्जुनश्चापि नृपतेर्दर्शनार्थं महारणे ॥ ४२ ॥
याहि याहीति गोविन्दं मुहुर्मुहुरचोदयत् ।
तां युद्धभूमिं पार्थस्य दर्शयित्वा च माधवः ॥ ४३ ॥

---

ये देखो इन मरे हुओके पास इनके भाई बन्धु शस्त्र डाल कर खडे हुए रोरहे है ॥ ये देखो अनेक वीर, घोडे और घायल योद्धाओंको अच्छी भूमिमें ले जा रहे है। और उन्हें वहां रखकर आप क्रोध करके फिर युद्ध करने जाते हैं॥ ये देखो अनेक योद्धा अपने पडे हुए बन्धुओंको पानी देनेको दौडे जाते है। ये देखो अनेक वीर अपने बन्धुओंको जल देकर लौटे चले आते है, अहह! उनके आते ही आते वे मर गये। ये देखो उन्हें मरा देख इन्हें भी मूर्च्छा होगयी ॥ ३५-३८

हे शत्रुनाशन! ये देखो अनेक वीर पानीके लिये दौड रहे हैं। अब ये पानी पीके लौटते हैं। इन्हें पानी नहीं मिला, ये अपने मरे हुए बन्धुओंको छोडकर भागे जाते हैं। हे पुरुष श्रेष्ठ! ये देखो अनेक वीर भौंह टेढी किये ओठ चबाते हुए दूसरेको देख रहे हैं। (३९-४१)

ऐसा कहते हुए श्रीकृष्ण और अर्जुन महाराज युधिष्ठिरका दर्शन करने चले गये। अर्जुन बार बार कहते थे, कि शीघ्र घोडोंको चलाओ। इस प्रकार युद्ध भूमि दिखाते हुए श्रीकृष्ण अर्जुनसे

तथा कर्णमनुप्राप्य न जिजीवुर्महारथाः ।
वैश्वानरं यथा प्राप्य प्रतिदह्यन्ति वै जनाः ॥ ५९ ॥
कर्णाग्निना वने तद्वद्दग्धा भारत सृञ्जयाः ।
कर्णेन चेदिकैकेयपाञ्चालेषु च भारत ॥ ६० ॥
विश्राव्य नाम निहता बहवः शूरसम्मताः ।
मम चासीन्मती राजन्दृष्ट्वा कर्णस्य विक्रमम् ॥ ६१ ॥
नैकोऽप्याधिरथेर्जीवन्पाञ्चाल्यो मोक्ष्यते युधि ।
पाञ्चालान्व्यधमत्सङ्ख्ये सूतपुत्रः पुनः पुनः ॥ ६२ ॥
पाञ्चालानथ निघ्नन्तं कर्णं दृष्ट्वा महारणे ।
अभ्यधावत्सुसंक्रुद्धो धर्मराजो युधिष्ठिरः ॥ ६३ ॥
धृष्टद्युम्नश्च राधेयं द्रौपदेयाश्च मारिष ।
परिवव्रुरमित्रघ्नं शतशश्चापरे जनाः ॥ ६४ ॥
शिखण्डी सहदेवश्च नकुलो नाकुलिस्तथा ।
जनमेजयः शिनेर्नप्ता बहवश्च प्रभद्रकाः ॥ ६५ ॥
एते पुरोगमा भूत्वा धृष्टद्युम्नश्च संयुगे ।
कर्णमस्यन्तमिष्वस्त्रैर्विचेरुरमितौजसः ॥ ६६ ॥
तांस्तत्राधिरथिः सङ्ख्ये चेदिपाञ्चालपाण्डवान् ।

तावकानां परेषां च राजन्दुर्मन्त्रिते तव ॥ ५२ ॥ [२८७२]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां कर्णपर्वणि वासुदेववाक्येऽष्टपञ्चाशत्तमोऽध्यायः ॥५८॥

सञ्जय उवाच— ततः पुनः समाजग्मुरभीताः कुरुसृञ्जयाः।
युधिष्ठिरमुखाः पार्थाः सूतपुत्रमुखा वयम् ॥ १ ॥
ततः प्रववृते भीमः संग्रामो लोमहर्षणः।
कर्णस्य पाण्डवानां च यमराष्ट्रविवर्धनः ॥ २ ॥
तस्मिन्प्रवृत्ते संग्रामे तुमुले शोणितोदके।
संशप्तकेषु शूरेषु किञ्चिच्छिष्टेषु भारत ॥ ३ ॥
धृष्टद्युम्नो महाराज सहितः सर्वराजभिः।
कर्णमेवाभिदुद्राव पाण्डवाश्च महारथाः ॥ ४ ॥
आगच्छमानांस्तान्संख्ये प्रहृष्टान्विजयैषिणः।
दधारैको रणे कर्णो जलौघानिव पर्वतः ॥ ५ ॥
समासाद्य तु ते कर्णं व्यशीर्यन्त महारथाः।
यथाचलं समासाद्य वार्यौघाः सर्वतोदिशम् ॥ ६ ॥
तयोरासीन्महाराज संग्रामो लोमहर्षणः।
धृष्टद्युम्नस्तु राधेयं शरेणानतपर्वणा ॥ ७ ॥
ताडयामास समरे तिष्ठतिष्ठेति चाब्रवीत्।

हीका फल है ॥ (५२)[२८७२]

कर्णपर्वमें अठावन अध्याय समाप्त।

कर्णपर्वमें उनसठ अध्याय।

सञ्जय बोले, हे राजन्! अनन्तर युधिष्ठिरको आगे करके सृञ्जय और कर्णको आगे करके हम लोग युद्ध करने लगे॥ तब कर्ण और पाण्डवोंका घोर संग्राम हुआ, उसमें सहस्रों मनुष्य मरे, उसे देखकर वीरोंके रोए खडे होने लगे। जब यह रुधिर बहानेवाला घोर युद्ध होने लगा, तब बचे हुए संशप्तक भी युद्ध करने लगे॥ (१-३)

धृष्टद्युम्न पाण्डव आदि सब राजोंके सहित कर्णसे युद्ध करनेको चले॥ जैसे अनेक नदियोंके वेगको पर्वत रोकता है तैसेही इन प्रसन्न विजयी वीरोंको आते देख एकले कर्णने रोका, जैसे पर्वतके पास आकर जल इधर उधरको फैल जाता है॥ वैसे ही कर्णके पास आकर ये सब महारथ इधर उधर होगये॥ (४-६)

हे महाराज! धृष्टद्युम्न और कर्णका घोर युद्ध हुआ तब धृष्टद्युम्नने एक बाण कर्णकी ओर चलाया और कहा कि, खडे रहो! खडे रहो! तब महारथ

भीमसेनशरैश्छिन्नैराच्छन्ना वसुधाभवत् ।
ततस्तम्भितमिवातिष्ठद्भीमसेनभयार्दितम् ॥ ७५ ॥
दुर्योधनबलं सर्वं निरुत्साहं कृतव्रणम् ।
निश्चेष्टं तुमुलं दीनं बभौ तस्मिन्महारणे ॥ ७६ ॥
प्रसन्नसलिले काले यथा स्यात्सागरो नृप ।
तद्वत्तव बलं तद्धि निश्चलं समवस्थितम् ॥ ७७ ॥
मन्युवीर्यबलोपेतं दर्पात्प्रत्यवरोपितम् ।
अभवत्तव पुत्रस्य तत्सैन्यं निष्प्रभं तदा ॥ ७८ ॥
तद्बलं भरतश्रेष्ठ वध्यमानं परस्परम् ।
रुधिरौघपरिक्लिन्नं रुधिरार्द्रं बभूव ह ॥ ७९ ॥
जगाम भरतश्रेष्ठ वध्यमानं परस्परम् ।
सूतपुत्रो रणे क्रुद्धः पाण्डवानामनीकिनीम् ॥ ८० ॥
भीमसेनः कुरूंश्चापि द्रावयन्तौ विरेजतुः ।
वर्तमाने तथा रौद्रे संग्रामेऽद्भुतदर्शने ॥ ८१ ॥
निरस्य पृतनामध्ये संशप्तकगणान्बहून् ।
अर्जुनो जयतां श्रेष्ठो वासुदेवमथाब्रवीत् ॥ ८२ ॥
प्रभग्नं बलमेतद्धि योत्स्यमानं जनार्दन ।
एते द्रवन्ति सगणाः संशप्तकमहारथाः ॥ ८३ ॥

---

भीमसेनके बाणोंसे सब युद्ध भूमि भर गई, उनके भयसे सेना कुछ न कर सकी, उस युद्धमें दुर्योधनकी सेना घावोंसे व्याकुल होकर उत्साह रहित होगई, तथा जैसे शरद्‌ऋतुमें समुद्र अचल होजाता है, ऐसे ही स्तम्भित होगयी, जो वीर युद्धकी सेना क्रोध, वीर्य और बलसे एक वीर दूसरेको मारने लगे॥ (७५-७९)

इसी प्रकार सूतपुत्र कर्ण भी क्रोध करके पाण्डवोंकी सेनाका नाश करने लगे। इसी प्रकार भीमसेन भी कौर-वोंकी सेनाको भगाने लगे। उस समय वे दोनों वीर रणभूमिमें शोभने लगे। (८०—८१)

तं प्रत्यविध्यच्छैनेयः शरैर्हेमपरिष्कृतैः ॥ १७ ॥
ततो युद्धं महाराज चक्षुः श्रोत्रभयानकम् ।
आसीद्घोरं च चित्रं च प्रेक्षणीयं समन्ततः ॥ १८ ॥
सर्वेषां तत्र भूतानां लोमहर्षोऽभ्यजायत ।
तद् दृष्ट्वा समरे कर्म कर्णशैनेययोर्नृप ॥ १९ ॥
एतस्मिन्नन्तरे द्रौणिरभ्ययात्सुमहाबलम् ।
पार्षतं शत्रुदमनं शत्रुवीर्यासुनाशनम् ॥ २० ॥
अभ्यभाषत संक्रुद्धो द्रौणिः परपुरञ्जयः ।
तिष्ठतिष्ठाद्य ब्रह्मघ्न न मे जीवन्विमोक्ष्यसे ॥ २१ ॥
इत्युक्त्वा सुभृशं वीरं शीघ्रकृन्निशितैः शरैः ।
पार्षतं छादयामास घोररूपैः सुतेजनैः ॥ २२ ॥
यतमानं परं शक्त्या यतमानो महारथः ।
यथा हि समरे द्रोणः पार्षतं वीक्ष्य मारिष ॥ २३ ॥
तथा द्रौणिं रणे दृष्ट्वा पार्षतः परवीरहा ।
नातिहृष्टमना भूत्वा मन्यते मृत्युमात्मनः ॥ २४ ॥
स ज्ञात्वा समरेऽऽत्मानं शस्त्रेणावध्यमेव तु ।

सात्यकिकी ओर अनेक बाण चलाये ॥ अनन्तर कर्णने फिर सात्यकिके शरीरमें सात बाण मारे। सात्यकिने भी सोनेके पङ्खवाले, अनेक बाण कर्णकी ओर चलाये ॥ तब चारों ओर यह घोर और विचित्र युद्ध होने लगा, इसे सुन कर और देखकर वीरोंको भय होता है॥ (१७—१८)

कर्ण और सात्यकिका घोर युद्ध देखकर सब वीरोंके रोएं खडे होगए, इसी बीचमें महापराक्रमी शत्रुनाशन अश्वत्थामा धृष्टद्युम्नसे युद्ध करनेको चले ॥ धृष्टद्युम्नको देख शत्रुनाशन अश्वत्थामा बोले, रे ब्रह्महत्यारे ! खडा रह खडा रह ! आज तू हमसे जीता नहीं बचेगा ॥ ऐसा कहकर वीर अश्वत्थामाने धृष्टद्युम्नकी ओर सहस्रों तेज बाण चलाये ॥ (१९-२२)

धृष्टद्युम्नभी इनके बाणोंको काटने का उपाय करने लगे। और अश्वत्थामा उनके मारनेका यत्न करने लगे। धृष्टद्युम्नने अश्वत्थामाको अपना काल रूप देख, बहुत दुःखी होकर युद्ध करने लगे। जैसे प्रलयमें यमराज कालसे युद्ध करनेको जाते हैं, इसी प्रकार धृष्टद्युम्न अपनेको शस्त्रसे मरने योग्य न

चलत्पताकरतां सेनां विमान द्यामिवाविशत् ।
तां विदार्य महासेनां प्रविष्टौ केशवार्जुनौ ॥ ९२ ॥
क्रुद्धौ संरम्भरक्ताक्षौ विभ्राजेतां महाद्युती ।
युद्धशौण्डौ समाहूतावागतौ तं रणाध्वरम् ॥ ९३ ॥
यज्वभिर्विधिनाहूतौ मखे देवाविवाश्विनौ ।
क्रुद्धौ तौ तु नरव्याघ्रौ वेगवन्तौ बभूवतुः ॥ ९४ ॥
तलशब्देन रुषितौ यथा नागौ महावने ।
विगाह्य तु रथानीकमश्वसङ्घांश्च फाल्गुनः ॥ ९५ ॥
व्यचरत्पृतनामध्ये पाशहस्त इवान्तकः ।
तं दृष्ट्वा युधि विक्रान्तं सेनायां तव भारत ॥ ९६ ॥
संशप्तकगणान्भूयः पुत्रस्ते समचूचुदत् ।
ततो रथसहस्रेण द्विरदानां त्रिभिः शतैः ॥ ९७ ॥
चतुर्दशसहस्रैस्तु तुरगाणां महाहवे ।
द्वाभ्यां शतसहस्राभ्यां पदातीनां च धन्विनाम् ॥९८॥
शूराणां लब्धलक्षाणां विदितानां समन्ततः ।
अभ्यवर्तन्त कौन्तेयं छादयन्तो महारथाः ॥ ९९ ॥
शरवर्षैर्महाराज सर्वतः पाण्डुनन्दनम् ।

और चंचल पताकाओंसे युक्त वह रथ आकाशमें विमानकी भांति तेरी सेनामें प्रविष्ट हुआ। ॥ ( ८८-९२ )

वाला हाथी वनमें वृक्षोंको फेंकता है, वैसे ही अर्जुन अपने बाणोंसे तुम्हारी सेनाके अश्वोंका नाश करने लगे। हे भारत ! उसे

निशितेनाथ बाणेन द्रौणिं विव्याध पार्षतः ।
ततो द्रौणिः सुसंक्रुद्धः शरैः संनतपर्वभिः ॥ ३४ ॥
आच्छादयद्दिशो राजन्धृष्टद्युम्नस्य संयुगे ।
नैवान्तरिक्षं न दिशो नापि योधाः समन्ततः॥ ३५ ॥
दृश्यन्ते वै महाराज शरैश्छन्नाः सहस्रशः ।
तथैव पार्षतो राजन्द्रौणिमाहवशोभिनम् ॥ ३६ ॥
शरैः संछादयामास सूतपुत्रस्य पश्यतः ।
राधेयोऽपि महाराज पञ्चालान्सह पाण्डवैः ॥ ३७ ॥
द्रौपदेयान्युधामन्युं सात्यकिं च महारथम् ।
एकः संवारयामास प्रेक्षणीयः समन्ततः ॥ ३८ ॥
धृष्टद्युम्नस्तु समरे द्रौणेश्चिच्छेद कार्मुकम् ।
तदपास्य धनुर्द्रौणिरन्यदादाय कार्मुकम् ॥ ३९ ॥
वेगवान्समरे घोरे शरांश्चाशीविषोपमान् ।
स पार्षतस्य राजेन्द्र धनुः शक्तिं गदां ध्वजम्॥ ४० ॥
हयान्सूतं रथं चैव निमेषाद्व्यधमच्छरैः ।
स छिन्नधन्वा विरथो हताश्वो हतसारथिः ॥ ४१ ॥
खड्गमादत्त विपुलं शतचन्द्रं च भानुमत् ।

ऐसा कहकर महापराक्रमी सेनापति धृष्टद्युम्नने एक तेज बाण अश्वत्थामाके शरीरमें मारा (३१-३४)

अश्वत्थामाने भी क्रोध करके अनेक तेज नतपर्व बाण चलाये, उन बाणोंसे धृष्टद्युम्न, रथ, योद्धा और आकाश कुछ न दीखने लगा । जैसे अश्वत्थामाके बाण सब ओर छा रहे थे, ऐसे ही धृष्टद्युम्नके बाण भी अश्वत्थामाकी ओर फैल रहे थे । राधापुत्र कर्णके देखते ही देखते धृष्टद्युम्नने अश्वत्थामाको छिपा दिया। कर्ण भी पाञ्चाल और पाण्डवोंके साथ घोर युद्ध करने लगे । एकले कर्णने द्रौपदीके पांचों पुत्र,सात्यकि और युधामन्युको रोक दिया । (३४-३८)

धृष्टद्युम्नने अश्वत्थामाका धनुष काट दिया, तब अश्वत्थामाने दूसरा धनुष धारण करके सांपके समान अनेक बाणोंसे धृष्टद्युम्नकी गदा, शक्ति, ध्वजा और धनुष काट दिया । अनन्तर क्षण मात्रमें उनके घोडे सारथी और रथको काट दिया ॥ अनन्तर धृष्टद्युम्न उस घोडे और सारथीके सहित रथसे प्रकाशमान खड्ग और ढाल लेकर उतरे, परन्तु

शस्त्रं पाणिं तथा वाहुं तथापि च शिरांस्युत ॥ १०८ ॥
अङ्गाङ्गावयवैश्छिन्नैर्व्यायुधास्तेऽपतन्भुवि ।
विष्वग्वाताभिसम्भग्ना वहुशाखा इव द्रुमाः ॥ १०९ ॥
हस्त्यश्वरथपत्तीनां व्रातान्निघ्नन्तमर्जुनम् ।
सुदक्षिणादवरजः शरवृष्ट्याभ्यवीवृषत् ॥ ११० ॥
तस्यास्यतोऽर्द्धचन्द्राभ्यां वाहू परिघसन्निभौ ।
पूर्णचन्द्राभवक्त्रं च क्षुरेणाभ्यहरच्छिरः ॥ १११ ॥
स पपात ततो वाहात्स्वलोहितपरिस्रवः ।
मनःशिलागिरेः शृङ्गं वज्रेणेवावदारितम् ॥ ११२ ॥
सुदक्षिणादवरजं काम्बोजं ददृशुर्हतम् ।
प्रांशुं कमलपत्राक्षमत्यर्थं प्रियदर्शनम् ॥ ११३ ॥
काञ्चनस्तम्भसदृशं भिन्नं हेमगिरिं यथा ।
ततोऽभवत्पुनर्युद्धं घोरमत्यर्थमद्भुतम् ॥ ११४ ॥
नानावस्थाश्च योधानां वभूवुस्तत्र युध्यताम् ।
एकेषुनिहतैरश्वैः काम्बोजैर्यवनैः शकैः ॥ ११५ ॥
शोणिताक्तास्तदा रक्ताः सर्वमासीद्विशाम्पते ।

आपिबन्त इव व्योम जग्मुर्द्रौणिरथं प्रति ॥ ५१ ॥
दृष्ट्वायातौ महावीर्यावुभौ कृष्णधनञ्जयौ ।
धृष्टद्युम्नवधे यत्नं चक्रे राजन्महाबलः ॥ ५२ ॥
विकृष्यमाणं दृष्ट्वैव धृष्टद्युम्नं नरेश्वर ।
शरांश्चिक्षेप वै पार्थो द्रौणिं प्रति महाबलः ॥ ५३ ॥
ते शरा हेमविकृता गाण्डीवप्रेषिता भृशम् ।
द्रौणिमासाद्य विविशुर्वल्मीकमिव पन्नगाः ॥ ५४ ॥
स विद्धस्तैः शरैर्घोरैर्द्रोणपुत्रः प्रतापवान् ।
उत्सृज्य समरे राजन्पाञ्चाल्यममितौजसम् ॥ ५५ ॥
रथमारुरुहे वीरो धनञ्जयशरार्दितः ।
प्रगृह्य च धनुः श्रेष्ठं पार्थं विव्याध सायकैः ॥ ५६ ॥
एतस्मिन्नन्तरे वीरः सहदेवो जनाधिप ।
अपोवाह रथेनाजौ पार्षतं शत्रुतापनम् ॥ ५७ ॥
अर्जुनोऽपि महाराज द्रौणिं विव्याध पत्रिभिः ।
तं द्रोणपुत्रः संक्रुद्धो बाह्वोरुरसि चार्पयत् ॥ ५८ ॥
क्रोधितस्तु रणे पार्थो नाराचं कालसंमितम् ।
द्रोणपुत्राय चिक्षेप कालदण्डमिवापरम् ॥ ५९ ॥

समान अश्वत्थामाकी ओर दौडे ॥ महापराक्रमी अर्जुन और कृष्णको आते देख अश्वत्थामा शीघ्रता सहित धृष्टद्युम्नके मारनेका यत्न करने लगे ॥ धृष्टद्युम्नको अश्वत्थामासे खिचता हुआ देख अर्जुनने अनेक बाण चलाये ॥ जैसे सांप बिलमें घुसता है ऐसे ही सोनेके पङ्खवाले अर्जुनके छोडे बाण अश्वत्थामाके शरीरमें घुसने लगे ॥ (५१-५४)

महापराक्रमी अश्वत्थामाने उन बाणोंसे पीडित होकर महातेजस्वी धृष्टद्युम्नको छोड दिया, फिर अपने अपने रथपर चढकर और धनुष धारण करके अर्जुनकी ओर अनेक बाण चलाने लगे॥ उसी समय महापराक्रमी सहदेव शत्रुनाशन धृष्टद्युम्नकी रक्षा करनेको आये, तब धृष्टद्युम्न उनके रथपर चढ कर रणभूमिसे भाग गये ॥ (५६-५७)

अर्जुनने भी क्रोध करके अश्वत्थामाके शरीरमें अनेक बाण मारे, इसी प्रकार अश्वत्थामाने भी क्रोधसे अर्जुनके बाहु और छातीमें बाण चलाये ॥ तब अर्जुनने क्रोध करके एक यमराजके दण्डके समान घोर नाराच बाण अश्वत्थामाकी

निश्चेष्टौ तावुभौ युद्धे कृत्वा माधवपाण्डवौ ॥ १२४ ॥
हाहाकृतमभूत्सर्वं स्थावरं जङ्गमं तथा ।
चराचरस्य गोप्तारौ दृष्ट्वा सञ्छादितौ शरैः ॥ १२५ ॥
सिद्धचारणसङ्घाश्च सम्पेतुस्ते समन्ततः ।
चिन्तयन्तो भवेदद्य लोकानां स्वस्त्यपीति च ॥ १२६ ॥
न मया तादृशो राजन्दृष्टपूर्वः पराक्रमः ।
संग्रामे यादृशो द्रौणेः कृष्णौ सञ्छादयिष्यतः ॥ १२७ ॥
द्रौणेस्तु धनुषः शब्दमहितत्रासनं रणे ।
अश्रौषं बहुशो राजन्सिंहस्य निनदो यथा ॥ १२८ ॥
ज्या चास्य चरतो युद्धे सव्यदक्षिणमस्यतः ।
विद्युदम्बुदमध्यस्था भ्राजमानेव साभवत् ॥ १२९ ॥
स तथा क्षिप्रकारी च दृढहस्तश्च पाण्डवः ।
प्रमोहं परमं गत्वा प्रेक्ष्य तं द्रोणजं ततः ॥ १३० ॥
विक्रमं विहतं मेने आत्मनः स महायशाः ।
तस्यासीत् समरे राजन्वपुरातीवसुदुर्दृशम् ॥ १३१ ॥
द्रौणिपाण्डवयोरेवं वर्तमाने महारणे ।
वर्धमाने च राजेन्द्र द्रोणपुत्रे महाबले ॥ १३२ ॥

सञ्जय उवाच— एतस्मिन्नन्तरे कृष्णः पार्थं वचनमब्रवीत् ।
दर्शयन्निव कौन्तेयं धर्मराजं युधिष्ठिरम् ॥ १ ॥
एष पाण्डव ते भ्राता धार्तराष्ट्रैर्महाबलैः ।
जिघांसुभिर्महेष्वासैर्द्रुतं पार्थोऽनुसार्यते ॥ २ ॥
तं चानुयान्ति संरब्धाः पाञ्चाला युद्धदुर्मदाः ।
युधिष्ठिरं महात्मानं परीप्सन्तो महाबलाः ॥ ३ ॥
एष दुर्योधनः पार्थ रथानीकेन दंशितः ।
राजा सर्वस्य लोकस्य राजानमनुधावति ॥ ४ ॥
जिघांसुः पुरुषव्याघ्र भ्रातृभिः सहितो बली ।
आशीविषसमस्पर्शैः सर्वयुद्धविशारदैः ॥ ५ ॥
एते जिघृक्षवो यान्ति द्विपाश्वरथपत्तयः ।
युधिष्ठिरं धार्तराष्ट्रा नरोत्तममिवार्थिनः ॥ ६ ॥
पश्य सात्वत भीमाभ्यां निरुद्धा धिष्ठिताः पुनः ।
जिहीर्षवोऽमृतं दैत्या शक्राग्निभ्यामिवासकृत् ॥ ७ ॥
एते बहुत्वात्त्वरिताः पुनर्गच्छन्ति पाण्डवम् ।
समुद्रमिव वार्योघाः प्रावृट्काले महारथाः ॥ ८ ॥

कर्णपर्वमें साठ अध्याय ।

सञ्जय बोले, हे राजन् ! उसी समय धर्मराज युधिष्ठिरको दिखलाते हुए श्रीकृष्ण अर्जुनसे बोले, हे अर्जुन ! देखो यही तुम्हारे भाई धर्मराज युधिष्ठिर महा-पराक्रमी मारनेकी इच्छावाले धृतराष्ट्रके पुत्रोंसे युद्ध कर रहे है। ये देखो ये कौरवोंकी सेनाके पीछे दौडे जाते हैं। और उनके पीछे उनकी रक्षा करते हुए महापराक्रमी महा योद्धा पांचालदेशी क्षत्री जा रहे है ॥ (१—३)

ये देखो सब जगत्का राजा दुर्योधन रथ सेनाके सहित महाराजसे युद्ध करने को चला आता है ॥ ये देखो इनके सङ्ग सब युद्धविद्याके जाननेवाले सर्पके समान क्रोधी इनके भाई भी महाराज को मारनेको जा रहे है। ये देखो जैसे अनेक भिक्षुक दानीके पास जाते हैं वैसे ही धृतराष्ट्रके पुत्र हाथी घोडे और रथोंके सहित महाराजके पास जाते है ॥ (४—६)

ये देखो भीमसेन और सात्यकिने इस सेनाको इस प्रकार रोक रखा है जैसे इन्द्र और अग्नि अमृतके लिये लडते हुए दानवोंको रोकते है ॥ हे महारथ ! जैसे वर्षाकालमें अनेक जलौघ समुद्रमें जाते

स मूर्छां परमां गत्वा ध्वजयष्टिं समाश्रितः ।
तं विसंज्ञं महाराज शत्रुणा भृशपीडितम् ॥ १४१ ॥
अपोवाह रणात्सूतो रक्षमाणो धनञ्जयात् ।
एतस्मिन्नेव काले च विजयः शत्रुतापनः ॥ १४२ ॥
व्यहनत्तावकं सैन्यं शतशोऽथ सहस्रशः ।
पश्यतस्तस्य वीरस्य तव पुत्रस्य भारत ॥ १४३ ॥
एवमेव क्षयो वृत्तस्तावकानां परैः सह ।
क्रूरो विशसनो घोरो राजन्दुर्मन्त्रिते तव ॥ १४४ ॥
संशप्तकांश्च कौन्तेयः कुरूंश्चापि वृकोदरः ।
वसुषेणश्च पाञ्चालान्क्षणेन व्यधमद्रणे ॥ १४५ ॥
वर्तमाने तथा रौद्रे राजन्वीरवरक्षये ।
उत्थितान्यगणेयानि कबन्धानि समन्ततः ॥ १४६ ॥
युधिष्ठिरोऽपि संग्रामे प्रहारैर्गाढवेदनः ।
क्रोशमात्रमपक्रम्य तस्थौ भरतसत्तम ॥ १४७ ॥ [२८०३]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां कर्णपर्वणि संकुलयुद्धे सप्तपञ्चाशत्तमोऽध्यायः ॥ ५७ ॥

सञ्जय उवाच— दुर्योधनस्ततः कर्णमुपेत्य भरतर्षभ ।
अब्रवीन्मद्रराजं च तथैवान्यांश्च पार्थिवान् ॥ १ ॥

उपवासकृशो राजा भृशं भरतसत्तमः।
ब्राह्मे बले स्थितो ह्येष न क्षात्रे हि बले विभुः॥ १७॥
कर्णेन चाभियुक्तोऽयं भूपतिः शत्रुतापनः।
संशयं समनुप्राप्तः पाण्डवो वै युधिष्ठिरः ॥ १८॥
न जीवति महाराजो मन्ये पार्थ युधिष्ठिरः।
यद्भीमसेनः सहते सिंहनादममर्षणः ॥ १९॥
नर्दतां धार्तराष्ट्राणां पुनः पुनररिन्दमः।
धमतां च महाशङ्खान्संग्रामे जितकाशिनाम् ॥ २०॥
युधिष्ठिरं पाण्डवेयं हतेति भरतर्षभ।
सञ्चोदयत्यसौ कर्णो धार्तराष्ट्रान्महाबलान् ॥ २१॥
स्थूणाकर्णेन्द्रजालेन पार्थ पाशुपतेन च।
प्रच्छादयन्ति राजानं शस्त्रजालैर्महारथाः ॥ २२॥
आतुरो हि कृतो राजा संनिषेव्यश्च भारत।
यथैनमनुवर्तन्ते पाञ्चालाः सह पाण्डवैः ॥ २३॥
त्वरमाणास्त्वराकाले सर्वशस्त्रभृतां वराः।
मज्जन्तमिव पाताले बलिनोऽप्युज्जिहीर्षवः ॥ २४॥
न केतुर्दृश्यते राज्ञः कर्णेन निहतः शरैः।

---

करते करते दुर्बल होगये हैं। ये सदा ब्राह्मणोंके समान शील वृत्तिसे रहते हैं कभी क्षत्रियोंके समान क्रोध नहीं करते, आज महाराज युद्धिष्ठिर कर्णसे युद्ध कर रहे हैं। सो हमें सन्देह होता है॥ (१६-१८)

गर्जते हुए वार वार बडे बडे शंख बजानेवाले विजयी कौरवोंके सिंह समान शब्दको भीमसेन खडे हुए सुन रहे हैं। इससे हमें जान पडता है कि, महाराज नहीं जीते॥ देखो वह कर्ण महाबली धृतराष्ट्रके पुत्रोंसे कह रहा है, कि महाराज युधिष्ठिर मारे गये॥ (१९-२१)

हे अर्जुन! स्थूणाकर्ण, पाशुपत और इन्द्रजाल आदि अनेक शस्त्र राजाके रथ पर घूम रहे हैं॥ ये देखो अनेक पाञ्चाल और पाण्डव महाराजकी ओर दौडे जाते हैं। इससे जान पडता है, कि वे किसी घोर आपत्तिमें पडे हैं। इसलिये तुम भी उन्हींके पास चलो। ये देखो अनेक शस्त्र जाननेवाले, प्रधान योद्धा पातालमें डूबनेवाले बलिके समान सेना सागरमें डूबते हुए महाराजको उद्धार करनेको दौडे हुए जाते हैं॥ (२२-२४)

धृष्टद्युम्नस्य तं सङ्ख्ये निहनिष्यामि सायकैः ॥ १० ॥
एवमुक्ते ततः सर्वा सहिता भारती चमूः ।
अभ्यद्रवत कौन्तेयांस्तथा ते चापि पाण्डवाः ॥ ११ ॥
स संनिपातो रथयूथपानां बभूव राजन्नतिभीमरूपः ।
जनक्षयः कालयुगान्तकल्पः प्रावर्त्तताग्रे कुरुसृञ्जयानाम् ॥ १२ ॥
ततः प्रवृत्ते युधि सम्प्रहारे भूतानि सर्वाणि सदैवतानि ।
आसन्समेतानि सहाप्सरोभिर्दिदृक्षमाणानि नरप्रवीरान् ॥ १३ ॥
दिव्यैश्च माल्यैर्विविधैश्च गन्धैर्दिव्यैश्च रत्नैर्विविधैर्नराग्र्यान् ।
रणे स्म कर्मोद्वहतः प्रवीरानवाकिरन्नप्सरसः प्रहृष्टाः ॥ १४ ॥
समीरणस्तांश्च निषेव्य गन्धान्निषेवते सर्वानपि योधमुख्यान् ।
निषेव्यमाणास्तदनिलेन योधाः परस्परघ्ना धरणीं निपेतुः ॥ १५ ॥
सा दिव्यमाल्यैरवकीर्यमाणा सुवर्णपुङ्खैश्च शरैर्विचित्रैः ।
नक्षत्रसङ्घैरिव चित्रिता द्यौः विनिर्बभौ योधवरैर्विचित्रा ॥ १६ ॥
ततोऽन्तरिक्षादपि साधुवादैर्वादित्रघोषैः ससुकीर्यमाणः ।
ज्याघोषनेमिस्वनतालचित्रः समाकुलः सोऽभवत्सम्प्रहारः ॥ १७ ॥ २८२०

इति श्रीमहाभारते० संहितायां वैयासिक्यां कर्णपर्वणि [illegible] सप्तपञ्चाशत्तमोऽध्यायः ॥ ५७ ॥

दिशो विप्रेक्षते सर्वास्त्वदर्थमिति मे मतिः ॥ ३४ ॥
पश्य पार्थ धनुः श्रेष्ठं विकर्षन्साधु शोभते ।
शत्रुं जित्वा यथा शक्रो देवसङ्घैः समावृतः ॥ ३५ ॥
एते नर्दन्ति कौरव्या दृष्ट्वा कर्णस्य विक्रमम् ।
त्रासयन्तो रणे पाण्डून्सृञ्जयांश्च समन्ततः ॥ ३६ ॥
एष सर्वात्मना पाण्डूंस्त्रासयित्वा महारणे ।
अभिभाषति राधेयः सर्वसैन्यानि मानद ॥ ३७ ॥
अभिद्रवत भद्रं वो द्रुतं द्रवत कौरवाः ।
यथा जीवन्न वः कश्चिन्मुच्येत युधि सृञ्जयः ॥ ३८ ॥
तथा कुरुत संयत्ता वयं यास्याम पृष्ठतः ।
एवमुक्त्वा गतो ह्येष पृष्ठतो विकिरञ्छरान् ॥ ३९ ॥
पश्य कर्णं रणे पार्थ श्वेतच्छत्रविराजितम् ।
उदयं पर्वतं यद्वच्छशाङ्केनाभिशोभितम् ॥ ४० ॥
पूर्णचन्द्रनिकाशेन मूर्ध्नि च्छत्रेण भारत ।
ध्रियमाणेन समरे श्रीमच्छतशलाकिना ॥ ४१ ॥
एष त्वां प्रेक्षते कर्णः सकटाक्षं विशाम्पते ।
उत्तमं जवमास्थाय ध्रुवमेष्यति संयुगे ॥ ४२ ॥
पश्य ह्येनं महाबाहो विधुन्वानं महद्धनुः ।

तेरे लिये मानो सब ओर देख हैं । देखो कौरवों के बीचमें खडेहुए कर्ण इस प्रकार धनुष खींच रहे है, जैसे दानवोंको जीत कर देवतोंके बीचमें इन्द्र ॥ ३२-३५

कर्णका पराक्रम देखकर कौरव गर्ज रहे है ॥ और तुम्हारी सेनाको डरा रहे है । देखो राधापुत्र तुम्हारी और सृंजयोंकी सेनाको जीतकर अपनी सेनाके पीछे खडे है । इस रीतिसे सब प्रकारसे पाण्डवोंकी सेनाको त्रस्त करके ये अपनी सेनाको आज्ञा दे रहे है, कि तुम लोग जल्दी दौडो मारो, कोई सृञ्जय जीता न जाने पावे ॥ (३६—३८)

ये इस आज्ञाको देकर सेनाके पीछे चले गये । और वहींसे बाण चला रहे है ॥ देखो कर्ण युद्धमें सफेद छत्र धारण किये इस प्रकार विराज रहे हैं, जैसे चन्द्रमाके सहित उदयाचल । ये देखो सफेद छत्रधारी कर्ण अब केवल तुम्हारी ही ओर देख रहे हैं । अब ये रथको शीघ्र चलाकर तुमसे घोर युद्ध करनेको आया चाहते हैं । ये देखो कर्ण अपने

अवेक्षमाणो गोविन्दः सव्यसाचिनमब्रवीत् ॥ ९ ॥
पश्य पार्थ महारौद्रो वर्तते भरतक्षयः ।
पृथिव्यां क्षत्रियाणां वै दुर्योधकृते महान् ॥ १० ॥
पश्य भारत चापानि रुक्मपृष्ठानि धन्विनाम् ।
मृतानामपविद्धानि कलापांश्च महाधनान् ॥ ११ ॥
जातरूपमयैः पुङ्खैः शरांश्चानतपर्वणः ।
तैलधौतांश्च नाराचान्निर्मुक्तान्पन्नगानिव ॥ १२ ॥
हस्तिदन्तत्सरून्खड्गाञ्जातरूपपरिष्कृतान् ।
चर्माणि चापविद्धानि रुक्मगर्भाणि भारत ॥ १३ ॥
सुवर्णविकृतान्प्रासाञ्शक्तीः कनकभूषणाः ।
जाम्बूनदमयैः पट्टैर्बद्धाश्च विपुला गदाः ॥ १४ ॥
जातरूपमयीश्चर्ष्टीः पट्टिशान्हेमभूषणान् ।
दण्डैः कनकचित्रैश्च विप्रविद्धान्परश्वधान् ॥ १५ ॥
अयःकुन्तांश्च पतितान्मुसलानि गुरूणि च ।
शतघ्नीः पश्य चित्राश्च विपुलान्परिघांस्तथा ॥ १६ ॥
चक्राणि चापविद्धानि तोमरांश्च महारणे ।

---

कर रहे थे, उस युद्ध में घोर युद्ध भूमि-को देख कर श्रीकृष्ण अर्जुन से बोले ॥ (७—९)

सोनेके तारोंसे गुथे हुए उत्तम खड्ग और सोनेके तारोंके कवच कटे हुए पडे हैं । ये दखो सोनेके तारोंसे चित्र प्रास,

आर्या युद्धे मतिं कृत्वा प्रत्येहि रथयूथपम् ।
पञ्च ह्येतानि मुख्यानि रथानां रथसत्तम ॥ ५१ ॥
शतान्यायान्ति समरे बलिनां तिग्मतेजसाम् ।
पञ्च नागसहस्राणि द्विगुणा वाजिनस्तथा ॥ ५२ ॥
अभिसंहत्य कौन्तेय पदातिप्रयुतानि च ।
अन्योन्यरक्षितं वीर बलं त्वामभिवर्तते ॥ ५३ ॥
द्रोणपुत्रं पुरस्कृत्य तच्छीघ्रं संनिषूदय ।
निकृत्यैतद्रथानीकं बलिनं लोकविश्रुतम् ॥ ५४ ॥
सूतपुत्रं महेष्वासं दर्शयात्मानमात्मना ।
उत्तमं जवमास्थाय प्रत्येहि भरतर्षभ ॥ ५५ ॥
असौ कर्णः सुसंरब्धः पञ्चालानभिधावति ।
केतुमस्य हि पश्यामि धृष्टद्युम्नरथं प्रति ॥ ५६ ॥
समुपैष्यति पञ्चालानिति मन्ये परन्तप ।
आचचक्षे प्रियं पार्थ तवेदं भरतर्षभ ॥ ५७ ॥
राजासौ कुशली श्रीमान्धर्मपुत्रो युधिष्ठिरः ।
असौ भीमो महाबाहुः सन्निवृत्तश्चमूमुखे ॥ ५८ ॥

---

का अवलम्बन कर सेनापति कर्णके साथ युद्ध करो ॥ (४७-५१)

हे महारथ ! ये पांचसौ महातेजस्वी प्रधान रथ हैं, सो युद्ध करनेको चले आते है, ये महा पराक्रमी तेजस्वी वीरोंके पांच सहस्र हाथी और दश हजार घोडे चले आते है। लाखों पदाति चले आते है। ये सब सेना एक दूसरेकी रक्षा करती हुई तुम्हारी ही ओर चली आती है॥ ये सेनाके आगे जगत्विख्यात महापराक्रमी वीर अश्वत्थामा चले आते है तुम यत्न करके इनको नाश करो। (५२-५४)

हे भारतकुलसिंह ! इस रथ झुण्डको मारकर महाधनुषधारी सूतपुत्रसे युद्ध करना। हे भारतकुलसिंह ! अब शीघ्र इसी सेनाकी ओर चलो। यह देखो कर्ण क्रोधमें पांचालोंकी ओर बढ रहा हैं, क्योंकि धृष्टद्युम्नके रथके समीप उसके रथकी ध्वजा मुझे दीख पडती हैं, इससे मुझे प्रतीत होता है, कि यह थोडे ही समयमें पांचालोंके समीप पहुंचेगा। ( ५४-५७ )

हे भरतश्रेष्ठ अर्जुन ! अब मैं तुझे एक प्रिय वृत्त निवेदन करता हूं, कि ये श्रीमान् महाराजा युधिष्ठिर कुशलमे रहे

अनुकर्षानुपासङ्गान्पताका विविधध्वजान् ॥ २६ ॥
रथिनां च महाशङ्खान्पाण्डुरांश्च प्रकीर्णकान् ।
निरस्तजिह्वान्मातङ्गाञ्शयानान्पर्वतोपमान् ॥ २७ ॥
वैजयन्तीर्विचित्राश्च हतांश्च गजवाजिनः ।
वारणानां परिस्तोमांस्तथैवाजिनकम्बलान् ॥ २८ ॥
विपाटितविचित्रांश्च रूप्यचित्रान्कुथांकुशान् ।
भिन्नाश्च बहुधा घण्टा महद्भिः पतितैर्गजैः ॥ २९ ॥
वैदूर्यदण्डांश्च शुभान्पतितानंकुशान्भुवि ।
बद्धाः सादिभुजाग्रेषु सुवर्णविकृताः कशाः ॥ ३० ॥
विचित्रमणिचित्रांश्च जातरूपपरिष्कृतान् ।
अश्वास्तरपरिस्तोमान्राङ्कवान्पतितान्भुवि ॥ ३१ ॥
चूडामणीन्नरेन्द्राणां विचित्राः काञ्चनस्रजः ।
छत्राणि चापविद्धानि चामरव्यजनानि च ॥ ३२ ॥
चन्द्रनक्षत्रभासैश्च वदनैश्चारुकुण्डलैः ।
क्लृप्तश्मश्रुभिरत्यर्थं वीराणां समलंकृतैः ॥ ३३ ॥
वदनैः पश्य संछन्नां महीं शोणितकर्दमाम् ।
सजीवांश्चापरान्पश्य कूजमानान्समन्ततः ॥ ३४ ॥
उपास्यमानान्बहुशो न्यस्तशस्त्रैर्विशाम्पते ।

समाद्रवन्ति पाञ्चाला धार्तराष्ट्रांस्तरस्विनः।
विमृद्नन्ति नरव्याघ्रा भीमसेनबलाश्रयात् ॥ ६७ ॥
बलं परेषां दुर्द्धर्षास्त्यक्त्वा प्राणानरिन्दम।
एते नर्दन्ति पञ्चाला ध्मापयन्ति च वारिजान्॥ ६८ ॥
अभिद्रवन्ति च रणे मृद्नन्तः सायकैः परान्।
पश्यस्वैषां च माहात्म्यं पञ्चाला हि पराक्रमात्॥ ६९ ॥
धार्तराष्ट्रान्विनिघ्नन्ति क्रुद्धाः सिंहा इव द्विपान्।
शस्त्रमाच्छिद्य शत्रूणां सायुधानां निरायुधाः॥ ७० ॥
तेनैवैतानमोघास्त्रान्निघ्नन्ति च नदन्ति च।
शिरांस्येतानि पात्यन्ते शत्रूणां बाहवोऽपि च॥ ७१ ॥
रथनागहया वीरा यशस्याः सर्व एव च।
सर्वतश्चाभिपन्नैषा धार्तराष्ट्री महाचमूः ॥ ७२ ॥
पञ्चालैर्मानसादेत्य हंसैर्गङ्गेव वेगितैः।
सुभृशं च पराक्रान्ताः पाञ्चालानां निवारणे ॥ ७३ ॥
कृपकर्णादयो वीरा ऋषभाणामिवर्षभाः।
भीमास्त्रेण सुनिर्भग्नान्धार्तराष्ट्रान्महारथान् ॥ ७४ ॥

छोडनेवाले पाञ्चालोंके अनेक प्रकारके बाणोंसे मरे हुए, वीर रहित हाथी घोडे और रथ फिरते है ॥ ये महापराक्रमी पाञ्चाल दुर्योधनकी सेनाकी ओर दौडे जाते है। ये पाञ्चाल भीमसेनके बलके आश्रयसे अपने प्राणोंका मोह छोडकर शत्रुओंकी सेनाको मार रहे हैं, गरज रहे है और शङ्ख बजा रहे है ॥ (६६–६८)

यह तुम अपने वीर पाञ्चालोंका पराक्रम देखो, ये लोग अपने बाणोंसे क्षत्रियोंका किस प्रकार नाश कर रहे हैं ॥ जैसे क्रोधी सिंह हाथियोंका नाश करते हैं तैसे ही ये पाञ्चाल शत्रुओंको मार रहे है। पाञ्चाल वीर स्वतः शस्त्र रहित होकर भी अमोघ शस्त्रवाले शत्रुओंके हाथसे शस्त्र छीनकर उसहीसे शत्रुओंको मार रहे है और गर्ज रहे हैं। उनके शस्त्रोंसे शत्रुओंके शिर और हाथ कट कटकर पृथ्वीमें गिरते हैं। यह धृतराष्ट्रकी महासेना चारों ओरसे हाथी, घोडे और रथोंके सहित आपत्तिमें पड गयी हैं ॥ (६९–७२)

जैसे हंसोंका झुण्ड आनेसे गङ्गाका पानी गडबड होजाता है। ऐसे ही पाञ्चालोंके घुसनेसे यह सेना घबडा उठी। इनके रोकनेको सेनामें किसीकी

त्वरमाणस्ततः कृष्णः पार्थमाह शनैरिदम् ।
पश्य पाण्डव राजानमुपयातांश्च पार्थिवान् ॥ ४४ ॥
कर्णं पश्य महारङ्गे ज्वलन्तमिव पावकम् ।
असौ भीमो महेष्वासः सन्निवृत्तो रणं प्रति ॥ ४५ ॥
तमेते विनिवर्तन्ते धृष्टद्युम्नपुरोगमाः ।
पाञ्चालसृञ्जयानां च पाण्डवानां च ये मुखम् ॥ ४६ ॥
निवृत्तैश्च पुनः पार्थैर्भग्नं शत्रुबलं महत् ।
कौरवान्द्रवतो ह्येष कर्णो रोधयतेऽर्जुन ॥ ४७ ॥
अन्तकप्रतिमो वेगे शक्रतुल्यपराक्रमः ।
असौ गच्छति कौरव्य द्रौणिः शस्त्रभृतां वरः ॥ ४८ ॥
तमेव प्रद्रुतं संख्ये धृष्टद्युम्नो महारथः ।
अनुप्रयाति संग्रामे हतान्पश्य च सृञ्जयान् ॥ ४९ ॥
सर्वमाह सुदुर्धर्षो वासुदेवः किरीटिने ।
ततो राजन्महाघोरः प्रादुरासीन्महारणः ॥ ५० ॥
सिंहनादरवाश्चैव प्रादुरासन्समागमे ।
उभयोः सेनयो राजन्मृत्युं कृत्वा निवर्तनम् ॥ ५१ ॥
एवमेष क्षयो वृत्तः पृथिव्यां पृथिवीपते ।

---

बोले, हे कुन्तीपुत्र ! वह देखो अनेक राजाओंके सहित महाराज खडे हैं । ये देखो कर्ण युद्धमें जलती हुई अग्निके समान प्रकाश कर रहे हैं । (४४–४५)

सेनाका नाश कर रहे हैं ॥ ये देखो उसी अश्वत्थामाके युद्ध करनेको महारथ धृष्टद्युम्न दौडे जाते हैं । वे देखो अनेक सृञ्जय और पाञ्चाल मरे पडे हैं ॥ ४५-४९

तीक्ष्णैरग्निरविप्रख्यैर्नाराचैर्दशभिर्हतः ।
हत्वैनं पुनरायाति नागानन्यान्प्रहारिणः ॥ ८२ ॥
पश्य नीलाम्बुदनिभान्महामात्रैरधिष्ठितान् ।
शक्तितोमरसङ्घातैर्विनिघ्नन्तं वृकोदरम् ॥ ८३ ॥
सप्त सप्त च नागांस्तान्वैजयन्तीश्च सध्वजाः ।
निहत्य निशितैर्बाणैश्छिन्नाः पार्थाग्रजेन ते ॥ ८४ ॥
दशभिर्दशभिश्चैको नाराचैर्निहतो गजः ।
न चासौ धार्तराष्ट्राणां श्रूयते निनदस्तथा ॥ ८५ ॥
पुरन्दरसमे क्रुद्धे निवृत्ते भरतर्षभ ।
अक्षौहिण्यस्तथा तिस्रो धार्तराष्ट्रस्य संहताः ।
क्रुद्धेन भीमसेनेन नरसिंहेन वारिताः ॥ ८६ ॥
न शक्नुवन्ति वै पार्थ पार्थिवाः समुदीक्षितुम् ।
मध्यन्दिनगतं सूर्यं यथा दुर्बलचक्षुषः ॥ ८७ ॥
एते भीमस्य सन्त्रस्ताः सिंहस्येवेतरे मृगाः ।
शरैः सन्त्रासिताः सङ्ख्ये न लभन्ते सुखं क्वचित् ॥ ८८ ॥

वाले इनके तोमर सहित दोनों हाथ काट दिये ॥ भीमसेनने अग्निके समान दश बाणोंसे निषादपुत्रको मारडाला। अब यह दूसरे वीरोंसे लडनेको चले, ये देखो काले मेघोंके समान काले, महावतोंसे युक्त हाथियोंपर बैठे हुए अनेक वीर शक्ति तोमर और बाणोंसे भीमसेन को मार रहे हैं ॥ (७९-८३)

हे पार्थ! देखो तुम्हारे बडे भाई भीमसेनने अपने तेज बाणोंसे सात सात हाथियोंको मारडाला और इनकी वैजयन्ती माला तथा ध्वजा कटकर पृथ्वीमें गिर गई, इधर देखो भीमसेनने अपने दश दश बाणोंसे एक एक हाथीको मार डाला। इस समय कोई धृतराष्ट्रका पुत्र कहीं नहीं गर्जता। ये देखो जहां इन्द्रके समान पराक्रमी भीमसेन क्रोध करके युद्ध कर रहे हैं। तहां दुर्योधनकी तीन अक्षौहिणी सेना इकट्ठी है। परन्तु एकले पुरुषसिंह भीमसेन इन सबको रोक रहे हैं। (८४-८६)

जैसे दुर्बल नेत्रवाले मनुष्य दो पहरके सूर्यकी ओर नहीं देख सकते, तैसे ही इस समय कोई राजा भीमसेनके मुखको नहीं देख सकता ॥ जैसे सिंहसे डरकर हरिण भागते हैं। ऐसे ही ये सब राजा भीमसेनके बाणोंसे व्याकुल होकर कहीं सुख नहीं पाते। (८७-८८)

विजयं च धनुः श्रेष्ठं विधुन्वानो महारथः ॥ ८ ॥
पार्षतस्य धनुश्छित्त्वा शरांश्चाशीविषोपमान् ।
ताडयामास संक्रुद्धः पार्षतं नवभिः शरैः ॥ ९ ॥
ते वर्म हेमविकृतं भित्त्वा तस्य महात्मनः ।
शोणिताक्ता व्यराजन्त शक्रगोपा इवानघ ॥ १० ॥
तदपास्य धनुश्छिन्नं धृष्टद्युम्नो महारथः ।
अथान्यद्धनुरादाय शरांश्चाशीविषोपमान् ॥ ११ ॥
कर्णं विव्याध सप्तत्या शरैः सन्नतपर्वभिः ।
तथैव राजन्कर्णोऽपि पार्षतं शत्रुतापनम् ॥ १२ ॥
छादयामास समरे शरैराशीविषोपमैः ।
द्रोणशत्रुर्महेष्वासो विव्याध निशितैः शरैः ॥ १३ ॥
तस्य कर्णो महाराज शरं कनकभूषणम् ।
प्रेषयामास संक्रुद्धो मृत्युदण्डमिवापरम् ॥ १४ ॥
तमापतन्तं सहसा घोररूपं विशाम्पते ।
चिच्छेद शतधा राजञ्शैनेयः कृतहस्तवत् ॥ १५ ॥
दृष्ट्वा विनिहतं बाणं शरैः कर्णो विशाम्पते ।
सात्यकिं शरवर्षेण समन्तात्पर्यवारयत् ॥ १६ ॥
विव्याध चैनं समरे नाराचैरत्र सप्तभिः ।

कर्णने भी अपने विजय धनुषको घुमाकर एक बाणसे धृष्टद्युम्नका धनुष काट दिया, अनन्तर उनके ऊपर विषधारी सर्पोंके समान तेज नौ बाण मारे ॥ हे पाप रहित ! उन बाणोंने महात्मा धृष्टद्युम्नका सुवर्ण भूषित कवच काट दिया फिर रुधिरसे भीगकर बीरबहूटीके समान दीखने लगे ॥ (८-१०)

महारथ धृष्टद्युम्नने उस कटे धनुषको फेंककर [illegible] कर सत्तर बाण कर्णके शरीरमें मारे, कर्णने भी अनेक विषैले सर्पके समान बाण धृष्टद्युम्नके शरीरमें मारे ॥ अनन्तर महावीर कर्णने द्रोणनाशक धृष्टद्युम्नको अपने बाणोंसे छिद दिया, अनन्तर कर्णने [illegible] ॥ (११-१५)

[illegible]

शिखण्डिनमथाविध्यन्नवभिर्निशितैः शरैः ॥ २२ ॥
कर्णचापच्युतान्बाणान्वर्जयंस्तु नरोत्तमः ।
अपयातस्ततस्तूर्णं शिखण्डी भृशविक्षतः ॥ २३ ॥
ततः कर्णो महाराज पाण्डुसैन्यान्यशातयत् ।
तूलराशिं समासाद्य यथा वायुर्महाबलः ॥ २४ ॥
धृष्टद्युम्नो महाराज तव पुत्रेण पीडितः ।
दुःशासनं त्रिभिर्बाणैः प्रत्यविध्यत्स्तनान्तरे ॥ २५ ॥
तस्य दुःशासनो बाहुं सव्यं विव्याध मारिष ।
स तेन रुक्मपुङ्खेन भल्लेनानतपर्वणा ॥ २६ ॥
धृष्टद्युम्नस्तु निर्विद्धः शरं घोरममर्षणः ।
दुःशासनाय संक्रुद्धः प्रेषयामास भारत ॥ २७ ॥
आपतन्तं महावेगं धृष्टद्युम्नसमीरितम् ।
शरैश्चिच्छेद पुत्रस्ते त्रिभिरेव विशाम्पते ॥ २८ ॥
अथापरैः सप्तदशैर्भल्लैः कनकभूषणैः ।
धृष्टद्युम्नं समासाद्य बाह्वोरुरसि चार्पयत् ॥ २९ ॥
ततः स पार्षतः क्रुद्धो धनुश्चिच्छेद मारिष ।
क्षुरप्रेण सुतीक्ष्णेन तत उच्चुक्रुशुर्जनाः ॥ ३० ॥

---

चलायी ॥ हे भारत ! कर्णने अपने तीन बाणोंसे उस शक्तिको काट दिया और नौ बाण शिखण्डीके शरीरमें मारे ॥ (२०–२२)

उस समय पुरुषश्रेष्ठ शिखण्डीके शरीरमें अनेक घाव होगये थे, तब वे कर्णके बाणोंको बचाते हुए युद्धसे भाग गये ॥ जैसे वायु रुईको उडाता है तैसे ही शिखण्डीके भागनेपर कर्ण पाण्डवोंकी सेनाका नाश करने लगे ॥ (२३–२४)

हे महाराज ! जब दुःशासनने धृष्टद्युम्नकी ओर अनेक बाण चलाये तब उसके बाणोंसे पीडित होकर धृष्टद्युम्नने दुःशासनकी छातीमें तीन बाण मारे । दुःशासननेभी एक सोनेके पङ्खवाला तेज बाण धृष्टद्युम्नके दहने हाथमें मारा, तब धृष्टद्युम्नने क्रोध करके एक घोर बाण दुःशासनकी ओर चलाया ॥ हे पृथ्वीनाथ ! धृष्टद्युम्नके उस घोर बाणको आते देख तुम्हारे पुत्रने तीन बाणसे काट दिया ॥ अनन्तर सोनेसे भूषित शीघ्र चलनेवाले सतरह बाण धृष्टद्युम्नके हृदय और हाथोंमें मारे ॥ (२५-२९)

तब धृष्टद्युम्नने क्रोध करके एक तेज

जवेनाभ्याययौ द्रौणिं कालः कालमिव क्षये ॥ २५ ॥
द्रौणिस्तु दृष्ट्वा राजेन्द्र धृष्टद्युम्नमवस्थितम् ।
क्रोधेन निःश्वसन्वीरः पार्षतं समुपाद्रवत् ॥ २६ ॥
तावन्योन्यं तु दृष्ट्वैव संरम्भं जग्मतुः परम् ।
अथाब्रवीन्महाराज द्रोणपुत्रः प्रतापवान् ॥ २७ ॥
धृष्टद्युम्नं समीपस्थं त्वरमाणो विशाम्पते ।
पाञ्चालापसदाद्य त्वां प्रेषयिष्यामि मृत्यवे ॥ २८ ॥
पापं हि यत्त्वया कर्म घ्नता द्रोणं पुरा कृतम् ।
अद्य त्वां तपयते तद्वै यथा न कुशल तथा ॥ २९ ॥
अरक्ष्यमाणः पार्थेन यदि तिष्ठसि संयुगे ।
नापक्रामसि वा मूढ सत्यमेतद्ब्रवीमि ते ॥ ३० ॥
एवमुक्तः प्रत्युवाच धृष्टद्युम्नः प्रतापवान् ।
प्रतिवाक्यं स एवासिर्मामको दास्यते तव ॥ ३१ ॥
येनैव ते पितुर्दत्तं यतमानस्य संयुगे ।
यदि तावन्मया द्रोणो निहतो ब्राह्मणब्रुवः ॥ ३२ ॥
त्वामिदानीं कथं युद्धे न हनिष्यामि विक्रमात् ।
एवमुक्त्वा महाराज सेनापतिरमर्षणः ॥ ३३ ॥

अन्योन्यमाच्छादयतामथोऽभज्यत वाहिनी ॥ ३९ ॥
स दृष्ट्वा प्रद्रुतां सेनां धार्तराष्ट्रस्य सूतजः ।
निवारयामास बलादनुसृत्य विशाम्पते ॥ ४० ॥
निवृत्ते तु ततः कर्णे नकुलः कौरवान्ययौ ।
कर्णपुत्रस्तु समरे हित्वा नकुलमेव तु ॥ ४१ ॥
जुगोप चक्रं त्वरितो राधेयस्यैव मारिष ।
उलूकस्तु रणे क्रुद्धः सहदेवेन वारितः ॥ ४२ ॥
तस्याश्वांश्चतुरो हत्वा सहदेवः प्रतापवान् ।
सारथिं प्रेषयामास यमस्य सदनं प्रति ॥ ४३ ॥
उलूकस्तु ततो यानादवप्लुत्य विशाम्पते ।
त्रिगर्तानां बलं तूर्णं जगाम पितृनन्दनः ॥ ४४ ॥
सात्यकिः शकुनिं विध्वा विंशत्या निशितैः शरैः ।
ध्वजं चिच्छेद भल्लेन सौबलस्य हसन्निव ॥ ४५ ॥
सौबलस्तस्य समरे क्रुद्धो राजन्प्रतापवान् ।
विदार्य कवचं भूयो ध्वजं चिच्छेद काञ्चनम् ॥ ४६ ॥
तथैनं निशितैर्बाणैः सात्यकिः प्रत्यविध्यत ।
सारथिं च महाराज त्रिभिरेव समार्पयत ॥ ४७ ॥

सहस्रों बाण चलाने लगे। और परस्पर बाणोंसे आच्छादित करने लगे। तब बाणोंसे पीडित होकर तुम्हारी सेना भागने लगी, तुम्हारी सेनाको भागती हुई देख कर्णने अपने बलसे अपनी सेनाको स्थिर किया ॥ (३९-४०)

जब कर्ण लौटे तब नकुल कौरवोंसे युद्ध करने लगे। वृषसेन नकुलके आगे से भाग कर अपने पिताके रथके पहियों की रक्षा करने लगा ॥ (४१-४२)

हे भारत! सहदेवने उलूकको अपने बाणोंसे व्याकुल कर दिया। तब महा प्रतापी सहदेवने चार बाणोंसे उलूकके घोडे और एक बाणसे सारथीको मार डाला। हे पृथ्वीनाथ! उलूक उस रथसे कूद कर त्रिगर्त्त देशकी सेनाकी ओर भाग गये ॥ (४२-४४)

सात्यकीने हंसकर शकुनिके शरीरमें तीक्ष्ण बीस बाण मारे और एक बाणसे उनकी ध्वजा काट डाली। हे राजन्! प्रतापवान् शकुनिने भी क्रोध करके सात्यकिका कवच और एक बाणसे सोनेकी ध्वजा काट दी ॥ सात्यकिने क्रोध करके अनेक तेज बाण शकुनिके

द्रौणिस्तदपि राजेन्द्र भल्लैः क्षिप्रं महारथः ॥ ४२ ॥
चिच्छेद समरे वीरः क्षिप्रहस्तो दृढायुधः ।
रथादनवरूढस्य तदद्भुतमिवाभवत् ॥ ४३ ॥
धृष्टद्युम्नं हि विरथं हताश्वं छिन्नकार्मुकम् ।
शरैश्च बहुधा विद्धमस्त्रैश्च शकलीकृतम् ॥ ४४ ॥
नाशकद्भरतश्रेष्ठ यतमानो महारथः ।
तस्यान्तमिषुभी राजन्यदा द्रौणिर्न जग्मिवान् ॥ ४५ ॥
अथ त्यक्त्वा धनुर्वीरः पार्षतं त्वरितोऽन्वगात् ।
आसीदाप्लवतो वेगस्तस्य राजन्महात्मनः ॥ ४६ ॥
गरुडस्येव पततो जिघृक्षोः पन्नगोत्तमम् ।
एतस्मिन्नेव काले तु माधवोऽर्जुनमब्रवीत् ॥ ४७ ॥
पश्य पार्थ यथा द्रौणिः पार्षतस्य वधं प्रति ।
यत्नं करोति विपुलं हन्याच्चैनं न संशयः ॥ ४८ ॥
तं मोचय महाबाहो पार्षतं शत्रुकर्शन ।
द्रौणेरास्यमनुप्राप्तं मृत्योरास्यगतं यथा ॥ ४९ ॥
एवमुक्त्वा महाराज वासुदेवः प्रतापवान् ।
प्रैषयत्तुरगांस्तत्र यत्र द्रौणिर्व्यवस्थितः ॥ ५० ॥
ते हयाश्चन्द्रसङ्काशाः केशवेन प्रचोदिताः ।

---

अश्वत्थामाने उसे भी अपने तेज बाणोंसे काट दिया। महापराक्रमी महाशस्त्रधारी शीघ्र बाण चलानेवाले अश्वत्थामाका रथसे न उतरते ही यह पराक्रम देख वीर आश्चर्य करने लगे (३८-४३)

उस समय रथ और धनुष रहित धृष्टद्युम्नके शरीरमें अनेक घाव लगे थे, तो भी अश्वत्थामा अपने अनेक तेज बाणोंसे उनको मार न सके॥ तब महात्मा अश्वत्थामाने धनुषको फेंक दिया और रथसे कूदकर धृष्टद्युम्नकी ओर इस प्रकार दौडे जैसे गरुड सांपपर॥ (४३-४७)

उसी समय श्रीकृष्णने अर्जुनसे कहा, हे अर्जुन! धृष्टद्युम्नके मारनेको अश्वत्थामा कैसे यत्न कर रहे हैं! ये अवश्य इन्हें मार डालेंगे। हे महाबाहो! शत्रुनाशन अर्जुन! अब तुम मृत्युरूपी अश्वत्थामाके मुखमें पडे धृष्टद्युम्नकी रक्षा करो। ऐसा कहकर कृष्णने घोडोंको अश्वत्थामाकी ओर हांका॥ (४७-५०)

वे चन्द्रमाके समान घोडे कृष्णके हांकनेसे आकाशको उडते हुए पक्षियोंके

युधामन्योर्ध्वजं सूतं छत्रं चापातयत्क्षितौ।
ततोऽपायाद्रथेनैव युधामन्युर्महारथः ॥ ५६ ॥
उत्तमौजाश्च हार्दिक्यं भीमं भीमपराक्रमम्।
छादयामास सहसा मेघो वृष्ट्येव पर्वतम् ॥ ५७ ॥
तद्युद्धमासीत्सुमहद्घोररूपं परन्तप।
यादृशं न मया युद्धं दृष्टपूर्वं विशाम्पते ॥ ५८ ॥
कृतवर्मा ततो राजन्नुत्तमौजसमाहवे।
हृदि विव्याध सहसा रथोपस्थ उपाविशत ॥ ५९ ॥
सारथिस्तमपोवाह रथेन रथिनां वरम्।
कुरुसैन्यं ततः सर्वं भीमसेनमुपाद्रवत ॥ ६० ॥
दुःशासनः सौवलश्च गजानीकेन पाण्डवम्।
महता परिवार्यैव क्षुद्रकैरभ्यताडयत् ॥ ६१ ॥
ततो भीमः शरशतैर्दुर्योधनममर्षणम्।
विमुखीकृत्य तरसा गजानीकमुपाद्रवत ॥ ६२ ॥
तमापतन्तं सहसा गजानीकं वृकोदरः।
दृष्ट्वैव सुभृशं क्रुद्धो दिव्यमस्त्रमुदैरयत् ॥ ६३ ॥
गजैर्गजानभ्यहनद्वज्रेणेन्द्र इवासुरान्।

काट दिया। तब महारथ युधामन्यु अपने हाथसे रथ हांकते हुए भागे॥ (५५-५६)

जैसे मेघ पर्वतके ऊपर जल वर्षाता है, ऐसेही उत्तमौजा महा पराक्रमी कृतवर्माके ऊपर बाण वर्षाने लगे ॥ हे पृथ्वीनाथ! इन दोनों वीरोंका ऐसा घोर युद्ध हुआ जैसा मैंने पहले कभी नहीं देखा था॥ तब कृतवर्माने उत्तमौजाके हृदयमें एक बाण मारा तब उत्तमौजा मूर्च्छा खाकर रथमें गिर पडे तब उनके सारथीने उन्हें युद्धसे हटा दिया। (५७—६०)

भीमसेन समस्त कुरुसेना के सङ्ग युद्ध करने लगे। शकुनि और दुःशासन अपने सङ्ग बहुत गजसेना लेकर भीमसेनसे युद्ध करनेको आये और अनेक क्षुद्रक बाण वर्षाये, तब भीमसेनने अपने तेज बाणोंसे व्याकुल करके दुर्योधनको भगा दिया और फिर सेनाकी ओर लौटे। भीमसेनने क्रोध करके उस गज सेनाकी ओर दिव्य अस्त्र चलाये। जैसे इन्द्र अपने वज्रसे असुरोंको मारता है, ऐसे ही भीमसेन हाथियोंसे हाथियोंको मारने लगे। (६०—६४)

ब्राह्मणस्यांसदेशे स निपपात महाद्युतिः ।
स विह्वलो महाराज शरवेगेन संयुगे॥ ॥ ६० ॥
निषसाद रथोपस्थे वैक्लव्यं च परं ययौ ।
ततः कर्णो महाराज व्याक्षिपद्विजयं धनुः ॥ ६१ ॥
अर्जुनं समरे क्रुद्धः प्रेक्षमाणो मुहुर्मुहुः ।
द्वैरथं चापि पार्थेन कामयानो महारणे ॥ ६२ ॥
विह्वलं तं तु वीक्ष्याथ द्रोणपुत्रं च सारथिः ।
अपोवाह रथेनाजौ त्वरमाणो रणाजिरात ॥ ६३ ॥
अथोत्कुष्टं महाराज पञ्चालैर्जितकाशिभिः ।
मोक्षितं पार्षतं दृष्ट्वा द्रोणपुत्रं च पीडितम् ॥ ६४ ॥
वादित्राणि च दिव्यानि प्रावाद्यन्त सहस्रशः ।
सिंहनादांश्च चक्रुस्ते दृष्ट्वा सङ्ख्ये तदद्भुतम् ॥ ६५ ॥
एवं कृत्वाब्रवीत्पार्थो वासुदेवं धनञ्जयः ।
याहि संशप्तकान्कृष्ण कार्यमेतत्परं मम ॥ ६६ ॥
ततः प्रयातो दाशार्हः श्रुत्वा पाण्डवभाषितम् ।
रथेनातिपताकेन मनोमारुतरंहसा ॥ ६७ ॥ [२९३९]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां कर्णपर्वणि द्रौण्यपयाने ऊनषष्टितमोऽध्यायः ॥ ५९ ॥

ओर चलाया ॥ (५८—५९)

हे महाराज ! वह तेज बाण अश्वत्थामाके कन्धेमें लगा । उस बाणके लगते ही वे व्याकुल होगये और मूर्च्छा खाकर रथमें गिर गये । उसी समय कर्ण अपने विजय धनुषको घुमाते हुए अर्जुनके सङ्ग युद्ध करनेके लिये क्रोधमें भरकर युद्धमें आये ॥ (६०-६२)

इधर अश्वत्थामाको व्याकुल देख सारथीने उन्हें युद्धसे हटा दिया। अश्वत्थामाको भगे और धृष्टद्युम्नको छूटा देख वे सब पाण्डवोंकी ओरके वीर गर्जने लगे । इस अद्भुत कर्मको देखकर पाण्डवोंकी सेनामें अनेक प्रकारके बाजे बजने लगे और अनेक वीर सिंहके समान गर्जने लगे ॥ (६३—६५)

इस युद्धके पश्चात् अर्जुनने श्रीकृष्णसे कहा, हे कृष्ण ! तुम हमारे रथको संशप्तकोंकी ओर ले चलो, उनका मारना ही हमारा धर्म है ॥ अनन्तर अर्जुनके वचन सुन श्रीकृष्णने पताका युक्त मन और वायुके समान शीघ्रवेगी रथको संशप्तकोंकी सेनाकी ओर हांका ॥(६६-६७)[२९३९]

कर्णपर्वमें उनसठ अध्याय समाप्त ।

युधामन्योर्ध्वजं सूतं छत्रं चापातयत्क्षितौ ।
ततोऽपायाद्रथेनैव युधामन्युर्महारथः ॥ ५६ ॥
उत्तमौजाश्च हार्दिक्यं भीमं भीमपराक्रमम् ।
छादयामास सहसा मेघो वृष्ट्येव पर्वतम् ॥ ५७ ॥
तद्युद्धमासीत्सुमहद्घोररूपं परन्तप ।
यादृशं न मया युद्धं दृष्टपूर्वं विशाम्पते ॥ ५८ ॥
कृतवर्मा ततो राजन्नुत्तमौजसमाहवे ।
हृदि विव्याध सहसा रथोपस्थ उपाविशत् ॥ ५९ ॥
सारथिस्तमपोवाह रथेन रथिनां वरम् ।
कुरुसैन्यं ततः सर्वं भीमसेनमुपाद्रवत् ॥ ६० ॥
दुःशासनः सौबलश्च गजानीकेन पाण्डवम् ।
महता परिवार्यैव क्षुद्रकैरभ्यताडयत् ॥ ६१ ॥
ततो भीमः शरशतैर्दुर्योधनममर्षणम् ।
विमुखीकृत्य तरसा गजानीकमुपाद्रवत् ॥ ६२ ॥
तमापतन्तं सहसा गजानीकं वृकोदरः ।
दृष्ट्वैव सुभृशं क्रुद्धो दिव्यमस्त्रमुदैरयत् ॥ ६३ ॥
गजैर्गजानभ्यहनद्वज्रेणेन्द्र इवासुरान् ।

काट दिया। तब महारथ युधामन्यु अपने हाथसे रथ हांकते हुए भागे॥ (५५–५६)

जैसे मेघ पर्वतके ऊपर जल वर्षाता है, ऐसेही उत्तमौजा महा पराक्रमी कृतवर्माके ऊपर बाण वर्षाने लगे ॥ हे पृथ्वीनाथ! इन दोनों वीरोंका ऐसा घोर युद्ध हुआ जैसा मैंने पहले कभी नहीं देखा था॥ तब कृतवर्माने उत्तमौजाके हृदयमें एक बाण मारा तब उत्तमौजा मूर्च्छा खाकर रथमें गिर पडे तब उनके सारथीने उन्हें युद्धमें हटा दिया। (५७—६०)

भीमसेन समस्त कुरुसेना के सङ्ग युद्ध करने लगे। शकुनि और दुःशासन अपने सङ्ग बहुत गजसेना लेकर भीमसेनसे युद्ध करनेको आये और अनेक क्षुद्रक बाण वर्षाये, तब भीमसेनने अपने तेज बाणोंसे व्याकुल करके दुर्योधनको भगा दिया और फिर सेनाकी ओर लौटे। भीमसेनने क्रोध करके उस गज सेनाकी ओर दिव्य अस्त्र चलाये। जैसे इन्द्र अपने वज्रसे असुरोंको मारता है, ऐसे ही भीमसेन हाथीयोंसे हाथीयोंको मारने लगे। (६०—६४)

नदन्तः सिंहनादांश्च धमन्तश्चापि वारिजान् ।
बलवन्तो महेष्वासा विधुन्वन्तो धनूंषि च ॥ ९ ॥
मृत्योर्मुखगतं मन्ये कुन्तीपुत्रं युधिष्ठिरम् ।
हुतमग्नौ च कौन्तेयं दुर्योधनवशं गतम् ॥ १० ॥
यथाविधमनीकं तु धार्तराष्ट्रस्य पाण्डव ।
नास्य शक्रोऽपि मुच्येत सम्प्राप्तो बाणगोचरम् ॥ ११ ॥
दुर्योधनस्य वीरस्य शरौघाञ्शीघ्रमस्यतः ।
संक्रुद्धस्यान्तकस्येव को वेगं संसहेद्रणे ॥ १२ ॥
दुर्योधनस्य वीरस्य द्रौणेः शारद्वतस्य च ।
कर्णस्य चेषुवेगो वै पर्वतानपि शातयेत् ॥ १३ ॥
कर्णेन च कृतो राजा विमुखः शत्रुतापनः ।
बलवाँल्लघुहस्तश्च कृती युद्धविशारदः ॥ १४ ॥
राधेयः पाण्डवश्रेष्ठं शक्तः पीडयितुं रणे ।
सहितो धृतराष्ट्रस्य पुत्रैः शूरैर्महाबलैः ॥ १५ ॥
तस्यैभिर्युध्यमानस्य संग्रामे संशितात्मनः ।
अन्यैरपि च पार्थस्य कृतं कर्म महारथैः ॥ १६ ॥

हैं, वैसे ही यह बडी सेना धर्मराजकी ओर जा रही है। ये अनेक वीर गर्जते, शङ्ख बजाते और धनुष टङ्कारते हुए युद्ध करनेको जाते है॥ (७-९)

आहह ! ये देखो महाराज दुर्योधनके वशमे होगये, जैसे अग्निमें पड कर आहुति भस्म होजाती हैं, वैसे ही महाराज दुर्योधनके हाथसे मरना चाहते है ॥ आज दुर्योधनकी सेनाका जैसा व्यूह बना है, इसमें पडनेसे इन्द्रभी नहीं बच सक्ते । जैसे यमराजके बलको कोई नहीं सह सक्ता ऐसे ही बलवान् दुर्योधनके शीघ्र चलते हुए बाणोंको सहनेकी किसकी सामर्थ है ? (१०-१२)

वीर दुर्योधन, अश्वत्थामा, शरद्वतपुत्र कृपाचार्य और कर्णके बाण पर्वतोंको भी काट सक्ते हैं ॥ ये देखो सब शस्त्रोंके जाननेवाले, महापराक्रमी शीघ्र शस्त्र चलानेवाले, महाराजको कर्णने युद्धसे विमुख कर दिया ॥ महापराक्रमी शूरवीर धृतराष्ट्रपुत्रोंके सहित कर्ण महाराजको युद्धमें जीत सक्ते है ॥ (१३-१५)

ये देखो इन सबसे अथवा और वीरोंसे भी एकले महाराज युद्ध कर रहे हैं। इस समय युधिष्ठिरके कर्म अद्भुत दिखायी देते हैं। हमारे महाराज व्रत

अपश्यं भीमसेनस्य धनुर्विक्षिपतो भुजौ ।
तस्य ज्यातलनिर्घोषं श्रुत्वाशनिसमस्वनम् ॥ ७३ ॥
विमुञ्चन्तः शकृन्मूत्रं गजाः प्राद्रुद्रुवुर्भृशम् ।
भीमसेनस्य तत्कर्म राजन्नेकस्य धीमतः ।
निघ्नतः सर्वभूतानि रुद्रस्येव च निर्बभौ ॥ ७४ ॥ [३१०५]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां कर्णपर्वणि सकुलयुद्धे एकषष्टितमोऽध्यायः ॥६१॥

सञ्जय उवाच— ततः श्वेताश्वसंयुक्ते नारायणसमाहिते ।
तिष्ठन्रथवरे श्रीमानर्जुनः समपद्यत ॥ १ ॥
तद्बलं नृपतिश्रेष्ठ तावकं विजयो रणे ।
व्यक्षोभयदुदीर्णाश्वं महोदधिमिवानिलः ॥ २ ॥
दुर्योधनस्तव सुतः प्रमत्ते श्वेतवाहने ।
अभ्येत्य सहसा क्रुद्धः सैन्यार्धेनाभिसंवृतः ॥ ३ ॥
पर्यवारयदायान्तं युधिष्ठिरममर्षणम् ।
क्षुरप्राणां त्रिसप्तत्या ततोऽविध्यत पाण्डवम् ॥ ४ ॥
अक्रुध्यत भृशं तत्र कुन्तीपुत्रो युधिष्ठिरः ।
स भल्लांस्त्रिंशतस्तूर्णं तव पुत्रे न्यवेशयत ॥ ५ ॥
ततोऽधावन्त कौरव्या जिघृक्षन्तो युधिष्ठिरम् ।

भीमसेनके दोनों हाथ केवल धनुष खींचते ही बडे सर्पोंके समान दीखते थे, भीमसेनके वज्रके समान ताल शब्द को सुनकर हाथी पेशाब करते भागते थे, महापराक्रमी अकेले भीमसेनका यह कर्म उस समय प्रलय के समय सब भूतोंका नाश करनेवाले शिवके समान दीखता था ॥ (६१—७४) [३१०५]

कर्णपर्वमें इकसठ अध्याय समाप्त ।

कर्णपर्वमें बासठ अध्याय ।

सञ्जय बोले, हे राजन्! सफेद, घोडे और कृष्ण सारथीके सहित अर्जुन युद्ध-करनेके लिये आए तब जैसे वायुके लगनेसे समुद्रका पानी इधर उधरको फैलने लगता है, तैसे ही अर्जुनको देख तुम्हारी सेना इधर उधर भागने लगी, तब महाबलवान् दुर्योधन आधी सेनाके सङ्ग क्रोध करके युधिष्ठिरसे युद्ध करनेको दौडे। उन्होंने क्रोध करके युधिष्ठिरके शरीरमें तिहत्तर क्षुरप्र बाण मारे ॥ (१—४)

तब कुन्तीपुत्र युधिष्ठिरने क्रोध करके तुम्हारे पुत्रके अङ्गमें तीस भल्ल बाण मारे, तब युधिष्ठिरसे युद्ध करनेके लिये

पश्यतोर्यमयोः पार्थ सात्यकेश्च शिखण्डिनः ॥ २५ ॥
धृष्टद्युम्नस्य भीमस्य शतानीकस्य वा विभो ।
पञ्चालानां च सर्वेषां चेदीनां चैव भारत ॥ २६ ॥
एष कर्णो रणे पार्थ पाण्डवानामनीकिनीम् ।
शरैर्विध्वंसयति वै नलिनीमिव कुञ्जरः ॥ २७ ॥
एते द्रवन्ति रथिनस्त्वदीयाः पाण्डुनन्दन ।
पश्य पश्य यथा पार्थ गच्छन्त्येते महारथाः ॥ २८ ॥
एते भारत मातङ्गाः कर्णेनाभिहताः शरैः ।
आर्तनादान्विकुर्वाणा विद्रवन्ति दिशो दश ॥ २९ ॥
रथानां द्रवते वृन्दमेतच्चैव समन्ततः ।
द्राव्यमाणं रणे पार्थ कर्णेनामित्रकर्षिणा ॥ ३० ॥
हस्तिकक्ष्यां रणे पश्य चरन्तीं तत्र तत्र ह ।
रथस्थं सूतपुत्रस्य केतुं केतुमतां वर ॥ ३१ ॥
असौ धावति राधेयो भीमसेनरथं प्रति ।
किरञ्शरशतान्येव विनिघ्नंस्तव वाहिनीम् ॥ ३२ ॥
एतान्पश्य च पञ्चालान्द्राव्यमाणान्महारथान् ।
शक्रेणेव यथा दैत्यान्हन्यमानान्महाहवे ॥ ३३ ॥
एष कर्णो रणे जित्वा पञ्चालान्पाण्डुसृञ्जयान् ।

देखो शिखण्डी, सात्यकि, नकुल, सहदेव, धृष्टद्युम्न, शतानीक, भीमसेन; सब पाञ्चाल और समस्त चेदिदेशी क्षत्रियोंके देखते देखते कर्णने महाराजकी ध्वजा काट दी ॥ जैसे तालावमें घुसकर हाथी कमलोंका नाश करता है, वैसे ही कर्ण अपने बाणोंसे तुम्हारी सेनाको मार रहे हैं ॥ (२५-२७)

हे पार्थ ! देखो तुम्हारी सेनाके महारथ वीर भागे जाते हैं । हे अर्जुन ! ये देखो ये हाथी कर्णके बाणोंसे पीडित होकर चारों ओरको भागे जाते हैं॥ हे शत्रुनाशन ! ये रथोंके झुण्ड कर्णसे डर कर भागे जाते हैं ॥ हे उत्तम ध्वजावाले ! ये देखो हाथि कक्ष्यावाली कर्णकी ध्वजा फहरा रही है ॥ (२८—३१)

ये देखो तुम्हारी सेनाको अनेक बाण मारते हुए राधापुत्र कर्ण भीमसेनकी ओर जारहे हैं ॥ जैसे इन्द्रको देख कर युद्ध छोड कर दैत्य भागते है, ऐसे ही महारथ पाञ्चाल भागे जाते हैं ॥ ये देखो कर्ण पाञ्चाल पाण्डव और सृंजयोंको जीतकर

अपश्यं भीमसेनस्य धनुर्विक्षिपतो भुजौ ।
तस्य ज्यातलनिर्घोषं श्रुत्वाशनिसमस्वनम् ॥ ७३ ॥
विमुञ्चन्तः शकृन्मूत्रं गजाः प्राद्रुद्रुवुर्भृशम् ।
भीमसेनस्य तत्कर्म राजन्नेकस्य धीमतः ।
निघ्नतः सर्वभूतानि रुद्रस्येव च निर्बभौ ॥ ७४ ॥ [३१०५]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां कर्णपर्वणि सकुलयुद्धे एकषष्टितमोऽध्यायः ॥६१॥

सञ्जय उवाच— ततः श्वेताश्वसंयुक्ते नारायणसमाहिते ।
तिष्ठन्रथवरे श्रीमानर्जुनः समपद्यत ॥ १ ॥
तद्बलं नृपतिश्रेष्ठ तावकं विजयो रणे ।
व्यक्षोभयदुदीर्णाश्वं महोदधिमिवानिलः ॥ २ ॥
दुर्योधनस्तव सुतः प्रमत्ते श्वेतवाहने ।
अभ्येत्य सहसा क्रुद्धः सैन्यार्धेनाभिसंवृतः ॥ ३ ॥
पर्यवारयदायान्तं युधिष्ठिरममर्षणम् ।
क्षुरप्राणां त्रिसप्तत्या ततोऽविध्यत पाण्डवम् ॥ ४ ॥
अक्रुध्यत भृशं तत्र कुन्तीपुत्रो युधिष्ठिरः ।
स भल्लांस्त्रिंशतस्तूर्णं तव पुत्रे न्यवेशयत ॥ ५ ॥
ततोऽधावन्त कौरव्या जिघृक्षन्तो युधिष्ठिरम् ।

भीमसेनके दोनों हाथ केवल धनुष खींचते ही बडे सर्पोंके समान दीखते थे, भीमसेनके वज्रके समान ताल शब्द को सुनकर हाथी पेशाब करते भागते थे, महापराक्रमी अकेले भीमसेनका यह कर्म उस समय प्रलय के समय सब भूतोंका नाश करनेवाले शिवके समान दीखता था ॥ (७१—७४) [३१०५]

कर्णपर्वमें इकसठ अध्याय समाप्त ।

कर्णपर्वमें बासठ अध्याय ।

सञ्जय बोले, हे राजन्! सफेद, घोडे और कृष्ण सारथीके सहित अर्जुन युद्ध करनेके लिये आए तब जैसे वायुके लगनेसे समुद्रका पानी इधर उधरको फैलने लगता है, तैसे ही अर्जुनको देख तुम्हारी सेना इधर उधर भागने लगी, तब महाबलवान् दुर्योधन आधी सेनाके सङ्ग क्रोध करके युधिष्ठिरसे युद्ध करनेको दौडे। उन्होंने क्रोध करके युधिष्ठिरके शरीरमें तिहत्तर क्षुरप्र बाण मारे ॥ (१—४)

तब कुन्तीपुत्र युधिष्ठिरने क्रोध करके तुम्हारे पुत्रके अङ्गमें तीस भल्ल बाण मारे, तब युधिष्ठिरसे युद्ध करनेके लिये

शरांश्चाशीविषाकारान्विसृजन्तं महारणे ॥ ४३ ॥
असौ निवृत्तो राधेयो दृष्ट्वा ते वानरध्वजम् ।
प्रार्थयन्समरे पार्थ त्वया सह परन्तप ॥ ४४ ॥
वधाय चात्मनोऽभ्येति दीप्तास्यं शलभो यथा ।
कर्णमेकाकिनं दृष्ट्वा रथानीकेन भारत ॥ ४५ ॥
रिरक्षिषुः सुसंवृत्तो धार्तराष्ट्रो निवर्तते ।
सर्वैः सहैभिर्दुष्टात्मा वध्यतां च प्रयत्नतः ॥ ४६ ॥
त्वया यशश्च राज्यं च सुखं चोत्तममिच्छता ।
अदीनयोर्विश्रुतयोर्युवयोर्योत्स्यमानयोः ॥ ४७ ॥
देवासुरे पार्थ मृधे देवदानवयोरिव ।
पश्यन्तु कौरवाः सर्वे तव पार्थ पराक्रमम् ॥ ४८ ॥
त्वां च दृष्ट्वातिसंरब्धं कर्णं च भरतर्षभ ।
असौ दुर्योधनः क्रुद्धो नोत्तरं प्रतिपद्यते ॥ ४९ ॥
आत्मानं च कृतात्मानं समीक्ष्य भरतर्षभ ।
कृतागसं च राधेयं धर्मात्मनि युधिष्ठिरे ।
प्रतिपद्यस्व कौन्तेय प्राप्तकालमनन्तरम् ॥ ५० ॥

धनुष पर चढा कर सर्पके समान बाण चला रहे हैं ॥ (३९—४३)

हे शत्रुनाशन ! निश्चयसे ये कर्ण तुम्हारे ध्वजाके वानरको देखकर शीघ्रतासे तुमसे युद्ध करनेको लौटेगा ॥ हे भारत ! जैसे प्रदीप्त अग्निकी ओर नाशके लिये पतङ्ग दौडते हैं, वैसे ही कर्ण तुमसे युद्ध करनेको चले आते है। अकेले कर्णको शीघ्र आते देख यह धृतराष्ट्रका दुष्ट पुत्र सब सेनाके सहित उनकी रक्षाके हेतु चला आता है। आज यत्न करके इन सबके सहित दुष्टात्माको मारना चाहिये। यदि तुम राज्य सुख और यशकी इच्छा करते हो तो इसे मारो। ४४-४७

तुम दोनों जगत् प्रसिद्ध बलवान् और शूर वीर हो जैसे देवासुर संग्राममें देवता और दानव लडे थे, वैसे ही तुम और कर्ण युद्ध करो, आज तुम्हारे पराक्रमको सब कौरव देखेंगे ॥ हे भारतकुलसिंह ! तुम्हे और कर्णको घोर युद्ध करते देख दुर्योधन क्रोध करेगा परन्तु कुछ कर नहीं सकेगा ॥ हे अर्जुन ! अब तुम अपनेको शस्त्रास्त्र विद्यामें प्रवीण और कर्णको राजा धर्मका अपराधी जानकर समयके अनुसार जो करना योग्य हो वही करो और आर्य बुद्धि

अभ्यधावद् दृढं क्रुद्धो राधेयो रथिनां वरः ।
दुर्योधनं तथा दृष्ट्वा शीघ्रमस्त्रमुदैरयत् ॥ १५ ॥
तेन यौधिष्ठिरं सैन्यमवधीत्पार्षतं तथा ।
ततो यौधिष्ठिरं सैन्यं वध्यमानं महात्मना ॥ १६ ॥
सहसा प्राद्रवद्राजन्सूतपुत्रशरार्दितम् ।
विविधा विशिखास्तत्र सम्पतन्तः परस्परम् ॥ १७ ॥
फलैः पुङ्खान्समाजघ्नुः सूतपुत्रधनुश्च्युताः ।
अन्तरिक्षे शरौघाणां पततां च परस्परम् ॥ १८ ॥
सङ्घर्षेण महाराज पावकः समजायत ।
ततो दश दिशः कर्णः शलभैरिव यायिभिः ॥ १९ ॥
अभ्यघ्नंस्तरसा राजञ्शरैः परशरीरगैः ।
रक्तचन्दनसन्दिग्धौ मणिहेमविभूषितौ ॥ २० ॥
बाहू व्यत्याक्षिपत्कर्णः परमास्त्रं विदर्शयन् ।
ततः सर्वा दिशो राजन्सायकैर्विप्रमोहयन् ॥ २१ ॥
अपीडयद् भृशं कर्णो धर्मराजं युधिष्ठिरम् ।
ततः क्रुद्धो महाराज धर्मपुत्रो युधिष्ठिरः ॥ २२ ॥
निशितैरिषुभिः कर्णं पञ्चाशद्भिः समार्पयत ।

सहदेवके बाणोंसे व्याकुल देख महारथ कर्ण बाण बर्षाते हुए दौडे, उन्होंने अपने बाणोंसे युधिष्ठिरकी सेना सहित धृष्टद्युम्नको व्याकुल कर दिया ॥११-१६

हे महाराज ! कर्णके बाणोंसे व्याकुल होकर इधर उधरको सब सेना भागने लगी। उस समय सूतपुत्र कर्णके बाण सब आकाशमें छा गये और सेनामें घूमघूमकर वीरोंका नाश करने लगे। जैसे टीडीदल आकाश और वृक्षोंमें छा जाता है, ऐसे ही कर्णके बाण सब ओर छा गये, युद्धमें बाण घिसनेसे अग्नि निकलने लगी। (१६–२०)

चन्दन और अगर लगे कर्णके दोनों हाथ केवल धनुष खींचते और शत्रुनाशक बाण छोडते दीखते थे। हे राजन्! कर्ण मणि और सुवर्णभूषित हाथोंसे सब दिशाओंमें बाण बर्षाने और शत्रुओंको मारने लगे। अनन्तर कर्णने धर्मराज युधिष्ठिरको अपने बाणोंसे पीडित किया। तब धर्मराज युधिष्ठिर भी क्रोधसे भर गये और कर्णके शरीरमें पचास तेज बाण मारकर युद्धमें बाणोंसे अन्धकार कर दिया, और सेनाके अनेक

धृतः सञ्जय सैन्येन शैनेयेन च भारत ।
वध्यन्त एते समरे कौरवा निशितैः शरैः ॥ ५९ ॥
भीमसेनेन कौन्तेय पञ्चालैश्च महात्मभिः ।
सेना हि धार्तराष्ट्रस्य विमुखा विक्षरद्व्रणा ॥ ६० ॥
विप्रधावति वेगेन भीमस्याभिहता शरैः ।
विपन्नसस्येव मही रुधिरेण समुक्षिता ॥ ६१ ॥
भारती भरतश्रेष्ठ सेना कृपणदर्शना ।
निवृत्तं पश्य कौन्तेय भीमसेनं युधां पतिम् ॥ ६२ ॥
आशीविषमिव क्रुद्धं द्रावयन्तं वरूथिनीम् ।
पीतरक्तासितसितास्ताराचन्द्रार्कमण्डिताः ॥ ६३ ॥
पताका विप्रकीर्यन्ते छत्राण्येतानि चार्जुन ।
सौवर्णा राजताश्चैव तैजसाश्च पृथग्विधाः ॥ ६४ ॥
केतवोऽभिनिपात्यन्ते हस्त्यश्वं च प्रकीर्यते ।
रथेभ्यः प्रपतन्त्येते रथिनो विगतासवः ॥ ६५ ॥
नानावर्णैर्हता बाणैः पञ्चालैरपलायिभिः ।
निर्मनुष्यान्गजानश्वान्रथांश्चैव धनञ्जय ॥ ६६ ॥

---

हैं। ये महाबाहु भीमसेन लौट के सेनाके मुखमें खडे हैं; ये देखो इनके पास सृञ्जयवंशी क्षत्रियोंके सहित सात्यकि खडे हैं। ये देखो, भीमसेन और महात्मा पाञ्चाल वीर अपने तीक्ष्ण बाणोंसे कौ-रववीरोंको मार रहे हैं, यह देखो धृत-राष्ट्रपुत्रकी सेना भीमसेनके बाणोंसे पीडित होके रणभूमिसे विमुख होकर वेगसे भाग रही है और उनके शरीरसे रुधिर स्रवता है। यह देखो भारती सेना विनष्ट धान्य वाली भूमिके समान कृपण रूप दीखती है। हे वीर! रुधिरमें भीगे जाते हैं। ( ५७–६२ )

हे कुन्तीपुत्र! पराक्रमी भीमसेनको लौटते देख यह दुर्योधनकी सेना भागी जाती है, ये विषीले सांपके समान क्रोधी भीमसेन कौरवोंकी सेनाको भगा रहे हैं। ये सफेद, लाल, काली, पीली, चन्द्रमा, तारे और सूर्यके चिन्होंसे युक्त ध्वजा कटी पडी हैं। ये अनेक छत्र पृथ्वीमें पडे हैं। ये देखो अनेक सोने चांदी और लोहेके दण्डवाली पताका पृथ्वीमें पडी हैं; ये अनेक हाथी, घोडे, मरकर पृथ्वीमें गिरते हैं। ये देखो अनेक वीर मरकर रथोंसे गिर रहे हैं॥(६२–६५)

हे धनञ्जय! ये देखो युद्धको न

गृह्णीध्वमिति राजानमभ्यधावन्त सर्वशः ।
ततः शताः सप्तदश केकयानां प्रहारिणाम् ॥ ३२ ॥
पञ्चालैः सहिता राजन्धार्तराष्ट्रान्न्यवारयन् ।
तस्मिन्सुतुमुले युद्धे वर्तमाने जनक्षये ॥ ३३ ॥
दुर्योधनश्च भीमश्च समेयातां महाबलौ ॥ ३४ ॥ [ ३१३९ ]

इति श्रीमहाभारते शतसाहस्त्र्या संहितायां वैयासिक्यां कर्णपर्वणि सकुलयुद्धे द्विपष्टितमोऽध्यायः ॥६२॥

सञ्जय उवाच— कर्णोऽपि शरजालेन केकयानां महारथान् ।
व्यधमत्परमेष्वासानग्रतः पर्यवस्थितान् ॥ १ ॥
तेषां प्रयतमानानां राधेयस्य निवारणे ।
रथान्पञ्चशतान्कर्णः प्राहिणोद्यमसादनम् ॥ २ ॥
अविषह्यं ततो दृष्ट्वा राधेयं युधि योधिनः ।
भीमसेनमुपागच्छन्कर्णबाणप्रपीडिताः ॥ ३ ॥
रथानीकं विदार्यैव शरजालैरनेकधा ।
कर्ण एकरथेनैव युधिष्ठिरमुपाद्रवत् ॥ ४ ॥
सेनानिवेशमार्छन्तं मार्गणैः क्षतविक्षतम् ।

गर्जने लगी और तुम्हारी सेनाके प्रधान वीर युधिष्ठिरको पकडनेको दौडे । अनन्तर महापराक्रमी कैकय और पाञ्चालोंने उन्हें रोक लिया, तब दोनों ओरसे वीरोका नाश होने लगा, उसी समय महापराक्रमी भीमसेन और दुर्योधन युद्ध करनेको सम्मुख हुए ॥ ( ३१–३४ ) ३१३९

कर्णपर्वमें बासठ अध्याय समाप्त ।

कर्णपर्वमें तिरसठ अध्याय ।

सञ्जय बोले, हे राजन् ! कर्ण भी महाधनुषधारी कैकयदेशी महारथोंको बाणोंसे मारने लगे । उन्होंने कर्णके निवारण करनेका बहुत यत्न किया, परन्तु रोक न सके, तब कर्णने उनके पांच सौ वीरोंको मार डाला ॥ (१–२)

कर्णके बाणोंसे पीडित वीरोंने कर्णको महायोद्धा जानकर जहां भीमसेन थे वहां पर चले गये । कर्ण भी उस सेनाको छोडकर केवल एक रथसे अनेक बाण चलाते हुए और कौरवोंकी सेनाका नाश करते हुए युधिष्ठिरकी ओर दौडे ॥(३–४)

उस समय महाराज युधिष्ठिर घावोंसे अत्यन्त पीडित और चेत रहित के समान होगये थे । तथा नकुल सहदेवके सहित अपनी सेना निवेशकी ओर जा रहे थे, उसी समय दुर्योधनको प्रसन्न करनेके लिये राधापुत्रने उनके शरीरमें तीन तेज बाण मारे, तब महाराजने क्रोध

धृष्टद्युम्नमुखा वीरा घ्नन्ति शत्रून्सहस्रशः ।
पञ्चालेष्वभिभूतेषु द्विषद्भिरपभीर्नदन् ॥ ७५ ॥
शत्रुपक्षमवस्कन्द्य शरानस्यति मारुतिः ।
विपण्णभूयिष्ठतरा धार्तराष्ट्री महाचमूः ॥ ७६ ॥
रथाश्चैते सुवित्रस्ता भीमसेनभयार्दिताः ।
पश्य भीमेन नाराचैर्भिन्ना नागाः पतन्त्यमी ॥ ७७ ॥
वज्रिवज्रहतानीव शिखराणि धराभृताम् ।
भीमसेनस्य निर्विद्धा बाणैः सन्नतपर्वभिः ॥ ७८ ॥
स्वान्यनीकानि मृद्नन्तो द्रवन्त्येते महागजाः ।
अभिजानीहि भीमस्य सिंहनादं सुदुःसहम् ॥ ७९ ॥
नदतोऽर्जुन संग्रामे वीरस्य जितकाशिनः ।
एष नैषादिरभ्येति द्विपमुख्येन पाण्डवम् ॥ ८० ॥
जिघांसुस्तोमरैः क्रुद्धो दण्डपाणिरिवान्तकः ।
सतोमरावस्य भुजौ छिन्नौ भीमेन गर्जतः ॥ ८१ ॥

सामर्थ नहीं है। कृपाचार्य और कर्ण आदि वीर भीमसेनके वाणोंसे इस प्रकार व्याकुल होगये हैं जैसे साधारण बैल सांडके सींगोंसे। ये पांचाल सेनाके सहित महापराक्रमी धृष्टद्युम्न आदि वीर भीमसेनके अस्त्रसे भग्न हुए धृतराष्ट्र पुत्रकी सेनाके वीरोंको मार रहे हैं। जब शत्रु लोग पांचालोंका पराभव करने में प्रवृत्त हुए तब ये महापराक्रमी भीमसेन बेडर होकर धृतराष्ट्रकी सेनाकी ओर अनेक वाण छोडने लगे। (७३-७६)

इस समय भीमसेनके वाणोंसे दुर्योधनकी सेनामें बहुतसे सैनिक खिन्न हो गये हैं। ये भीमसेनके भयसे अनेक रथ पीडित हुए है। ये भीमसेनके नाराच वाणोंसे हाथी मर कर गिर रहे हैं, इन मरे हुए हाथियोंकी ऐसी शोभा बढ रही है, जैसे इन्द्रके वज्रसे कटते हुए पर्वतके शिखरोंकी। ये भीमसेनके नतपर्व वाणोंसे व्याकुल होकर अपनी सेनाके वीरोंको मारते हुए हाथी भाग रहे है। (७६-७९)

कोई योद्धा इस समय भीमसेनके शब्दको नहीं सह सक्ता। ये महापराक्रमी विजयी भीमसेन गर्ज रहे हैं। ये निषादपुत्र मतवाले हाथीपर चढकर भीमसेनसे युद्ध करनेको चले आते है। ये तोमर लिये दण्डधारी यमराजके समान क्रोधमें भरे भीमसेनकी ओर चले आते हैं। देखो भीमसेनने गर्जना करने

तौ दृष्ट्वा मातुलस्तत्र विरथौ परवीरहा ।
अभ्यभाषत राधेयं मद्रराजोऽनुकम्पया ॥ १५ ॥
योद्धव्यमद्य पार्थेन फाल्गुनेन त्वया सह ।
किमर्थं धर्मराजेन युध्यसे भृशरोषितः ॥ १६ ॥
क्षीणशस्त्रास्त्रकवचः क्षीणबाणो विबाणधिः ।
श्रान्तसारथिवाहश्च च्छन्नोऽस्त्रैरभितस्तथा ॥ १७ ॥
पार्थमासाद्य राधेय उपहास्यो भविष्यसि ।
एवमुक्तोऽपि कर्णस्तु मद्रराजेन संयुगे ॥ १८ ॥
तथैव कर्णः संरब्धो युधिष्ठिरमताडयत् ।
शरैस्तीक्ष्णैः पराविध्य माद्रीपुत्रौ च पाण्डवौ ॥ १९ ॥
प्रहस्य समरे कर्णश्चकार विमुखं शरैः ।
ततः शल्यः प्रहस्येदं कर्णं पुनरुवाच ह ॥ २० ॥
रथस्थमतिसंरब्धं युधिष्ठिरवधे धृतम् ।
यदर्थं धार्तराष्ट्रेण सततं मानितो भवान् ॥ २१ ॥
तं पार्थं जहि राधेय किं ते हत्वा युधिष्ठिरम् ।
शङ्खयोर्ध्मायतोः शब्दः सुमहानेष कृष्णयोः ॥ २२ ॥

भाई व्याकुल होकर सहदेवके रथपर चढ गये। (१३-१४)

अपने भानजोंको रथ हीन और घावोंसे व्याकुल देखकर मद्रराज शल्य दयासे भरकर कर्णसे बोले ॥ तुमने कहा था कि, हम आज अर्जुनसे युद्ध करनेको जाते है, तब धर्मराज युधिष्ठिरसे क्रोध करके क्यों लडते हो ॥ जब तुम्हारे शस्त्रास्त्र क्षीण हो जायंगे, कवच कट जायगा, भाते नष्ट हो जायंगे और तुम्हारे पास बाण नहीं रहेंगे, तथा हम और घोडे भी थक जायंगे,तब अर्जुनसे युद्ध करने में तुम्हारी हंसी होगी। (१५-१८)

बुद्धिमान मद्रराजके वचन सुन कर भी कर्णने युधिष्ठिर नकुल और सहदेवके शरीरमें अनेक बाण मारे। महाराज युधिष्ठिरको अपने बाणोंसे बहुत व्याकुल करके युद्धसे विमुख किया उस समय शल्य हंसकर अपने रथमें स्थित क्रोधसे अत्यन्त उग्र बने हुए और केवल राजा युधिष्ठिरके वध के लिये ही प्रयत्न करने वाले कर्णसे बोले, कि धृतराष्ट्रपुत्र राजा दुर्योधनने केवल अर्जुनके मारनेके लिये तुम्हारा इतना सत्कार किया था। इसलिये तुम उन्हीं अर्जुनको जीतो, युधिष्ठिरको मारनेसे क्या लाभ होगा? (१८-२२)

सञ्जय उवाच— एतच्छ्रुत्वा महाबाहुर्वासुदेवाद्धनञ्जयः ।
भीमसेनेन तत्कर्म कृतं दृष्ट्वा सुदुष्करम् ॥ ८९ ॥
अर्जुनो व्यधमच्छिष्टानहितान्निशितैः शरैः ।
ते वध्यमानाः समरे संशप्तकगणाः प्रभो ॥ ९० ॥
प्रभग्नाः समरे भीता दिशो दश महाबलाः ।
शक्रस्यातिथितां गत्वा विशोका ह्यभवंस्तदा ॥ ९१ ॥
पार्थश्च पुरुषव्याघ्रः शरैः सन्नतपर्वभिः ।
जघान धार्तराष्ट्रस्य चतुर्विधबलां चमूम् ॥ ९२ ॥ [३०३१]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां कर्णपर्वणि
कृष्णार्जुनसंवादे षष्टितमोऽध्यायः ॥ ६० ॥

धृतराष्ट्र उवाच—निवृत्ते भीमसेने च पाण्डवे च युधिष्ठिरे ।
वध्यमाने बले चापि मामके पाण्डुसृञ्जयैः ॥ १ ॥
द्रवमाणे बलौघे च निरानन्दे मुहुर्मुहुः ।
किमकुर्वन्त कुरवस्तन्ममाचक्ष्व सञ्जय ॥ २ ॥
सञ्जय उवाच— दृष्ट्वा भीमं महाबाहुं सूतपुत्रः प्रतापवान् ।
क्रोधरक्तेक्षणो राजन्भीमसेनमुपाद्रवत् ॥ ३ ॥
तावकं तु बलं दृष्ट्वा भीमसेनात्पराङ्मुखम् ।
यत्नेन महता राजन्पर्यवस्थापयद्बली ॥ ४ ॥

सञ्जय बोले, श्रीकृष्णके वचन सुन और भीमसेनके इस महाघोर पराक्रमको देख अर्जुन अपने बाणोंसे बचे हुए संशप्तकोंको मारने लगे। अनेक संशप्तक मरकर स्वर्गका सुख भोगने चले गये और शेष डरकर इधर उधरको भागने लगे॥ अर्जुन भी अपने बाणोंसे तुम्हारी चारों प्रकारकी सेनाको मारने लगे॥ (८९-९२)

कर्णपर्वमें साठ अध्याय समाप्त। [३०३१]

कर्णपर्वमें इकसठ अध्याय।

धृतराष्ट्र बोले, हे सञ्जय! जिस समय महाबलवान् भीमसेन और महाराज युधिष्ठिर हमारी सेनाको मारनेको लौटे और पाण्डव तथा सृञ्जयोंके द्वारा मेरी सेना मरने लगी और आनंदरहित होकर बार बार भागने लगी तब कौरवोंने क्या किया, सो मुझे कहो॥ (१-२)

सञ्जय बोले, हे राजन्! महापराक्रमी भीमसेनका बल देखकर सूतपुत्र कर्ण लाल नेत्र करके उनकी ओर दौडे और महाबली कर्णने तुम्हारी सेनाको भागते देख उसको बडे यत्नसे स्थिर किया॥

अजातशत्रुमुत्सृज्य माद्रीपुत्रौ च पाण्डवौ ॥ ३० ॥
तव पुत्रं परित्रातुमभ्यधावत वीर्यवान् ।
मद्रराजप्रणुदितैरश्वैराकाशगैरिव ॥ ३१ ॥
गते कर्णे तु कौन्तेयः पाण्डुपुत्रो युधिष्ठिरः ।
अपायाज्जवनैरश्वैः सहदेवश्च मारिष ॥ ३२ ॥
ताभ्यां स सहितस्तूर्णं व्रीडन्निव नरेश्वरः ।
प्राप्य सेनानिवेशं च मार्गणैः क्षतविक्षतः ॥ ३३ ॥
अवतीर्णो रथात्तूर्णमाविशच्छयनं शुभम् ।
अपनीतशल्यः सुभृशं हृच्छल्याभिनिपीडितः ॥३४॥
सोऽब्रवीद् भ्रातरौ राजा माद्रीपुत्रौ महारथौ ।
अनीकं भीमसेनस्य पाण्डवावाशु गच्छताम् ॥ ३५ ॥
जीमूत इव नर्दंस्तु युध्यते स वृकोदरः ।
ततोऽन्यं रथमास्थाय नकुलो रथपुङ्गवः ॥ ३६ ॥
सहदेवश्च तेजस्वी भ्रातरौ शत्रुकर्षणौ ।
तुरगैरग्र्यरंहोभिर्यात्वा भीमस्य शुष्मिणौ ॥
अनीकैः सहितौ तत्र भ्रातरौ समवस्थितौ ॥ ३७ ॥ [३१७६]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां कर्णपर्वणि धर्मापयाने त्रिषष्टितमोऽध्यायः ॥६३॥

लिये दौडे, उस समय मद्रराज शल्यने घोडोंको बहुत तेज हांका, जान पडता था, कि रथ आकाशको उडा जाता है ॥ (२९-३१)

हे शत्रुनाशन ! कर्णके जानेके पश्चात् नकुल, सहदेव और युधिष्ठिर चले गए। नकुल और सहदेवके सहित राजा लज्जामें भरकर और घावोंमे व्याकुल होकर डेरोंको चले गये। वहां जाकर रथमे उतरे और शरीरोंमें लगे बाणोंको निकाल कर हृदयमें दुःखित होकर पलङ्ग पर लेट रहे और नकुल तथा सहदेवसे कहा, कि तुम दोनों जाकर भीमसेनकी रक्षा करो। क्यों कि, भीमसेन मेघके समान गर्जते हुए युद्ध कर रहे है। ३१-३६

महाराजकी आज्ञा पाते ही महारथ नकुल रथपर चढकर चले। इसी प्रकार शत्रुनाशन सहदेव भी वायुके समान शीघ्र चलनेवाले घोडोंके रथपर चढकर भीमसेनकी रक्षाके लिये चले गये। वहां जाकर उन्होंने अपनी सेनाका व्यूह बनाया और युद्ध करनेको खडे होगये ॥ ( ३६-३७ ) [ ३१७६ ]

कर्णपर्वमें तिरसठ अध्याय समाप्त।

अथान्यद्धनुरादाय पुत्रस्ते प्रहसन्निव।
धृष्टद्युम्नं शरव्रातैः समन्तात्पर्यवारयत् ॥ ३१ ॥
तव पुत्रस्य ते दृष्ट्वा विक्रमं सुमहात्मनः।
व्यस्मयन्त रणे योधा सिद्धाश्चाप्सरसां गणाः ॥ ३२ ॥
धृष्टद्युम्नं न पश्याम घटमानं महाबलम्।
दुःशासनेन संरुद्धं सिंहेनेव महागजम् ॥ ३३ ॥
ततः सरथनागाश्वाः पञ्चालाः पाण्डुपूर्वज।
सेनापतिं परीप्सन्तो रुरुधुस्तनयं तव ॥ ३४ ॥
ततः प्रववृते युद्धं तावकानां परैः सह।
घोरं प्राणभृतां काले भीमरूपं परन्तप ॥ ३५ ॥
नकुलं वृषसेनस्तु भित्त्वा पञ्चभिरायसैः।
पितुः समीपे तिष्ठन्वै त्रिभिरन्यैरविध्यत ॥ ३६ ॥
नकुलस्तु ततः शूरो वृषसेनं हसन्निव।
नाराचेन सुतीक्ष्णेन विव्याध हृदये भृशम् ॥ ३७ ॥
सोऽतिविद्धो बलवता शत्रुणा शत्रुकर्षण।
शत्रुं विव्याध विंशत्या स च तं पञ्चभिः शरैः ॥३८॥
ततः शरसहस्रेण तावुभौ पुरुषर्षभौ।

बाणोंसे तुम्हारे पुत्रका धनुष काट दिया, तब सब वीर उनकी प्रशंसा करने लगे, तब तुम्हारे पुत्रने हंसकर दूसरा धनुष लिया और सहस्रों बाणोंसे धृष्टद्युम्नको छा दिया ॥ महात्मा दुःशासनके इस पराक्रमको देख सब वीर अप्सरा और सिद्ध आश्चर्य करने लगे ॥ जैसे सिंह मतवाले हाथीको रोक लेता है, ऐसे ही दुःशासनने धृष्टद्युम्नको रोक दिया, हमने उस समय धृष्टद्युम्नको नहीं देखा ॥ (३०-३३)

हे महाराज! हाथी, रथ और घोडे के सहित अनेक महारथ पाञ्चाल सेनापति धृष्टद्युम्नकी रक्षा करनेको चले। हे शत्रुनाशन! पाण्डव और तुम्हारी सेनाका घोर युद्ध हुआ। वृषसेनने कर्णके पास खडे होकर नकुलके शरीरमें तीन बाण मारकर और भी तीन बाण मारे ॥ तब वीर नकुलने हंसकर एक तेज बाण वृषसेनके हृदयमें मारा, उस बाणसे व्याकुल होकर वृषसेनने नकुलके शरीरमें बीस बाण मारे, नकुलनेभी उन के शरीरमें पांच बाण मारे ॥ (३४-३८)

तब वे दोनों वीर एक दूसरे पर

चकार समरे भूमिं शोणितौघतरङ्गिणीम् ॥ ९ ॥
सर्वलोकवहां रौद्रां परलोकवहां नदीम् ।
स रथान्रथिनः सर्वान्पार्थचापच्युतैः शरैः ॥ १० ॥
द्रौणेरपहतान्सङ्ख्ये ददृशुः स च तांस्तथा ।
प्रावर्तयन्महाघोरां नदीं परवहां तदा ॥ ११ ॥
तयोस्तु व्याकुले युद्धे द्रौणेः पार्थस्य दारुणे ।
अमर्यादं योधयन्तः पर्यधावन्त पृष्ठतः ॥ १२ ॥
रथैर्हताश्वसूतैश्च हतारोहैश्च वाजिभिः ।
द्विरदैश्च हतारोहैर्महामात्रैर्हतद्विपैः ॥ १३ ॥
पार्थेन समरे राजन्कृतो घोरो जनक्षयः ।
निहता रथिनः पेतुः पार्थचापच्युतैः शरैः ॥ १४ ॥
हयाश्च पर्यधावन्त मुक्तयोक्त्रास्ततस्ततः ।
तद् दृष्ट्वा कर्म पार्थस्य द्रौणिराहवशोभिनः ॥ १५ ॥
अर्जुनं जयतां श्रेष्ठं त्वरितोऽभ्येत्य वीर्यवान् ।
विधुन्वानो महच्चापं कार्तस्वरविभूषितम् ॥ १६ ॥
अवाकिरत्ततो द्रौणिः समन्तान्निशितैः शरैः ।

अश्वत्थामाके चारों घोडोंको मारकर उनकी सेनाके अनेक वीरोंको मारडाला। अर्जुनने सब वीरोंको डरानेवाली परलोक गामिनी रुधिरकी नदी बहा दी। अर्जुनके बाणोंसे अश्वत्थामाकी ओरके अनेक रथ कट गये और उनमें बैठे वीर मर गये। (९-११)

जब अर्जुन और अश्वत्थामाका यह सबको व्याकुल करनेवाला घोर युद्ध हुआ तब अनेक योद्धा लोग निर्मर्याद युद्ध करते हुए इधर उधर दौडने लगे। अनेक रथोंके वीर, सारथी और घोडे मर गये। कहीं किसी वीरका घोडा मर गया। कहीं घोडेपर चढा वीर मर गया, कहीं हाथी कहीं महावत और कहीं हाथीके चढनेवाले वीर मर गये। हे राजन्! अर्जुनने युद्धमें मनुष्योंका घोर संहार किया। अर्जुनके धनुषसे छूटे हुए बाणोंसे अनेक रथोंमें बैठे हुए वीर मरकर भूमिमें गिर गये। अनेक घोडे लगाम कटनेसे इधर उधर भागने लगे। (११-१५)

अर्जुनके उस पराक्रमको देख कर अश्वत्थामाको महाक्रोध हुआ और सुवर्ण भूषित धनुषको घुमाते हुए अर्जुनकी ओर दौडे और अर्जुनके ऊपर तीक्ष्ण बाण चलाने लगे। क्रोध करके

अथास्य वाहांस्त्वरितः शरैर्निन्ये यमक्षयम् ।
ततोऽवप्लुत्य सहसा शकुनिर्भरतर्षभ ॥ ४८ ॥
आरुरोह रथं तूर्णमुलूकस्य महात्मनः ।
अपोवाहाथ शीघ्रं स शैनेयाद्युद्धशालिनः ॥ ४९ ॥
सात्यकिस्तु रणे राजंस्तावकानामनीकिनीम् ।
अभिदुद्राव वेगेन ततोऽनीकमभज्यत ॥ ५० ॥
शैनेयशरसंछन्नं तव सैन्यं विशाम्पते ।
भेजे दश दिशस्तूर्णं न्यपतच्च गतासुवत् ॥ ५१ ॥
भीमसेनं तव सुतो वारयामास संयुगे ।
तं तु भीमो मुहूर्त्तेन व्यश्वसूतरथध्वजम् ॥ ५२ ॥
चक्रे लोकेश्वरं तत्र तेनातुष्यन्त वै जनाः ।
ततोऽपायान्नृपस्तत्र भीमसेनस्य गोचरात् ॥ ५३ ॥
कुरुसैन्यं ततः सर्वं भीमसेनमुपाद्रवत् ।
तत्र नादो महानासीद्भीमसेनं जिघांसताम् ॥ ५४ ॥
युधामन्युः कृपं विध्वा धनुरस्याशु चिच्छिदे ।
अथान्यद्धनुरादाय कृपः शस्त्रभृतां वरः ॥ ५५ ॥

शरीरमें मारे और तीन बाण सारथीके मारे ॥ अनन्तर चार बाणोंसे चारों घोडे मार डाले । ( ४५-४८ )

तब शकुनि उस रथसे कूदे और महात्मा उलूकके रथपर चढकर युद्धसे भाग गये । तब सात्यकि वेगसे तुम्हारी सेनाकी ओर दौडे तब तुम्हारी सेना इधर उधरको भागने लगी, सात्यकिके बाणोंसे व्याकुल होकर तुम्हारे अनेक वीर मर गये और कुछ इधर उधर को भागने लगे ॥ (४८-५१)

जब दुर्योधन भीमसेनसे युद्ध करनेको चले, तब इन्होंने तुम्हारे पुत्रके घोडे और सारथीको मार डाला । फिर रथ और ध्वजा भी काट दी, भीमसेनके इस पराक्रमको देख पाण्डवोंकी सेना बहुत प्रसन्न हुई। दुर्योधन रथसे उतर भीमसेनके आगेसे भाग गये । तब कौरवोंकी सब सेना क्रोध करती हुई भीमसेनकी ओर दौडी । तब वहां बडा शब्द हुआ ॥ (५२-५४)

युद्धामन्युने कृपाचार्यके शरीरमें अनेक बाण मारे, फिर एक बाणसे उसका धनुष काट दिया; कृपाचार्यने हंसकर दूसरा धनुष लिया और अपने बाणोंसे युधामन्युके सारथी, ध्वजा और छत्र

विगाह्य तां पाण्डवबाणवृष्टिं शरैः परं नाम ततः प्रकाश्य ।
शतेन कृष्णं सहसाभ्यविद्ध्यत्त्रिभिः शतैरर्जुनं क्षुद्रकाणाम् ॥२६॥
ततोऽर्जुनः सायकानां शतेन गुरोः सुतं मर्मसु निर्बिभेद ।
अश्वांश्च सूतं च तथा धनुर्ज्यामवाकिरत्पश्यतां तावकानाम् ॥२७॥
स विध्वा मर्मसु द्रौणिं पाण्डवः परवीरहा ।
सारथिं चास्य भल्लेन रथनीडादपातयत् ॥ २८ ॥
स संगृह्य स्वयं वाहान्कृष्णौ प्राच्छादयच्छरैः ।
तत्राद्भुतमपश्याम द्रौणेराशु पराक्रमम् ॥ २९ ॥
प्रायच्छत्तुरगान्यश्च फाल्गुनं चाप्ययोधयत् ।
तदस्य समरे राजन्सर्वे योधा अपूजयन् ॥ ३० ॥
ततः प्रहस्य बीभत्सुर्द्रोणपुत्रस्य संयुगे ।
क्षिप्रं रश्मीनथाश्वानां क्षुरप्रैश्चिच्छिदे जयः ॥ ३१ ॥
प्राद्रवंस्तुरगास्ते तु शरवेगप्रपीडिताः ।
ततोऽभून्निनदो घोरस्तव सैन्यस्य भारत ॥ ३२ ॥
पाण्डवास्तु जयं लब्ध्वा तव सैन्यं समाद्रवन् ।
समन्तान्निशितान्बाणान्विमुञ्चन्तो जयैषिणः ॥ ३३ ॥

ने उनके सब बाणोंको काट दिया और प्रकाशित होकर कृष्णके शरीरमें सौ बाण मारकर अर्जुन के शरीर में तीनसौ बाण मारे ॥ (२३-२६)

तब अर्जुनने तुम्हारे पुत्रोंके देखते देखते गुरुपुत्र अश्वत्थामाके मर्मस्थानोंमें सौ बाण मारे, फिर उनके घोडे, और सारथीको विद्ध करके धनुषको काट डाला ॥ अश्वत्थामाको अपने बाणोंसे व्याकुलकर शत्रुनाशी अर्जुनने सारथीको एक बाणसे मारकर गिरा दिया ॥ तब अश्वत्थामा आप ही घोडे हांकने लगे और अपने बाणोंसे कृष्ण, अर्जुनको ढा दिया। अश्वत्थामाके इस कर्मको देखकर हम सब आश्चर्य करने लगे ॥ ( २७—२९ )

अर्जुनसे युद्ध करना और घोडोंके हांकना इन दोनों कर्मोंको करते देख सब योद्धा अश्वत्थामाकी प्रशंसा करने लगे ॥ तब अर्जुनने हंसकर एक तीक्ष्ण बाणसे घोडोंकी रास काट दी और चारों घोडोंके शरीरमें एक एक क्षुरप्र बाण मारा, तब वे घोडे अश्वत्थामाको लेकर भागे, उस समय तुम्हारी सेनामें महा-हाहाकार होने लगा ॥ (३०-३२)

पाण्डवोंकी सेना अपनी विजय जान-कर तुम्हारी सेनाके ऊपर चारों ओरसे

ततोऽन्तरिक्षं बाणौघैः शलभैरिव पादपम् ॥ ६४ ॥
छादयामास समरे गजान्निघ्नन्वृकोदरः ।
ततः कुञ्जरयूथानि समेतानि सहस्रशः ॥ ६५ ॥
व्यधमत्तरसा भीमो मेघसङ्घानिवानिलः ।
सुवर्णजालापिहिता मणिजालैश्च कुञ्जराः ॥ ६६ ॥
रेजुरभ्यधिकं संख्ये विद्युत्वन्त इवाम्बुदाः ।
ते वध्यमाना भीमेन गजा राजन्विदुद्रुवुः ॥ ६७ ॥
केचिद्विभिन्नहृदयाः कुञ्जरा न्यपतन्भुवि ।
पतितैर्निपतद्भिश्च गजैर्हेमविभूषितैः ॥ ६८ ॥
अशोभत मही तत्र विशीर्णैरिव पर्वतैः ।
दीप्ताभै रत्नवद्भिश्च पतितैर्गजयोधिभिः ॥ ६९ ॥
रराज भूमिः पतितैः क्षीणपुण्यैरिव ग्रहैः ।
ततो भिन्नकटा नागा भिन्नकुम्भकरास्तथा ॥ ७० ॥
दुद्रुवुः शतशः संख्ये भीमसेनशराहताः ।
केचिद्वमन्तो रुधिरं भयार्ताः पर्वतोपमाः ॥ ७१ ॥
व्यद्रवञ्छरविद्धाङ्गा धातुचित्रा इवाचलाः ।
महाभुजगसङ्काशौ चन्दनागुरुरूषितौ ॥ ७२ ॥

उस समय भीमसेनके बाण टीडी दलके समान आकाशमें छा रहे थे, तब सहस्रों हाथियोंके झुण्डोंको भीमसेनने इस प्रकार मार डाला, जैसे वायु मेघोंको उडा देता है। वे सोनेकी झूल और मणियोंसे शोभित हाथी बिजलीके समेत मेघोंके समान शोभित होने लगे। ६४-६७

हे राजन्! भीमसेनके बाणोंसे अनेक हाथी इधर उधरको भागने लगे। और अनेक हाथी भिन्न हृदय होकर पृथ्वीमें गिर गये। उन पडे हुए और गिरते हुए सुवर्ण भूषित हाथियोंसे वह पृथ्वी ऐसी शोभित हुई, जैसे गिरे पर्वतोंसे। जैसे पुण्य नाश होनेसे तारे टूटकर पृथ्वीमें गिरते हैं, वैसेही अनेक भूषण धारी योद्धा हाथियोंपरसे गिरे। किसी हाथीका पैर कट गया, किसीका शिर और किसीकी सूंड कट गयी, किसीके मुखसे रुधिर गिरने लगा, कहीं सैकडों हाथियोंके झुण्ड बाणोंसे व्याकुल होकर इधर उधरको भागने लगे। (६७-७१)

पर्वतके समान हाथियोंके शरीरसे गेरूके झरनोंके समान रुधिर बहने लगे। उस समय चन्दन और अगर लगे,

क्रोशन्ति समरे वीर द्राव्यमाणानि पाण्डवैः ॥ ४२ ॥
एतच्छ्रुत्वापि राधेयो दुर्योधनवचो महान् ।
मद्रराजमिदं वाक्यमब्रवीत्प्रहसन्निव ॥ ४३ ॥
पश्य मे भुजयोर्वीर्यमस्त्राणां च जनेश्वर ।
अद्य हन्मि रणे सर्वान्पञ्चालान्पाण्डुभिः सह॥ ४४ ॥
वाहयाश्वान्नरव्याघ्र भद्रेणैव न संशयः ।
एवमुक्त्वा महाराज सूतपुत्रः प्रतापवान् ॥ ४५ ॥
प्रगृह्य विजयं वीरो धनुः श्रेष्ठं पुरातनम् ।
सज्यं कृत्वा महाराज संमृज्य च पुनः पुनः ॥ ४६ ॥
सन्निवार्य च योधान्स सत्येन शपथेन च ।
प्रायोजयदमेयात्मा भार्गवास्त्रं महाबलः ॥ ४७ ॥
ततो राजन्सहस्राणि प्रयुतान्यर्बुदानि च ।
कोटिशश्च शरास्तीक्ष्णा निरगच्छन्महामृधे ॥ ४८ ॥
ज्वलितैस्तैः शरैर्घोरैः कङ्कबर्हिणवाजितैः ।
संछन्ना पाण्डवी सेना न प्राज्ञायत किंचन ॥ ४९ ॥
हाहाकारो महानासीत्पञ्चालानां विशाम्पते ।
पीडितानां बलवता भार्गवास्त्रेण संयुगे ॥ ५० ॥
निपतद्भिर्गजै राजन्नश्वैश्चापि सहस्रशः ।

पाण्डवोंके भयसे भागते हुए हमारे सहस्रों योद्धा केवल तुम्हेंही पुकार रहे हैं ॥ (३९–४२)

दुर्योधनके वचन सुन कर्ण हंसकर शल्यसे बोले, हे पृथ्वीनाथ! आप हमारे शस्त्र और हाथोंके बलको देखिये, हम अभी पाण्डवोंके सहित सब पाञ्चालोंको मारते हैं। हे पुरुषसिंह! अब निःसन्देह आप हमारे घोडोंको हांकिये, ऐसे कहकर प्रतापवान् कर्णने प्राचीन विजय धनुषपर रोदा चढाया और सत्य प्रतिज्ञा करके सब योद्धाओंको लौटा लिया अनन्तर अपने धनुषपर परशुरामका दि हुआ बाण चढाया ॥ (४३—४७)

हे राजन्! महाबलवान् कर्णके शस्त्रसे सैकडों सहस्रों लाखों और करोड बाण निकलकर युद्धमें घूमने लगे ॥ ४ गिद्धोंके मुखयुक्त जलते हुए बाणों पाण्डवोंकी सेना छा गयी, और कुछ दीखने लगा॥ हे पृथ्वीनाथ! ७४। कर्णके भार्गवास्त्रसे व्याकुल होकर पा ल सेना हाहाकार करने लगी ॥(४८-५०

ततोऽन्तरिक्षं बाणौघैः शलभैरिव पादपम् ॥ ६४ ॥
छादयामास समरे गजाञ्जिघ्नन्वृकोदरः ।
ततः कुञ्जरयूथानि समेतानि सहस्रशः ॥ ६५ ॥
व्यधमत्तरसा भीमो मेघसङ्घानिवानिलः ।
सुवर्णजालापिहिता मणिजालैश्च कुञ्जराः ॥ ६६ ॥
रेजुरभ्यधिकं संख्ये विद्युत्वन्त इवाम्बुदाः ।
ते वध्यमाना भीमेन गजा राजन्विदुद्रुवुः ॥ ६७ ॥
केचिद्विभिन्नहृदयाः कुञ्जरा न्यपतन्भुवि ।
पतितैर्निपतद्भिश्च गजैर्हेमविभूषितैः ॥ ६८ ॥
अशोभत मही तत्र विशीर्णैरिव पर्वतैः ।
दीप्ताभै रत्नवद्भिश्च पतितैर्गजयोधिभिः ॥ ६९ ॥
रराज भूमिः पतितैः क्षीणपुण्यैरिव ग्रहैः ।
ततो भिन्नकटा नागा भिन्नकुम्भकरास्तथा ॥ ७० ॥
दुद्रुवुः शतशः संख्ये भीमसेनशराहताः ।
केचिद्वमन्तो रुधिरं भयार्ताः पर्वतोपमाः ॥ ७१ ॥
व्यद्रवञ्छरविद्धाङ्गा धातुचित्रा इवाचलाः ।
महाभुजगसङ्काशौ चन्दनागुरुरूषितौ ॥ ७२ ॥

उस समय भीमसेनके बाण टीडी दलके समान आकाशमें छा रहे थे, तब सहस्रों हाथियोंके झुण्डोंको भीमसेनने इस प्रकार मार डाला, जैसे वायु मेघोंको उडा देता है। वे सोनेकी झूल और मणियोंसे शोभित हाथी बिजलीके समेत मेघोंके समान शोभित होने लगे। ६४-६७

हे राजन्! भीमसेनके बाणोंसे अनेक हाथी इधर उधरको भागने लगे। और अनेक हाथी भिन्न हृदय होकर पृथ्वीमें गिर गये। उन पडे हुए और गिरते हुए सुवर्ण भूषित हाथियोंसे वह पृथ्वी ऐसी शोभित हुई, जैसे गिरे पर्वतोंसे। जैसे पुण्य नाश होनेसे तारे टूटकर पृथ्वीमें गिरते हैं, वैसेही अनेक भूषण धारी योद्धा हाथियोंपरसे गिरे। किसी हाथीका पैर कट गया, किसीका शिर और किसीकी सूंड कट गयी, किसीके मुखसे रुधिर गिरने लगा, कहीं सैकडों हाथियोंके झुण्ड बाणोंसे व्याकुल होकर इधर उधरको भागने लगे। (६७-७१)

पर्वतके समान हाथियोंके शरीरसे गेरूके झरनोंके समान रुधिर बहने लगे। उस समय चन्दन और अगर लगे,

भार्गवास्त्रं महाघोरं दृष्ट्वा तत्र समीरितम् ॥ ६० ॥
पश्य कृष्ण महाबाहो भार्गवास्त्रस्य विक्रमम् ।
नैतदस्त्रं हि समरे शक्यं हन्तुं कथञ्चन ॥ ६१ ॥
सूतपुत्रं च संरब्धं पश्य कृष्ण महारणे ।
अन्तकप्रतिमं वीर्ये कुर्वाणं कर्म दारुणम् ॥ ६२ ॥
अभीक्ष्णं चोदयन्नश्वान्प्रेक्षते मां मुहुर्मुहुः ।
न च पश्यामि समरे कर्णं प्रति पलायितुम् ॥ ६३ ॥
जीवन्प्राप्नोति पुरुषः सङ्ख्ये जयपराजयौ ।
मृतस्य तु हृषीकेश भङ्ग एव कुतो जयः ॥ ६४ ॥
एवमुक्तस्तु पार्थेन कृष्णो मतिमतां वरम् ।
धनञ्जयमुवाचेदं प्राप्तकालमरिन्दमम् ॥ ६५ ॥
कर्णेन हि दृढं राजा कुन्तीपुत्रः परिक्षतः ।
तं दृष्ट्वाश्वास्य च पुनः कर्णं पार्थ वधिष्यसि ॥ ६६ ॥
एवमुक्त्वा पुनः प्रायाद् द्रष्टुमिच्छन्युधिष्ठिरम् ।
श्रमेण ग्राहयिष्यंश्च युद्धे कर्णं विशाम्पते ॥ ६७ ॥
ततो धनञ्जयो द्रष्टुं राजानं बाणपीडितम् ।
रथेन प्रययौ क्षिप्रं संग्रामात्केशवाज्ञया ॥ ६८ ॥

जाना कि कर्णने परशुरामका दिया हुआ घोर अस्त्र छोडा है, तब कृष्णसे बोले, हे महाबाहो ! ये देखो कर्णने यह घोर परशुरामका अस्त्र छोडा है। इसको जगत्में कोई नहीं सह सक्ता ॥ (५८–६१)

हे कृष्ण ! ये देखो कर्ण यमराजके समान क्रोध करके हमारी सेनाका नाश कर रहे है॥ ये देखो कर्ण अपने घोडोंको शीघ्र हांकते हुए हमारी ओरको देख रहे हैं। हमें कोई वीर ऐसा नहीं दीखता जो कर्णको युद्धमें मार भगावे॥ हे हृषीकेश ! जीता हुआ मनुष्य युद्धमें कभी हारता है, कभी जीतता है। मरे हुएका नित्यके लिये पराजयही है उसका जय कैसा होगा ? (६२–६४)

बुद्धिमान और शत्रुनाशन अर्जुनके ऐसे वचन सुन श्रीकृष्ण समयानुसार बोले, हे कुन्तीपुत्र ! कर्णने महाराजको बाणोंसे बहुत व्याकुल कर दिया है। तुम पहले उनको देखकर और धीरज देकर कर्णको मारिये, ऐसा कहकर और यह जानकर कि कर्ण इतने समयमें और भी थक जांयगे ॥ (६५—६७)

श्रीकृष्ण और अर्जुन युधिष्ठिरको

दुष्टभावान्पराञ्ज्ञात्वा समवेता महारथाः ॥ ६ ॥
आजग्मुस्तं परीप्सन्तः कुन्तीपुत्रं युधिष्ठिरम् ।
नकुलः सहदेवश्च धृष्टद्युम्नश्च पार्षतः ॥ ७ ॥
अक्षौहिण्या परिवृतास्तेऽभ्यधावन्युधिष्ठिरम् ।
भीमसेनश्च समरे मृद्नंस्तव महारथान् ॥ ८ ॥
अभ्यधावदभिप्रेप्सू राजानं शत्रुभिर्वृतम् ।
तांस्तु सर्वान्महेष्वासान्कर्णो वैकर्तनो नृप ॥ ९ ॥
शरवर्षेण महता प्रत्यवारयदागतान् ।
शरौघान्विसृजन्तस्ते प्रेरयन्तश्च तोमरान् ॥ १० ॥
न शेकुर्यत्नवन्तोऽपि राधेयं प्रति वीक्षितुम् ।
तांश्च सर्वान्महेष्वासान्सर्वशस्त्रास्त्रपारगः ॥ ११ ॥
महता शरवर्षेण राधेयः प्रत्यवारयत् ।
दुर्योधनं च विंशत्या शीघ्रमस्त्रमुदीरयन् ॥ १२ ॥
अविध्यत्तूर्णमभ्येत्य सहदेवः प्रतापवान् ।
स विद्धः सहदेवेन रराजाचलसन्निभः ॥ १३ ॥
प्रभिन्न इव मातङ्गो रुधिरेण परिप्लुतः ।
दृष्ट्वा तव सुतं तत्र गाढविद्धं सुतेजनैः ॥ १४ ॥

अनेक महारथ कौरव दौडे । (५—६)

इधरसे भी शत्रुओंको दुष्ट भाववाले जानकर महाराजकी रक्षा करनेके लिये वहांपर स्थित हुए नकुल, सहदेव और धृष्टद्युम्न एक अक्षौहिणी सेना लेकर दौडे । (६—८)

भीमसेन जहां तुम्हारी सेनाको मार रहे थे, तहांसे उन्होंने देखा, कि महाराजको शत्रुओंने घेर लिया, तब वे भी उनकी रक्षा करनेको दौडे, इन सबसे युद्ध करनेके लिये तुम्हारी ओरसे एकले कर्ण चले, महाधनुषधारी कर्णने अपने बाणोंसे सब महारथोंको रोक दिया, वे लोग भी कर्णकी ओर बाण और तोमर चलाने लगे । सब शस्त्रधारी वीर अनेक यत्न करने पर भी महाधनुषधारी कर्णकी ओर नहीं देख सके ॥ (८ - ११)

सब शस्त्रास्त्रप्रवीण एकले कर्णने इन सबको अपने बाणोंसे व्याकुल कर दिया, अनन्तर महाप्रतापी सहदेवने दुर्योधनके शरीरमें वीस बाण मारे, उन बाणोंके लगनेसे दुर्योधन शिखर सहित पर्वतके अथवा रुधिर बहते मतवाले हाथीके समान शोभित हुए, तुम्हारे पुत्रको

यः सम्प्रहारैर्निशितैः पृषत्कैर्द्रोणेन विद्धोऽतिभृशं तरस्वी ।
तस्थौ स तत्रापि जयप्रतीक्षो द्रोणोऽपि यावन्न हतः किलासीत् ॥ ६ ॥
स संशयं गमितः पाण्डवाग्र्यः सङ्ख्येऽद्य कर्णेन महानुभावः ।
ज्ञातुं प्रयाह्याशु तमद्य भीम स्थास्याम्यहं शत्रुगणान्निरुद्ध्य ॥ ७ ॥
भीमसेन उवाच—त्वमेव जानीहि महानुभाव राज्ञः प्रवृत्तिं भरतर्षभस्य ।
अहं हि यद्यर्जुन याम्यमित्रा वदन्ति मां भीत इति प्रवीराः ॥ ८ ॥
ततोऽब्रवीदर्जुनो भीमसेनं संशप्तकाः प्रत्यनीकास्थिता मे ।
एतानहत्वाद्य मया न शक्यमितोऽपयातुं रिपुसङ्घगोष्ठात् ॥ ९ ॥
अथाब्रवीदर्जुनं भीमसेनः स्ववीर्यमासाद्य कुरुप्रवीर ।
संशप्तकान्प्रति योत्स्यामि सङ्ख्ये सर्वानहं याहि धनञ्जय त्वम् ॥१० ॥
तद्भीमसेनस्य वचो निशम्य सुदुष्करं भ्रातुरमित्रमध्ये ।
संशप्तकानीकमसह्यमेकः सुदुष्करं धारयामीति पार्थः ॥ ११ ॥
उवाच नारायणमप्रमेयं कपिध्वजः सत्यपराक्रमस्य ।
श्रुत्वा वचो भ्रातुरदीनसत्वस्तदाहवे सत्यवचो महात्मा ॥
द्रष्टुं कुरुश्रेष्ठमभिप्रयास्यन्प्रोवाच वृष्णिप्रवरं तदानीम् ॥ १२ ॥
अर्जुन उवाच— चोदयाश्वान्हृषीकेश विहायैतद्बलार्णवम् ।

वे कर्णके बाणोंसे अत्यन्त व्याकुल होकर डेरेको चले गये है ॥ जो महापराक्रमी द्रोणाचार्यके तेज बाणोंसे भी अपनी विजयके लिये विना द्रोणके नाश हुए युद्धसे नहीं हटे थे, वही महात्मा पाण्डव-श्रेष्ठ युधिष्ठिर आज कर्णके बाणोंमे जीवनके सन्देहमें पड गये है ॥ इसलिये आप उनके पास जाइये और हम आपके स्थान पर खडे होकर शत्रुओंके गणोंको रोकेंगे ॥ (५–७)

भीमसेन बोले, हे अर्जुन ! तुम ही कुरुकुलसिंह महाराजके दर्शनको जाओ, हम नहीं जावेंगे। क्यों कि हमारे जानेसे सब कोई कहेंगे, कि भीमसेन डर कर भाग गये, तब अर्जुनने भीमसेनसे कहा, कि यह संशप्तक सेना हमारे आगे खडी है, इसको विना मारे मै युद्धसे नहीं जा सक्ता ॥ (८–९)

ऐसा सुन अपने पराक्रमका अभिमान कर भीमसेन बोले, हे अर्जुन ! तुम जाओ हम सब संशप्तकोंको मार डालेंगे, अपने भाई भीमसेनके शत्रुओंके बीचमें घोर वचन सुनकर कि "हम इन सब संशप्तकोंको मार डालेंगे" महात्मा महा पराक्रमी अर्जुनने वृष्णिश्रेष्ठ श्रीकृष्णसे ऐसे वचन कहे । हे यदुकुलश्रेष्ठ ! अब

दुष्टभावान्पराञ्ज्ञात्वा समवेता महारथाः ॥ ६ ॥
आजग्मुस्तं परीप्सन्तः कुन्तीपुत्रं युधिष्ठिरम् ।
नकुलः सहदेवश्च धृष्टद्युम्नश्च पार्षतः ॥ ७ ॥
अक्षौहिण्या परिवृतास्तेऽभ्यधावन्युधिष्ठिरम् ।
भीमसेनश्च समरे मृद्नंस्तव महारथान् ॥ ८ ॥
अभ्यधावदभिप्रेप्सू राजानं शत्रुभिर्वृतम् ।
तांस्तु सर्वान्महेष्वासान्कर्णो वैकर्तनो नृप ॥ ९ ॥
शरवर्षेण महता प्रत्यवारयदागतान् ।
शरौघान्विसृजन्तस्ते प्रेरयन्तश्च तोमरान् ॥ १० ॥
न शेकुर्यत्नवन्तोऽपि राधेयं प्रति वीक्षितुम् ।
तांश्च सर्वान्महेष्वासान्सर्वशस्त्रास्त्रपारगः ॥ ११ ॥
महता शरवर्षेण राधेयः प्रत्यवारयत् ।
दुर्योधनं च विंशत्या शीघ्रमस्त्रमुदीरयन् ॥ १२ ॥
अविध्यत्तूर्णमभ्येत्य सहदेवः प्रतापवान् ।
स विद्धः सहदेवेन रराजाचलसन्निभः ॥ १३ ॥
प्रभिन्न इव मातङ्गो रुधिरेण परिप्लुतः ।
दृष्ट्वा तव सुतं तत्र गाढविद्धं सुतेजनैः ॥ १४ ॥

---

अनेक महारथ कौरव दौडे । (५—६)

इधरसे भी शत्रुओंको दुष्ट भाववाले जानकर महाराजकी रक्षा करनेके लिये वहांपर स्थित हुए नकुल, सहदेव और धृष्टद्युम्न एक अक्षोहिणी सेना लेकर दौडे । (६—८)

भीमसेन जहां तुम्हारी सेनाको मार रहे थे, तहांसे उन्होंने देखा, कि महाराजको शत्रुओंने घेर लिया, तब वे भी उनकी रक्षा करनेको दौडे, इन सबसे युद्ध करनेके लिये तुम्हारी ओरसे एकले कर्ण चले, महाधनुषधारी कर्णने अपने बाणोंसे सब महारथोंको रोक दिया, वे लोग भी कर्णकी ओर बाण और तोमर चलाने लगे । सब शस्त्रधारी वीर अनेक यत्न करने पर भी महाधनुषधारी कर्णकी ओर नहीं देख सके ॥ (८ ११)

सब शस्त्रास्त्रप्रवीण एकले कर्णने इन सबको अपने बाणोंसे व्याकुल कर दिया, अनन्तर महाप्रतापी सहदेवने दुर्योधनके शरीरमें वीस बाण मारे, उन बाणोंके लगनेसे दुर्योधन शिखर सहित पर्वतके अथवा रुधिर बहते मतवाले हाथीके समान शोभित हुए, तुम्हारे पुत्रको

समीक्ष्य सेनाग्रनरप्रवीरौ युधिष्ठिरो वाक्यमिदं बभाषे ॥ २१ ॥
महासत्वौ हि तौ दृष्ट्वा सहितौ केशवार्जुनौ।
हतमाधिरथिं मेने सङ्ख्ये गाण्डीवधन्वना ॥ २२ ॥
तावभ्यनन्दत्कौन्तेयः साम्ना परमवल्गुना।
स्मितपूर्वममित्रघ्नं पूजयन्भरतर्षभ ॥ २३ ॥ [३२६९]

इति श्रीमहाभारते० कर्णपर्वणि युधिष्ठिर प्रति कृष्णार्जुनागमे पञ्चषष्टितमोऽध्यायः॥६५॥

युधिष्ठिर उवाच-स्वागतं देवकीमातः स्वागतं ते धनञ्जय।
प्रियं मे दर्शनं गाढं युवयोरच्युतार्जुनौ ॥ १ ॥
अक्षताभ्यामरिष्टाभ्यां हतः कर्णो महारथः।
आशीविषसमं युद्धे सर्वशास्त्रविशारदम् ॥ २ ॥
अग्रगं धार्तराष्ट्राणां सर्वेषां शर्म वर्म च।
रक्षितं वृषसेनेन सुषेणेन च धन्विना ॥ ३ ॥
अनुज्ञातं महावीर्यं रामेणास्त्रे सुदुर्जयम्।
अग्र्यं सर्वस्य लोकस्य रथिनं लोकविश्रुतम् ॥ ४ ॥
त्रातारं धार्तराष्ट्राणां गन्तारं वाहिनीमुखे।

---

होकर बोले ॥ (१८—२०)

सञ्जय बोले, हे राजन्! महावीर कृष्ण और अर्जुनको रुधिरमें भींगे और घावोंसे व्याकुल देख महाराज युधिष्ठिर ऐसा वचन बोले, उन्होंने वचन कहनेके पहले ही कृष्ण और अर्जुनको संग आये देख जान लिया, कि कर्णको अर्जुनने मार डाला॥ तब भरतकुलश्रेष्ठ उन दोनोंकी प्रशंसा करके बहुत शान्ति पूर्वक स्मित करके ऐसे वचन बोले॥ (२१—२३) [३२६९]

कर्णपर्वमें पैंसठ अध्याय समाप्त।

कर्णपर्वमें छासठ अध्याय।

युधिष्ठिर बोले, हे देवकी पुत्र कृष्ण! हे अर्जुन! तुम्हारा आगमन अच्छा हुआ, तुम्हारे आनेसे हम बहुत प्रसन्न हुए, तुम दोनोंने अक्षत शरीरसे सब शस्त्रोंके जाननेवाले, महापराक्रमी सांपके समान क्रोधी महारथी कर्णको मारा॥ (१—२)

यह कर्ण सब धृतराष्ट्रके पुत्रोंमें श्रेष्ठ था, यह सदा दुर्योधनका कल्याण करता था, और वृषसेन तथा धनुषधारी सुषेण उसकी रक्षा करते थे। यह कर्ण परशुरामके शिष्य, सब शस्त्रोंके जाननेवाले, सब लोकोंमें विख्यात और सब योद्धाओंमें श्रेष्ठ था। यही सदा धृतराष्ट्रके पुत्रोंकी रक्षा करते थे और उनकी सेना

वाणान्धकारमभवत्तद्युद्धं घोरदर्शनम् ॥ २३ ॥
हाहाकारो महानासीत्तावकानां विशाम्पते ।
वध्यमाने तदा सैन्ये धर्मपुत्रेण मारिष ॥ २४ ॥
सायकैर्विविधैस्तीक्ष्णैः कङ्कपत्रैः शिलाशितैः ।
भल्लैरनेकैर्विविधैः शक्त्यृष्टिमुसलैरपि ॥ २५ ॥
यत्र यत्र स धर्मात्मा दुष्टां दृष्टिं व्यसर्जयत् ।
तत्र तत्र व्यशीर्यन्त तावका भरतर्षभ ॥ २६ ॥
कर्णोऽपि भृशसंक्रुद्धो धर्मराजं युधिष्ठिरम् ।
नाराचैरर्धचन्द्रैश्च वत्सदन्तैश्च संयुगे ॥ २७ ॥
अमर्षी क्रोधनश्चैव रोषप्रस्फुरिताननः ।
सायकैरप्रमेयात्मा युधिष्ठिरमभिद्रवत् ॥ २८ ॥
युधिष्ठिरश्चापि स तं स्वर्णपुङ्खैः शितैः शरैः ।
प्रहसन्निव तं कर्णः कङ्कपत्रैः शिलाशितैः ॥ २९ ॥
उरस्यविध्यद्राजानं त्रिभिर्भल्लैश्च पाण्डवम् ।
स पीडितो भृशं तेन धर्मराजो युधिष्ठिरः ॥ ३० ॥
उपविश्य रथोपस्थे सूतं याहीत्यचोदयत ।
अक्रोशन्त ततः सर्वे धार्तराष्ट्राः सराजकाः ॥ ३१ ॥

वीरोंको मार डाला ॥ (२०-२३)

हे पृथ्वीनाथ ! उस समय तुम्हारी सेनामें हाहाकार होने लगा । हे भरतकुलसिंह ! युधिष्ठिरने वाण, शक्ति, तोमर, मूशल और अनेक प्रकारके भालोंसे तुम्हारी सेनाके सहस्रों वीरोंको मार डाला ॥ धर्मात्मा युधिष्ठिर जिधरको देखते थे, उधर ही तुम्हारी सेनाका नाश होजाता था ॥ ( २४-२६ )

तब कर्णने क्रोध करके युधिष्ठिरकी ओर अनेक अर्द्धचन्द्र और वत्सदन्त वाण चलाये ॥ महापराक्रमी कर्णका मुख क्रोधसे कांपने लगा और अनेक वाण चलाते हुए युधिष्ठिरकी ओर दौडे ॥ (२७-२८)

युधिष्ठिरने भी हंसकर सिली पर घिसे सोनेके पङ्खयुक्त अनेक वाण कर्णपर चलाये । कर्णने भी उनपर अनेक वाण चलाये । अनन्तर कर्णने क्रोध करके धर्मराज युधिष्ठिरके हृदयमें तीन भल्ल वाण मारे, उनसे राजा अत्यन्त व्याकुल होगये और रथमें बैठकर सारथीको चलनेकी आज्ञा दी । (२९-३१)

तब तुम्हारी सब सेना प्रसन्न होकर

तत्र तत्र युधां श्रेष्ठ परिभूय न संशयः ॥ १३ ॥
भीमसेनप्रभावात्तु यज्जीवामि धनञ्जय।
बहुनात्र किमुक्तेन नाहं तत्सोढुमुत्सहे ॥ १४ ॥
त्रयोदशाहं वर्षाणि यस्माद्भीतो धनञ्जय।
न स्म निद्रां लभे रात्रौ न चाहनि सुखं क्वचित् ॥१५॥
तस्य द्वेषेण संयुक्तः परिदह्ये धनञ्जय।
आत्मनो मरणे यातो वार्ध्रीणस इव द्विपः ॥ १६ ॥
तस्यायमगमत्कालश्चिन्तयानस्य मे चिरम्।
कथं कर्णो मया शक्यो युद्धे क्षपयितुं भवेत् ॥ १७ ॥
जाग्रत्स्वपंश्च कौन्तेय कर्णमेव सदा ह्यहम्।
पश्यामि तत्र तत्रैव कर्णभूतमिदं जगत् ॥ १८ ॥
यत्र यत्र हि गच्छामि कर्णाद्भीतो धनञ्जय।
तत्र तत्र हि पश्यामि कर्णमेवाग्रतः स्थितम् ॥ १९ ॥
सोऽहं तेनैव वीरेण समरेष्वपलायिना।
सहयः सरथः पार्थ जित्वा जीवन्विसर्जितः ॥ २० ॥
को नु मे जीवितेनार्थो राज्येनार्थो भवेत्पुनः।
ममैवं विक्षतस्याद्य कर्णेनाहवशोभिना ॥ २१ ॥

कहे ॥ (१०–१३)

हे अर्जुन! मै जो जीता बचा हूं, सो केवल भीमसेन ही के बलका प्रभाव है। अधिक क्या कहै, हम किमी प्रकारसे उसके सङ्ग युद्ध न कर सके॥ हे अर्जुन! इसीके भयसे वनमें रह कर तेरह वर्ष तक रात दिन सुखसे नहीं सोये। हे अर्जुन! जैसे चमडेमें बंधकर पक्षी व्याकुल होता है। ऐसे ही कर्णके द्वेषसे हम सदा व्याकुल रहते थे॥ मै बहुत दिनसे यही सोचा करता था, कि किस प्रकारसे युद्धमें कर्णको मारूंगा? हे कुन्ती पुत्र! मै सदा सोता जागता कर्णहीको देखता था, मुझे यह जान पडता था, कि सब जगत् कर्णरूप होगया॥ (१४–१८)

हे अर्जुन! मैं कर्णके भयसे जहां जहां जाता था, वहीं उसे खडा देखता था। उस ही वीरने मुझे रथ, घोडे और सारथीके समेत जीत लिया और मरनेकी अवस्थाको पहुंचा दिया॥ उस समय मैने विचारा कि, जब कर्णने मेरे शरीरमें इतने बाण मारे तो अब जी कर और राज्य लेकर क्या करूंगा? जो

यमयोर्मध्यगं वीरं शनैर्यान्तं विचेतसम् ॥ ५ ॥
समासाद्य तु राजानं दुर्योधनहितेप्सया ।
सूतपुत्रस्त्रिभिस्तीक्ष्णैर्विव्याध परमेषुभिः ॥ ६ ॥
तथैव राजा राधेयं प्रत्यविध्यत्स्तनान्तरे ।
शरैस्त्रिभिश्च यन्तारं चतुर्भिश्चतुरो हयान् ॥ ७ ॥
चक्ररक्षौ तु पार्थस्य माद्रीपुत्रौ परन्तपौ ।
तावप्यधावतां कर्णं राजानं मा वधीरिति ॥ ८ ॥
तौ पृथक्शरवर्षाभ्यां राधेयमभ्यवर्षताम् ।
नकुलः सहदेवश्च परमं यत्नमास्थितौ ॥ ९ ॥
तथैव तौ प्रत्यविध्यत्सूतपुत्रः प्रतापवान् ।
भल्लाभ्यां शितधाराभ्यां महात्मानावरिन्दमौ ॥ १० ॥
दन्तवर्णांस्तु राधेयो निजघान मनोजवान् ।
युधिष्ठिरस्य संग्रामे कालवालान्हयोत्तमान् ॥ ११ ॥
ततोऽपरेण भल्लेन शिरस्त्राणमपातयत् ।
कौन्तेयस्य महेष्वासः प्रहसन्निव सूतजः ॥ १२ ॥
तथैव नकुलस्यापि हयान्हत्वा प्रतापवान् ।
ईषां धनुश्च चिच्छेद माद्रीपुत्रस्य धीमतः ॥ १३ ॥
तौ हताश्वौ हतरथौ पाण्डवौ भृशविक्षतौ ।
भ्रातरावारुरुहतुः सहदेवरथं तदा ॥ १४ ॥

करके कर्णके हृदयमें तीन वाण मारे और फिर एक वाण सारथी और चार वाण चारों घोडोंको मारे ॥ (५-७)

राजा युधिष्ठिरके रथके पहियोंकी रक्षा करनेवाले नकुल और सहदेव भी कर्णके हाथसे राजा युधिष्ठिरकी रक्षाके लिये कर्णकी ओर दौडे, उन दोनोंने बहुत यत्न करके पृथक् पृथक् कर्णकी ओर वाणोंकी वर्षा की। महाधनुषधारी कर्णने भी शत्रुनाशन नकुल और सहदेवके शरीरमें एक एक तेज भल्ल बाण मारा। ॥ तब कर्णने दांतके समान सफेद वर्ण और काले पूछवाले राजा युधिष्ठिरके रथके घोडोंको मार डाला और हंसकर एक भल्ल बाणसे महाधनुषधारी युधिष्ठिरके टोपको काट दिया॥ (८-१२)

इसी प्रकार बुद्धिमान माद्रीपुत्र नकुलके घोडोंको भी मारकर रथ और धनुषको काट दिया और युधिष्ठिरके भी रथको काट दिया, तब ये दोनों

तत्र तत्र युधां श्रेष्ठ परिभूय न संशयः ॥ १३ ॥
भीमसेनप्रभावात्तु यज्जीवामि धनञ्जय।
बहुनात्र किमुक्तेन नाहं तत्सोढुमुत्सहे ॥ १४ ॥
त्रयोदशाहं वर्षाणि यस्माद्भीतो धनञ्जय।
न स्म निद्रां लभे रात्रौ न चाहनि सुखं कचित् ॥१५॥
तस्य द्वेषेण संयुक्तः परिदह्ये धनञ्जय।
आत्मनो मरणे यातो वाध्रीणस इव द्विपः ॥ १६ ॥
तस्यायमगमत्कालश्चिन्तयानस्य मे चिरम्।
कथं कर्णो मया शक्यो युद्धे क्षपयितुं भवेत् ॥ १७ ॥
जाग्रत्स्वपंश्च कौन्तेय कर्णमेव सदा ह्ययम्।
पश्यामि तत्र तत्रैव कर्णभूतमिदं जगत् ॥ १८ ॥
यत्र यत्र हि गच्छामि कर्णाद्भीतो धनञ्जय।
तत्र तत्र हि पश्यामि कर्णमेवाग्रतः स्थितम् ॥ १९ ॥
सोऽहं तेनैव वीरेण समरेष्वपलायिना।
सहयः सरथः पार्थ जित्वा जीवन्विसर्जितः ॥ २० ॥
को नु मे जीवितेनार्थो राज्येनार्थो भवेत्पुनः।
ममैवं विक्षतस्याद्य कर्णेनाहवशोभिना ॥ २१ ॥

कहे ॥ (१०–१३)

हे अर्जुन! मैं जो जीता बचा हूं, सो केवल भीमसेन ही के बलका प्रभाव है। अधिक क्या कहैं, हम किसी प्रकारसे उसके सङ्ग युद्ध न कर सके॥ हे अर्जुन! इसीके भयसे वनमें रह कर तेरह वर्ष तक रात दिन सुखसे नहीं सोये। हे अर्जुन! जैसे चमडेमें बंधकर पक्षी व्याकुल होता है। ऐसे ही कर्णके द्वेषसे हम सदा व्याकुल रहते थे॥ मैं बहुत दिनसे यही सोचा करता था, कि किस प्रकारसे युद्धमें कर्णको मारूंगा? हे कुन्ती पुत्र! मैं सदा सोता [illegible] कर्णहीको देखता था, मुझे यह पडता था, कि सब जगत् क[illegible] होगया॥ (१४–१८)

हे अर्जुन! मैं कर्णके भयसे ज[illegible] जहां जाता था, वहीं उसे खडा [illegible] था। उस ही वीरने मुझे रथ, घोडे औ[illegible] सारथीके समेत जीत लिया और [illegible]ने अवस्थाको पहुंचा दिया॥ उस [illegible] मैंने विचारा कि, जब कर्णने मेरे श[illegible]रमें इतने बाण मारे तो अब जी[illegible] और राज्य लेकर क्या करूंगा?

श्रूयते चापघोषोऽयं प्रावृषीवाम्बुदस्य ह ।
असौ निघ्नन्रथोदारानर्जुनः शरवृष्टिभिः ॥ २३ ॥
सर्वां ग्रसति नः सेनां कर्ण पश्यैनमाहवे ।
पृष्ठरक्षौ च शूरस्य युधामन्यूत्तमौजसौ ॥ २४ ॥
उत्तरं चास्य वै शूरश्चक्रं रक्षति सात्यकिः ।
धृष्टद्युम्नस्तथा चास्य चक्रं रक्षति दक्षिणम् ॥ २५ ॥
भीमसेनश्च वै राज्ञा धार्तराष्ट्रेण युध्यते ।
यथा न हन्यात्तं भीम' सर्वेषां नोऽद्य पश्यताम् ॥२६॥
तथा राधेय क्रियतां राजा मुच्येत नो यथा ।
पश्यैनं भीमसेनेन ग्रस्तमाहवशोभिनम् ॥ २७ ॥
यदि त्वासाद्य मुच्येत विस्मयः सुमहान्भवेत् ।
परित्राह्येनमभ्येत्य संशयं परमं गतम् ।
किन्नु माद्रीसुतौ हत्वा राजानं च युधिष्ठिरम् ॥ २८ ॥
इति शल्यवचः श्रुत्वा राधेयः पृथिवीपते ।
दृष्ट्वा दुर्योधनं चैव भीमग्रस्तं महाहवे ॥ २९ ॥
राजगृद्धी भृशं चैव शल्यवाक्यप्रचोदितः ।

---

यह घोर शब्द कृष्ण और अर्जुनके शङ्खका सुनाई देता है । देखो यह वर्षा कालके मेघके समान अर्जुनके धनुषका शब्द चला आता है । यह अपने बाणोंकी वर्षासे तुम्हारी सेनाके महारथोंका नाश कर रहे हैं । हे कर्ण ! ये देखो अर्जुन आज हमारी सब सेनाका नाश किये देते हैं । उनकी पृष्ठरक्षा उत्तमौजा और युधामन्यु कर रहे हैं । उनके बाएं पहियेको सात्यकि और दहनेको साक्षात् धृष्टद्युम्न रक्षा करते हैं ॥ (२२–२५)

और ये देखो भीमसेन साक्षात् राजा दुर्योधनसे युद्ध कर रहे हैं । ऐसा न हो कि हमारे सबके देखते देखते ये उनको मारडालें ॥ ये देखो भीमसेनने दुर्योधनको व्याकुल कर दिया । तुम ऐसा उपाय करो, कि ये भीमसेनके हाथसे बचें, यदि तुम्हारी कृपासे आज दुर्योधन बच जावेंगे तो तुम्हारी बहुत कीर्त्ति होगी । इसलिये तुम दुर्योधनको आपत्तिसे बचाओ । नकुल, सहदेव और युधिष्ठिरको मार कर क्या करोगे ? ( २६–२८ )

हे पृथ्वीनाथ ! शल्यके ऐसे वचन सुन और दुर्योधनको भीमसेनके बाणोंसे व्याकुल देख नकुल, सहदेव और युधिष्ठिरको छोड कर्ण दुर्योधनकी रक्षाके

दित्सुः कर्णः समरे हस्तिपङ्गवं स हीदानीं कङ्कपत्रैः सुतीक्ष्णैः ॥३०॥
त्वया रणे निहतः सूतपुत्रः कच्चिच्छेते भूमितले दुरात्मा।
प्रियश्च मे परमो वै कृतोऽयं त्वया रणे सूतपुत्रं निहत्य ॥ ३१ ॥
यः सर्वतः पर्यपतत्त्वदर्थे सदार्चितो गर्वितः सूतपुत्रः।
स शूरमानी समरे समेत्य कच्चित्त्वया निहतः संयुगेऽसौ ॥३२॥
रौक्मं वरं हस्तिगजाश्वयुक्तं रथं प्रदित्सुर्यः परेभ्यस्त्वदर्थे।
सदा रणे स्पर्धते यः स पापः कच्चित्त्वया निहतस्तात युद्धे ॥ ३३ ॥
योऽसौ सदा शूर मदेन मत्तो विकत्थते संसदि कौरवाणाम्।
प्रियोऽत्यर्थं तस्य सुयोधनस्य कच्चित्स पापो निहतस्त्वयाद्य ॥ ३४ ॥
कच्चित्समागम्य धनुःप्रयुक्तैस्त्वत्प्रेषितैर्लोहिताङ्गैर्विहङ्गैः।
शेते स पापः सुविभिन्नगात्रः कच्चिद्भग्नौ धार्तराष्ट्रस्य बाहू ॥ ३५ ॥
योऽसौ सदा श्लाघते राजमध्ये दुर्योधनं हर्षयन्दर्पपूर्णः।

संजय उवाच— द्रौणिस्तु रथवंशेन महता परिवारितः ।
अपतत्सहसा राजन्यत्र पार्थो व्यवस्थितः ॥ १ ॥
तमापतन्तं सहसा शूरः शौरिसहायवान् ।
दधार सहसा पार्थो वेलेव मकरालयम् ॥ २ ॥
ततः क्रुद्धो महाराज द्रोणपुत्रः प्रतापवान् ।
अर्जुनं वासुदेवं च च्छादयामास सायकैः ॥ ३ ॥
अवच्छन्नौ ततः कृष्णौ दृष्ट्वा तत्र महारथौ ।
विस्मयं परमं गत्वा प्रैक्षन्त कुरवस्तदा ॥ ४ ॥
अर्जुनस्तु ततो दिव्यमस्त्रं चक्रे हसन्निव ।
तदस्त्रं वारयामास ब्राह्मणो युधि भारत ॥ ५ ॥
यद्यद्धि व्याक्षिपद्युद्धे पाण्डवोऽस्त्रं जिघांसया ।
तत्तदस्त्रं महेष्वासो द्रोणपुत्रो व्यशातयत् ॥ ६ ॥
अस्त्रयुद्धे ततो राजन्वर्तमाने महाभये ।
अपश्याम रणे द्रौणिं व्यात्ताननमिवान्तकम् ॥ ७ ॥
स दिशः प्रदिशश्चैव च्छादयित्वा ह्यजिह्मगैः ।
वासुदेवं त्रिभिर्बाणैरविध्यद्दक्षिणे भुजे ॥ ८ ॥
ततोऽर्जुनो हयान्हत्वा सर्वांस्तस्य महात्मनः ।

---

कर्णपर्वमें चौसठ अध्याय ।

सञ्जय बोले, हे राजन्! अश्वत्थामा भी रथ और सेनाके सहित अर्जुनसे युद्ध करनेको दौडे, जैसे समुद्रके वेगको पर्वत रोकते हैं। तैसे ही कृष्ण सहित अर्जुनने अश्वत्थामाको रोका ॥ हे महाराज! तब महाप्रतापी अश्वत्थामाने क्रोध करके कृष्ण और अर्जुनकी ओर अनेक बाण चलाये। कृष्ण और अर्जुनको बाणोंमें छिपा हुआ देख तुम्हारी सेनाके महारथ आश्चर्य करके देखने लगे ॥(१-४)

तब अर्जुनने हंसकर एक दिव्य अस्त्र चलाया, परन्तु ब्राह्मण अश्वत्थामाने उसे काट दिया ॥ अर्जुन अश्वत्थामाके मारनेको जो जो अस्त्र चलाते थे, उसीको महाधनुषधारी अश्वत्थामा काट देता था। जब इस प्रकार यह भयङ्कर अस्त्र युद्ध होने लगा, तब हमने अश्वत्थामाको मुह फैलाये कालके समान देखा ॥ उन्होंने अपने तेज चलनेवाले बाणोंसे दिशा और आकाशको पूरित करके कृष्णके दहने हाथमें तीन बाण मारे ॥ (५-८)

तब अर्जुनने अपने बाणोंसे महात्मा

दित्सुः कर्णः समरे हस्तिषड्गवं स हीदानीं कङ्कपत्रैः सुतीक्ष्णैः ॥३०॥
त्वया रणे निहतः सूतपुत्रः कच्चिच्छेते भूमितले दुरात्मा।
प्रियश्च मे परमो वै कृतोऽयं त्वया रणे सूतपुत्रं निहत्य ॥ ३१ ॥
यः सर्वतः पर्यपतत्त्वदर्थे सदार्चितो गर्वितः सूतपुत्रः।
स शूरमानी समरे समेत्य कच्चित्त्वया निहतः संयुगेऽसौ ॥३२॥
रौक्मं वरं हस्तिगजाश्वयुक्तं रथं प्रदित्सुर्यः परेभ्यस्त्वदर्थे।
सदा रणे स्पर्धते यः स पापः कच्चित्त्वया निहतस्तात युद्धे ॥ ३३ ॥
योऽसौ सदा शूर मदेन मत्तो विकत्थते संसदि कौरवाणाम्।
प्रियोऽत्यर्थं तस्य सुयोधनस्य कच्चित्स पापो निहतस्त्वयाद्य ॥ ३४ ॥
कच्चित्समागम्य धनुःप्रयुक्तैस्त्वत्प्रेषितैर्लोहिताङ्गैर्विहङ्गैः।
शेते स पापः सुविभिन्नगात्रः कच्चिद्भग्नौ धार्तराष्ट्रस्य बाहू ॥ ३५ ॥
योऽसौ सदा श्लाघते राजमध्ये दुर्योधनं हर्षयन्दर्पपूर्णः।
अहं हन्ता फाल्गुनस्येति मोहात्कच्चिद्वचस्तस्य न वै तथा तत् ॥३६॥
नाहं पादौ धावयिष्ये कदाचिद्यावत्स्थितः पार्थ इत्यल्पबुद्धेः।
व्रतं तस्यैतत्सर्वदा शक्रसूनो कच्चित्त्वया निहतः सोऽद्य कर्णः ॥ ३७ ॥

और युद्ध करनेके लिये तुम्हें देखता था और तुम्हें दिखानेवालेको हाथीके समान छः बैलोंको भी देनेको तैयार था उसी कर्णको आज तुमने अपने तेज बाणोंसे मार डाला। आज तुमने दुरात्मा सूत-पुत्रको मारकर पृथ्वीमें सुला दिया, इससे हम बहुत प्रसन्न हुए ॥ (२९-३१)

जो सदा ही धृतराष्ट्रके पुत्रोंसे जी-विका पाकर तुमसे युद्ध करनेकी इच्छा किया करता था। आज उसी अभिमानी कर्णको मार डाला ॥ हे प्यारे अर्जुन! जो सदा हाथी, घोडे और सोनेके रथोंके सहित तुमसे युद्ध करनेकी इच्छा करता था, आज उस पापी कर्णको तुमने कैसे मारा? जो महा अभिमानमें भरकर [illegible] कौरवोंकी सभामें गरजा करता और दुर्योधनका प्यारा मित्र था [illegible] पापीको आज तुमने कैसे मारा?(३२ ३४

आज वह पापी तुम्हारी धनुषसे [illegible] रुधिरमें भीगे पक्षियोंके समान शी[illegible] चलनेवाले बाणोंसे कटकर कैसे पृथ्[illegible] गिर गया? आज दुर्योधनके हाथ [illegible] गये ॥ जो मूर्ख अभिमानी दुर्योधन[illegible] प्रसन्न करनेके लिये राजाओंके बीच सदा कहा करता था कि मैं [illegible]र्जुनको मारूंगा, आज उसने अपनी प्रतिज्ञाको सत्य क्यों नहीं किया? जो मूर्ख स[illegible] कहा करता था, कि जब तक [illegible]

भूयोऽर्जुनं महाराज द्रौणिरायम्य पत्रिणा ॥ १७ ॥
वक्षोदेशे भृशं पार्थ ताडयामास निर्दयम् ।
सोऽतिविद्धो रणे तेन द्रोणपुत्रेण भारत ॥ १८ ॥
गाण्डीवधन्वा प्रसभं शरवर्षैरुदारधीः ।
संछाद्य समरे द्रौणिं चिच्छेदास्य च कार्मुकम् ॥ १९ ॥
स छिन्नधन्वा परिघं वज्रस्पर्शसमं युधि ।
आदाय चिक्षेप तदा द्रोणपुत्रः किरीटिने ॥ २० ॥
तमापतन्तं परिघं जाम्बूनदपरिष्कृतम् ।
चिच्छेद सहसा राजन्प्रहसन्निव पाण्डवः ॥ २१ ॥
स पपात तदा भूमौ निकृत्तः पार्थसायकैः ।
विकीर्णः पर्वतो राजन्यथा वज्रेण ताडितः ॥ २२ ॥
ततः क्रुद्धो महाराज द्रोणपुत्रो महारथः ।
ऐन्द्रेण चास्त्रवेगेन बीभत्सुं समवाकिरत ॥ २३ ॥
तस्येन्द्रजालावततं समीक्ष्य पार्थो राजन्गाण्डिवमाददे सः ।
ऐन्द्रं जालं प्रत्यहरत्तरस्वी वरास्त्रमादाय महेन्द्रसृष्टम् ॥ २४ ॥
विदार्य तज्जालमथेन्द्रमुक्तं पार्थस्ततो द्रौणिरथं क्षणेन ।
प्रच्छादयामास ततोऽभ्युपेत्य द्रौणिस्तदा पार्थशराभिभूतः ॥ २५ ॥

एक बाण अर्जुनके हृदयमें मारा उस बाणके लगनेसे अर्जुनको बहुत पीडा हुई ॥ (१५-१८)

अनन्तर उन्होंने क्रोध करके अश्वत्थामाकी ओर सहस्रों बाण चलाये और एक बाणसे उनका धनुष काट दिया; वह धनुष अर्जुन के बाणसे कटकर पृथ्वी में गिर गया। धनुष कटने पर द्रोणपुत्र अश्वत्थामाने युद्ध में वज्रके समान स्पर्शवाला एक परिघ लेकर अर्जुनकी ओर चलाया ॥ पाण्डुपुत्र अर्जुनने उस सुवर्ण भूषित परिघको अपनी ओर आते देख हंसकरही उसे काट दिया ॥ कुन्तीपुत्र अर्जुनके बाणोंसे कट जानेसे वह अश्वत्थामाका परिघ वज्रसे कटे हुए पर्वतके समान पृथ्वीमें गिर गया ॥ (१९-२२)

हे महाराज! तब गर्जने वाले द्रोणपुत्र अश्वत्थामाने क्रोध करके अर्जुनकी ओर इन्द्रास्त्र चलाया, तब महातेजस्वी अर्जुन ने अश्वत्थामाके इन्द्र जालको देख महेन्द्रास्त्रसे उसे काट दिया और अपने बाणों से अश्वत्थामाके रथको छा दिया॥ अर्जुन के बाणोंसे पीडित होकर अश्वत्थामा

क्षणात्श्वावित्समरूपो बभूव समार्दितो मद्विसृष्टैः पृषत्कैः ॥ १० ॥
स विक्षरन्रुधिरं सर्वगात्रे रथानीकं सूतसूनोर्विवेश।
मयाभिभूतान्सैनिकानां प्रबर्हानसौ प्रपश्यन्रुधिरप्रदिग्धान् ॥ ११ ॥
ततोऽभिभूतं युधि वीक्ष्य सैन्यं वित्रस्तयोधं द्रुतवाजिनागम्।
पञ्चाशता रथमुख्यैः समेत्य कर्णस्त्वरन्मामुपायात्प्रमाथी ॥ १२ ॥
तान्सूदयित्वाहमपास्य कर्णं द्रष्टुं भवन्तं त्वरयाभियातः।
सर्वे पञ्चाला ह्युद्विजन्ते स्म कर्णं दृष्ट्वा गावः केसरिणं यथैव ॥ १३ ॥
मृत्योरास्यं व्यात्तमिवाभिपद्य प्रभद्रकाः कर्णमासाद्य राजन्।
रथांस्तु तान्सप्तशतानिमग्नांस्तदा कर्णः प्राहिणोन्मृत्युसद्म ॥ १४ ॥
न चाप्यभूत्क्लान्तमनाः स राजन्यावन्नास्मान्दृष्टवान्सूतपुत्रः।
श्रुत्वा तु त्वां तेन दृष्टं समेतमश्वत्थाम्ना पूर्वतरं क्षतं च ॥ १५ ॥
मन्ये कालमपयानस्य राजन्क्रूरात्कर्णात्तेऽहमचिन्त्यकर्मन्।
मया कर्णस्यास्त्रमिदं पुरस्ताद्युद्धे दृष्टं पाण्डव चित्ररूपम् ॥ १६ ॥
न ह्यन्ययोद्धा विद्यते सृञ्जयानां महारथं योऽद्य सहेत कर्णम्।
शैनेयो मे सात्यकिश्चक्ररक्षौ धृष्टद्युम्नश्चापि तथैव राजन् ॥ १७ ॥

---

तीस बाण अश्वत्थामाके शरीरमें मारे, उन बाणोंके लगनेसे अश्वत्थामाका शरीर भेड़ियेके तुल्य हो गया ॥ तब उसके शरीरसे रुधिर बहने लगा, अनन्तर मेरे बाणोंसे अपनी सेनाको व्याकुल तथा सब वीरोंको त्रस्त और हाथी घोड़ोंको भागते देख पचास मुख्य वीरोंके सहित हमसे युद्ध करनेको कर्ण आये, परन्तु मैं उस सब सेनाको मारकर और कर्णको छोड़ आपके दर्शन करनेको चला आया हूं। जैसे सिंहको देखकर गौ भागती है, वैसेही पांचाल सेना कर्णको देखकर भागती है (१०-१३)

जैसे मृत्युके मुखमें पड़कर कोई नहीं बचता ऐसे ही कर्णके आगे जाकर सात सौ प्रभद्रक वंशी क्षत्री मारे गये ॥ हे राजन्! इतना युद्ध करने पर भी उसने जबतक मुझे नहीं देखा तबतक घबड़ाया नहीं। हे अचिन्त्य कर्म करनेवाले महाराज! मैंने यह जाना कि पहले अश्वत्थामाके अस्त्रोंसे क्षत विक्षत हुए आपको दुष्ट कर्णने बहुत ही दुःख दिया है ॥ इससे क्रूर कर्णके आगेसे आपको उस समय भागना ही उचित था, क्यों कि मैंने इसकी अस्त्रविद्या पहले युद्धमें देखी थी ॥ (१५-१६)

महाराज! शैनी सात्यकि और धृष्टद्युम्न मेरे पहियोंकी रक्षा करते हैं, इसी प्रकार वीर

पाण्डवैस्तु महाराज धार्तराष्ट्री महाचमूः ।
पुनः पुनरथो वीरैः संयुगे जितकाशिभिः ॥ ३४ ॥
पश्यतां ते महाराज पुत्राणां चित्रयोधिनाम् ।
शकुनेः सौवलेयस्य कर्णस्य च विशाम्पते ॥ ३५ ॥
वार्यमाणा महासेना पुत्रैस्तव जनेश्वर ।
न चातिष्ठत संग्रामे पीड्यमाना समन्ततः ॥ ३६ ॥
ततो योधैर्महाराज पलायद्भिः समन्ततः ।
अभवद्व्याकुलं भीतं पुत्राणां ते महद्बलम् ॥ ३७ ॥
तिष्ठतिष्ठेति च ततः सूतपुत्रस्य जल्पतः ।
नावतिष्ठति सा सेना वध्यमाना महात्मभिः ॥ ३८ ॥
अथोत्क्रुष्टं महाराज पाण्डवैर्जितकाशिभिः ।
धार्तराष्ट्रबलं दृष्ट्वा विद्रुतं वै समन्ततः ॥ ३९ ॥
ततो दुर्योधनः कर्णमब्रवीत्प्रणयादिव ।
पश्य कर्ण महासेना पञ्चालैरर्दिता भृशम् ॥ ४० ॥
त्वयि तिष्ठति सन्त्रासात्पलायनपरायणा ।
एतज्ज्ञात्वा महाबाहो कुरु प्राप्तमरिन्दम ॥ ४१ ॥
सहस्राणि च योधानां त्वामेव पुरुषोत्तम ।

वाण चलाती हुई पीछे दौडी, पाण्डवोंने भी तुम्हारी सेनाका वार वार नाश किया । (३३—३४)

उस समय विचित्र युद्ध करनेवाले तुम्हारे पुत्र, शकुनि और कर्ण देखते ही रह गये । पाण्डवोंकी सेनासे पीडित होकर तुम्हारी सेना तुम्हारे पुत्र रोकते थे तौ भी किसी प्रकार खडी न हुई, वे सब योद्धा चारों ओर भागने लगे, उस समय तुम्हारे पुत्रोंकी वडी सेना डरके मारे व्याकुल होगयी ॥ यद्यपि कर्ण सेनाको वहुत रोकते रहे, परन्तु वह सेना महात्मा पाण्डवोंके द्वारा मारी जानेसे व्याकुल होकर खडी न रह सकी ॥ (३५–३८)

तुम्हारी सेनाको भागते देख पाण्डवोंकी विजयी सेना गर्जने लगी ॥ तब दुर्योधनने कर्णसे विनय सहित कहा, हे कर्ण ! यह देखो हमारी सेना पाञ्चालोंके भयसे भागी जाती है। हे शत्रुनाशन ! तुम्हारे आगे भी हमारी सेनाकी यह दुर्दशा हो रही है यह महाशोककी वात है, अव जो कुछ करने योग्य हो सो कहो ॥ हे वीर ! हे पुरुषोत्तम !

विप्रद्रुता तात चमूस्त्वदीया तिरस्कृता चाद्य यथा न साधु।
भीतो भीमं त्यज्य चायास्तथा त्वं यन्नाशकः कर्णमथो निहन्तुम् ॥ २ ॥
स्नेहस्त्वया पार्थकृतः पृथाया गर्भं समाविश्य यथा न साधु।
त्यक्त्वा रणे यदपायाः स भीमं यन्नाशकः सूतपुत्रं निहन्तुम् ॥ ३ ॥
यत्तद्वाक्यं द्वैतवने त्वयोक्तं कर्णं हन्तास्म्येकरथेन सत्यम्।
त्यक्त्वा तं वै कथमद्यापयातः कर्णाद्भीतो भीमसेनं विहाय॥ ४ ॥
इदं यदि द्वैतवनेऽप्यचक्षः कर्णं योद्धुं न प्रशक्ष्ये नृपेति।
वयं ततः प्राप्तकालं च सर्वे कृत्यानुपैष्याम तथैव पार्थ ॥ ५ ॥
मयि प्रतिश्रुत्य वधं हि तस्य न वै कृतं तच्च तथैव वीर।
आनीय नः शत्रुमध्यं स कस्मात्समुत्क्षिप्य स्थण्डिले प्रत्यपिंष्ठाः॥ ६ ॥
अप्याशिष्म वयमर्जुन त्वयि यियासवो बहुकल्याणमिष्टम्।
तन्नः सर्वं विफलं राजपुत्र फलार्थिनां विफल इवातिपुष्पः ॥ ७ ॥
प्रच्छादितं बडिशमिवामिषेण संछादितं गरलमिवाशनेन।

क्रोध करके अर्जुनसे ऐसे बोले ॥ हे प्यारे अर्जुन! तुम्हारी सेना तिरस्कृत होकर भागी जाती है, यह अच्छा नहीं। जब तुम कर्णको नहीं मार सके, तब भीमसेनको एकला छोड कर्णके डरसे हमारे पास भाग आये हो॥ तुम भीमसेनको अकेला छोड युद्धसे भाग आये, इससे तुमने कुन्तीके गर्भमें वृथा ही जन्म लिया। हमें निश्चय है, कि जब तुम कर्णको नहीं मार सके तभी तुम भागे॥ (१—३)

तुमने जो द्वैतवनमें प्रतिज्ञा की थी कि हम एकले ही कर्णको मारेंगे, सो आज उस वचनको मिथ्याकर भीमसेनको एकला छोड कर्णके डरसे क्यों भाग आये? हे अर्जुन! यदि तुम हम-से वनमें कहते कि, हे महाराज! हम कर्णसे युद्ध नहीं कर सकेंगे, तो हम समयानुसार कुछ और ही प्रबन्ध कर लेते॥ हे अर्जुन! तुमने मेरे सामने कर्णके वधकी प्रतिज्ञा की थी, परन्तु प्रतिज्ञाके अनुसार कोई भी कार्य न करके अब तुम रणभूमिपर आये हुए हम लोगोंको भूमिपर पटक कर विशीर्ण करनेका कार्य कर रहे हो॥ (४—६)

हे वीर! हमको निश्चय था, कि तुमने कर्णको मारा परन्तु वैसा नहीं हुआ। हे राजपुत्र! हमने अपने कल्याणके लिये सदा ही तुमको शिक्षा दी थी, परन्तु तुमने आज हमारे उस परिश्रमको नष्ट कर दिया। जैसे माली वृक्षको पालता है और उसपर बहुत फूल

रथैश्चापि नरव्याघ्र नरैश्चैव समन्ततः ॥ ५१ ॥
प्राकम्पत मही राजन्निहतैस्तैः समन्ततः ।
व्याकुलं सर्वमभवत्पाण्डवानां महद्बलम् ॥ ५२ ॥
कर्णस्त्वेको युधां श्रेष्ठो विधूम इव पावकः ।
दहञ्शत्रून्नरव्याघ्र शुशुभे स परन्तपः ॥ ५३ ॥
ते वध्यमानाः कर्णेन पञ्चालाश्चेदिभिः सह ।
तत्र तत्र व्यमुह्यन्त वनदाहे यथा द्विपाः ॥ ५४ ॥
चुकुशुश्च नरव्याघ्र यथा व्याघ्रा नरोत्तमाः ।
तेषां तु क्रोशतामासीद्भीतानां रणमूर्द्धनि ॥ ५५ ॥
धावतां च ततो राजंस्त्रस्तानां च समन्ततः ।
आर्तनादो महांस्तत्र भूतानामिव सम्प्लवे ॥ ५६ ॥
वध्यमानांस्तु तान्दृष्ट्वा सूतपुत्रेण मारिष ।
वित्रेसुः सर्वभूतानि तिर्यग्योनिगतान्यपि ॥ ५७ ॥
ते वध्यमानाः समरे सूतपुत्रेण सृञ्जयाः ।
अर्जुनं वासुदेवं च क्रोशन्ति च मुहुर्मुहुः ॥ ५८ ॥
प्रेतराजपुरे यद्वत्प्रेतराजं विचेतसः ।
श्रुत्वा तु निनदं तेषां वध्यतां कर्णसायकैः ॥ ५९ ॥
अथाब्रवीद्वासुदेवं कुन्तीपुत्रो धनञ्जयः ।

हे पुरुषसिंह ! अनेक हाथी, घोडे रथ और मनुष्य कट कटकर गिर गये, उनके गिरनेसे पृथ्वी कांपने लगी और सब सेना व्याकुल होगयी। एकले शत्रु-नाशन कर्ण धुवांरहित अग्निके समान पाण्डवोंकी सेनाको जलाने लगे । जैसे वनमें आग लगनेसे हाथी भागते हैं, ऐसे ही कर्णके बाणोंसे व्याकुल होकर चेदि और पाञ्चालसेना भागी॥(५१-५४)

वे सब हाहाकार करके इधर उधर भागने लगे । जैसे प्रलय कालमें सब जगत् हाहाकार करता है, ऐसे ही वह पाण्डवोंकी सेना डरकर हाहाकार करने लगी । इस प्रकार कर्णके हाथसे पाण्ड-वोंकी सेनाका नाश होते देख सब पशु पक्षी भी डरने लगे ॥ (५५-५७)

कर्णके बाणोंसे व्याकुल होकर सृञ्जय और पाञ्चाल बार बार कृष्ण और अर्जुन को पुकारने लगे ॥ जैसे यमराज अपनी पुरीमें दुःखियोंका शब्द सुनते हैं, तैसे ही अर्जुनने कर्णके बाणोंसे व्याकुल हुई अपनी सेनाका शब्द सुना और यह

इत्यन्तरिक्षे शतशृङ्गमूर्ध्नि तपस्विनां शृण्वतां वागुवाच ।
एवंविधं तच्च नाभूत्तथा च देवापि नूनमनृतं वदन्ति ॥ १५ ॥
तथा परेषामृषिसत्तमानां श्रुत्वा गिरः पूजयतां सदा त्वाम् ।
न संनतिं प्रैमि सुयोधनस्य न त्वा जानाम्याधिरथेर्भयार्तम् ॥ १६ ॥
पूर्वं यदुक्तं हि सुयोधनेन न फाल्गुनः प्रमुखे स्थास्यतीति ।
कर्णस्य युद्धे हि महाबलस्य मौर्ख्यात्तु तन्नावबुद्धं मयासीत् ॥ १७ ॥
तेनाद्य तप्स्ये भृशमप्रमेयं यच्छत्रुवर्गं नरकं प्रविष्टः ।
तदैव वाच्योऽस्मि ननु त्वयाहं न योत्स्येऽहं सूतपुत्रं कथञ्चित् ॥ १८ ॥
ततो नाहं सृञ्जयान्केकयांश्च समानयेयं सुहृदो रणाय ।
एवं गते किञ्च मयाद्य शक्यं कार्यं कर्तुं विग्रहे सूतजस्य ॥ १९ ॥
तथैव राज्ञश्च सुयोधनस्य ये वापि मां योद्धुकामाः समेताः ।
धिगस्तु मज्जीवितमद्य कृष्ण योऽहं वशं सूतपुत्रस्य यातः ॥ २० ॥
मध्ये कुरूणां सुहृदां च मध्ये ये चाप्यन्ये योद्धुकामाः समेताः ।
यदि स्म जीवेत्स भवेन्निहन्ता महारथानां प्रवरो रथोत्तमः ।
तवाभिमन्युस्तनयोऽद्य पार्थ न चास्मि गन्ता समरे पराभवम् ॥ २१ ॥

के ऊपर ऋषियोंके आगे वनमें सुनी थी, परन्तु वह सत्य न हुई। इससे हमें निश्चय होता है कि देवता भी झूठ बोलते हैं ॥ (१३–१५)

और भी ऋषियोंके मुखसे तुम्हारी प्रशंसा सुनकर हमने सदा तुम्हारा सत्कार किया और कभी दुर्योधनका भय नहीं माना परन्तु हम नहीं जानते थे, कि तुम कर्णसे डरकर भाग आओगे। पहले जो दुर्योधनने कहा था, कि महाबलवान् कर्णके आगे अर्जुन नहीं ठहर सकेंगे, सो मैने मूर्खतासे उस वचनको नहीं माना था, इसीसे मैं इस समय इस घोर आपत्तिमें पड़ा हूं, यदि तुम हमसे पहले ही कह देते, कि हम कर्णसे युद्ध नहीं करेंगे, तो हम आज इस दुःखको क्यों भोगते ॥ (१६–१८)

यदि मैं पहले यह जानता तो अपने मित्र केकय और सृञ्जयोंको युद्धके लिये क्यों बुलाता? अब कर्णसे युद्ध होने लगा। इस समयमें क्या कर सकता हूं?॥ हे कृष्ण! मुझे धिक्कार है कि दुर्योधनकी ओरसे जो वीर आये उनको जीतकर सूतपुत्रसे हार गया॥ जिस समय कर्णने मुझे जीता था। तब सब कौरव और हमारे मित्र तथा अनेक योद्धा देखते थे। यदि आज महारथोंके जीतनेवाला महा पराक्रमी अभिमन्यु जीता होता

गच्छन्नेव तु कौन्तेयो धर्मराजदिदृक्षया ।
सैन्यमालोकयामास नापश्यत्तत्र चाग्रजम् ॥ ६९ ॥
युद्धं कृत्वा तु कौन्तेयो द्रोणपुत्रेण भारत ।
दुःसहं वज्रिणा सङ्ख्ये पराजित्य गुरोः सुतम् ॥७०॥[३२४६]

इति श्रीमहाभारते शतसाहस्र्य संहितायां वैयासिक्यां कर्णपर्वणि धर्मराजशोधने चतुःषष्टितमोऽध्यायः॥ ६४ ॥

सञ्जय उवाच— द्रौणिं पराजित्य ततोऽग्रधन्वा कृत्वा महद्दुष्करं शूरकर्म ।
आलोकयामास ततः स्वसैन्यं धनञ्जयः शत्रुभिरप्रधृष्यः ॥ १ ॥
अयुध्यमानान्पृतनामुखस्थाञ्शूरः शूरान्हर्षयन्सव्यसाची ।
पूर्वप्रहारैर्मथितान्प्रशंसन्स्थितान्महात्मा स रथाननेकान् ॥ २ ॥
अपश्यमानस्तु किरीटमाली युधिष्ठिरं भ्रातरमाजमीढम् ।
उवाच भीमं तरसाभ्युपेत्य राज्ञः प्रवृत्तिं त्विह कुत्र राजा ॥ ३ ॥
भीमसेन उवाच– अपयात इतो राजा धर्मपुत्रो युधिष्ठिरः ।
कर्णबाणाभितप्ताङ्गो यदि जीवेत्कथश्चन ॥ ४ ॥
अर्जुन उवाच— तस्माद्भवाञ्शीघ्रमितः प्रयातु राज्ञः प्रवृत्त्यै कुरुसत्तमस्य ।
नूनं स विद्धोऽतिभृशं पृषत्कैः कर्णेन राजा शिबिरं गतोऽसौ ॥ ५ ॥

देखने चले, मार्गमें अर्जुन सेनाको देखते चले गये, परन्तु युधिष्ठिरको कहीं न पाया। इन्द्रके समान पराक्रमी महाधनुषधारी गुरुपुत्र अश्वत्थामाको जीतकर युधिष्ठिरके दर्शनको चले गये ॥ ( ६८–७० ) [३२४६]

कर्णपर्वमें चौंसठ अध्याय समाप्त ।

कर्णपर्वमें पैंसठ अध्याय ।

सञ्जय बोले, हे राजन् ! महाधनुषधारी शत्रुओंके नाश करनेवाले अर्जुन अश्वत्थामाको जीतकर और कठिनतासे करने योग्य घोर कर्म करके अपनी सेनाको देखने लगे ॥ अनन्तर सेनाके मुखमें खडे युद्ध करते वीरोंका उत्साह बढाकर पहले मरे वीरोंकी प्रशंसा करने लगे ॥ और जीते हुए रथोंमें बैठे हुए वीरोंकी अनेक प्रशंसा की, महाराज युधिष्ठिरको सेनामें न देखकर शीघ्रता सहित भीमसेनके पास जा कर पूछा, महाराज कहां ? और कैसे हैं ? ( १–३ )

भीमसेन बोले, कर्णके बाणोंसे व्याकुल धर्मराज युधिष्ठिर यहांसे चले गये है । परन्तु जीते हैं, या नहीं सो हम नहीं कह सक्ते ॥ (४)

अर्जुन बोले, हे कुरुश्रेष्ठ ! आप शीघ्र युद्ध छोडकर महाराजके पास चलिये,

द्रष्टा लोकः पतितानप्यगाधे पापैर्जुष्टं नरके पाण्डवेय ।
मासेऽपतिष्यः पञ्चमे त्वं सुकृच्छ्रे न वा गर्भे आभविष्यः पृथायाः ॥२९॥
यत्ते श्रेयो राजपुत्राभविष्यन्न चेत्संग्रामादपयानं दुरात्मन् ।
धिग्गाण्डीवं धिक् च ते बाहुवीर्यमसङ्ख्येयान्बाणगणांश्च धिक्ते ।
धिक्ते केतुं केसरिणः सुतस्य कृशानुदत्तं च रथं च धिक्ते ॥३०॥[३३७०]

इति श्रीमहाभारते० संहितायां वैयासिक्यां कर्णपर्वणि युधिष्ठिरक्रोधवाक्येऽष्टषष्टितमोऽध्यायः ॥ ६८ ॥

सञ्जय उवाच— युधिष्ठिरेणैवमुक्तः कौन्तेयः श्वेतवाहनः ।
अर्सि जग्राह संक्रुद्धो जिघांसुर्भरतर्षभम् ॥ १ ॥
तस्य कोपं समुद्वीक्ष्य चित्तज्ञः केशवस्तदा ।
उवाच किमिदं पार्थ गृहीतः खड्ग इत्युत ॥ २ ॥
नहि पश्यामि योद्धव्यं त्वया किञ्चिद्धनञ्जय ।
ते ग्रस्ता धार्तराष्ट्रा हि भीमसेनेन धीमता ॥ ३ ॥
अपयातोऽसि कौन्तेय राजा द्रष्टव्य इत्यपि ।
स राजा भवता दृष्टः कुशली च युधिष्ठिरः ॥ ४ ॥
स दृष्ट्वा नृपशार्दूलं शार्दूलसमविक्रमम् ।
हर्षकाले च सम्प्राप्ते किमिदं मोहकारितम् ॥ ५ ॥

पुत्र, स्त्री और राज्यसे भ्रष्ट सब लोक क्यों देखता? और हम इस घोर पापमें क्यों पडते? अरे दुरात्मा राजपुत्र! तू युद्धको छोड कर भाग आया। यह अच्छा नहीं किया। इसलिये तेरे गाण्डीव धनुष, बाहुबल और असंख्य बाणोंको धिक्कार है। तेरी, वानरध्वजाको धिक्कार है और अग्निके दिये हुए रथको भी धिक्कार है॥ (२७-३०) [३३७०]

कर्णपर्वमें अडसठ अध्याय समाप्त ।

कर्णपर्वमें उनहत्तर अध्याय ।

सञ्जय बोले, हे राजन्! कुन्तीपुत्र अर्जुनने युधिष्ठिरके ऐसे वचन सुन क्रोध करके उनके मारनेके लिये खड्ग उठाया॥ उनकी चेष्टा देखकर और मनका भाव समझ कर श्रीकृष्ण बोले, हे अर्जुन! यह क्या है? तुमने यहां खड्ग क्यों उठाया? सब धृतराष्ट्रके पुत्रोंको बुद्धिमान भीमसेन मार ही रहे हैं तब तुम यहां किससे लडनेको खड्ग उठाते हो? हमें तुम्हारा शत्रु यहां कोई नहीं दीखता॥ (१-३)

तुम युद्धमें यह कहकर आये थे कि, हम महाराजके दर्शन करने जाते हैं। सो तुमने कुशल सहित महाराजके दर्शन किये। तुमने शार्दूलके समान पराक्रमी

अजातशत्रुं राजानं द्रष्टुमिच्छामि केशव ॥ १३ ॥
सञ्जय उवाच– ततो हयान्सर्वदाशार्हमुख्यः प्रचोदयन्भीममुवाच चेदम् ।
नैतच्चित्रं तव कर्माद्य भीम यास्याम्यहं जहि पार्थारिसङ्घान् ॥ १४ ॥
ततो ययौ हृषीकेशो यत्र राजा युधिष्ठिरः ।
शीघ्राच्छीघ्रतरं राजन्वाजिभिर्गरुडोपमैः ॥ १५ ॥
प्रत्यनीके व्यवस्थाप्य भीमसेनमरिन्दमम् ।
सन्दिश्य चैतं राजेन्द्र युद्धं प्रति वृकोदरम् ॥ १६ ॥
ततस्तु गत्वा पुरुषप्रवीरौ राजानमासाद्य शयानमेकम् ।
रथादुभौ प्रत्यवरुह्य तस्माद्ववन्दतुर्धर्मराजस्य पादौ ॥ १७ ॥
तं दृष्ट्वा पुरुषव्याघ्रं क्षेमिणं पुरुषर्षभम् ।
मुदाभ्युपगतौ कृष्णावश्विनाविव वासवम् ॥ १८ ॥
तावभ्यनन्दद्राजापि विवस्वानश्विनाविव ।
हते महासुरे जम्भे शक्रविष्णू यथा गुरुः ॥ १९ ॥
मन्यमानो हतं कर्णं धर्मराजो युधिष्ठिरः ।
हर्षगद्गदया वाचा प्रीतः प्राह परन्तपः ॥ २० ॥
सञ्जय उवाच– अथोपयातौ पृथुलोहिताक्षौ शराचिताङ्गौ रुधिरप्रदिग्धौ ।

आप महाराजके दर्शनको चलिये । हे केशव ! हम महाराज युधिष्ठिरके दर्शन करना चाहते हैं । इसलिये आप इस समुद्रके समान सेनाको छोडकर महाराज के पास चलिये ॥ (१०-१३)

सञ्जय बोले, हे राजन् ! तब सब यदुकुलश्रेष्ठ श्रीकृष्णने घोडोंको हांका और चलते समय भीमसेनसे कहा कि, यह कर्म आपके लिये कुछ भारी नहीं है, अब आप शत्रुओंका नाश कीजिये हम जाते हैं ॥ (१४)

तब श्रीकृष्णने महाराजको देखनेके लिये घोडोंको बहुत शीघ्र हांका और उस सब सेना और युद्धका भार भीमसेन के सिर पर छोड कर चले ॥ (१५-१६)

महाराजके पास जाकर दोनों वीर रथसे उतरे और पलङ्गपर एकले लेटे हुए धर्मराजके चरणोंको प्रणाम की ॥ (१७)

इन दोनों वीरोंने राजा युधिष्ठिरको कुशलतासे युक्त देखकर ऐसे प्रसन्न हुए जैसे इन्द्रको देख अश्विनीकुमार । जैसे जम्भासुरके मरनेके पश्चात् बृहस्पतिने विष्णु और इन्द्रका सत्कार किया था, ऐसे ही युधिष्ठिरने कृष्ण और अर्जुनका सत्कार किया ॥ शत्रुनाशन युधिष्ठिरने जाना कि कर्ण मर गये । तब प्रसन्न

किं वा त्वं मन्यसे प्राप्तमस्मिन्काल उपस्थिते।
त्वमस्य जगतस्तात वेत्थ सर्वं गतागतम् ॥ १४ ॥
तत्तथा प्रकरिष्यामि यथा मां वक्ष्यते भवान्।

सञ्जय उवाच— धिग्धिगित्येव गोविन्दः पार्थमुक्त्वाब्रवीत्पुनः ॥१५॥

कृष्ण उवाच— इदानीं पार्थ जानामि न वृद्धाः सेवितास्त्वया।
कालेन पुरुषव्याघ्र संरम्भं यद्भवानगात् ॥ १६ ॥
नहि धर्मविभागज्ञः कुर्यादेवं धनञ्जय।
यथा त्वं पाण्डवाद्येह धर्मभीरुरपण्डितः ॥ १७ ॥
अकार्याणां क्रियाणां च संयोगं यः करोति वै।
कार्याणामक्रियाणां च स पार्थ पुरुषाधमः ॥ १८ ॥
अनुसृत्य तु ये धर्मं कथयेयुरुपस्थिताः।
समासविस्तरविदां न तेषां वेत्सि निश्चयम् ॥ १९ ॥
अनिश्चयज्ञो हि नरः कार्याकार्यविनिश्चये।
अवशो मुह्यते पार्थ यथा त्वं मूढ एव तु ॥ २० ॥
नहि कार्यमकार्यं वा सुखं ज्ञातुं कथञ्चन।
श्रुतेन ज्ञायते सर्वं तच्च त्वं नावबुध्यसे ॥ २१ ॥

युधिष्ठिरको मारकर सत्य पालन करेंगे, तथा शोक और दुःखोंसे रहित होंगे, अथवा आप बताइये इस समय हमें क्या करना चाहिये? क्यों कि आप सब जगत्के व्यवहारोंको जानते है। आप जैसा कहेंगे हम वैसा ही करेंगे। (१२-१५)

सञ्जय बोले, हे राजन्! तब श्रीकृष्णने अर्जुनसे कहा, कि तुम्हें धिक्कार है॥ हे अर्जुन! तुम्हें इतने शीघ्र क्रोध आगया इससे हमें ज्ञात पडता है, कि तुमने वृद्धोंकी सेवा नहीं की॥ हे अर्जुन! जैसे मूर्ख तुम हो ऐसा जगतमें और कोई नहीं, ऐसा बुरा कर्म कौन बुद्धिमान कर सक्ता है? हे अर्जुन! जो काम नहीं करने योग्य है उसको करनेवाला और करने योग्य कामको न करनेवाला मनुष्य नीच कहाता है॥ जो विस्तार और संक्षेपको जाननेवाले महात्मा धर्म वर्णन करते हैं तुम उनके सिद्धान्तोंको नहीं जानते॥ जो मनुष्य करने योग्य कामोंको नहीं जानता वह परवश होकर दुर्दशामें पडता है। इस समय तुम भी हमें मूर्खके समान दीखते हो॥ (१५-२०)

कोई मनुष्य केवल अपनी बुद्धिसे करने और न करने योग्य कामको नहीं जानता केवल विद्यासेही जान सकता

हन्तारं परसैन्यानाममित्रगणमर्दनम् ॥ ५ ॥
दुर्योधनहिते युक्तमस्मद्दुःखाय चोद्यतम् ।
अप्रधृष्यं महायुद्धे देवैरपि सवासवैः ॥ ६ ॥
अनलानिलयोस्तुल्यं तेजसा च बलेन च ।
पातालमिव गम्भीरं सुहृदां नन्दिवर्धनम् ॥ ७ ॥
अन्तकं मम मित्राणां हत्वा कर्णं महामृधे ।
दिष्ट्या युवामनुप्राप्तौ जित्वासुरमिवामरौ ॥ ८ ॥
घोरं युद्धमदीनेन मया ह्यद्याच्युतार्जुनौ ।
कृतं तेनान्तकेनेव प्रजाः सर्वा जिघांसता ॥ ९ ॥
तेन केतुश्च मे छिन्नो हतौ च पार्ष्णिसारथी ।
हतावाहस्ततश्चास्मि युयुधानस्य पश्यतः ॥ १० ॥
धृष्टद्युम्नस्य यमयोर्वीरस्य च शिखण्डिनः ।
पश्यतां द्रौपदेयानां पञ्चालानां च सर्वशः ॥ ११ ॥
एताञ्जित्वा महावीर्यः कर्णः शत्रुगणान्बहून् ।
जितवान्मां महाबाहो यतमानो महारणे ॥ १२ ॥
अभिसृत्य च मां युद्धे परुषाण्युक्तवान्बहु ।

के आगे चलते थे । जो सदा शत्रुओंकी सेनाका और शत्रुगणका नाश करते थे, इनको देवतोंके सहित इन्द्र भी युद्धमें नहीं जीत सक्ते थे । यही सदा दुर्योधन के कल्याणके लिये हमें दुःख दिया करते थे ॥ (४—६)

ये बल और तेजमें वायु और अग्निके समान थे, गम्भीरतामें पातालके समान थे, इनको देख सब मित्र प्रसन्न होते थे। जैसे राक्षसोंको जीत कर दो देवता इन्द्र-के पास जाते हैं, ऐसे ही हमारे मित्रोंके मारनेवाले, कर्णको जीत कर तुम प्रारब्ध से हमारे पास आये हो । आज मैंने भी उससे घोर युद्ध किया था, परन्तु जैसे प्रलयकालमें यमराज प्रजाका नाश करते हैं, ऐसे ही उसने हमारी सेनाका नाश किया ॥ (७–९)

उन्होंने सात्यकिके आगे ही मेरी ध्वजा काट दी । सारथी, पार्ष्णि और घोडोंको मार डाला । द्रौपदीके पांचों पुत्र, महावीर धृष्टद्युम्न, नकुल, सह-देव और सब पाञ्चाल योद्धा देखते ही रह गये ॥ हे महाबाहो ! अनेक यत्न करने पर भी इन सबको जीतकर कर्णने मुझे जीत लिया ॥ फिर हमारे पास आ-कर उस महा योद्धाने अनेक दुर्वचन

विदुरो वा तथा क्षत्ता कुन्ती वापि यशस्विनी।
तत्ते वक्ष्यामि तत्त्वेन निबोधैतद्धनञ्जय ॥ ३० ॥
सत्यस्य वदिता साधुर्न सत्याद्विद्यते परम्।
तत्त्वेनैव सुदुर्ज्ञेयं पश्य सत्यमनुष्ठितम् ॥ ३१ ॥
भवेत्सत्यमवक्तव्यं वक्तव्यमनृतं भवेत्।
यत्रानृतं भवेत्सत्यं सत्यं चाप्यनृतं भवेत् ॥ ३२ ॥
विवाहकाले रतिसम्प्रयोगे प्राणात्यये सर्वधनापहारे।
विप्रस्य चार्थे ह्यनृतं वदेत पञ्चानृतान्याहुरपातकानि ॥ ३३ ॥
सर्वस्वस्यापहारे तु वक्तव्यमनृतं भवेत्।
तत्रानृतं भवेत्सत्यं सत्यं चाप्यनृतं भवेत्।
तादृशं पश्यते बालो यस्य सत्यमनुष्ठितम् ॥ ३४ ॥
भवेत्सत्यमवक्तव्यं न वक्तव्यमनुष्ठितम्।
सत्यानृते विनिश्चित्य ततो भवति धर्मवित् ॥ ३५ ॥
किमाश्चर्यं कृतप्रज्ञः पुरुषोऽपि सुदारुणः।
सुमहत्प्राप्नुयात्पुण्यं बलाकोऽन्धवधादिव ॥ ३६ ॥

धर्मकी एक कथा कहते हैं। इस कथाको केवल भीष्म और युधिष्ठिर ही कह सक्ते है। इस कथाको विदुर और यशस्विनी कुन्ती भी जानती है। सो यह गुप्त कथा हम तुमसे कहते हैं॥ (२७-३०)

हे अर्जुन! सत्यवादी महात्मा कहाता है और सत्यसे बढकर कोई धर्म भी नहीं है। परन्तु सत्यके तत्त्वको जानना बडा कठिन है। कहीं बात कहनेसे सत्य रहती है और कहीं न कहनेसे सत्य रहती है और कहनेसे झूंठ होजाती है। कहीं कहनेसे सत्य और न कहनेसे झूंठ होजाती है॥ शास्त्रमें इन पांच जगह झूंठ बोलनेसे पाप नहीं होता यह कहा है, विवाहमें, स्त्री प्रसङ्गमें, किसीके प्राण जानेके समयमें, सर्व धन छिननेमें और ब्राह्मणके हितके लिये झूंठ बोलना उचित है। इन स्थानोंपर झूंठ बोलनेसे पातक नहीं होता॥ (३१-३३)

मूर्ख मनुष्य जिन कारणोंसे अपनी वाणीको सत्य ठहराता है, उन्हीं कारणोंसे वही वाणी झूंठ होजाती है, बिना कही सब वाणी सत्य ही है और जो काम कर चुके, उसे कहना चाहिये। इस प्रकार जो सत्य और असत्यका विचार करता है वही धर्मात्मा कहाता है। क्या आश्चर्य है कि कभी दुष्ट मनुष्य भी उत्तम गतिको प्राप्त होजाता है। जैसे

न प्राप्तपूर्वं यद्भीष्मात्कृपाद् द्रोणाच्च संयुगे ।
तत्प्राप्तमद्य मे युद्धे सूतपुत्रान्महारथात् ॥ २२ ॥
स त्वां पृच्छामि कौन्तेय यथाद्य कुशलं तथा ।
तन्ममाचक्ष्व कार्त्स्न्येन यथा कर्णो हतस्त्वया ॥ २३ ॥
शक्रतुल्यबलो युद्धे यमतुल्यः पराक्रमे ।
रामतुल्यस्तथास्त्रेण स कथं वै निषूदितः ॥ २४ ॥
महारथः समाख्यातः सर्वयुद्धविशारदः ।
धनुर्धराणां प्रवरः सर्वेषामेकपूरुषः ॥ २५ ॥
पूजितो धृतराष्ट्रेण सपुत्रेण विशाम्पते ।
त्वदर्थमेव राधेयः स कथं निहतस्त्वया ॥ २६ ॥
धार्तराष्ट्रो हि योधेषु सर्वेष्वेव सदार्जुन ।
तव मृत्युं रणे कर्णं मन्यते पुरुषर्षभ ॥ २७ ॥
स त्वया पुरुषव्याघ्र कथं युद्धे निषूदितः ।
तन्ममाचक्ष्व कौन्तेय यथा कर्णो हतस्त्वया ॥ २८ ॥
युध्यमानस्य च शिरः पश्यतां सुहृदां हृतम् ।
त्वया पुरुषशार्दूल सिंहेनेव यथा रुरोः ॥ २९ ॥
यः पर्युपासीत्प्रदिशो दिशश्च त्वां सूतपुत्रः समरे परीप्सन् ।

दशा महारथ भीष्म और द्रोणाचार्यसे नहीं हो सकी थी, सो आज उसने मेरी दशा करदी ॥ (१९-२२)

हम तुमसे कुशल पूछते हैं । उसके पश्चात् हमसे कहो तुमने कर्णको कैसे मारा ? बलमें इन्द्रके समान, पराक्रममें यमराजके समान, अस्त्र विद्यामें परशुरामके समान कर्णको तुमने युद्धमें कैसे मारा ? कर्ण सब जगत्में महारथी कहके प्रसिद्ध था, सब युद्धोंमें बहुत कुशल था, सब धनुषधारियोंमें श्रेष्ठ और सब पुरुषोंमें एक पुरुष कहा जाता था ॥ २३-२५

हे अर्जुन ! पुत्रोंके सहित राजा धृतराष्ट्र तेरे मारनेके लिये ही जिसका सदा संमान करते थे उसी सूतपुत्र कर्णको तुमने कैसे मारा ? हे पुरुष श्रेष्ठ ! धृतराष्ट्र पुत्र दुर्योधन सब योद्धाओंमें कर्णको ही तेरे मृत्युका कारण मानता था, वही कर्ण तुम्हारे हाथसे युद्धमें कैसा मारागया वह मुझसे कहो ॥ (२६-२८)

हे पुरुषसिंह ! जैसे सिंह रुरु नामक हरिणको मारता है । वैसे तुमने आज सब मित्रोंके देखते रहते ही लढते हुए कर्णका शिर काटा है ॥ जो कर्ण सब

तद्भूत्वा सर्वभूतानामभावकृतनिश्चयम् ।
ततो बलाकः स्वरगादेवं धर्मः सुदुर्विदः ॥ ४५ ॥
कौशिकोऽप्यभवद्विप्रस्तपस्वी न बहुश्रुतः ।
नदीनां सङ्गमे ग्रामाददूरात्स किलावसत् ॥ ४६ ॥
सत्यं मया सदा वाच्यमिति तस्याभवद्व्रतम् ।
सत्यवादीति विख्यातः स तदासीद्धनञ्जय ॥ ४७ ॥
अथ दस्युभयात्केचित्तदा तद्वनमाविशन् ।
तत्रापि दस्यवः क्रुद्धास्तानमार्गन्त यत्नतः ॥ ४८ ॥
अथ कौशिकमभ्येत्य प्राहुस्ते सत्यवादिनम् ।
कतमेन पथा याता भगवन्बहवो जनाः ॥ ४९ ॥
सत्येन पृष्टः प्रब्रूहि यदि तान्वेत्थ शंस नः ।
स पृष्टः कौशिकः सत्यं वचनं तानुवाच ह ॥ ५० ॥
बहुवृक्षलतागुल्ममेतद्वनमुपाश्रिताः ।
इति तान्ख्यापयामास तेभ्यस्तत्त्वं स कौशिकः ॥५१॥
ततस्ते तान्समासाद्य क्रूरा जघ्नुरिति श्रुतिः ।
तेनाधर्मेण महता वाग्दुरुक्तेन कौशिकः ॥ ५२ ॥

को उत्पन्न हुआ था। बहुत तप करनेपर ब्रह्माने वरदान देते समय उसे अन्धा कर दिया था। बलाकने उसे मारकर सब जगत्की रक्षा की, इसीसे वह स्वर्गको प्राप्त हुआ सो धर्मकी गति बहुत कठिनतासे जानी जाती है॥ (४४-४५)

प्राचीन समयमें कौशिक नामक एक ब्राह्मण हुआ था वह तपस्वी तो था परन्तु पण्डित न था। नदीके तटपर गांवके पास रहा करता था॥ हे अर्जुन! उसने यह प्रतिज्ञा करली थी, कि मैं सदा सत्य ही बोलूंगा, इसलिये उसका नाम सत्यवादी प्रसिद्ध होगया था॥ एक दिन कई मनुष्य डाकुओंके डरसे उस वनमें आ छिपे, डाकू वहां भी यत्न करके उन्हें ढूंढने लगे॥ (४६-४८)

अनन्तर उन चोरोंने सत्यवादी कौशिकसे जाकर पूछा कि, हे भगवन्! इस मार्गसे कई मनुष्य गये हैं? यदि आप सदा सत्य बोलते हैं और उन्हें यदि आप जानते हैं तो कह दीजिये? तब कौशिकने सत्य सत्य कह दिया कि इस अनेक लता और वृक्ष वाले वनकी ओर वे गये है। हमने सुना है, तब उन चोरोंने दौडकर उन सबको मार डाला। इसी पापसे कौशिक धर्मको न जाननेे

न प्राप्तपूर्वं यद्भीष्मात्कृपाद् द्रोणाच्च संयुगे ।
तत्प्राप्तमद्य मे युद्धे सूतपुत्रान्महारथात् ॥ २२ ॥
स त्वां पृच्छामि कौन्तेय यथाद्य कुशलं तथा ।
तन्ममाचक्ष्व कात्स्न्र्येन यथा कर्णो हतस्त्वया ॥ २३॥
शक्रतुल्यबलो युद्धे यमतुल्यः पराक्रमे ।
रामतुल्यस्तथास्त्रेण स कथं वै निषूदितः ॥ २४ ॥
महारथः समाख्यातः सर्वयुद्धविशारदः ।
धनुर्धराणां प्रवरः सर्वेषामेकपूरुषः ॥ २५ ॥
पूजितो धृतराष्ट्रेण सपुत्रेण विशाम्पते ।
त्वदर्थमेव राधेयः स कथं निहतस्त्वया ॥ २६ ॥
धार्तराष्ट्रो हि योधेषु सर्वेष्वेव सदार्जुन ।
तव मृत्युं रणे कर्णं मन्यते पुरुषर्षभ ॥ २७ ॥
स त्वया पुरुषव्याघ्र कथं युद्धे निषूदितः ।
तन्ममाचक्ष्व कौन्तेय यथा कर्णो हतस्त्वया ॥ २८ ॥
युध्यमानस्य च शिरः पश्यतां सुहृदां हृतम् ।
त्वया पुरुषशार्दूल सिंहेनेव यथा रुरोः ॥ २९ ॥
यः पर्युपासीत्प्रदिशो दिशश्च त्वां सूतपुत्रः समरे परीप्सन् ।

दशा महारथ भीष्म और द्रोणाचार्यसे नहीं हो सकी थी, सो आज उसने मेरी दशा करदी ॥ (१९-२२)

हम तुमसे कुशल पूछते हैं। उसके पश्चात् हमसे कहो तुमने कर्णको कैसे मारा ? बलमें इन्द्रके समान, पराक्रममें यमराजके समान, अस्त्र विद्यामें परशुरामके समान कर्णको तुमने युद्धमें कैसे मारा ? कर्ण सब जगत्में महारथी कहके प्रसिद्ध था, सब युद्धोंमें बहुत कुशल था, सब धनुषधारियोंमें श्रेष्ठ और सब पुरुषों में एक पुरुष कहा जाता था ॥ २३-२५

हे अर्जुन ! पुत्रोंके सहित राजा धृतराष्ट्र तेरे मारनेके लिये ही जिसका सदा संमान करते थे उसी सूतपुत्र कर्णको तुमने कैसे मारा ? हे पुरुष श्रेष्ठ ! धृतराष्ट्र पुत्र दुर्योधन सब योद्धाओंमें कर्णको ही तेरे मृत्युका कारण मानता था, वही कर्ण तुम्हारे हाथसे युद्धमें कैसा मारागया वह मुझसे कहो ॥ (२६-२८)

हे पुरुषसिंह ! जैसे सिंह रुरु नामक हरिणको मारता है । तैसे तुमने आज सब मित्रोंके देखते रहते ही लडते हुए कर्णका शिर काटा है ॥ जो कर्ण सब

श्रेयस्तत्रानृतं वक्तुं तत्सत्यमविचारितम् ॥ ६० ॥
यः कार्येभ्यो व्रतं कृत्वा तस्य नानोपपादयेत् ।
न तत्फलमवाप्नोति एवमाहुर्मनीषिणः ॥ ६१ ॥
प्राणात्यये विवाहे वा सर्वज्ञातिवधात्यये ।
नर्मण्यभिप्रवृत्ते वा न च प्रोक्तं मृषा भवेत् ॥ ६२ ॥
अधर्मं नात्र पश्यन्ति धर्मतत्त्वार्थदर्शिनः ।
यस्स्तेनैः सह सम्बन्धान्मुच्यते शपथैरपि ॥ ६३ ॥
श्रेयस्तत्रानृतं वक्तुं तत्सत्यमविचारितम् ।
न च तेभ्यो धनं देयं शक्ये सति कथञ्चन ॥ ६४ ॥
पापेभ्यो हि धनं दत्तं दातारमपि पीडयेत् ।
तस्माद्धर्मार्थमनृतमुक्त्वा नानृतभाग्भवेत् ॥ ६५ ॥
एष ते लक्षणोद्देशो मयोद्दिष्टो यथाविधि ।
यथाधर्मं यथाबुद्धि मयाद्य वै हितार्थिना ॥ ६६ ॥
एतच्छ्रुत्वा ब्रूहि पार्थ यदि वध्यो युधिष्ठिरः ।
अर्जुन उवाच-- यथा ब्रूयान्महाप्राज्ञो यथा ब्रूयान्महामतिः ॥ ६७ ॥
हितं चैव यथास्माकं तथैतद्वचनं तव ।
भवान्मातृसमोऽस्माकं तथा पितृसमोऽपि च ॥ ६८ ॥

---

रह सके तो झूठ कहे, वह झूठ सत्यही-के समान होता है ॥ ( ५८—६० )

जो कपटी अपने मनमें एक कामको दूसरे प्रकारसे विचारे और करे दूसरे प्रकारसे, उसे उस कामका फल यथार्थ नहीं होता। प्राण नाशके समय, विवाह वा सब जातिके नाश होनेमें, आपत्ति और हांसीके समयमें झूठ बोलनेसे पाप नहीं होता। यदि झूठी शपथ खाने पर भी कोई बन्धनसे छूटे तो धर्मात्मा पुरुष उस अधर्मको भी धर्म ही कहते है। इन स्थानों पर कही हुई झूठ बात भी सत्य मानी जाती है। ( ६१-६४ )

परन्तु चोरों को धन नहीं देना चाहिये, क्यों कि ऐसा करनेसे नर्क होता है। इसलिये किसी को बचाने के लिये झूठ बोलना पाप नहीं है, कल्याणकी इच्छासे अपनी बुद्धि के अनुसार ये धर्मके लक्षण तुमसे कहे। हे अर्जुन! यह सुन करभी तुम्हारी इच्छा युधिष्ठिरके मारनेकी रह गयी?(६४ ७६)

अर्जुन बोले, हे भगवन्! आप बडे बुद्धिमान और बडे पण्डित हैं। आपने जो कहा मैं वैसा ही करूंगा, आप

योऽसौ कृष्णामब्रवीद् दुष्टबुद्धिः कर्णः सभायां कुरुवीरमध्ये ।
किं पाण्डवांस्त्वं न जहासि कृष्णे सुदुर्बलान्पतितान्हीनसत्वान् ॥३८॥
योऽसौ कर्णः प्रत्यजानात्त्वदर्थे नाहं हत्वा सह कृष्णेन पार्थम् ।
इहोपयातेति स पापबुद्धिः कच्चिच्छेते शरसम्भिन्नगात्रः ॥ ३९ ॥
कच्चित्संग्रामो विदितो वै तवायं समागमे सृञ्जयकौरवाणाम् ।
यत्रावस्थामीदृशीं प्रापितोऽहं कच्चित्त्वया सोऽद्य हतो दुरात्मा ॥४०॥
कच्चित्त्वया तस्य सुमन्दबुद्धेर्गाण्डीवमुक्तैर्विशिखैर्ज्वलद्भिः ।
सकुण्डलं भानुमदुत्तमाङ्गं कायात्प्रकृत्तं युधि सव्यसाचिन् ॥ ४१ ॥
यत्तन्मया बाणसमर्पितेन ध्यातोऽसि कर्णस्य वधाय वीर ।
तन्मे त्वया कच्चिदमोघमद्य ध्यानं कृतं कर्णनिपातनेन ॥ ४२ ॥
यद्दर्पपूर्णः स सुयोधनोऽस्मानुदीक्षते कर्णसमाश्रयेण ।
कच्चित्त्वया सोऽद्य समाश्रयोऽस्य भग्नः पराक्रम्य सुयोधनस्य ॥४३॥
यो नः पुरा षण्ढतिलानवोचत्सभामध्ये कौरवाणां समक्षम् ।
स दुर्मतिः कच्चिदुपेत्य सङ्ख्ये त्वया हतः सूतपुत्रो ह्यमर्षी ॥४४॥

जीता है, तबतक मैं पैर नहीं धोऊंगा, उसको तुमने कैसे मारा ? ( ३५–३७ )

जिस मूर्ख कर्णने सब वीर कौरवोंकी सभामें द्रौपदीसे कहा था कि "पाण्डव सत्त्वहीन पतित और दुर्बल हैं । इन्हें तू क्यों नहीं छोडती?" उसको आज तुमने कैसे मारा ? जिसने तुम्हारा पराक्रम जान कर भी दुर्योधनसे यह प्रतिज्ञा की थी, कि हम तुम्हारे लिये कृष्ण और अर्जुन को विना मारे नहीं छोडेंगे, आज वही पापी तुम्हारे बाणों से कटकर पृथ्वीमें सोता है ? कहो कुरु और सृञ्जयोंके युद्धमें जो हमारी दशा हुई सो तुमने कैसे जानी ? और तुमने उस दुरात्माको कैसे मारा ? ॥ (३८–४०)

हे सव्यसाची ! तुमने अपने गाण्डीव धनुषसे छूटे, बिजलीके समान प्रकाशित बाणोंसे उस पापीका सूर्यके समान प्रकाशित कुण्डल सहित शिर काटकर कैसे पृथ्वीमें गिराया ? हे वीर ! जिस समय कर्णने मुझे बाणोंसे व्याकुल किया था, उसी समय मैंने उसका नाश होनेके लिये तुम्हारा ध्यान किया था, कहो तुमने मेरी इस इच्छाको कैसे जान लिया ? और कर्णको मार डाला ॥ जिसके आश्रयसे दुर्योधन अभिमानमें भरकर हमको देखता था, आज तुमने अपने बलसे उस कर्णको मारकर दुर्योधनका आश्रय तोड दिया ॥ (४१–४३)

इस मूर्ख सूतपुत्रने कौरवोंकी सभाके

यश्चानिशं सूतपुत्रेण वीर शरैर्भृशं ताडितो युध्यमानः ॥ ७६ ॥
अतस्त्वमेतेन सरोषमुक्तो दुःखान्वितेनेदमयुक्तरूपम् ।
अकोपितो ह्येष यदि स्म सङ्ख्ये कर्णं न हन्यादिति चाब्रवीत्सः॥ ७७ ॥
जानाति तं पाण्डव एष चापि पापं लोके कर्णमसह्यमन्यैः ।
ततस्त्वमुक्तो भृशरोषितेन राज्ञा समक्षं परुषाणि पार्थ ॥ ७८ ॥
नित्योद्युक्ते सततं चाप्रसह्ये कर्णे द्यूतं ह्यद्य रणे निबद्धम् ।
तस्मिन्हते कुरवो निर्जिताः स्युरेवं बुद्धिः पार्थिवे धर्मपुत्रे ॥ ७९ ॥
ततो वधं नार्हति धर्मपुत्रस्त्वया प्रतिज्ञार्जुन पालनीया ।
जीवन्नयं येन मृतो भवेद्धि तन्मे निबोधेह तवानुरूपम् ॥ ८० ॥
यदा मानं लभते माननार्हस्तदा स वै जीवति जीवलोके ।
यदावमानं लभते महान्तं तदा जीवन्मृत इत्युच्यते सः ॥ ८१ ॥
सम्मानितः पार्थिवोऽयं सदैव त्वया च भीमेन तथा यमाभ्याम् ।
वृद्धैश्च लोके पुरुषैश्च शूरैस्तस्यापमानं कलया प्रयुङ्क्ष्व ॥ ८२ ॥

---

हैं, और इस समय उसने इनके शरीरमें अनेक घाव भी कर दिये हैं। इसीसे बहुत थक भी गये हैं, इसी लिये इन्होंने न कहने योग्य बात तुमको कही और यह भी इन्होंने विचार लिया, कि मै यदि अपनी बातोंसे अर्जुनको क्रोध न दिलाऊंगा तो ये कर्णको नहीं मारेंगे ॥ हे कुन्तीपुत्र ! महाराज इस बातको अच्छी प्रकार जानते हैं, कि जगत्में पापी कर्णसे तुम्हारे सिवाय और कोई नहीं लड सक्ता, इसी लिये इन्होंने कठोर वचन कहे ॥ ( ७६–७८ )

धर्मात्मा महाराजने यह भी विचार लिया कि कर्ण सदा युद्ध करता रहता है और इसीने जुआ खिलाया था, यदि यह मारा जायगा तो सब कौरव आपसे आप हार जावेंगे, इसलिये तुमको ये कठोर वचन सुनाये, अब राजा मारने योग्य नहीं है परन्तु तुम्हें भी अपनी प्रतिज्ञा सत्य करनी है; इसलिये जिसमें दोनों बात सिद्ध हों ऐसे वचन सुनो ॥ ( ७९–८० )

महात्माओंने कहा है, कि उत्तम मनुष्य जबतक आदरसे जिये तभीतक जीता है, और जब उसका निरादर हो‌गया तभी मर गया, तुम भीमसेन, नकुल, सहदेव और जगत्के जितने बुद्धिमान मनुष्य हैं। सबको महाराज धर्मराजका सत्कार करना चाहिये परन्तु तुमने इन्हें कठोर वाणी कही इससे ये मर गये, जो तुम्हारी इच्छा हो, सो और भी कहलो उसीसे ये मर

योऽसौ कृष्णामब्रवीद् दुष्टबुद्धिः कर्णः सभायां कुरुवीरमध्ये ।
किं पाण्डवांस्त्वं न जहासि कृष्णे सुदुर्बलान्पतितान्हीनसत्त्वान् ॥३८॥
योऽसौ कर्णः प्रत्यजानात्त्वदर्थे नाहं हत्वा सह कृष्णेन पार्थम् ।
इहोपयातेति स पापबुद्धिः कच्चिच्छेते शरसम्भिन्नगात्रः ॥ ३९ ॥
कच्चित्संग्रामो विदितो वै तवायं समागमे सृञ्जयकौरवाणाम् ।
यत्रावस्थामीदृशीं प्रापितोऽहं कच्चित्त्वया सोऽद्य हतो दुरात्मा ॥४०॥
कच्चित्त्वया तस्य सुमन्दबुद्धेर्गाण्डीवमुक्तैर्विशिखैर्ज्वलद्भिः ।
सकुण्डलं भानुमदुत्तमाङ्गं कायात्प्रकृत्तं युधि सव्यसाचिन् ॥ ४१ ॥
यत्तन्मया बाणसमर्पितेन ध्यातोऽसि कर्णस्य वधाय वीर ।
तन्मे त्वया कच्चिदमोघमद्य ध्यानं कृतं कर्णनिपातनेन ॥ ४२ ॥
यद्दर्पपूर्णः स सुयोधनोऽस्मानुदीक्षते कर्णसमाश्रयेण ।
कच्चित्त्वया सोऽद्य समाश्रयोऽस्य भग्नः पराक्रम्य सुयोधनस्य ॥४३॥
यो नः पुरा षण्ढतिलानवोचत्सभामध्ये कौरवाणां समक्षम् ।
स दुर्मतिः कच्चिदुपेत्य सङ्ख्ये त्वया हतः सूतपुत्रो ह्यमर्षी ॥४४॥

---

जीता है, तबतक मैं पैर नहीं धोऊंगा, उसको तुमने कैसे मारा ? ( ३५–३७ )

जिस मूर्ख कर्णने सब वीर कौरवोंकी सभामें द्रौपदीसे कहा था कि "पाण्डव सत्त्वहीन पतित और दुर्बल हैं । इन्हें तू क्यों नहीं छोडती?" उसको आज तुमने कैसे मारा ? जिसने तुम्हारा पराक्रम जान कर भी दुर्योधनसे यह प्रतिज्ञा की थी, कि हम तुम्हारे लिये कृष्ण और अर्जुन को विना मारे नहीं छोडेंगे, आज वही पापी तुम्हारे बाणों से कटकर पृथ्वीमें सोता है ? कहो कुरु और सृञ्जयोंके युद्धमें जो हमारी दशा हुई सो तुमने कैसे जानी ? और तुमने उस दुरात्माको कैसे मारा ? ॥ (३८–४०)

हे सव्यसाची ! तुमने अपने गाण्डीव धनुषसे छूटे, बिजलीके समान प्रकाशित बाणोंसे उस पापीका सूर्यके समान प्रकाशित कुण्डल सहित शिर काटकर कैसे पृथ्वीमें गिराया ? हे वीर ! जिस समय कर्णने मुझे बाणोंसे व्याकुल किया था, उसी समय मैंने उसका नाश होनेके लिये तुम्हारा ध्यान किया था, कहो तुमने मेरी इस इच्छाको कैसे जान लिया ? और कर्णको मार डाला ॥ जिसके आश्रयसे दुर्योधन अभिमानमें भरकर हमको देखता था, आज तुमने अपने बलसे उस कर्णको मारकर दुर्योधनका आश्रय तोड दिया ॥ (४१–४३)

इस मूर्ख सूतपुत्रने कौरवोंकी सभाके

अर्जुन उवाच- मा त्वं राजन्व्याहर व्याहरस्व यस्तिष्ठसे क्रोशमात्रे रणाद्वै ।
भीमस्तु मामर्हति गर्हणाय यो युध्यते सर्वलोकप्रवीरैः ॥ २ ॥
काले हि शत्रून्परिपीड्य सङ्ख्ये हत्वा च शूरान्पृथिवीपतींस्तान् ।
रथप्रधानोत्तमनागमुख्यान्सादिप्रवेकानमितांश्च वीरान् ॥ ३ ॥
यः कुञ्जराणामधिकं सहस्रं हत्वा नदंस्तुमुलं सिंहनादम् ।
काम्बोजानामयुतं पार्वतीयान्मृगान्सिंहो विनिहत्येव चाजौ ॥ ४ ॥
सुदुष्करं कर्म करोति वीरः कर्तुं यथा नार्हसि त्वं कदाचित् ।
रथादवप्लुत्य गदां परामृशंस्तया निहन्त्यश्वरथद्विपान्रणे ॥ ५ ॥
वरासिना वाजिरथाश्वकुञ्जरांस्तथा रथाङ्गैर्धनुषा दहत्यरीन् ।
प्रगृह्य पद्भ्यामहितान्निहन्ति पुनस्तु दोर्भ्यां शतमन्युविक्रमः ॥ ६ ॥
महाबलो वैश्रवणान्तकोपमः प्रसह्य हन्ता द्विषतामनीकिनीम् ।
स भीमसेनोऽर्हति गर्हणां मे न त्वं नित्यं रक्ष्यसे यः सुहृद्भिः॥ ७ ॥
महारथान्नागवरान्हयांश्च पदातिमुख्यानपि च प्रमथ्य ।
एको भीमो धार्तराष्ट्रेषु मग्नः स मामुपालब्धुमरिन्दमोऽर्हति ॥ ८ ॥
कलिङ्गवङ्गाङ्गनिषादमागधान्सदामदान्नीलबलाहकोपमान् ।

तुम हमें ऐसा कठोर वचन मत कहो, क्योंकि तुम युद्धसे एककोश दूरपर हैं। भीमसेन सब वीरोंसे लड रहे हैं, वही हमारी निन्दा कर सकते हैं। भीमसेन अपने पराक्रमसे हाथी घोडे और रथों-पर चढे अनेक राजोंको मार रहे हैं। उन्होंने अनेक शत्रुओंको मार डाला है और अनेक वीरोंको मारकर भगा दिया है। उन्होंने आज एक सहस्रसे ऊपर हाथियोंको मारा अब काम्बोजदेशकी सेनासे मेघके समान गर्जते हुए इस प्रकार युद्ध कर रहे हैं, जैसे हरिणोंसे सिंह युद्ध करे ॥ (१—४)

ऐसा घोर कर्म कर रहा है, जैसा तुम कभी नहीं कर सकते। रथसे उतर कर अपनी गदासे अनेक हाथी, घोडे और मनुष्योंको मार रहे हैं। इन्द्रके समान महापराक्रमी भीमसेन खड्ग, चक्र, धनुष, पैर और हाथोंसे हाथी और मनुष्योंको मार रहे हैं, इस समयमें कुबेर और यमराजके समान शत्रुओंका नाश कर रहे हैं,वही महाबली भीमसेन हमारी निन्दा कर सकते हैं, तुम नहीं। क्योंकि सदा मित्र लोग तुम्हारी रक्षा करते हैं। (५-७)

एकले भीमसेन अनेक हाथी, घोडे और वीरोको मारकर धृतराष्ट्रके पुत्रोंसे लड रहे है, वही हमारी निन्दा कर सकते

युधामन्युश्चोत्तमौजाश्च शूरौ पृष्ठतो मां रक्षतां राजपुत्रौ ।
रथप्रवीरेण महानुभाव द्विषत्सैन्ये वर्तता दुस्तरेण　　॥ १८ ॥
समेत्याहं सूतपुत्रेण सङ्ख्ये वृत्रेण वज्रीव नरेन्द्रमुख्य ।
योत्स्याम्यहं भारत सूतपुत्रमस्मिन्संग्रामे यदि वै दृश्यतेऽद्य॥ १९ ॥
आयाहि पश्याद्य युयुत्समानं मां सूतपुत्रस्य रणे जयाय ।
महर्षभस्येव मुखं प्रपन्नाः प्रभद्रकाः कर्णमभिवद्रन्ति　　॥ २० ॥
षट्साहस्रा भारत राजपुत्राः स्वर्गाय लोकाय रणे निमग्नाः ।
कर्णं न चेदद्य निहन्मि राजन्सबान्धवं युध्यमानं प्रसह्य　　॥ २१ ॥
प्रतिश्रुत्याकुर्वतो वै गतिर्या कष्टा याता तामहं राजसिंह ।
आमन्त्रये त्वां ब्रूहि जयं रणे मे पुरा भीमं धार्तराष्ट्रा ग्रसन्ते॥ २२ ॥
सौतिं हनिष्यामि नरेन्द्रसिंह सैन्यं तथा शत्रुगणांश्च सर्वान्॥२३॥ ३३४०

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां कर्णपर्वणि सकुलयुद्धे द्विषष्टितमोऽध्यायः ॥ ६७ ॥

सञ्जय उवाच—श्रुत्वा कर्णं कल्पमुदारवीर्यं क्रुद्धः पार्थः फाल्गुनस्यामितौजाः।
धनञ्जयं वाक्यमुवाच चेदं युधिष्ठिरः कर्णशराभितप्तः　　॥ १ ॥

युधामन्यु और उत्तमौजा मेरे रथकी पीछेसे रक्षा करे तो मेरे सिवाय और कोई ऐसा वीर सृञ्जयोंमें नहीं दीखता है जो कर्णसे युद्ध कर सक्ता है । उसी समय महाप्रतापी दुस्तर शत्रुओंकी सेनाके बीच रहनेवाले, सूतपुत्र कर्णको जब देखूंगा तब मैं जैसे इन्द्र वृत्रासुरसे लडते हैं, ऐसे ही कर्णके साथ युद्ध करूंगा ॥ (१७—१९)

हे महाराज ! अब आप चलकर देखिये कि आपकी विजयके लिये मैं कर्णसे कैसा युद्ध करता हूं । महाराज ! हमारे साथ छः सहस्र प्रभद्रक राधापुत्रसे स्वर्गकी इच्छासे लडनेको उपस्थित हैं और कर्णकी ओर वे सब बडे बैल के मुखके आगे जानेके समान बढ रहे हैं, हे महाराज ! यदि हम आज बान्धवोंके सहित कर्णको विना मारे युद्धसे लौटे तो बात कहकर न करनेवाले, मनुष्योंको जो पातक होता है, सो हमें होय । हे राजसिंह ! आज हम कर्णके सहित सब शत्रुओंको मारेंगे, ये देखिये धृतराष्ट्रके पुत्र भीमसेनसे युद्ध कर रहे हैं । अब आप हमें युद्धमें जानेकी आज्ञा दीजिये ॥ (२०–२३) [३३४०]

कर्णपर्वमें सतसठ अध्याय समाप्त ।

कर्णपर्वमें अडसठ अध्याय ।

सञ्जय बोले, हे राजन् ! बडा वीर्यवान् कर्ण जीता है, यह सुनकर महातेजस्वी कर्णके बाणोंसे व्याकुल युधिष्ठिर

स्वयं कृत्वा पापमनार्यजुष्टमस्माभिर्वा तर्तुमिच्छस्यरींस्त्वम् ॥ १६ ॥
अक्षेषु दोषा बहवो विधर्माः श्रुतास्त्वया सहदेवोऽब्रवीद्यान् ।
तान्नैषि त्वं त्यक्तुमसाधुजुष्टांस्तेन स्म सर्वे निरयं प्रपन्नाः ॥ १७ ॥
सुखं त्वत्तो नाभिजानीम किञ्चिद्यतस्त्वमक्षैर्देवितुं सम्प्रवृत्तः ।
स्वयं कृत्वा व्यसनं पाण्डव त्वमस्मांस्तीव्राः श्रावयस्यद्य वाचः ॥ १८ ॥
शेतेऽस्माभिर्निहता शत्रुसेना छिन्नैर्गात्रैर्भूमितले नदन्ती ।
त्वया हि तत्कर्म कृतं नृशंसं यस्माद्दोषः कौरवाणां वधश्च ॥ १९ ॥
हता उदीच्या निहताः प्रतीच्या नष्टाः प्राच्या दाक्षिणात्या विशस्ताः ।
कृतं कर्माप्रतिरूपं महद्भिस्तेषां योधैरस्मदीयैश्च युद्धे ॥ २० ॥
त्वं देविता त्वत्कृते राज्यनाशस्त्वत्सम्भवं नो व्यसनं नरेन्द्र ।
मास्मान्क्रूरैर्वाक्प्रतोदैस्तुदंस्त्वं भूयो राजन्कोपयेस्त्वल्पभाग्यः ॥ २१ ॥
सञ्जय उवाच—एता वाचः परुषाः सव्यसाची स्थिरप्रज्ञः श्रावयित्वा तु रूक्षाः ।
बभूवासौ विमना धर्मभीरुः कृत्वा प्राज्ञः पातकं किञ्चिदेवम् ॥ २२ ॥
तदानुतेपे सुरराजपुत्रो विनिःश्वसंश्चासिमथोद्ववर्ह ।

---

आप ही सबसे शत्रुता बढाकर हम चारोंके द्वारा शत्रुओंको जीता चाहते हो, सहदेवने उस ही समय जुएके अनेक दोष तुम्हें दिखलाये थे, परन्तु उनको न मानकर तुमने यह पाप कर्म किया, उसीसे हम सब इस घोर आपत्तिमें पडे हैं, तथापि हम चारों तुम्हारे सिवाय और किसीको अपना सुख नहीं समझते, तुमने आप ही पाप किया और हमें ही कठोर वचन सुनाते हो ॥ (१५-१८)

हम चारोंकी मारीहुई कौरवोंकी सेना छिन्नविच्छिन्न शरीरवाली होकर आक्रोश करती हुई भूमिपर सो रही है, हम लोगोंका यह कर्म है। और तुमने वह कर्म किया कि जिससे कौरवोंका नाश हो गया। हमारे और कौरवोंके वीरोंने युद्धमें घोर कर्म किये है। पूर्व, पश्चिम, उत्तर और दक्षिणके सब क्षत्री मारे गये॥ हे राजन्! हे नरेन्द्र! तुमने जुआ खेला इसीसे राज्यका नाश हुआ और हम चारोंको घोर आपत्ति भोगनी पडी, अब तुम हम लोगोंको कठोर वचन कह कर क्रोध मत कराना तुम बडे मन्दभाग्य हो तुम्हारे ये वचन कोडाके समान लगते हैं॥ (१९-२१)

सञ्जय बोले, बुद्धिमान् महात्मा अर्जुन ये सब कठोर वचन कह कर पीछे इस पापसे बहुत घबडाकर और मलीन होकर चुप होगये॥ अनन्तर बहुत पछता कर अर्जुनने फिर अपना

अनर्थकं मे दर्शितवानसि त्वं राज्यार्थिनो राज्यरूपं विनाशम् ॥ ८ ॥
त्रयोदशेमा हि समाः सदा वयं त्वामन्वजीविष्म धनञ्जयाशया ।
काले वर्षं देवमिवोप्तबीजं तन्नः सर्वान्नरके त्वं न्यमज्जः ॥ ९ ॥
यत्तत्पृथां वागुवाचान्तरिक्षे सप्ताहजाते त्वयि मन्दबुद्धौ ।
जातः पुत्रो वासवविक्रमोऽयं सर्वाञ्शूराञ्शात्रवाञ्जेष्यतीति ॥ १० ॥
अयं जेता खाण्डवे देवसङ्घान्सर्वाणि भूतान्यपि चोत्तमौजाः ।
अयं जेता मद्रकलिङ्गकेकयानयं कुरून्राजमध्ये निहन्ता ॥ ११ ॥
अस्मात्परो नो भविता धनुर्धरो नैनं भूतं किञ्चन जातु जेता ।
इच्छन्नयं सर्वभूतानि कुर्याद्वशे वशी सर्वसमाप्तविद्यः ॥ १२ ॥
कान्त्या शशाङ्कस्य जवेन वायोः स्थैर्येण मेरोः क्षमया पृथिव्याः ।
सूर्यस्य भासा धनदस्य लक्ष्म्या शौर्येण शक्रस्य बलेन विष्णोः ॥ १३ ॥
तुल्यो महात्मा तव कुन्ति पुत्रो जातोऽदितेर्विष्णुरिवारिहन्ता ।
स्वेषां जयाय द्विषतां वधाय ख्यातोऽमितौजाः कुलतन्तुकर्ता ॥ १४ ॥

लगने पर भी फल नहीं लगता ॥ जैसे मांससे लपेटकर कोई किसीको कांटा खानेको दे और जैसे कोई उत्तम भोजन में लपेटकर विष दे, तैसे ही तुमने हमें दर्शन दिये, हम राज्यकी इच्छा कर रहे थे और तुमने विनाशरूप दिखलाया ॥ जैसे किसान जल वर्षनेकी आशापर बीज बोकर बैठा रहता है, तैसे ही हम सब भी तेरह वर्ष तुम्हारी आशापर वनमें रहे परन्तु आज तुमने हमको नरकमें डुबा दिया ॥ (७-९)

रे मूर्ख ! जब तू उत्पन्न हुआ था, और सात दिन बीते थे, तब कुन्तीने आकाशवाणी सुनी थी कि यह तेरा पुत्र इन्द्रके समान पराक्रमी है । सब शत्रु-ओंको अपने बाणोंसे जीतेगा । यही महापराक्रमी खाण्डव वनमें देवोंको जीतकर सब जन्तुओंको जलावेगा । यही मद्र, कलिङ्ग, कैकय और कौरवोंका राजाओंके बीच नाश करेगा ॥ इसके समान कोई धनुषधारी नहीं होगा, इसको कोई जगत्में नहीं जीत सकेगा । यह सब विद्याओंको पढेगा, और अपनी इच्छासे सब जगत्को वशमें कर लेगा ॥ (१०-१२)

सुन्दरतामें चन्द्रमा, वेगमें वायु, स्थिरतामें मेरु, क्षमामें पृथ्वी, तेजमें सूर्य, धनमें कुबेर, धीरजमें इन्द्र और बलमें विष्णुके तुल्य होगा ॥ हे कुन्ती ! यह तुम्हारा पुत्र ऐसा होगा जैसे अदितीके वामन, ये अपनी विजयसे सब शत्रु-ओंका नाश करेंगे और इन्हींसे तुम्हारा वंश चलेगा ॥ ये वाणी कुन्तीने शतशृंग

न मादृशोऽन्यो नरदेव विद्यते धनुर्धरो देवमृते पिनाकिनम् ॥ ३० ॥
अहं हि तेनानुमतो महात्मना क्षणेन हन्यां सचराचरं जगत् ।
मया हि राजन्सदिगीश्वरा दिशो विजित्य सर्वा भवतः कृता वशे॥३१
स राजसूयश्च समाप्तदक्षिणः सभा च दिव्या भवतो ममौजसा ।
पाणौ पृषत्का निशिता ममैव धनुश्च सज्यं विततं सबाणम् ॥ ३२ ॥
पादौ च मे सरथौ सध्वजौ च न मादृशं युद्धगतं जयन्ति ।
हता उदीच्या निहताः प्रतीच्याः प्राच्या निरस्ता दाक्षिणात्या विशस्ताः।
संशप्तकानां किञ्चिदेवास्ति शिष्टं सर्वस्य सैन्यस्य हतं मयार्धम् ।
शेते मया निहता भारतीयं चमू राजन्देवचमूप्रकाशा ॥ ३४ ॥
ये चास्त्रज्ञास्तानहं हन्मि चास्त्रैस्तस्माल्लोकानेष करोमि भस्म ।
जैत्रं रथं भीममास्थाय कृष्ण यावः शीघ्रं सूतपुत्रं निहन्तुम् ॥ ३५ ॥
राजा भवत्वद्य सुनिर्वृतोऽयं कर्णं रणे नाशयितास्मि बाणैः ।
इत्येवमुक्त्वा पुनराह पार्थो युधिष्ठिरं धर्मभृतां वरिष्ठम् ॥ ३६ ॥

कह और धनुष उठाकर अर्जुन महाराज युधिष्ठिरसे बोले, हे महाराज! हे पृथ्वीनाथ! हम आपसे सत्य कहते हैं, कि भगवान् शिवको छोडकर और जगत्में हमारे समान धनुषधारी कोई नहीं है॥ हे पृथ्वीनाथ! मै उस महात्माकी आज्ञासे क्षण भरमें चर और अचरको नाश कर सक्ता हूं। हमने सब राजोंके सहित समस्त पृथ्वी जीत कर आपके वशमें कर दी है॥ मेरे ही प्रतापसे आपने दक्षिणाके सहित राजसूय यज्ञ समाप्त किया मैने आपके लिये उत्तम सभा बनवाई आप हमारे हाथ, धनुष और दिव्य बाणोंको देखिये॥ (२९-३२)

मेरे पैरमें रथ और ध्वजाका चिन्ह है, इसलिये मेरे समान मनुष्यको युद्धमें कोई नहीं जीत सक्ता। मैने पूर्व, पश्चिम, उत्तर दक्षिणके सब क्षत्रियोंको जीता है! हे राजन्! मैंने देवतोंकी सेनाके तुल्य कौरवोंकी आधी सेना मार डाली, संशप्तक भी थोडे ही शेष हैं। मेरे मारे हुए अनेक वीर पृथ्वीमें सो रहे हैं॥ मैं अस्त्र जाननेवालोंसे अस्त्रोंहीसे युद्ध करता हूं। इसलिये जगत्को भस्म कर सक्ता हूं। अब हम और कृष्ण रथपर बैठकर कर्णको मारने जाते है॥ हे कृष्ण! अब चलिये हम आज अपने बाणोंसे कर्णको अवश्य मारेंगे अब महाराज निर्विघ्न सब लोकका राज्य करें॥(३३-३६)

ऐसा कह कर अर्जुन फिर धर्मधारियोंमें श्रेष्ठ युधिष्ठिरसे बोले, हे महाराज!

अथापि जीवेत्समरे घटोत्कचस्तथापि नाहं समरे पराङ्मुखः ।
मम ह्यभाग्यानि पुराकृतानि पापानि नूनं बलवन्ति युद्धे ॥ २२ ॥
तृणं च कृत्वा समरे भवन्तं ततोऽहमेवं निकृतो दुरात्मना ।
वैकर्तनेनैव तथा कृतोऽहं यथा ह्यशक्तः क्रियते ह्यबान्धवः ॥ २३ ॥
आपद्गतं कश्चन यो विमोक्षेत्स बान्धवः स्नेहयुक्तं सुहृच्च ।
एवं पुराणा मुनयो वदन्ति धर्मः सदा सद्भिरनुष्ठितश्च ॥ २४ ॥
त्वष्ट्रा कृतं वाहमकूजनाक्षं शुभं समास्थाय कपिध्वजं तम् ।
खड्गं गृहीत्वा हेमपट्टानुबद्धं धनुश्चेदं गाण्डिवं तालमात्रम्॥ २५ ॥
स केशवेनोह्यमानः कथं त्वं कर्णाद्भीतो व्यपयातोऽसि पार्थ ।
धनुश्च तत्केशवाय प्रयच्छ यन्ता भविष्यस्त्वं रणे केशवस्य ॥ २६ ॥
तदा हनिष्यत्केशवः कर्णमुग्रं मरुत्पतिर्वृत्रमिवात्तवज्रः ।
राधेयमेतं यदि नाद्यशक्तश्चरन्तमुग्रं प्रतिबाधनाय ॥ २७ ॥
प्रयच्छान्यस्मै गाण्डिवमेतदद्य त्वत्तो योऽस्त्रैरभ्यधिको वा नरेन्द्रः ।
अस्मान्नैवं पुत्रदारैर्विहीनान्सुखाद्भ्रष्टान्राज्यनाशाच्च भूयः ॥ २८ ॥

तो मेरा यह निरादर न होता ॥ (१९-२१)

यदि आज महाबलवान घटोत्कच जीता होता तो मैं युद्ध छोडकर काहेको भागता ? मेरे पूर्व जन्मके पापोंसे ये दोनों पुत्र मारे गये, तुमको तिनकेके समान समझकर दुरात्मा कर्णने मेरी ऐसी दुर्दशा की जैसे कोई शत्रु अशक्त और बान्धवहीन की करता है ॥ पुराने मुनि कहते है कि जो किसीको प्रेम करके आपत्तिसे निकाल दे वही उसका बन्धु है, महात्मा लोग सदासे इसी धर्मको करते है ॥ (२२-२५)

तुम इस उत्तम शब्दवाले विश्वकर्माके बनाये सुन्दर ध्वजायुक्त रथपर बैठकर सोनेकी मूठवाले खड्ग और ताडके बराबर गाण्डीव धनुष लेकर तथा कृष्ण को सारथी बना कर भी कर्णसे डरकर युद्ध छोड भाग आये, अब यह धनुष कृष्णको दो और तुम घोडे हांको तब ये जिस प्रकार इन्द्रने वज्र हाथमें लेकर वृत्रासुरको मारा था, वैसे ही हमारी सेनामें घूमते हुए महा पराक्रमी राधापुत्र कर्णको मारेंगे ॥ (२५-२७)

हमें निश्चय होगया, कि तुम कर्णके मारनेमें समर्थ नहीं हो ॥ अथवा जो तुमसे अधिक शस्त्रविद्या जानता हो उस ही राजाको यह अपना गाण्डीव धनुष दे दो, अर्थात् तुम कुन्तीके गर्भसे पांचवें महीनेमें नष्ट हो जाते अथवा उनके गर्भसे जन्म न लेते तो आज हमको

पापस्य पापव्यसनान्वितस्य विमूढबुद्धेरलसस्य भीरोः ॥ ४४ ॥
वृद्धावमन्तुः परुषस्य चैव किं ते चिरं मे ह्यनुसृत्य रूक्षम्।
गच्छाम्यहं वनमेवाद्य पापः सुखं भवान्वर्त्ततां मद्विहीनः॥ ४५ ॥
योग्यो राजा भीमसेनो महात्मा क्लीबस्य वा मम किं राज्यकृत्यम्।
न चापि शक्तः परुषाणि सोढुं पुनस्तवेमानि रुषान्वितस्य॥ ४६ ॥
भीमोऽस्तु राजा मम जीवितेन न कार्यमद्यावमतस्य वीर।
इत्येवमुक्त्वा सहसोत्पपात राजा ततस्तच्छयनं विहाय ॥ ४७ ॥
इयेष निर्गन्तुमथो वनाय तं वासुदेवः प्रणतोऽभ्युवाच।
राजन्विदितमेतद्वै यथा गाण्डीवधन्वनः ॥ ४८ ॥
प्रतिज्ञा सत्यसन्धस्य गाण्डीवं प्रति विश्रुता।
ब्रूयाद्य एवं गाण्डीवमन्यस्मै देयमित्युत ॥ ४९ ॥
वध्योऽस्य स पुमाँल्लोके त्वया चोक्तोऽयमीदृशम्।
ततः सत्यां प्रतिज्ञां तां पार्थेन प्रतिरक्षता ॥ ५० ॥
मच्छन्दादवमानोऽयं कृतस्तव महीपते।
गुरूणामवमानो हि वध इत्यभिधीयते ॥ ५१ ॥

को ये सब दुःख भोगने पडे। इसलिये हम बडे पापी, मूर्ख, आलसी, कादर, कुलको नाश करनेवाले, और पापी हैं। सो तुम हमारा शिर काट दो मैंनेवूढोंकी सेवा नहीं की इसीसे दुष्ट हूं। अब तुम हमारा सिर काटडालो। पहले कठोर वचन कह कर अब प्रणाम करनेसे क्या होगा। और यदि तुम हमको न मारोगे तो हम वनको चले जावेंगे, तुम हमारे विना सुखसे रहना॥ ( ४२-४५ )

भीमसेन राजा होनेके योग्य हैं, मैं नपुंसक राज्य क्या करूंगा। हम तुम्हारे और कठोर वचन नहीं सह सक्ते भीमसेन राजा होय अब हम और जीना नहीं चाहते ऐसा कह कर राजा पलंगसे उतरे और वनको जानेके लिये उपस्थित हुए, तब श्रीकृष्णने दण्डवत् करके कहा; हे राजन्! आप जानते हैं, कि अर्जुनने यह प्रतिज्ञा की थी कि जो कोई हमसे कहै कि तुम अपना गाण्डीव धनुष दूसरेको दे दो, तो उसको हम मार डालेंगे। आपने वैसा ही कहा इसलिये सत्यवादी अर्जुनने भी अपनी प्रतिज्ञा पूरी करली॥ ( ४६—५० )

हे पृथ्वीनाथ! मेरे ही हठसे अर्जुनने आपका इतना अपमान किया। गुरुओंका अपमान करना ही उनको मार डालना है। इसलिये आप हमारा

न तं पश्यामि कौन्तेय यस्ते वध्यो भविष्यति ।
प्रहर्तुमिच्छसे कस्मात्किं वा ते चित्तविभ्रमः ॥ ६ ॥
कस्माद्भवान्महाखड्गं परिगृह्णाति सत्वरः ।
तत्त्वां पृच्छामि कौन्तेय किमिदं ते चिकीर्षितम् ॥ ७ ॥
परामृशसि यत्क्रुद्धः खड्गमद्भुतविक्रम ।
एवमुक्तस्तु कृष्णेन प्रेक्षमाणो युधिष्ठिरम् ॥ ८ ॥
अर्जुनः प्राह गोविन्दं क्रुद्धः सर्प इव श्वसन् ।
अन्यस्मै देहि गाण्डीवमिति मे योऽभिचोदयेत् ॥ ९ ॥
भिन्द्यामहं तस्य शिर इत्युपांशुव्रतं मम ।
तदुक्तं मम चानेन राज्ञामितपराक्रम ॥ १० ॥
समक्षं तव गोविन्द न तत्क्षन्तुमिहोत्सहे ।
तस्मादेनं वधिष्यामि राजानं धर्मभीरुकम् ॥ ११ ॥
प्रतिज्ञां पालयिष्यामि हत्वैनं नरसत्तमम् ।
एतदर्थं मया खड्गो गृहीतो यदुनन्दन ॥ १२ ॥
सोऽहं युधिष्ठिरं हत्वा सत्यस्यानृण्यतां गतः ।
विशोको विज्वरश्चापि भविष्यामि जनार्दन ॥ १३ ॥

---

राजोंमें शार्दूल युधिष्ठिरके दर्शन किये सो इस प्रसन्नताके समयमें यह क्या भूल करते हो ? ॥ तुम्हारे चित्तमें क्या भ्रम आगया है ? यहां कोई तुमसे लडनेवाला नहीं, तव किसके ऊपर खड्ग चलाना चाहते हो ? हे अद्भुत पराक्रमवाले कुन्तीपुत्र ! हम तुमसे पूछते हैं, कि तुम्हारे मनमें क्या है ? तुमने इतनी शीघ्रता सहित खड्ग क्यों खींच लिया॥ और किसलिये क्रोधसे खड्गको छूने लगे हो ? ( ४–८ )

कृष्णके ऐसे वचन सुन युधिष्ठिरकी ओर देखते हुए महा पराक्रमी, अर्जुनने क्रोध करके श्रीकृष्णसे कहा, कि मेरी यह प्रतिज्ञा है, कि जो मुझसे कहेगा कि अपना धनुष दूसरेको दे दो, मैं उसका शिर काट लूंगा, सो आज महा पराक्रमी महाराजने हमसे ऐसा ही कहा। हे कृष्ण ! यह वात आपने भी सुनी है। हम इसे क्षमा नहीं कर सक्ते इसलिये हम आज धर्मात्मा महाराजका शिर काटेंगे ॥ (८–११)

हे यदुनन्दन ! आज सब मनुष्योंमें श्रेष्ठ युधिष्ठिरको मारकर हम अपनी प्रतिज्ञाको सत्य करेंगे, इसी लिये, हमने खड्ग उठाया है ॥ हे जनार्दन ! हम

समुत्तीर्णाः सहामात्याः सनाथाः स्म त्वयाऽच्युत ॥६०॥ [३५१८]

इति श्रीमहा० शतसाहस्र्या संहितायां वैयासिक्यां कर्णपर्वणि युधिष्ठिरसमाश्वासने सप्ततितमोऽध्यायः॥७०॥

सञ्जय उवाच— धर्मराजस्य तच्छ्रुत्वा प्रीतियुक्तं वचस्ततः ।
पार्थं प्रोवाच धर्मात्मा गोविन्दो यदुनन्दनः ॥ १ ॥
इति स्म कृष्णवचनात्प्रत्युच्चार्य युधिष्ठिरम् ।
बभूव विमनाः पार्थः किंचित्कृत्वेव पातकम् ॥ २ ॥
ततोऽब्रवीद्वासुदेवः प्रहसन्निव पाण्डवम् ।
कथं नाम भवेदेतद्यदि त्वं पार्थ धर्मजम् ॥ ३ ॥
असिना तीक्ष्णधारेण हन्या धर्मे व्यवस्थितम् ।
त्वमित्युक्त्वाथ राजानमेवं कश्मलमाविशः ॥ ४ ॥
हत्वा तु नृपतिं पार्थ आकरिष्यः किमुत्तरम् ।
एवं हि दुर्विदो धर्मो मन्दप्रज्ञैर्विशेषतः ॥ ५ ॥
स भवान्धर्मभीरुत्वाद् ध्रुवमैष्यन्महत्तमः ।
नरकं घोररूपं च भ्रातुर्ज्येष्ठस्य वै वधात् ॥ ६ ॥
स त्वं धर्मभृतां श्रेष्ठं राजानं धर्मसंहितम् ।
प्रसादय कुरुश्रेष्ठमेतदत्र मतं मम ॥ ७ ॥
प्रसाद्य भक्त्या राजानं प्रीते चैव युधिष्ठिरे ।

हुए ॥ (५८—६०) [३५१८]

कर्णपर्वमें सत्तर अध्याय समाप्त ।

कर्णपर्वमें इकत्तर अध्याय ।

सञ्जय बोले, हे राजन् ! धर्मराज युधिष्ठिरके ऐसे वचन सुन धर्मात्मा यदुकुल श्रेष्ठ श्रीकृष्ण अर्जुनको मलीन देख धर्मराजके वचनोंका उत्तर देकर अर्जुनसे बोले, हे कुन्तीपुत्र ! यदि तुम कुन्तीपुत्र युधिष्ठिरको तेज धारवाले खड्गसे मार डालते तो इस समय तुम्हारी क्या दशा होती ? उन धर्मात्माको केवल 'तुम' कहनेसे मलीन हो रहे हो, जिन बडे भाईको 'तुम' कहकर तुम्हारी यह दशा हो रही है, तो उनके मारनेसे तुम्हारी क्या दशा होती ? धर्मकी गति जानना इस प्रकार बहुत कठिन है ॥ (१—५)

इस समय यदि तुम धर्म भीरुताके कारण अपने बडे भाईका वध करते तो इसी पापसे तुम्हें तमोमय घोर नरकमें जाना पडता । हमारी सम्मतिमें तो तुम सब धर्मधारियोंमें श्रेष्ठ कुरुकुल तिलक महाराजको प्रसन्न करो, धर्मराज युधिष्ठिरको अपनी भक्तिसे प्रसन्न करके हम

अविज्ञानाद्भवान्यच्च धर्मं रक्षति धर्मवित् ।
प्राणिनां त्वं वधं पार्थ धार्मिको नावबुध्यसे ॥ २२ ॥
प्राणिनामवधस्तात सर्वज्यायान्मतो मम ।
अनृतां वा वदेद्वाचं न तु हिंस्यात्कथञ्चन ॥ २३ ॥
स कथं भ्रातरं ज्येष्ठं राजानं धर्मकोविदम् ।
हन्याद्भवान्नरश्रेष्ठ प्राकृतोऽन्यः पुमानिव ॥ २४ ॥
अयुध्यमानस्य वधस्तथाशत्रोश्च मानद ।
पराङ्मुखस्य द्रवतः शरणं चापि गच्छतः ॥ २५ ॥
कृताञ्जलेः प्रपन्नस्य प्रमत्तस्य तथैव च ।
न वधः पूज्यते सद्भिस्तच्च सर्वं गुरौ तव ॥ २६ ॥
त्वया चैवं व्रतं पार्थ बालेनैव कृतं पुरा ।
तस्मादधर्मसंयुक्तं मौर्ख्यात्कर्म व्यवस्यसि ॥ २७ ॥
स गुरुं पार्थ कस्मात्त्वं हन्तुकामोऽभिधावसि ।
असम्प्रधार्य धर्माणां गतिं सूक्ष्मां दुरत्ययाम् ॥ २८ ॥
इदं धर्मरहस्यं च तव वक्ष्यामि पाण्डव ।
यद् ब्रूयात्तव भीष्मो हि पाण्डवो वा युधिष्ठिरः॥२९॥

है सो विद्या तुमको किञ्चित् भी नहीं। तुम धर्म जानकर भी कहते हो कि हम मनुष्यको मारकर अपनी प्रतिज्ञाको सत्य करें। वाह वाह ! यह तुम्हारी बुद्धि बहुत अच्छी है। तुम्हें यह नहीं जान पडता कि मनुष्यको मारना सबसे बडा पाप है ॥ हमारी सम्मतिमें सबसे बडा पाप हिंसा ही है, चाहे मनुष्य झूठ बोल दे, परन्तु किसीको मारे नहीं ॥ (२१–२३)

सो तुम सब धर्मोंको जानकर भी साधारण मनुष्योंके समान सब धर्मके जाननेवाले बडे भाई राजा युधिष्ठिरको कैसे मारते हो? विनायुद्ध करते, अवध्य, युद्धसे भागते और शरण आये हुए को नहीं मारना चाहिये ॥ जो हाथ जोडकर अपनी शरण आवे और जो मद्य पीये हो उनको मारना उचित नहीं, युधिष्ठिरमें ये सब गुण हैं ॥ परन्तु विशेष कर ये तुम्हारे गुरु हैं ॥ (२४-२६)

हे अर्जुन ! तुमने यह प्रतिज्ञा बालकपनमें की थी, अब उसका पालना मूर्खता ही है। हे कुन्तीपुत्र ! सो तुम धर्मकी सूक्ष्म और दुरत्यय गति को न जानकर अपने गुरुको मारनेको क्यों दौडे ? हे पाण्डव ! अब हम तुमसे

अब्रवीत्तं महेष्वासं धर्मराजो धनञ्जयम् ॥ १६ ॥
कर्णेन मे महाबाहो सर्वसैन्यस्य पश्यतः ।
कवचं च ध्वजं चैव धनुः शक्तिर्हयाः शराः ॥ १७ ॥
शरैः कृत्ता महेष्वास यतमानस्य संयुगे ।
सोऽहं ज्ञात्वा रणे तस्य कर्म दृष्ट्वा च फाल्गुन ॥१८॥
व्यवसीदामि दुःखेन न च मे जीवितं प्रियम् ।
न चेदद्य हि तं वीरं निहनिष्यसि संयुगे ॥ १९ ॥
प्राणानेव परित्यक्ष्ये जीवितार्थो हि को मम ।
एवमुक्तः प्रत्युवाच विजयो भरतर्षभ ॥ २० ॥
सत्येन ते शपे राजन्प्रसादेन तथैव च ।
भीमेन च नरश्रेष्ठ यमाभ्यां च महीपते ॥ २१ ॥
यथाद्य समरे कर्णं हनिष्यामि हतोऽपि वा ।
महीतले पतिष्यामि सत्येनायुधमालभे ॥ २२ ॥
एवमाभाष्य राजानमब्रवीन्माधवं वचः ।
अद्य कर्णं रणे कृष्ण सूदयिष्ये न संशयः ॥ २३ ॥
तव बुद्ध्या हि भद्रं ते वधस्तस्य दुरात्मनः ।
एवमुक्तोऽब्रवीत्पार्थं केशवो राजसत्तम ॥ २४ ॥
शक्तोऽसि भरतश्रेष्ठ हन्तुं कर्णं महाबलम् ।

---

अनन्तर महाधनुषधारी अर्जुनसे बोले, हे महाबाहो। सब सेनाके देखते देखते कर्णने मेरा कवच, ध्वजा, धनुष, शक्ति, घोडे और बाणोंको अपने बाणोंसे काट दिया। मैंने युद्धमें अनेक यत्न भी किये परन्तु कुछ कर नहीं सका, मैं उसके घोर कर्मको देखकर बहुत दुःखी हुआ हूं। यदि अब तुम युद्धमें उसको नहीं मारोगे, तो मैं अपने प्राणको त्याग दूंगा। कर्णके जीनेसे मैं जीकर क्या करूंगा? (१६—२०)

अर्जुन बोले, हे पृथ्वीनाथ! हम आप, भीमसेन, नकुल, हमारे शस्त्र और सहदेवकी शपथ कर कहते हैं कि आज आपकी कृपासे कर्णको मारकर पृथ्वीमें गिरावेंगे, अथवा मैं मर जाऊंगा, सत्य भावसे मैं शस्त्रको छूता हूं॥ (२०-२२)

राजासे ऐसे वचन कह श्रीकृष्णसे बोले, हे कृष्ण! आज हम निःसन्देह कर्णको युद्धमें मारेंगे, तुम्हारा कल्याण हो। तुम्हारी कृपासे आज यह पापी मारा जायगा। (२२–२४)

किमाश्चर्यं पुनर्मूढो धर्मकामो ह्यपण्डितः ।
सुमहत्प्राप्नुयात्पापमापगास्विव कौशिकः ॥ ३७ ॥
अर्जुन उवाच— आचक्ष्व भगवन्नेतद्यथा विन्द्याम्यहं तथा ।
बलाकस्यानुसम्बन्धं नदीनां कौशिकस्य च ॥ ३८ ॥
वासुदेव उवाच- पुरा व्याधोऽभवत्कश्चिद्बलाको नाम भारत ।
यात्रार्थं पुत्रदारस्य मृगान्हन्ति न कामतः ॥ ३९ ॥
वृद्धौ च मातापितरौ बिभर्त्यन्यांश्च संश्रितान् ।
स्वधर्मनिरतो नित्यं सत्यवागनसूयकः ॥ ४० ॥
स कदाचिन्मृगं लिप्सुर्नाभ्यविन्दन्मृगं क्वचित् ।
अपः पिबन्तं ददृशे श्वापदं घ्राणचक्षुषम् ॥ ४१ ॥
अदृष्टपूर्वमपि तत्सत्वं तेन हतं तदा ।
अन्धे हते ततो व्योम्नः पुष्पवर्षं पपात च ॥ ४२ ॥
अप्सरोगीतवादित्रैर्नादितं च मनोरमम् ।
विमानमगमत्स्वर्गान्मृगव्याधनिनीषया ॥ ४३ ॥
तद्भूतं सर्वभूतानामभावाय किलार्जुन ।
तपस्तप्त्वा वरं प्राप्तं कृतमन्धं स्वयम्भुवा ॥ ४४ ॥

बलाकको अन्धेके मारनेसे ही उत्तम गति मिल गयी । कहीं मूर्ख धर्मके लिये यत्न करने पर भी पापी होजाता है, जैसे नदीके तटपर कौशिक ॥ (३४-३७)

अर्जुन बोले, हे भगवन् ! आप हमको ज्ञान होनेके लिये बलाक, अन्धे, कौशिक और नदीयोंकी कथा कहिये ॥ ( ३८ )

श्रीकृष्ण बोले हे, भारत ! पहले समयमें एक बलाक नाम व्याध था । वह अपने कटुम्बके पालनेको हरिनोंको मारा करता था, परन्तु किसीकी हत्या अपने लिये नहीं करता था॥ अपने बूढे माता पिता और सब कुटुम्बको पालता था । सदा सत्य बोलता था, किसीकी बढतीसे दुखी नहीं होता था और न कभी अपने धर्मको छोडता था ॥ ( ३९-४० )

एक दिन वह वनमें बहुत घूमा परन्तु कहीं हरिण न मिला। थोडे समयमें एक जल पीते अन्धे पशुको देखा,बलाकने उसे पहले कभी नहीं देखा था एक बाणसे उसे मार दिया । अन्धे पशुके मरते ही व्याधके ऊपर फूल बरसने लगे । थोडे समयमें गाती बजाती अप्सराओंके सहित स्वर्गसे एक विमान बलाकके लेनेको आया ॥ (४१-४३)

वह जन्तु सब जगत्का नाश करने

मूर्ध्न्युपाघ्राय चैवैनमिदं पुनरुवाच ह ॥ ३३ ॥
धनञ्जय महाबाहो मानितोऽस्मि दृढं त्वया ।
महात्म्यं विजयं चैव भूयः प्राप्नुहि शाश्वतम् ॥ ३४ ॥

अर्जुन उवाच— अद्य तं पापकर्माणं सानुबन्धं रणे शरैः ।
नयाम्यन्तं समासाद्य राधेयं बलगर्वितम् ॥ ३५ ॥
येन त्वं पीडितो बाणैर्दृढमायम्य कार्मुकम् ।
तस्याद्य कर्मणः कर्णः फलमाप्स्यति दारुणम् ॥ ३६ ॥
अद्य त्वामनुपश्यामि कर्णं हत्वा महीपते ।
सभाजयितुमाक्रन्दादिति सत्यं ब्रवीमि ते ॥ ३७ ॥
नाहत्वा विनिवर्तिष्ये कर्णमद्य रणाजिरात् ।
इति सत्येन ते पादौ स्पृशामि जगतीपते ॥ ३८ ॥

सञ्जय उवाच- इति ब्रुवाणं सुमनाः किरीटिनं युधिष्ठिरः प्राह वचो बृहत्तरम् ।
यशोऽक्षयं जीवितमीप्सितं ते जयं सदा वीर्यमरिक्षयं तथा ॥ ३९ ॥
प्रयाहि वृद्धिं च दिशन्तु देवता यथाहमिच्छामि तवास्तु तत्तथा ।
प्रयाहि शीघ्रं जहि कर्णमाहवे पुरन्दरो वृत्रमिवात्मवृद्धये ॥४०॥[३५५८]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां कर्णपर्वणि
अर्जुनप्रतिज्ञायामेकसप्ततितमोऽध्यायः ॥ ७१ ॥

अर्जुनको उठाकर छातीसे लगाकर माथा सूंघा और ऐसे वचन कहे। हे महाबाहो ! हे धनञ्जय ! तुमने हमारा बहुत सत्कार किया, अब युद्धमें जाकर अपना महात्म्य बढाओ और बहुत विजय करो॥(३२-३४

अर्जुन बोले, हे महाराज ! आज मैं उस पापी अभिमानी दुष्ट राधापुत्रको अपने बाणोंसे सहायकोंके सहित मारूंगा, उसने धनुषसे छूटे अनेक बाणोंसे आपको पीडा दी है सो आज अपने कर्मका फल पावेगा ॥ हे महाराज ! अब आप कुछ सोच मत कीजिये मैं उसको मारकर ही अब आपके दर्शन करूंगा, मैंने यह प्रतिज्ञा आपके रोनेहीसे कर ली है। हे पृथ्वीनाथ ! हम सत्य शपथ करते हैं, कि विना कर्णके मारे आपके दर्शन न करूंगा ॥ (३५-३८)

सञ्जय बोले, हे राजन् ! अर्जुनके ऐसे वचन सुन महाराज युधिष्ठिर अक्षय यश देनेवाले जीवन और इच्छाको बढानेवाले अर्जुनके उत्साह वर्द्धक और अक्षय वचन बोले, हम जो कुछ चाहते है सब देवता तुम्हारे लिये वैसा ही करें अब तुम जाओ और जैसे इन्द्रने

गतः स कष्टं नरकं सूक्ष्मधर्मेष्वकोविदः ।
यथा चाल्पश्रुतो मूढो धर्माणामविभागवित् ॥ ५३ ॥
वृद्धानपृष्ट्वा सन्देहं महच्छ्वभ्रमिवार्हति ।
तत्र ते लक्षणोद्देशः कश्चिदेवं भविष्यति ॥ ५४ ॥
दुष्करं परमं ज्ञानं तर्केणानुव्यवस्यति ।
श्रुतेर्धर्म इति ह्येके वदन्ति बहवो जनाः ॥ ५५ ॥
तत्ते न प्रत्यसूयामि न च सर्वं विधीयते ।
प्रभवार्थाय भूतानां धर्मप्रवचनं कृतम् ॥ ५६ ॥
यत्स्यादहिंसासंयुक्तं स धर्म इति निश्चयः ।
अहिंसार्थाय हिंस्राणां धर्मप्रवचनं कृतम् ॥ ५७ ॥
धारणाद्धर्ममित्याहुर्धर्मो धारयते प्रजाः ।
यत्स्याद्धारणसंयुक्तं स धर्म इति निश्चयः ॥ ५८ ॥
ये न्यायेन जिहीर्षन्तो धर्ममिच्छन्ति कर्हिचित् ।
अकूजनेन मोक्षं वा नानुकूजेत्कथञ्चन ॥ ५९ ॥
अवश्यं कूजितव्ये वा शङ्केरन्नप्यकूजतः ।

और मूर्खताके कारण घोर नरकमें गया, इसीसे हम कहते हैं, कि धर्मको जानना बहुत सूक्ष्म है ॥ (४९–५३)

तुम धर्म और अधर्मका विना निश्चय किये और बूढोंसे विना पूछे जो कर्म करते हो इससे नरकमें जाओगे । कोई महात्मा कहते हैं, कि वेद धर्मका मूल है, कोई कोई कहते है, कि जो तर्कोंमे सिद्ध हो वही धर्म है, परन्तु हम जानते हैं, कि धर्मको जानना बहुत कठिन है । हम ऊपर कहे किसी लक्षणका खण्डन नहीं करते हैं परन्तु यह अवश्य कहते है, कि मनुष्योंकी उन्नतिके लिये ही मुनियोंने समयके अनुसार धर्मके लक्षण बना लिये हैं । हमारी बुद्धिमें किसीकी हिंसा न करना केवल यही धर्म है, मुनियोंने हिंसकोंकी हिंसाके रोकनेके लिये ही धर्म के अनेक वचन लिख दिये हैं ॥ ५४-५७

जो धारण करता है वही धर्म कहाता है धर्म प्रजाओंका धारण करता है इस लिये उसे धर्म कहते हैं॥ यों मूर्खही कहते हैं कि पराई स्त्रीके पास जाना और जन्तुओंको मारना ही धर्म है, उन वेद विरोधीयोंको मोक्ष नहीं होती, उनसे धर्मात्माओंको बात भी नहीं करनी चाहिये ॥ जहां सत्य कहनेमें कुछ शङ्का हो अर्थात् सत्य कहनेमें किसीका नाश होता हो चुप होजाय और जो चुप न

तस्य राजा महाप्राज्ञो धर्मराजो युधिष्ठिरः ।
आशिषोऽयुंक्त सततः प्रायात्कर्णरथं प्रति ॥ ९ ॥
तमायान्तं महेष्वासं दृष्ट्वा भूतानि भारत ।
निहतं मेनिरे कर्णं पाण्डवेन महात्मना ॥ १० ॥
बभूवुर्विमलाः सर्वा दिशो राजन्समन्ततः ।
चाषाश्च शतपत्राश्च क्रौञ्चाश्चैव जनेश्वर. ॥ ११ ॥
प्रदक्षिणमकुर्वन्त तदा वै पाण्डुनन्दनम् ।
बहवः पक्षिणो राजन्पुन्नामानः शुभाः शिवाः ॥ १२ ॥
त्वरयन्तोऽर्जुनं युद्धे हृष्टरूपा ववाशिरे ।
कङ्का गृध्रा बकाः श्येना वायसाश्च विशाम्पते ॥ १३ ॥
अग्रतस्तस्य गच्छन्ति मांसहेतोर्भयानकाः ।
निमित्तानि च धन्यानि पाण्डवस्य शशंसिरे ॥ १४ ॥
विनाशमरिसैन्यानां कर्णस्य च वधं प्रति ।
प्रयातस्याथ पार्थस्य महान्स्वेदो व्यजायत ॥ १५ ॥
चिन्ता च विपुला जज्ञे कथं चेदं भविष्यति ।
ततो गाण्डीवधन्वानमब्रवीन्मधुसूदनः ।
दृष्ट्वा पार्थं तथा यान्तं चिन्तापारिगतं तदा ॥ १६ ॥

वासुदेव उवाच— गाण्डीवधन्वन्संग्रामे ये त्वया धनुषा जिताः ।

बैठे ॥ अनन्तर बुद्धिमान धर्मराजने अनेक आशीर्वाद दिये और आप भी रथमें चढकर कर्णसे युद्ध करनेको चले महा-धनुपधारी अर्जुनको आते देख सबने कर्णको मारा जान लिया ॥ (७–१०)

उन्हें चलता देख सब दिशा विमल होगयी । चाप, शतपत्र और क्रौञ्च पक्षी बोलने लगे, और भी अनेक पुरुषनाम-वाले उत्तम पक्षी अर्जुनकी दहिनी ओर मङ्गल शब्द बोलने लगे ॥ हे पृथ्वीनाथ उस समय अर्जुनके रथके आगे मांस खानेके लिये कंक, गिद्ध, बाज, कौवे इस प्रकार उडने लगे, मानो उन्हें युद्धके लिये शीघ्र बुलाते है और भी अनेक शकुन हुए ॥ (११–१६)

उस समय अर्जुनको पसीना आगया और चित्तमें बहुत चिन्ता हुई कि आज किस प्रकार इस घोर प्रतिज्ञासे पार हूंगा ? श्रीकृष्णने अपने मनमें जान लिया कि इस समय अर्जुन बहुत शोचमें हैं । (१६)

श्रीकृष्ण बोले, हे गाण्डीव धनुप-

गतिश्च परमा कृष्ण त्वमेव च परायणम् ।
न हि ते त्रिषु लोकेषु विद्यतेऽविदितं क्वचित् ॥ ६९ ॥
तस्माद्भवान्परं धर्मं वेद सर्वं यथातथम् ।
अवध्यं पाण्डवं मन्ये धर्मराजं युधिष्ठिरम् ॥ ७० ॥
अस्मिंस्तु मम सङ्कल्पे ब्रूहि किञ्चिदनुग्रहम् ।
इदं वा परमत्रैव शृणु हृत्स्थं विवक्षितम् ॥ ७१ ॥
जानासि दाशार्ह मम व्रतं त्वं यो मां ब्रूयात्कश्चन मानुषेषु ।
अन्यस्मै त्वं गाण्डिवं देहि पार्थ त्वत्तोऽस्त्रैर्वा वीर्यतो वा विशिष्टः ॥७२॥
हन्यामहं केशव तं प्रसह्य भीमो हन्यात्तूवरकेति चोक्तः ।
तन्मे राजा प्रोक्तवांस्ते समक्षं धनुर्देहीत्यसकृद्वृष्णिवीर ॥ ७३ ॥
तं हन्यां चेत्केशव जीवलोके स्थाता नाहं कालमप्यल्पमात्रम् ।
ध्यात्वा नूनं ह्येनसा चापि मुक्तो वधं राज्ञो भ्रष्टवीर्यो विचेताः ॥ ७४ ॥
यथा प्रतिज्ञा मम लोकबुद्धौ भवेत्सत्या धर्मभृतां वरिष्ठ ।
यथा जीवेत्पाडवोऽहं च कृष्ण तथा बुद्धिं दातुमप्यर्हसि त्वम् ॥ ७५ ॥
वासुदेव उवाच राजा श्रान्तो विक्षतो दुःखितश्च कर्णेन सङ्ख्ये निशितैर्बाणसङ्घैः।

हमारे माता और पिताके समान है। इसी लिये हमारे कल्याणके वचन कहते हैं। हे कृष्ण! तुम ही हमारी गति हो तीनोंलोकोंमें ऐसी कोई बात नहीं जो आप नहीं जानते, जगत्‌के सब धर्मोंको आप जानते हैं। इसलिये अव हमने जान लिया कि धर्मराज युधिष्ठिर मारने योग्य नहीं है परन्तु हमने जो प्रतिज्ञा की थी वह झूठ हुई जाती है। ( ६७-७१ )

इसलिये उसके उद्धारका कुछ यत्न वताइये क्यों कि आप हमारे सङ्कल्पको जानते हैं, कि जो मनुष्य हमसे कहेगा कि अपना धनुप दूसरेको देदो यह कैसा ही योद्धा और उत्तम मनुष्य क्यों न हो मैं उसे मार डालूंगा ऐसे ही भीमसेनकी यह प्रतिज्ञा है, कि जो उन्हें अधिक खाने वाला, वतावेगा उसे मार डालेंगे, सो आपके आगे महाराजने कहा कि तुम दूसरेको धनुप देदो अब यदि मैं महाराजको मारता हूं तो क्षण भर भी नहीं जी सकूंगा, मेरा बल वीर्य तेज नष्ट हो जायगा तथा इस पापसे भी कभी नहीं छूटूंगा। हे धर्मधारियोंमें श्रेष्ठ! जिसमें हमारी प्रतिज्ञा भी सत्य हो और हम दोनों भाई जीते भी रहें ऐसी कोई बुद्धि हमें बताइये ॥ (७१-७५ )

श्रीकृष्णचन्द्र बोले, हे वीर! महाराज सदा कर्णके दुःखसे व्याकुल रहते

अवश्यं तु मया वाच्यं यत्पथ्यं नव पाण्डव ॥ २५ ॥
मावमंस्था महाबाहो कर्णमाहवशोभिनम् ।
कर्णो हि बलवान्दृप्तः कृतास्त्रश्च महारथः ॥ २६ ॥
कृती च चित्रयोधी च देशकालस्य कोविदः ।
बहुनात्र किमुक्तेन संक्षेपाच्छृणु पाण्डव ॥ २७ ॥
त्वत्समं त्वद्विशिष्टं वा कर्णं मन्ये महारथम् ।
परमं यत्नमास्थाय त्वया वध्यो महाहवे ॥ २८ ॥
तेजसा वह्निसदृशो वायुवेगसमो जवे ।
अन्तकप्रतिमः क्रोधे सिंहसंहननो बली ॥ २९ ॥
अष्टरत्निर्महाबाहुर्व्यूढोरस्कः सुदुर्जयः ।
अभिमानी च शूरश्च प्रवीरः प्रियदर्शनः ॥ ३० ॥
सर्वयोधगुणैर्युक्तो मित्राणामभयङ्करः ।
सततं पाण्डवद्वेषी धार्तराष्ट्रहिते रतः ॥ ३१ ॥
सर्वैरवध्यो राधेयो देवैरपि सवासवैः ।
ऋते त्वामिति मे बुद्धिस्तदद्य जहि सूतजम् ॥ ३२ ॥
देवैरपि हि संयत्तैर्बिभ्रद्भिर्मांसशोणितम् ।

परन्तु तुम कर्णका अवमान भी मत करो, क्यों कि वह शस्त्र विद्या जाननेवाले, महा बलवान्, महा योद्धा और महारथ हैं। (२४—२६)

हे पाण्डव! कर्ण विचित्र योद्धा, बुद्धिमान और देश कालके जाननेवाले हैं॥ अधिक उनके गुण कहां तक कहें हम संक्षेपरूपसे कहते हैं सो सुनो। हम महारथ कर्णको तुम्हारे समान अथवा तुमसे भी अधिक योद्धा जानते हैं। इसलिये बहुत यत्न करके उसे मारना॥ (२७—२८)

सिंहके समान पराक्रमी कर्ण तेजमें अग्नि, बलमें वायु और क्रोधमें यमराजके समान हैं। महाबाहु कर्ण बडे अभिमानी, शूरवीर, सुन्दर और ऊंची छातीवाले हैं, इनमें वीरोंके सब गुण भरे हैं। वही कर्ण सदासे पाण्डवोंके वैरी और मित्रोंको सुख देनेवाले हैं। और धृतराष्ट्रके पुत्रोंके शुभ चिन्तक हैं। हमारी बुद्धिमें राधापुत्रको तुम्हारे सिवाय देवतोंके सहित इन्द्रकी भी मारनेकी शक्ति नहीं है। इसलिये तुम आज उसे मार डालो॥ (२९—३२)

यदि सब देवता और सब योद्धा मांस रुधिरमें भीगकरभी युद्ध करें तोभी

त्वमित्यत्र भवन्तं हि ब्रूहि पार्थ युधिष्ठिरम्।
त्वमित्युक्तो हि निहतो गुरुर्भवति भारत ॥ ८३ ॥
एवमाचर कौन्तेय धर्मराजे युधिष्ठिरे ।
अधर्मयुक्तं संयोगं कुरुष्वैनं कुरूद्वह ॥ ८४ ॥
अथर्वाङ्गिरसी ह्येषा श्रुतीनामुत्तमा श्रुतिः ।
अविचार्यैव कार्यैषा श्रेयस्कामैर्नरैः सदा ॥ ८५ ॥
अवधेन वधः प्रोक्तो यद्गुरुस्त्वमिति प्रभुः ।
तद् ब्रूहि त्वं यन्मयोक्तं धर्मराजस्य धर्मवित्॥ ८६ ॥
वधं ह्ययं पाण्डव धर्मराजस्त्वत्तोऽयुक्तं वेत्स्यते चैवमेषः ।
ततोऽस्य पादावभिवाद्य पश्चात्समं ब्रूयाः सान्त्वयित्वा च पार्थम् ॥८७॥
भ्राता प्राज्ञस्तव कोपं न जातु कुर्याद्राजा धर्ममवेक्ष्य चापि ।
मुक्तोऽनृताद्भ्रातृवधाच्च पार्थ हृष्टः कर्णं त्वं जहि सूतपुत्रम्॥ ८८ ॥३४५८

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां कर्णपर्वणि कृष्णार्जुनसंवादे ऊनसप्ततितमोऽध्यायः ६९

सञ्जय उवाच– इत्येवमुक्तस्तु जनार्दनेन पार्थः प्रशस्याथ सुहृद्वचस्तत् ।
ततोऽब्रवीदर्जुनो धर्मराजमनुक्तपूर्वं परुषं प्रसह्य ॥ १ ॥

जायंगे। हे भारत! तुम महाराजको 'आप'के स्थानपर 'तुम' कह दो बस इतनेही से वे मरगये समझो ॥(८१–८३)

हे कुरुकुल श्रेष्ठ कुन्तीपुत्र! तुम यही व्योहार महाराजके सङ्ग करो, तुम्हारे लिये यही अधर्म बहुत है और आङ्गिरा मुनिने ये वचन कहे है। धर्म चाहनेवालोंको ये अवश्यही करने चाहिये। गुरुको, 'तुम' कहना ही उन्हें मार डालना है, इसलिये तुम धर्मराजसे ऐसा ही कह दो, ये कुन्तीपुत्र युधिष्ठिर तुम्हारे हाथसे होनेवाले वधको जानेगा। पीछे इस प्रकारकी विषमताका परिहार करनेके लिये तुम्हें धर्मराजकी पादाभिवन्दन पूर्वक सान्त्वना करनी चाहिये क्यों कि ये तुम्हारे बडे भाई और धर्मके जाननेवाले और सब लोकके राजा हैं। वह तुम्हारे ऊपर कुछ भी क्रोध नहीं करेगा। इस प्रकार तुमभी इस असत्य और घोर पापसे छूट जाओगे, पीछे कर्णको मारो॥ (८४–८८) [ ३४५८ ]

कर्णपर्वमें उनत्तर अध्याय समाप्त।

कर्णपर्वमें सत्तर अध्याय।

सञ्जय बोले, हे राजन्! अर्जुन श्री कृष्णके ऐसे वचन सुन और उनके वचनकी प्रशंसा करके धर्मराज युधिष्ठिरसे जो पहिले कभी नहीं कहा ऐसा कठोर वचन कहने लगे। अर्जुन बोले हे राजन्!

कृतसङ्कल्पमायान्तं वधे कर्णस्य भारत ॥ १ ॥
अद्य सप्तदशाहानि वर्तमानस्य भारत ।
विनाशस्यातिघोरस्य नरवारणवाजिनाम् ॥ २ ॥
भूत्वा हि विपुला सेना तावकानां परैः सह ।
अन्योन्यं समरं प्राप्य किञ्चिच्छेषा विशाम्पते ॥ ३ ॥
भूत्वा वै कौरवाः पार्थ प्रभूतगजवाजिनः ।
त्वां वै शत्रुं समासाद्य विनष्टा रणमूर्धनि ॥ ४ ॥
एते ते पृथिवीपालाः सृञ्जयाश्च समागताः ।
त्वां समासाद्य दुर्धर्षं पाण्डवाश्च व्यवस्थिताः ॥ ५ ॥
पाञ्चालैः पाण्डवैर्मत्स्यैः कारूषैश्चेदिभिः सह ।
त्वया गुप्तैरमित्रघ्नैः कृतः शत्रुगणक्षयः ॥ ६ ॥
को हि शक्तो रणे जेतुं कौरवांस्तात संयुगे ।
अन्यत्र पाण्डवान्युद्धे त्वया गुप्तान्महारथान् ॥ ७ ॥
शक्तस्त्वं हि रणे जेतुं ससुरासुरमानुषान् ।
त्रींल्लोकान्समरे युक्तान्किं पुनः कौरवं बलम् ॥ ८ ॥
भगदत्तं च राजानं कोऽन्यः शक्तस्त्वया विना ।
जेतुं पुरुषशार्दूल योऽपि स्याद्वासवोपमः ॥ ९ ॥

मनमें कर्णके मारनेका दृढ सङ्कल्प जान कर श्रीकृष्ण फिर बोले, हे अर्जुन! हाथी, घोडे और मनुष्योंको मरते आज सतरह दिन होगये। अब तुम्हारी सेना शत्रुओंसे युद्ध करते बहुत थोडी बची है। पहले कौरवोंके सङ्ग बहुत हाथी, घोडे और रथ थे, परन्तु अब तुमने उनको नष्ट कर दिया॥ (१-४)

ये सब सृञ्जय आदि अनेक राजा तुम्हारी ओरसे युद्ध करनेको आये है। और तुम्हारे ही आश्रयसे सब पाण्डव युद्ध कर रहे है॥ तुमने पाञ्चाल, पाण्डव, मत्स्य, कारुष और चेदीके शत्रुनाशन क्षत्रियोंकी सहायतासे अपने शत्रुओंका नाश किया और अपनी सेनाकी रक्षा भी की॥ हे अर्जुन! तुमसे रक्षित महारथ पाण्डवोंके सिवाय कौरवोंको कौन जीत सक्ता? (५-७)

तुम अपने बलसे देवता और राक्षसों के सहित तीनों लोकोंको जीत सक्ते हो तब कौरवोंकी सेनाकी तो कथा ही क्या है? हे कुरुकुलशार्दूल! राजा भगदत्तके जीतनेमें तुम्हारे सिवाय और किस इन्द्रके समान मनुष्यकी शक्ति

निहन्ति यः शत्रुगणाननेकान्स मामुपालब्धुमरिन्दमोऽर्हति ॥९ ॥
स युक्तमास्थाय रथं हि काले धनुर्विधुन्वञ्शरपूर्णमुष्टिः ।
सृजत्यसौ शरवर्षाणि वीरो महाहवे मेघ इवाम्बुधाराः ॥ १० ॥
शतान्यष्टौ वारणानामवश्यं विशातितैः कुम्भकराग्रहस्तैः ।
भीमेनाजौ निहतान्यद्य बाणैः स मां क्रूरं वक्तुमर्हत्यरिघ्नः ॥ ११ ॥
बलं तु वाचि द्विजसत्तमानां क्षात्रं बुधा बाहुबलं वदन्ति ।
त्वं वाग्बलो भारत निष्ठुरश्च त्वमेव मां वेत्थ यथाबलोऽहम् ॥ १२ ॥
यते ह नित्यं तव कर्तुमिष्टं दारैः सुतैर्जीवितेनात्मना च ।
एवं यन्मां वाग्विशिखेन हंसि त्वत्तः सुखं न वयं विद्म किञ्चित् ॥१३ ॥
मां मावमंस्था द्रौपदीतल्पसंस्थो महारथान्प्रतिहन्मि त्वदर्थे ।
तेनाभिशङ्की भारत निष्ठुरोऽसि त्वत्तः सुखं नाभिजानामि किञ्चित् ॥१४॥
प्रोक्तः स्वयं सत्यसन्धेन मृत्युस्तव प्रियार्थं नरदेव युद्धे ।
वीरः शिखण्डी द्रौपदोऽसौ महात्मा मयाभिगुप्तेन हतश्च तेन ॥ १५ ॥
न चाभिनन्दामि तवाधिराज्यं यतस्त्वमक्षेष्वहिताय सक्तः ।

हैं ॥ जो भीमसेन, कलिङ्ग, वङ्ग, काले मेघके समान मतवाले अङ्ग और निषाददेशी योद्धाओंको मार रहे हैं वही हमारी निन्दा कर सकते है ॥ जो भीमसेन उत्तम रथपर बैठकर धनुष घुमाकर मेघके समान बाण वर्षा रहे है और जिन्होंने अपने बाणोंसे उत्तम सूंड और कुम्भवाले आठ सौ मतवाले हाथियोंको मारडाला वही शत्रुनाशन भीमसेन हमारी निन्दा कर सकते हैं ॥ (८–११)

हे भारत! ब्राह्मणोंको वचन और क्षत्रियोंको हाथका बल होता है। तुम्हें केवल वचनहीका बल है। तुम बडे निष्ठुर हो और हमारा जैसा पराक्रम है, वैसा तुम जानते हो। हम स्त्री, पुत्र, धन और अपने शरीरसे भी सदा तुम्हारा कल्याण करनेको उपस्थित रहते हैं, तौ भी तुम ऐसे तीक्ष्ण वचनरूपी बाणोंसे हमें मारते हो, अर्थात् तुम्हारे से हमको कुच्छ भी सुख नहीं होता है। हे भारत! अब हम तुम्हारे लिये अनेक महारथोंको मारते हैं। तथापि तुम बडे निष्ठुर हो तुमसे कुच्छ भी सुख मिलनेकी आशा हमें नहीं है ॥ (१२–१४)

तुम्हारे लिये ही सत्यवादी भीष्मने अपनी मृत्यु बतादी, उनको पराक्रमी द्रुपदपुत्र शिखण्डीने मेरी सहायतासे मारडाला। हम तुम्हारे राज्यकी प्रशंसा भी नहीं करते, उस समय भी तुमने पापका मूल जुआ खेला। अब अपने

उग्राश्च भीमकर्माणस्तुषारा यवनाः खशाः।
दार्वाभिसारा दरदाः शका माठरतङ्गणाः ॥ १९ ॥
आन्ध्रकाश्च पुलिन्दाश्च किराताश्चोग्रविक्रमाः।
म्लेच्छाश्च पर्वतीयाश्च सागरानूपवासिनः ॥ २० ॥
संरम्भिणो युद्धशौण्डा बलिनो दण्डपाणयः।
एते सुयोधनस्यार्थे संरब्धाः कुरुभिः सह ॥ २१ ॥
न शक्या युधि निर्जेतुं त्वदन्येन परन्तप।
धार्तराष्ट्रमुदग्रं हि व्यूढं दृष्ट्वा महद्बलम् ॥ २२ ॥
यदि त्वं न भवेस्त्राता प्रतीयात्को नु मानवः।
तत्सागरमिवोद्धूतं रजसा संवृतं बलम् ॥ २३ ॥
विदार्य पाण्डवैः क्रुद्धैस्त्वया गुप्तैर्हतं विभो।
मागधानामधिपतिर्जयत्सेनो महाबलः ॥ २४ ॥
अद्य सप्तैव चाहानि हतः सङ्ख्येऽभिमन्युना।
ततो दशसहस्राणि गजानां भीमकर्मणाम् ॥ २५ ॥
जघान गदया भीमस्तस्य राज्ञः परिच्छदम्।
ततोऽन्येऽभिहता नागा रथाश्च शतशो बलात् ॥२६॥
तदेवं समरे पार्थ वर्तमाने महाभये।
भीमसेनं समासाद्य त्वां च पाण्डव कौरवाः ॥ २७ ॥

तुषार, यवन, खश, दार्वाभिसार, शक, माठर, तङ्गण, आंध्र, पुलिन्द, किरात, पराक्रमी म्लेच्छ, पर्वतीय और समुद्र तटके सब योद्धा केवल दुर्योधनके अपराधसे मारे गये। ये सब क्रोधी घोर कर्म करनेवाले, महापराक्रमी युद्धसे न हटनेवाले बलवान् और दण्डधारी थे। हे शत्रुनाशन ! तुम्हारे सिवाय इन सबको और कोई नहीं जीत सक्ता था। १९-२२

उस समुद्रके समान भारी धूली उडाती हुई दुर्योधनकी महासेनाको तुम न होते तो कौन मारता ? और कौन पाण्डवोंकी रक्षा करता ? तुम्हारी ही सहायतासे कौरवोंकी सेनाको व्याकुल करके मगध देशके महाबलवान् राजा जयत्सेनको आज सात दिन हुए कि अभिमन्युने मारा था। अनन्तर भीमसेनने उसी दिन अपनी गदासे दश हजार हाथी मारे और उस राजाकी सेनाका नाश कर दिया ॥ (२२-२६)

हे पाण्डव ! उस घोर युद्धमें तुमने और भीमसेनने कौरवोंकी सेनाका हाथी,

तमाह कृष्णः किमिदं पुनर्भवान्विकोशमाकाशनिभं करोत्यसिम् ॥२३॥
ब्रवीहि मां त्वं पुनरुत्तरं वचस्तथा प्रवक्ष्याम्यहमर्थसिद्धये ।
इत्येवमुक्तः पुरुषोत्तमेनः सुदुःखितः केशवमर्जुनोऽब्रवीत् ॥२४ ॥
अहं हनिष्ये स्वशरीरमेव प्रसह्य येनाहितमाचरं वै ।
निशम्य तत्पार्थवचोऽब्रवीदिदं धनञ्जयं धर्मभृतां वरिष्ठः ॥ २५ ॥
राजानमेनं त्वमितीदमुक्त्वा किं कश्मलं प्राविशः पार्थ घोरम् ।
त्वं चात्मानं हन्तुमिच्छस्यरिघ्न नेदं साद्भिः सेवितं वै किरीटिन् ॥ २६ ॥
धर्मात्मानं भ्रातरं ज्येष्ठमद्य खड्गेन चैनं यदि हन्या नृवीर ।
धर्माद्भीतस्तत्कथं नाम ते स्यात्किञ्चोत्तरं वाकरिष्यस्त्वमेव ॥ २७ ॥
सूक्ष्मो धर्मो दुर्विदश्चापि पार्थ विशेषतोऽज्ञैः प्रोच्यमानं निबोध ।
हत्वात्मानमात्मना प्राप्नुयास्त्वं वधाद्भ्रातुर्नरकं चातिघोरम् ॥ २८ ॥
ब्रवीहि वाचाद्य गुणानिहात्मनस्तथा हतात्मा भवितासि पार्थ ।
तथास्तु कृष्णेत्यभिनन्द्य तद्वचो धनञ्जयः प्राह धनुर्विनाम्य ॥ २९ ॥
युधिष्ठिरं धर्मभृतां वरिष्ठं शृणुष्व राजन्निति शक्रसूनुः ।

---

खड्ग खींचा, तब श्रीकृष्णने कहा कि, हे अर्जुन ! अब तुमने फिर आकाशके समान वर्णवाला अपना खड्ग क्यों निकाला ? तुम अपने मनका प्रयोजन कहो तो हम फिर तुमको उसका उत्तर देंगे ॥ (२२–२४)

श्रीकृष्णके ऐसे वचन सुन अर्जुन दुःखित होकर बोले, अब मैं अपने शरीरहीको नाश करूंगा । यही सब दुःखोंका मूल है । इसीने धर्मराज युधिष्ठिरको अनेक दुर्वाक्य कहे हैं । (२४–२५)

श्रीकृष्ण बोले, हे अर्जुन ! हे किरीटी ! तुमने राजाको जो कहा इसीसे अब दुःख करते हो और इसीसे अपने शरीरको नाश करना चाहते हो यह बात ठीक नहीं, महात्मा लोग इस व्यवहारकी निन्दा करते हैं । (२५–२६)

हे वीर ! यदि तुम अपने खड्गसे धर्मात्मा युधिष्ठिरको मारते और फिर उस कर्मसे ऐसे ही पस्ताते तो कैसा होता ? और जगत्में तुम क्या उत्तर देते ? हे कुन्तीपुत्र ! धर्म बहुत सूक्ष्म वस्तु है । उसको पण्डित लोग भी कठिनतासे जान सकते है । हम जो तुमसे कहते हैं सो तुम सुनो । अपनी अथवा भाईकी हत्या करके नरकमें जानेका प्रबन्ध मत करो । तुम अपने गुणोंका स्मरण करो और आत्महत्या मत करो ॥ (२६–२९)

श्रीकृष्णके वचन सुन बहुत अच्छा

मज्जन्तमप्लवे मन्दमुज्जिहीर्षुः सुयोधनम् ॥ ३६ ॥
तथा चरन्तं समरे तपन्तमिव भास्करम् ।
पदातिकोटिसाहस्राः प्रवरायुधपाणयः ॥ ३७ ॥
न शेकुः सृञ्जया द्रष्टुं तथैवान्ये महीक्षितः ।
विचरन्तं तथा तं तु संग्रामे जितकाशिनम् ॥ ३८ ॥
सर्वोद्यमेन महता पाण्डवान्समभिद्रवत् ।
स तु विद्राव्य समरे पाण्डवान्सृञ्जयानपि ॥ ३९ ॥
एक एव रणे भीष्म एकवीरत्वमागतः ।
तं शिखण्डी समासाद्य त्वया गुप्तो महाव्रतम् ॥ ४० ॥
जघान पुरुषव्याघ्रं शरैः सन्नतपर्वभिः ।
स एष पतितः शेते शरतल्पे पितामहः ॥ ४१ ॥
त्वां प्राप्य पुरुषव्याघ्रं वृत्रः प्राप्येव वासवम् ।
द्रोणः पञ्च दिनान्युग्रो विधम्य रिपुवाहिनीम् ॥ ४२ ॥
कृत्वा व्यूहमभेद्यं च पातयित्वा महारथान् ।
जयद्रथस्य समरे कृत्वा रक्षां महारथः ॥ ४३ ॥
अन्तकप्रतिमश्चोग्रो रात्रियुद्धेऽदहत्प्रजाः ।
दग्ध्वा योधाञ्छरैर्वीरो भारद्वाजः प्रतापवान् ॥ ४४ ॥
धृष्टद्युम्नं समासाद्य स गतः परमां गतिम् ।
यदि वाद्य भवान्युद्धे सूतपुत्रमुखान्रथान् ॥ ४५ ॥

---

लिये भीष्मने अपने बाणोंसे पाण्डवोंकी सेनाका नाश कर दिया। उनको सूर्यके समान सेनामें घूमते देख सहस्रों शस्त्र धारी, पदाति और सृञ्जय आदि राजा उनको देख नहीं सके। (३५–३८)

विजयी भीष्मने अनेक यत्न करके पाण्डव और सृञ्जयोंको नाशकर दिया उस समय सेनामें केवल भीष्म ही भीष्म दीखते थे, तब शिखण्डीने तुम्हारी सहायतासे अपने तेज बाणोंसे उन पुरुषसिंहको मारडाला, वे ही भीष्म अभी शरशय्यापर सोते हैं॥ (३८–४२)

इसी प्रकार द्रोणाचार्यने भी पांच दिनतक तुम्हारी सेनाका नाश किया। अमोघ व्यूह बनाकर महारथोंको मार कर और जयद्रथकी रक्षा करके रात्रिके घोर युद्धमें अपने बाणरूपी अग्निसे तुम्हारी सेनाको भस्म किया, पश्चात् महाप्रतापी द्रोणाचार्यको धृष्टद्युम्नने मारा, यदि आज तुम कर्ण आदि महा-

अद्यापुत्रा सूतमाता भवित्री कुन्ती वाथो वा मया तेन वापि ।
सत्यं वदाम्यद्य न कर्णमाजौ शरैरहत्वा कवचं विमोक्ष्ये ॥ ३७ ॥
सञ्जय उवाच—इत्येवमुक्त्वा पुनरेव पार्थो युधिष्ठिरं धर्मभृतां वरिष्ठम् ।
विमुच्य शस्त्राणि धनुर्विसृज्य कोशं च खड्गं विनिधाय तूर्णम् ॥ ३८ ॥
स व्रीडया नम्रशिराः किरीटी युधिष्ठिरं प्राञ्जलिरभ्युवाच ।
प्रसीद राजन्क्षम यन्मयोक्तं काले भवान्वेत्स्यति तन्नमस्ते ॥ ३९ ॥
प्रसाद्य राजानममित्रसाहं स्थितोऽब्रवीच्चैव पुनः प्रवीरः ।
नेदं चिरात्क्षिप्रमिदं भविष्यत्यावर्तते साध्वभियामि चैनम् ॥ ४० ॥
यास्येष भीमं समरात्प्रमोक्तुं सर्वात्मना सूतपुत्रं च हन्तुम् ।
तव प्रियार्थं मम जीवितं हि ब्रवीमि सत्यं तदवेहि राजन् ॥ ४१ ॥
इति प्रयास्यन्नुपगृह्य पादौ समुत्थितो दीप्ततेजाः किरीटी ।
एतच्छ्रुत्वा पाण्डवो धर्मराजो भ्रातुर्वाक्यं परुषं फाल्गुनस्य ॥४२॥
उत्थाय तस्माच्छयनादुवाच पार्थं ततो दुःखपरीतचेताः ।
कृतं मया पार्थ यथा न साधु येन प्राप्तं व्यसनं वः सुघोरम् ॥ ४३ ॥
तस्माच्छिरश्छिन्धि ममेदमद्य कुलान्तकस्याधमपूरुषस्य ।

---

अब हम आपसे सत्य प्रतिज्ञा करते हैं कि, या तो आज कर्णकी माता कर्णसे हीन अथवा कुन्ती मुझसे रहित होजायगी, अब हम कर्णके मारे विना अपना कवच नहीं खोलेंगे ॥ (३६-३७)

सञ्जय बोले, हे राजन् ! ऐसा कह कर अर्जुनने अपने खड्गको म्यानमें रक्खा और धनुष वाण पृथ्वीमें रखकर हाथ जोड कर पैरोंमें शिर रखके अत्यन्त नम्र वातोंसे युधिष्ठिरसे बोले, हे महाराजाधिराज ! हम आपके चरणोंमें प्रणाम करते है। आप हमसे प्रसन्न हूजिये, आप मेरी इन सब बातोंको क्षमा कीजिये, तब राजाने इनका सब अपराध क्षमा किया। अनन्तर अर्जुन फिर हाथ जोडकर बोले, अब मैं युद्ध करनेको जाता हूं। जो आपको इस समय सोच है, सो बहुत समय तक नहीं रहेगा। हे राजन् ! अब मैं भीमसेनको युद्धसे छुडा दूंगा, और आज कर्णको अवश्य मारूंगा। मैं सत्य कहता हूं, कि आपकी प्रसन्नताके लिए अपना जीवन भी दे सक्ता हूं। ऐसा कह कर तेजस्वी अर्जुन महाराजके पैरोंमें गिर पडे। (३८—४२)

अर्जुनके ऐसे वचन सुन धर्मात्मा युधिष्ठिर अपने पलङ्गसे उठ और खडे होकर कहने लगे। हे कुन्तीपुत्र ! हमने अच्छा काम नहीं किया, कि जिससे तुम लोगों

तेषां हतावशिष्टास्तु सन्ति पञ्च महारथाः ॥ ५४ ॥
अश्वत्थामा कृतवर्मा कर्णो मद्राधिपः कृपः ।
तांस्त्वमद्य नरव्याघ्र हत्वा पञ्च महारथान् ॥ ५५ ॥
हतामित्रः प्रयच्छोर्वीं राज्ञे सद्वीपपत्तनाम् ।
साकाशजलपातालां सपर्वतमहावनाम् ॥ ५६ ॥
प्राप्नोत्वमितवीर्यश्रीरद्य पार्थो वसुन्धराम् ।
एतां पुरा विष्णुरिव हत्वा दैतेयदानवान् ॥ ५७ ॥
प्रयच्छ मेदिनीं राज्ञे शक्रायेव हरिर्यथा ।
अद्य मोदन्तु पञ्चाला निहतेष्वरिषु त्वया ॥
विष्णुना निहतेष्वेव दानवेयेषु देवताः ॥ ५८ ॥
यदि वा द्विपदां श्रेष्ठं द्रोणं मानयतो गुरुम् ।
अश्वत्थाम्नि कृपा तेऽस्ति कृपे वाचार्यगौरवात् ॥५९॥
अत्यन्तापचितान्बन्धून्मानयन्मातृबान्धवान् ।
कृतवर्माणमासाद्य न नेष्यासि यमक्षयम् ॥ ६० ॥
भ्रातरं मातुरासाद्य शल्यं मद्रजनाधिपम् ।
यदि त्वमरविन्दाक्ष दयावान्न जिघांससि ॥ ६१ ॥

और तारोंसे रहित आकाश। जैसे इन्द्रने दानवोंकी सेनाका नाश कर दिया था ऐसे ही तुमने उस सेनाका नाश किया। ( ५१–५४ )

अब उधर केवल पांच महारथ शेष रहे हैं॥ अश्वत्थामा, कृतवर्मा, कर्ण, मद्रराज शल्य, और कृपाचार्य बचे हैं। आज इन पांचोंको मारकर राजा युधिष्ठिरको वन, नगर, आकाश, पाताल, जल और द्वीपोंके सहित पृथ्वी दो और शत्रुओंका नाश करो॥ जैसे पहले समयमें विष्णुने दानवोंको मारकर इन्द्रको स्वर्गका राज दिया था, ऐसे ही आज तुम इन सबको मारकर युधिष्ठिरको पृथ्वीका राज्य दो। जैसे दानवोंके मरनेसे देवता प्रसन्न हुए थे, तैसे ही आज कौरवोंके मरनेसे पाञ्चाल प्रसन्न होवें॥ अब महाराज युधिष्ठिर सब जगत्के राजा होवें॥ (५४–५८)

यदि तुम अश्वत्थामाको गुरुपुत्र और कृपाचार्यको गुरु जानकर इन दोनों पर कृपा करो तो और सब बान्धवोंपर दया करो, तो अपनी माताका अत्यन्त सम्बन्ध समझकर कृतवर्माको भी मत मारना। हे कमलनेत्र ! यदि तुम राजा शल्यको अपना मामा समझकर न मारो

तस्मात्त्वं वै महाबाहो मम पार्थस्य चोभयोः ।
व्यतिक्रमामिमं राजन्सत्यसंरक्षणं प्रति ॥ ५२ ॥
शरणं त्वां महाराज प्रपन्नौ स्व उभावपि ।
क्षन्तुमर्हसि मे राजन्प्रणतस्याभियाचतः ॥ ५३ ॥
राधेयस्याद्य पापस्य भूमिः पास्यति शोणितम् ।
सत्यं ते प्रतिजानामि हतं विद्ध्यद्य सूतजम् ॥ ५४ ॥
यस्येच्छसि वधं तस्य गतमप्यस्य जीवितम् ।
इति कृष्णवचः श्रुत्वा धर्मराजो युधिष्ठिरः ॥ ५५ ॥
ससम्भ्रमं हृषीकेशमुत्थाप्य प्रणतं तदा ।
कृताञ्जलिस्ततो वाक्यमुवाचानन्तरं वचः ॥ ५६ ॥
एवमेव यथात्थ त्वमस्त्येषोऽतिक्रमो मम ।
अनुनीतोऽस्मि गोविन्द तारितश्चास्मि माधव॥ ५७ ॥
मोचिता व्यसनाद्धोराद्वयमद्य त्वयाच्युत ।
भवन्तं नाथमासाद्य ह्यावां व्यसनसागरात् ॥ ५८ ॥
घोरादद्य समुत्तीर्णावुभावज्ञानमोहितौ ।
त्वद्बुद्धिप्लवमासाद्य दुःखशोकार्णवाद्वयम् ॥ ५९ ॥

और अर्जुनका अपराध क्षमा कीजिये ये अपराध हम लोगोंने सत्य की रक्षाके लिये किया था ॥ हे महाराज ! अब हम दोनों आपकी शरण हैं । और मैं अब प्रणाम करके आपसे यही भिक्षा मागता हूं, कि आप क्षमा करें। आज पापी राधापुत्रका भूमि खून पियेगी। अब आप जानिये कि कर्ण मारा गया। अब आप सत्य जानिये कि आप मनसे जिसे मारना विचारते है, वह मर गया ॥ ( ५१-५५ )

श्रीकृष्णके ऐसे वचन सुन और उन्हें अपने चरणोंमें पड़ा देख महाराजने उठाया और आदर सहित ऐसा बोले, हे गोविन्द ! हे माधव ! तुम जैसा समझते हो, सो सब ठीक है, तुम्हारी सहायतासे हम सब दुःखोंसे पार हुए हैं ॥ ( ५६—५७ )

तुमने हम लोगोंको घोर दुःखसे छुडाया है । यदि तुम्हारी सहायता न होती तो हम इस दुःखसे न छूटते हम दोनों मूर्खता और अज्ञानताके वशमें होकर इस घोर दुःख और शोकके समुद्रमें डूबे जाते थे, परन्तु तुम्हारी बुद्धिरूपी नावकी सहायतासे पार होगये अब हम अपने मन्त्रियोंके सहित आपसे सनाथ

समितौ गर्जते कर्णस्तमद्य जहि भारत ।
यच्च युष्मासु पापं वै धार्तराष्ट्रः प्रयुक्तवान् ॥ ७० ॥
तत्र सर्वत्र दुष्टात्मा कर्णः पापमतिर्मुखम् ।
यच्च तद्धार्तराष्ट्रस्य क्रूरैः षड्भिर्महारथैः ॥ ७१ ॥
अपश्यं निहतं वीरं सौभद्रमृषभेक्षणम् ।
द्रोणद्रौणिकृपान्वीरान्कर्षयन्तं नरर्षभान् ॥ ७२ ॥
निर्मनुष्यांश्च मातङ्गान्विरथांश्च महारथान् ।
व्यश्वारोहांश्च तुरगान्पत्तीन्व्यायुधजीविनः ॥ ७३ ॥
कुर्वन्तमृषभस्कन्धं कुरुवृष्णियशस्करम् ।
विधमन्तमनीकानि व्यथयन्तं महारथान् ॥ ७४ ॥
मनुष्यवाजिमातङ्गान्प्राहिण्वन्तं यमक्षयम् ।
शरैः सौभद्रमायान्तं दहन्तमिव वाहिनीम् ॥ ७५ ॥
तन्मे दहति गात्राणि सखे सत्येन ते शपे ।
यत्तत्रापि च दुष्टात्मा कर्णोऽभ्यद्रुह्यत प्रभो ॥ ७६ ॥
अशक्नुवंश्चाभिमन्योः कर्णः स्थातुं रणेऽग्रतः ।
सौभद्रशरनिर्भिन्नो विसंज्ञः शोणितोक्षितः ॥ ७७ ॥
निःश्वसन्क्रोधसन्दीप्तो विमुखः सायकार्दितः ।
अपयानकृतोत्साहो निराशश्चापि जीविते ॥ ७८ ॥

गर्जता था उसे आज तुम जीतो । दुर्योधनने जो तुम्हारे सङ्ग पाप किये हैं, उन सबका मूल महापापी कर्ण ही है । (६८-७१)

विशाल नेत्र सुभद्रापुत्र, द्रोण, अश्वत्थामा और कृपाचार्य आदि महारथोंसे युद्ध करते हुए, हाथी घोडे और महारथोंको काटते, रथोंको वीरोंसे शून्य करते, कौरवोंकी सेनाको भगाते बैलके कन्धेके समान ऊंचे कन्धेवाले कौरव और यदुकुलके यश बढानेवाले अभिमन्युको जो छः महारथोंने मिलकर मारा, हम शपथ खाकर सत्य कहते हैं कि उससे हमारा हृदय जला जाता है । (७१-७६)

वह अभिमन्यु अपने बलसे दुर्योधनकी सेनाको भस्म कर रहा था उस समय भी इसी दुर्योधनकी सहायतासे दुष्ट कर्ण हीने हमारा द्रोह किया था । जब सुभद्रा पुत्र अभिमन्युके बाणोंसे इस दुष्टके शरीरसे रुधिर बहने लगा और सन्धि कटने लगीं, जब उसके आगे खडा होकर युद्ध न कर सका, तब अपने जीवनसे

प्रयावस्त्वरितो योद्धुं सूतपुत्ररथं प्रति ॥ ८ ॥
हत्वा तु समरे कर्णं त्वमद्य निशितैः शरैः ।
विपुलां प्रीतिमाधत्स्व धर्मपुत्रस्य मानद ॥ ९ ॥
एतदत्र महाबाहो प्राप्तकालं मतं मम ।
एवं कृते कृतं चैव तव कार्यं भविष्यति ॥ १० ॥
सञ्जय उवाच— ततोऽर्जुनो महाराज लज्जया वै समन्वितः ।
धर्मराजस्य चरणौ प्रपद्य शिरसा नतः ॥ ११ ॥
उवाच भरतश्रेष्ठं प्रसीदेति पुनः पुनः ।
क्षमस्व राजन्यत्प्रोक्तं धर्मकामेन भीरुणा ॥ १२ ॥
दृष्ट्वा तु पतितं पद्भ्यां धर्मराजो युधिष्ठिरः ।
धनञ्जयममित्रघ्नं रुदन्तं भरतर्षभ ॥ १३ ॥
उत्थाप्य भ्रातरं राजा धर्मराजो धनञ्जयम् ।
समाश्लिष्य च सस्नेहं प्ररुरोद महीपतिः ॥ १४ ॥
रुदित्वा सुचिरं कालं भ्रातरौ सुमहाद्युती ।
कृतशौचौ महाराज प्रीतिमन्तौ बभूवतुः ॥ १५ ॥
तत आश्लिष्य तं प्रेम्णा मूर्ध्नि चाघ्राय पाण्डवः ।
प्रीत्या परमया युक्तो विस्मयंश्च पुनः पुनः ।

और तुम सूतपुत्र कर्णसे युद्ध करनेको चलेंगे । हे वीर ! तुम अपने तेज बाणोंसे इसी समय सूतपुत्रको मारकर धर्मराज युधिष्ठिरको बहुत प्रसन्न करना । हे महाबाहो ! अब समयके अनुसार हमारी यही सम्मति है । ऐसा ही करनेसे तुम्हारा कल्याण होगा ॥ (८–१०)

सञ्जय बोले, हे महाराज धृतराष्ट्र ! तब अर्जुनने बहुत लज्जासे अपना शिर नीचा करके महाराज युधिष्ठिरके चरणोंमें रख दिया ॥ अनन्तर हाथ जोडकर बहुत नम्रतासे कहा कि, हे महाराज ! मैंने जो धर्मसे डर आपसे कुवचन कहे सो आप क्षमा कीजिये और प्रसन्न हूजिये ॥ (११—१२)

जब युधिष्ठिरने रोते हुए अर्जुनको अपने पैरोंमें पडा देखा तब उन्होंने उठाकर अपने हृदयमें लगा लिया और स्नेहसे रोने लगे ॥ थोडे समय तक दोनों तेजस्वी भाई रोते रहे फिर सोचकर परस्पर प्रसन्न होगये, तब धर्मराज युधिष्ठिरने प्रेमसे हृदय लगाकर प्रेम सहित अर्जुनका माथा सूंघा और बार बार प्रशंसा करने लगे ॥ (१३-१६)

समितौ गर्जते कर्णस्तमद्य जहि भारत ।
यच्च युष्मासु पापं वै धार्तराष्ट्रः प्रयुक्तवान् ॥ ७० ॥
तत्र सर्वत्र दुष्टात्मा कर्णः पापमतिर्मुखम् ।
यच्च तद्धार्तराष्ट्रस्य क्रूरैः षड्भिर्महारथैः ॥ ७१ ॥
अपश्यं निहतं वीरं सौभद्रमृषभेक्षणम् ।
द्रोणद्रौणिकृपान्वीरान्कर्षयन्तं नरर्षभान् ॥ ७२ ॥
निर्मनुष्यांश्च मातङ्गान्विरथांश्च महारथान् ।
व्यश्वारोहांश्च तुरगान्पत्तीन्व्यायुधजीविनः ॥ ७३ ॥
कुर्वन्तमृषभस्कन्धं कुरुवृष्णियशस्करम् ।
विधमन्तमनीकानि व्यथयन्तं महारथान् ॥ ७४ ॥
मनुष्यवाजिमातङ्गान्प्राहिण्वन्तं यमक्षयम् ।
शरैः सौभद्रमायान्तं दहन्तमिव वाहिनीम् ॥ ७५ ॥
तन्मे दहति गात्राणि सखे सत्येन ते शपे ।
यत्तत्रापि च दुष्टात्मा कर्णोऽभ्यद्रुह्यत प्रभो ॥ ७६ ॥
अशक्नुवंश्चाभिमन्योः कर्णः स्थातुं रणेऽग्रतः ।
सौभद्रशरनिर्भिन्नो विसंज्ञः शोणितोक्षितः ॥ ७७ ॥
निःश्वसन्क्रोधसन्दीप्तो विमुखः सायकार्दितः ।
अपयानकृतोत्साहो निराशश्चापि जीविते ॥ ७८ ॥

गर्जता था उसे आज तुम जीतो। दुर्योधनने जो तुम्हारे सङ्ग पाप किये हैं, उन सबका मूल महापापी कर्ण ही है। (६८-७१)

विशाल नेत्र सुभद्रापुत्र, द्रोण, अश्वत्थामा और कृपाचार्य आदि महारथोंसे युद्ध करते हुए, हाथी घोडे और महारथोंको काटते, रथोंको वीरोंसे शून्य करते, कौरवोंकी सेनाको भगाते बैलके कन्धेके समान ऊंचे कन्धेवाले कौरव और यदुकुलके यश बढानेवाले अभिमन्युको जो छः महारथोंने मिलकर मारा, हम शपथ खाकर सत्य कहते है कि उससे हमारा हृदय जला जाता है। (७१-७६)

वह अभिमन्यु अपने बलसे दुर्योधनकी सेनाको भस्म कर रहा था उस समय भी इसी दुर्योधनकी सहायतासे दुष्ट कर्णहीने हमारा द्वेष किया था। जब सुभद्रा पुत्र अभिमन्युके बाणोंसे इस दुष्टके शरीरसे रुधिर बहने लगा और सन्धि कटने लगीं, जब उसके आगे खडा होकर युद्ध न कर सका, तब अपने जीवनसे

एष चापि हि मे कामो नित्यमेव महारथ ॥ २५ ॥
कथं भवान्रणे कर्णं निहन्यादिति सत्तम ।
भूयश्चोवाच मतिमान्माधवो धर्मनन्दनम् ॥ २६ ॥
युधिष्ठिरेमं बीभत्सुं त्वं सान्त्वयितुमर्हसि ।
अनुज्ञातुं च कर्णस्य वधायाद्य दुरात्मनः ॥ २७ ॥
श्रुत्वा ह्यहमयं चैव त्वां कर्णशरपीडितम् ।
प्रवृत्तिं ज्ञातुमायाताविहावां पाण्डुनन्दन ॥ २८ ॥
दिष्ट्यासि राजन्नहतो दिष्ट्या न ग्रहणं गतः ।
परिसान्त्वय बीभत्सुं जयमाशाधि चानघ ॥ २९ ॥

युधिष्ठिर उवाच— एह्येहि पार्थ बीभत्सो मां परिष्वज पाण्डव ।
वक्तव्यमुक्तोऽस्मि हितं त्वया क्षान्तं च तन्मया ॥ ३० ॥
अहं त्वामनुजानामि जहि कर्णं धनञ्जय ।
मन्युं च मा कृथाः पार्थ यन्मयोक्तोऽसि दारुणम् ॥ ३१ ॥

सञ्जय उवाच— ततो धनञ्जयो राजञ्छिरसा प्रणतस्तदा ।
पादौ जग्राह पाणिभ्यां भ्रातुर्ज्येष्ठस्य मारिष ॥ ३२ ॥
तमुत्थाप्य ततो राजा परिष्वज्य च पीडितम् ।

---

अर्जुनके वचन सुन श्रीकृष्ण राजासे बोले, हे कुन्तीपुत्र ! आप कर्णको मारनेमें समर्थ हो और मेरी भी बहुत दिनसे यही इच्छा है, कि कर्ण मारा जावे, परन्तु आप उसे युद्धमें कैसे मारते ? आपको यही उचित है, कि उस दुष्टको मारनेके लिये अर्जुनहीको आज्ञा दे, इससे उनका उत्साह बढेगा ॥ (२४-२७)

हे पाण्डुपुत्र ! आप कर्णके बाणोंसे पीडित है, यह सुनकर ही और आपके दर्शन करनेको हम आये थे ॥ हे पापरहित ! आप हमारी प्रारब्धहीसे उसके हाथसे नहीं मारे गये और न पकडे गये। अब अर्जुनको युद्ध करनेकी आज्ञा दीजिये और अपनी विजयका निश्चय कर लीजिये ॥ (२८-२९)

महाराज युधिष्ठिर बोले, हे प्यारे अर्जुन ! तुम हमारे पास आवो तुमने जो कुछ कहा था हमने सब क्षमा किया। हे कुन्तीपुत्र ! हे धनञ्जय ! हम तुम्हारे बलको जानते हैं, अब तुम कर्णको जीतो और हमने जो कुछ कहा है, उसपर क्रोध भी मत करना। ॥ (३०-३१)

सञ्जय बोले, हे राजन् ! तब अर्जुनने हाथ जोडकर अपना शिर महाराजके चरणोंमें रख दिया, तब राजाने दुःखित

पश्येदानीं यथा भद्रे विनष्टाः पाण्डवाः समम् ॥ ८७ ॥
अन्योन्यं समुदीक्षन्ते धार्तराष्ट्रस्य तेजसा ।
व्यक्तं षण्ढतिला ह्येते न पुरेव निमज्जिताः ॥ ८८ ॥
प्रेष्यवच्चापि राजानमुपस्थास्यन्ति कौरवम् ।
इत्युक्तवानधर्मज्ञस्तदा परमदुर्मतिः ॥ ८९ ॥
पापः पापवचः कर्णः शृण्वतस्तव भारत ।
अद्य पापस्य तद्वाक्यं सुवर्णविकृताः शराः ॥ ९० ॥
शमयन्तु शिलाधौतास्त्वयास्ता जीवितच्छिदः ।
यानि चान्यानि दुष्टात्मा पापानि कृतवांस्त्वयि ॥ ९१ ॥
तानद्य जीवितं चास्य शमयन्तु शरास्तव ।
गाण्डीवप्रहितान्घोरानद्य गात्रैः स्पृशञ्छरान् ॥ ९२ ॥
कर्णः स्मरतु दुष्टात्मा वचनं द्रोणभीष्मयोः ।
सुवर्णपुङ्खा नाराचाः शत्रुघ्ना वैद्युतप्रभाः ॥ ९३ ॥
त्वयास्तास्तस्य वर्माणि भित्त्वा पास्यन्ति शोणितम् ।
उग्रास्त्वद्भुजनिर्मुक्ता मर्म भित्त्वा महाशराः ॥ ९४ ॥
अद्य कर्णं महावेगाः प्रेषयन्तु यमक्षयम् ।
अद्य हाहाकृता दीना विषण्णास्त्वच्छरार्दिताः ॥ ९५ ॥
प्रपतन्तं रथात्कर्णं पश्यन्तु वसुधाधिपाः ।
अद्य शोणितसम्मग्नं शयानं पतितं भुवि ।

हैं। और पाण्डव नष्ट होगये, ये सब दुर्योधनके तेजसे परस्पर देख रहे हैं ! ये सब पाण्डव नपुंसक होगये, और घोर आपत्तिमें पडगये। अब ये सब राजाके दास होगये इनकी आज्ञामें चलना पडेगा। (८६–८९)

जो यह बडा पापी है, इस दुष्टने कुछ वचन सुनाये थे, उन सबका उत्तर आज तुम्हारे सोनेके पङ्खवाले, शिला पर घिसे धनुषसे छूटे घोर बाण देंगे, वे उस पापीके शरीरको काटेंगे। तुम्हारे सोनेके पङ्खवाले बिजलीके समान प्रकाशित बाणोंको देखकर दुरात्मा कर्ण, भीष्म और द्रोणाचार्यके वचनोंको स्मरण करे, आज तुम्हारे धनुषसे छूटकर तुम्हारे घोर बाण कर्णका कवच तोडकर मर्मस्थान काट कर रुधिर पियेंगे ॥ (८९—९४)

इस समय अब तुम्हारे घोर बाण कर्णको मारकर यमराजके घर पहुंचावेंगे, अब तुम्हारे बाणोंसे व्याकुल होकर

सञ्जय उवाच— प्रसाद्य धर्मराजानं प्रहृष्टेनान्तरात्मना ।
पार्थः प्रोवाच गोविन्दं सूतपुत्रवधोद्यतः ॥ १ ॥
कल्पतां मे रथो भूयो युज्यन्तां च हयोत्तमाः ।
आयुधानि च सर्वाणि सज्जन्तां मे महारथे ॥ २ ॥
उपावृत्ताश्च तुरगाः शिक्षिताश्चाश्वसादिभिः ।
रथोपकरणैः सज्जा उपायान्तु त्वरान्विताः ॥ ३ ॥
प्रयाहि शीघ्रं गोविन्द सूतपुत्रजिघांसया ।
एवमुक्तो महाराज फाल्गुनेन महात्मना ॥ ४ ॥
उवाच दारुकं कृष्णः कुरु सर्वं यथाब्रवीत् ।
अर्जुनो भरतश्रेष्ठ श्रेष्ठः सर्वधनुष्मताम् ॥ ५ ॥
आज्ञप्तस्त्वथ कृष्णेन दारुको राजसत्तम ।
योजयामास स रथं वैयाघ्रं शत्रुतापनम् ॥ ६ ॥
सज्जं निवेदयामास पाण्डवस्य महात्मनः ।
युक्तं तु तं रथं दृष्ट्वा दारुकेण महात्मना ॥ ७ ॥
आपृच्छ्य धर्मराजानं ब्राह्मणान्स्वस्ति वाच्य च ।
सुमङ्गलं स्वस्त्ययनमारुरोह रथोत्तमम् ॥ ८ ॥

वृत्रासुरको मारा था, वैसे ही तुम कर्णको मारो ॥ ( ३९-४० ) [३५५८]

कर्णपर्वमें इकत्तर अध्याय समाप्त ।

कर्णपर्वमें बाहत्तर अध्याय ।

सञ्जय बोले, हे राजन्! युधिष्ठिरको इस प्रकार प्रसन्न कर और कर्णके मारनेका निश्चय कर अर्जुन प्रसन्नता पूर्वक श्रीकृष्णसे बोले ॥ अब हमारे रथमें उत्तम घोडे जोडे जायं, और सब प्रकारके शस्त्र रक्खे जावें ॥ अनेक शिक्षित और उत्तम घोडोंपर चढकर वीर सब सामग्री सहित हमारे सङ्ग चलनेको शीघ्र आवें॥ हे गोविन्द! आप शीघ्र कर्णके मारनेको चलिये । (१-४)

महात्मा अर्जुनके ऐसे वचन सुन कृष्णने दारुकसे कहा,कुरुकुलश्रेष्ठ महाधनुषधारी अर्जुनने जो कुछ कहा सो सब तुम ठीक कर दो । हे राजन् धृतराष्ट्र! श्रीकृष्णकी आज्ञासे दारुकने अर्जुनके उत्तम रथमें घोडे जोडे और सब सामग्री ठीक की। फिर महात्मा अर्जुनसे आकर कहा कि आपका रथ उपस्थित है । (४-७)

अनन्तर धर्मराज युधिष्ठिरकी आज्ञा लेकर ब्राह्मणोंसे आशीर्वाद ले और स्वस्तिवाचन सुन अर्जुन उत्तम रथपर

अभ्याहतानां कर्णेन पञ्चालानामसौ रणे।
श्रूयते निनदो घोरस्त्वद्बन्धूनां परन्तप ॥ १०५ ॥
नत्वेव भीताः पञ्चालाः कथञ्चित्स्युः पराङ्मुखाः।
नहि मृत्युं महेष्वासा गणयन्ति महारणे ॥ १०६ ॥
य एकः पाण्डवीं सेनां शरौघैः समवेष्टयत्।
तं समासाद्य पञ्चाला भीष्मान्नासन्पराङ्मुखाः॥१०७॥
ते कथं कर्णमासाद्य विद्रवेयुर्महारथाः।
यस्त्वेकः सर्वपञ्चालानहन्यहनि नाशयन् ॥ १०८ ॥
कालवच्चरते वीरः पञ्चालानां रथव्रजे।
तमप्यासाद्य समरे मित्रार्थे मित्रवत्सलाः ॥ १०९ ॥
तथा ज्वलन्तमस्त्राग्निं गुरुं सर्वधनुष्मताम्।
निर्दहन्तं च समरे दुर्धर्षं द्रोणमोजसा ॥ ११० ॥
ते नित्यमुदिता जेतुं मृधे शत्रूनरिन्दम।
न जात्वाधिरथेर्भीताः पञ्चालाः स्युः पराङ्मुखाः॥१११॥
तेषामापततां शूरः पञ्चालानां तरस्विनाम्।
आदत्तासूञ्शरैः कर्णः पतङ्गानामिवानलः ॥ ११२ ॥
एते द्रवन्ति पञ्चाला द्राव्यन्ते योधिभिर्ध्रुवम्।

हे शत्रुनाशन! ये देखो कर्णके बाणोंसे व्याकुल होकर तुम्हारे संबन्धी पाञ्चाल चिल्ला रहे हैं॥ ये महाधनुषधारी पाञ्चाल बडे योद्धा हैं। मृत्युसे भी नहीं डरते देखो अभीतक इन्होंने युद्धको नहीं छोडा जिस अकेलेने अपने बाणोंसे पाण्डवोंकी सब सेनाको व्याकुल कर दिया था उस भीष्मसे भी पाञ्चाल नहीं भागे थे, जो पाञ्चाल नित्य अपना नाश देखकर भी उस समय युद्धसे नहीं भागे थे अब कर्णसे क्या भागेंगे? (१०५-१०८)

इसी प्रकार पाञ्चालोंकी सब सेनामें मृत्युके समान घूमते हुए प्रतिदिन पाञ्चालोंका नाश करनेवाले, इस सब जगत्के धनुषधारियोंके गुरु द्रोणाचार्यके शस्त्ररूपी अग्निसे जलकर भी मित्रोंके ऊपर प्रेम करनेवाले होनेसे मित्रोंके लिये लडते हुए युद्धसे विमुख नहीं हुए, ये सदा युद्धके लिये उत्साह करते रहते हैं सो आज कर्णके आगे क्यों भागेंगे? हे शूर! देखो वीर पाञ्चाल बाण छोडते हुए कर्णकी ओर इस प्रकार दौड रहे हैं। जैसे अग्निकी ओर पतङ्ग दौडे।१०९-११२

न तेषां मानुषो जेता त्वदन्य इह विद्यते ॥ १७ ॥
दृष्टा हि बहवः शूराः शक्रतुल्यपराक्रमाः ।
त्वां प्राप्य समरे शूरं ते गताः परमां गतिम् ॥ १८ ॥
को हि द्रोणं च भीष्मं च भगदत्तं च मारिष ।
विन्दानुविन्दावावन्त्यौ काम्बोजं च सुदक्षिणम् ॥ १९ ॥
श्रुतायुषं महावीर्यमच्युतायुषमेव च ।
प्रत्युद्गम्य भवेत्क्षेमी यो न स्यात्त्वमिव प्रभो ॥ २० ॥
तव ह्यस्त्राणि दिव्यानि लाघवं बलमेव च ।
असंमोहश्च युद्धेषु विज्ञानस्य च संनतिः ॥ २१ ॥
वेधः पातश्च लक्ष्येषु योगश्चैव तथार्जुन ।
भवान्देवान्सगन्धर्वान्हन्यात्सहचराचरान् ॥ २२ ॥
पृथिव्यां तु रणे पार्थ न योद्धा त्वत्समः पुमान् ।
धनुर्ग्राहा हि ये केचित्क्षत्रिया युद्धदुर्मदाः ॥ २३ ॥
आदेवात्त्वत्समं तेषां न पश्यामि शृणोमि च ।
ब्रह्मणा च प्रजाः सृष्टा गाण्डीवं च महद्धनुः ॥ २४ ॥
येन त्वं युध्यसे पार्थ तस्मान्नास्ति त्वया समः ।

धारी अर्जुन ! तुमने जिन वीरोंको जीता है उनको जीतनेवाला तुम्हारे सिवाय इस जगत्में कोई नहीं है । हमने अनेक इन्द्रके समान पराक्रमी वीरोंको युद्धमें देखा परन्तु वे सब तुमसे युद्ध करते ही मर गये ॥ भला तुम्हारे सिवाय भीष्म, द्रोणाचार्य, भगदत्त, उज्जैनके विन्द और अनुविन्द, काम्बोज देशी सुदाक्षिण, महाबली श्रुतायुष और अच्युतायुष इन वीरोंके आगे जाकर कौन जीता बच सक्ता है ? (१७-२०)

तुम्हारे शस्त्र बहुत तेज हैं। बलसे शीघ्र चलाना भूल न करना और बुद्धिमानीसे युद्ध करना ये सब गुण तुममें हैं। हे अर्जुन ! तुम लक्ष्यको बहुत शीघ्र देखते हो और तुम अपने बलसे देवता, गन्धर्व और मनुष्योंके सहित चराचरका नाश कर सक्ते हो, जगत्में जितने धनुषधारी क्षत्री हुए तुम उनमें सबसे अधिक हो। हमने देवता और मनुष्योंमें तुम्हारे समान वीर कोई न देखा और न सुना । (२०-२४)

ब्रह्माने सब सृष्टि बनानेके समय इस दिव्य गाण्डीव धनुषको बनाया था, उसी गाण्डीवसे तुम युद्ध करते हो इस-लिये तुम्हारे समान कोई योद्धा नहीं है,

हन्यादुपेक्षितः कर्णो रोगो देहमिवागतः ॥ १२१ ॥
नान्यं त्वत्तो हि पश्यामि योधं यौधिष्ठिरे बले।
यः समासाद्य राधेयं स्वस्तिमानाव्रजेद्गृहम् ॥ १२२ ॥
तमद्य निशितैर्बाणैर्विनिहत्य नरर्षभ।
यथाप्रतिज्ञं पार्थ त्वं कृत्वा कीर्तिमवाप्नुहि ॥ १२३ ॥
त्वं हि शक्तो रणे जेतुं सकर्णानपि कौरवान्।
नान्यो युधि युधां श्रेष्ठ सत्यमेतद्ब्रवीमि ते ॥ १२४ ॥
एतत्कृत्वा महत्कर्म हत्वा कर्णं महारथम्।
कृतार्थः सफलः पार्थ सुखी भव नरोत्तम ॥१२५॥ [३७२३]

इति श्रीमहाभारते शतसाहस्त्या संहितायां वैयासिक्या कर्णपर्वणि कृष्णवाक्ये त्रिसप्ततितमोऽध्यायः॥ ७३॥

सञ्जय उवाच— स केशवस्य बीभत्सुः श्रुत्वा भारत भाषितम्।
विशोकः सम्प्रहृष्टश्च क्षणेन समपद्यत ॥ १ ॥
ततो ज्यामभिमृज्याशु व्याक्षिपद्गाण्डिवं धनुः।
दध्रे कर्णविनाशाय केशवं चाभ्यभाषत ॥ २ ॥
त्वया नाथेन गोविन्द ध्रुव एव जयो मम।
प्रसन्नो यस्य मेऽद्य त्वं लोके भूतभविष्यकृत् ॥ ३ ॥
त्वत्सहायो ह्यहं कृष्ण त्रीँल्लोकान्वै समागतान्।

को छोड कर कर्ण सृञ्जय पाञ्चाल और पाण्डवोंका नाश कर देगा॥(११९-१२१)

युधिष्ठिरकी सेनामें तुम्हारे सिवाय और किसीको ऐसा वीर नहीं देखते जो कर्णसे युद्ध करके कुशल पूर्वक अपने घरको चला जाय॥ हे पुरुषसिंह ! आज उस कर्णको अपने तेज बाणोंसे मार कर तुम अपनी प्रतिज्ञाको सत्य करो क्यों कि तुम ही एक कर्णको कौरवोंके सहित जीतनेमें समर्थ हो। हे नरोत्तम ! इस महा कर्मको करके अर्थात् कर्णको मार कर तुम सुखी हो ॥ (१२२-१२५)

कर्णपर्वमें तिहत्तर अध्याय समाप्त। [३७२३]

कर्णपर्वमें चौहत्तर अध्याय।

सञ्जय बोले, हे भारत ! कृष्णके ऐसे वचन सुन अर्जुन क्षणभर में शोक रहित और हर्षित होगये॥ तब कर्णके मारनेके लिये धनुष पर रोदा चढाया और बहुत प्रसन्नता सहित युद्ध करनेको चले और बोले, कि हे कृष्ण ! आप हमारे नाथ हैं। आपको नाथ पाकर सदा हमारी विजय होती है, आप जगत्के भूत और भविष्यत्के स्वामी हैं। हे कृष्ण ! आपकी सहायतासे हम तीनों लोकोंको

अशक्यः सरथो जेतुं सर्वैरपि युयुत्सुभिः ॥ ३३ ॥
दुरात्मानं पापवृत्तं नृशंसं दुष्टप्रज्ञं पाण्डवेयेषु नित्यम् ।
हीनस्वार्थं पाण्डवेयैर्विरोधे हत्वा कर्णं निश्चितार्थो भवाद्य ॥ ३४ ॥
तं सूतपुत्रं रथिनां वरिष्ठं हत्वा प्रीतिं धर्मराजे कुरुष्व ॥ ३५ ॥
जानामि ते पार्थ वीर्यं यथावद्दुर्वारणीयं च सुरासुरैश्च ।
सदावजानाति हि पाण्डुपुत्रानसौ दर्पात्सूतपुत्रो दुरात्मा ॥ ३६ ॥
आत्मानं मन्यते वीरं येन पापः सुयोधनः ।
तमद्य मूलं पापानां जहि सौतिं धनञ्जय ॥ ३७ ॥
खड्गजिह्वं धनुरास्यं शरदंष्ट्रं तरस्विनम् ।
दृप्तं पुरुषशार्दूलं जहि कर्णं धनञ्जय ॥ ३८ ॥
अहं त्वामनुजानामि वीर्येण च बलेन च ।
जहि कर्णं रणे शूरं मातङ्गमिव केसरी ॥ ३९ ॥
यस्य वीर्येण वीर्यं ते धार्तराष्ट्रोऽवमन्यते ।
तमद्य पार्थ संग्रामे कर्णं वैकर्त्तनं जहि ॥ ४० ॥ [३५९८]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां कर्णपर्वणि
कृष्णार्जुनसंवादे द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

सञ्जय उवाच— ततः पुनरमेयात्मा केशवोऽर्जुनमब्रवीत् ।

कर्णको नहीं जीत सक्ते ॥ हे पाण्डव ! आज तुम उस पापी, दुष्ट, मूर्ख और अपने द्वेषीको मारकर निश्चिन्त हो। आज उस महारथ सूतपुत्रको मार कर धर्मराजको प्रसन्न करो हम तुम्हारे बल-को जानते है। देवता और राक्षस भी तुम्हें युद्धमें नहीं जीत सक्ते परन्तु यह दुष्ट सूतपुत्र दर्पसे सदा पाण्डवोंका अप-मान किया करता है ॥ (३३-३६)

हे धनञ्जय ! यह मूर्ख अपनेको वीर मानता है। और दुर्योधन भी इसीके बलसे बहुत अभिमान कर रहा है। आज इस सब वैरके मूलको काटकर सावधान हो। धनुषरूपी मुख, खड्गरूपी जीभ और बाणरूपी दांतवाले, कर्णरूपी शार्दूलको आज तुम मारो। जैसे सिंह हाथीको मारता है, ऐसेही तुम आज कर्ण को मारो, हम तुम्हारे बल और वीर्यको जानते है। जिसके पराक्रमसे दुर्योधन तुम्हारा अपमान किया करता है उस कर्णको आज तुम मारो ॥ (३७-४०)

कर्णपर्वमें बाहत्तर अध्याय समाप्त । [३५९८]

कर्णपर्वमें तिहत्तर अध्याय ।

सञ्जय बोले, हे भारत ! तब अर्जुनके

सूतपुत्रे हते त्वद्य निराशो भविता प्रभुः ॥ १२ ॥
अद्य दुर्योधनो राज्याज्जीविताच्च निराशकः ।
भविष्यति हते कर्णे कृष्ण सत्यं ब्रवीमि ते ॥ १३ ॥
अद्य दृष्ट्वा मया कर्णं शरैर्विशकलीकृतम् ।
स्मरतां तव वाक्यानि शमं प्रति जनेश्वर ॥ १४ ॥
अद्यासौ सौबलः कृष्ण ग्लहाञ्जानातु वै शरान् ।
दुरोदरं च गाण्डीवं मण्डलं च रथं प्रति ॥ १५ ॥
अद्य कुन्तीसुतस्याहं दृढं राज्ञः प्रजागरम् ।
व्यपनेष्यामि गोविन्द हत्वा कर्णं शितैः शरैः॥ १६ ॥
अद्य कुन्तीसुतो राजा हते सूतसुते मया ।
सुप्रहृष्टमनाः प्रीतश्चिरं सुखमवाप्स्यति ॥ १७ ॥
अद्य चाहमनाधृष्यं केशवाप्रतिमं शरम् ।
उत्स्रक्ष्यामीह यः कर्णं जीविताद्भ्रंशयिष्यति ॥ १८ ॥
यस्य चैतद्व्रतं मह्यं वधे किल दुरात्मनः ।
पादौ न धावये तावद्यावद्धन्यां न फाल्गुनम् ॥ १९ ॥
मृषा कृत्वा व्रतं तस्य पापस्य मधुसूदन ।
पातयिष्ये रथात्कायं शरैः सन्नतपर्वभिः ॥ २० ॥

---

दुर्योधन निरास होजायगे ॥ (९-१२)

हे कृष्ण ! हम आपसे सत्य कहते हैं, कि कर्णके मारे जानेसे राज्य और जीवनसे दुर्योधन निरास हो जावेंगे ॥ आज कर्णको मेरे बाणोंसे कटा हुआ देख राजा तुम्हारे शांति भरे वचनोंको स्मरण करें ॥ आज सुबलपुत्र शकुनि, मेरा रथ और मण्डलाकार गाण्डीवको फासेकी संदूक और उसमे छूटे हुए बाणोंको फासे जाने ॥ (१३-१५)

हे कृष्ण ! आज हम अपने तेज बाणोंसे कर्णको मार कर महाराज कुन्ती पुत्रका दीर्घ कालका सब प्रजागर दूर करेंगे ॥ आज मेरे बाणोंसे कर्णको मरा देख कुन्तीपुत्र युधिष्ठिर बहुत प्रसन्न होकर सुख भोग करेंगे ॥ हे कृष्ण ! आज मैं शत्रुओंके नाश करनेवाला, घोर बाण कर्णकी ओर चलाऊंगा, उसीसे वह मर जायगा ॥ (१६-१८)

उस दुष्टने यह प्रतिज्ञा की है, कि मैं विना अर्जुनके मारे पैर नहीं धोऊंगा आज उस पापीकी यह प्रतिज्ञा झूठी करके अपने बाणोंसे मार कर पृथ्वीमें गिराऊंगा ॥ जो जगत्में अपने समान

तथेमां विपुलां सेनां गुप्तां पार्थ त्वयानघ ।
न शेकुः पार्थिवाः सर्वे चक्षुर्भिरपि वीक्षितुम्॥ १० ॥
तथैव सततं पार्थ रक्षिताभ्यां त्वया रणे ।
धृष्टद्युम्नशिखण्डिभ्यां भीष्मद्रोणौ निपातितौ ॥ ११ ॥
कोहि शक्तो रणे पार्थ भारतानां महारथौ ।
भीष्मद्रोणौ युधा जेतुं शक्रतुल्यपराक्रमौ ॥ १२ ॥
को हि शान्तनवं भीष्मं द्रोणं वैकर्तनं कृपम् ।
द्रौणिं च सौमदत्तिं च कृतवर्माणमेव च ॥ १३ ॥
सैन्धवं मद्रराजानं राजानं च सुयोधनम् ।
वीरान्कृतास्त्रान्समरे सर्वानेवानिवर्तिनः ॥ १४ ॥
अक्षौहिणीपतीनुग्रान्संहतान्युद्धदुर्मदान् ।
त्वामृते पुरुषव्याघ्र जेतुं शक्तः पुमानिह ॥ १५ ॥
श्रेण्यश्च बहुलाः क्षीणाः प्रदीर्णाश्वरथद्विपाः ।
नानाजनपदाश्चोग्राः क्षत्रियाणाममर्षिणाम् ॥ १६ ॥
गोवासदासमीयानां वसातीनां च भारत ।
प्राच्यानां वाटधानानां भोजानां चाभिमानिनाम् ॥१७॥
उदीर्णाश्वगजा सेना सर्वक्षत्रस्य भारत ।
त्वां समासाद्य निधनं गता भीमं च भारत ॥ १८ ॥

थी ? तुमसे रक्षित इस सेनाको कोई राजा आंखोंसेभी नहीं देख सक्ता॥ ८ १०

तुम्हारी ही सहायतासे धृष्टद्युम्न और शिखण्डीने भीष्म और द्रोणाचार्यको मार डाला ॥ इन्द्रके समान पराक्रमी कौरवोंके सेनापति भीष्म और द्रोणाचार्यसे कौन युद्ध कर सक्ता था ? शान्तनु पुत्र भीष्म, द्रोणाचार्य, कर्ण, कृपाचार्य अश्वत्थामा, भूरिश्रवा, कृतवर्मा, सिन्धुदेशी राजा जयद्रथ, मद्रराज शल्य, और राजा दुर्योधन इन सब शस्त्र जाननेवाले, वीरोंसे तुम्हारे सिवाय कौन युद्ध कर सक्ता था ? ये सब युद्धसे न लौटनेवाले, अक्षौहिणीपति, घोर पराक्रमी और महा योद्धा थे ॥ (११-१५)

तुमने अनेक योद्धा क्षत्रियोंकी पंक्ति, हाथी, घोडे और अनेक देशी वीरोंको नाश कर दिया । गोवास, दासमीय, वसाती, प्राच्य, वाटधान और अभिमानी भोजवंशी क्षत्रियोंकी हाथी, घोडे और रथोंसे भरी सेना तुमने और भीमसेनने नाश कर दी ॥ (१६-१८)

तमद्य कर्णं हन्तास्मि मिषतां सर्वधन्विनाम् ।
यस्य वीर्यं समाश्रित्य धार्तराष्ट्रो महामनाः ॥ २९ ॥
अवामन्यत दुर्बुद्धिर्नित्यमस्मान्दुरात्मवान् ।
हत्वाहं कर्णमाजौ हि तोषयिष्यामि भ्रातरम् ॥ ३० ॥
शरान्नानाविधान्मुक्त्वा त्रासयिष्यामि शात्रवान् ।
आकर्णमुक्तैरिषुभिर्यमराष्ट्रविवर्धनैः ॥ ३१ ॥
भूमिशोभां करिष्यामि पातितै रथकुञ्जरैः ।
तत्राहं वै महासङ्ख्ये सम्पन्नं युद्धदुर्मदम् ॥ ३२ ॥
अद्य कर्णमहं घोरं सूदयिष्यामि सायकैः ।
अद्य कर्णे हते कृष्ण धार्तराष्ट्राः सराजकाः ॥ ३३ ॥
विद्रवन्तु दिशो भीताः सिंहत्रस्ता मृगा इव ।
अद्य दुर्योधनो राजा आत्मानं चानुशोचताम् ॥ ३४ ॥
हते कर्णे मया सङ्ख्ये सपुत्रे ससुहृज्जने ।
अद्य कर्णं हतं दृष्ट्वा धार्तराष्ट्रोऽत्यमर्षणः ॥ ३५ ॥
जानातु मां रणे कृष्ण प्रवरं सर्वधन्विनाम् ।
सपुत्रपौत्रं सामात्यं सभृत्यं च निराशिषम् ॥ ३६ ॥
अद्य राज्ये करिष्यामि धृतराष्ट्रं जनेश्वरम् ।

जिसके बलके आश्रयसे धृतराष्ट्रका पुत्र अपनी मूर्खता और दुष्टतासे पाण्डवोंका निरादर करता था, आज उस कर्णको हम सब धनुषधारियोंके देखते देखते मारेंगे। उसके मरनेसे हमारे भाई बहुत प्रसन्न होंगे ॥ (२८-३०)

आज मैं अपने कानतक शत्रु नाशी अनेक बाण खींचकर छोडेंगे और शत्रुओंको डरावेंगे ॥ हाथी, घोडे और मनुष्योंको गिराकर भूमिकी शोभा बढावेंगे। उसी घोर युद्धमें महा बलवान् कर्णको अपने बाणोंसे मारेंगे, उसके मरनेसे धृतराष्ट्रके पुत्र राज्यके सहित इधर उधरको ऐसे भागेंगे जैसे सिंहके डरसे मृग। (३१—३४)

आज कर्ण मरनेसे राजा दुर्योधन अपने आत्माको शोचेगे, आज बन्धु बान्धव सहित कर्णको मारूंगा। आज बन्धु बान्धव सहित कर्णको मरा हुआ देख महाबलवान् धृतराष्ट्रपुत्र अपने आत्माको शोचेंगे। आज दुर्योधन पुत्र, पौत्र और बान्धवोंके सहित कर्णको मरा देखकर जानेंगे, कि अर्जुनके समान जगत्में कोई धनुषधारी नहीं है ॥ आज

सवाजिरथमातङ्गा मृत्युलोकमितो गताः ।
तथा सेनामुखे तत्र निहते पार्थ पाण्डवैः ॥ २८ ॥
भीष्मः प्रासृजदुग्राणि शरजालानि मारिष ।
सचेदिकाशिपञ्चालान्करूषान्मत्स्यकेकयान् ॥ २९ ॥
शरैः प्रच्छाद्य निधनमनयत्परमास्त्रवित् ।
तस्य चापच्युतैर्बाणैः परदेहविदारणैः ॥ ३० ॥
पूर्णमाकाशमभवद्रुक्मपुङ्खैरजिह्मगैः ।
हन्याद्रथसहस्राणि एकैकेनैव मुष्टिना ॥ ३१ ॥
लक्षं नरद्विपान्हत्वा समेतान्स महाबलान् ।
गत्या दशम्या ते गत्वा जघ्नुर्वाजिरथद्विपान् ॥ ३२ ॥
हित्वा नवगतीर्दुष्टाः स बाणानाहवेऽत्यजन् ।
दिनानि दश भीष्मेण निघ्नता तावकं बलम् ॥ ३३ ॥
शून्याः कृता रथोपस्था हताश्वगजवाजिनः ।
दर्शयित्वात्मनो रूपं रुद्रोपेन्द्रसमं युधि ॥ ३४ ॥
पाण्डवानामनीकानि प्रगृह्यासौ व्यशातयत् ।
विनिघ्नन्पृथिवीपालांश्चेदिपञ्चालकेकयान् ॥ ३५ ॥
अदहत्पाण्डवीं सेनां रथाश्वगजसंकुलाम् ।

घोडे और रथोंके सहित नाश किया था। इस प्रकार जब पाण्डवोंके बाणोंसे सब कौरवोंकी सेनाका मुख टूट गया, तब भीष्मने चेदी, काशी, करुष, पाञ्चाल, मत्स्य और केकय देशसे आई हुई तुम्हारी सेनापर बाण वर्षाने आरम्भ किये, शस्त्रविद्या जाननेवाले भीष्मके धनुषसे छूटे हुए बाणोंसे तुम्हारी सेनाका नाश होगया। (२७–३०)

उन सोनेके पङ्खवाले शीघ्रगामी देह विदारक भीष्मके बाणोंसे आकाश पूरित होगया। उन भीष्मके बाणोंसे एक लाख बलवान् मनुष्य और हाथी मारे गये, पश्चात् दशवें गतिसे उन बाणोंसे अनेक घोडे, हाथी और रथोंको काट दिया, भीष्मने दशदिन तक बाणोंकी नौ गति छोडकर अर्थात् दशवीं गतिसे तुम्हारी सेनाका नाश किया। भीष्मने शिव और विष्णुके समान अपना रूप दिखलाकर रथोंको वीरोंसे शून्य कर दिया और हाथी घोडोंको मारडाला ॥ (३०–३४)

भीष्मने अपने बलसे चेदि, पाञ्चाल और कैकय देशके अनेक राजोंको मारा। डूबते हुए दुर्योधनको उद्धार करनेके

निरर्जुनां वा पृथिवीं केशवानुचरिष्यसि ।
अद्याहमनृणः कृष्ण भविष्यामि धनुर्भृताम् ॥ ४६ ॥
कोपस्य च कुरूणां च शराणां गाण्डिवस्य च ।
अद्य दुःखमहं मोक्ष्ये त्रयोदशसमार्जितम् ॥ ४७ ॥
हत्वा कर्णं रणे कृष्ण शम्बरं मघवानिव ।
अद्य कर्णे हते युद्धे सोमकानां महारथाः ॥ ४८ ॥
कृतं कार्यं च मन्यन्तां मित्रकार्येप्सवो युधि ।
मम चैव कथं प्रीतिः शैनेयस्याद्य माधव ॥ ४९ ॥
भविष्यति हते कर्णे मयि चापि जयाधिके ।
अहं हत्वा रणे कर्णं पुत्रं चास्य महारथम् ॥ ५० ॥
प्रीतिं दास्यामि भीमस्य यमयोः सात्यकस्य च ।
धृष्टद्युम्नशिखण्डिभ्यां पञ्चालानां च माधव ॥ ५१ ॥
अद्यानृण्यं गमिष्यामि हत्वा कर्णं महाहवे ।
अद्य पश्यन्तु संग्रामे धनञ्जयममर्षणम् ॥ ५२ ॥
युध्यन्तं कौरवान्सङ्ख्ये घातयन्तं च सूतजम् ।
भवत्सकाशे वक्ष्ये च पुनरेवात्मसंस्तवम् ॥ ५३ ॥
धनुर्वेदे मत्समो नास्ति लोके पराक्रमे वा मम कोऽस्ति तुल्यः ।

का राज्य दूंगा ॥ (४२–४५)

हे केशव! अथवा आज तुम पृथ्वीको अर्जुनसे रहित देखोगे, आज मैं धनुष धारियोंके ऋणसे छुटूंगा। आज मैं क्रोध, कौरवोंका ऋण और तेरह बरष इकट्ठा हुआ जो दुःख है उससे छुटूंगा॥ जैसे इन्द्रने शम्बरासुरको मारा था, तैसे ही आज मैं कर्णको मारूंगा, उसके मरनेसे सोमकवंशी महारथ बहुत प्रसन्न होंगे और हमारे तथा कर्णके बलको सम झेंगे॥ हे माधव! ये सब मित्रोंके लिये युद्ध करनेको आये थे॥ (४६–४९)

सात्यकि भी कर्णका वध और हमारे जयसे सन्तुष्ट होंगे, आज मैं कर्णके महारथ पुत्रको भी मारूंगा। इससे भीमसेन, नकुल, सहदेव, सात्यकि, धृष्टद्युम्न, शिखण्डी और सब पाञ्चाल देशीय वीर प्रसन्न होंगे, आज मैं सब ऋणोंसे छुटूंगा। आज वीर अर्जुनके पराक्रमको सब योद्धा देखें, हम आपके आगे अपनी प्रशंसा करते है। जिस समय हम सूतपुत्रको मारेंगे और धृतराष्ट्रके पुत्रोंसे युद्ध करेंगे, तब सब योद्धा हमारे बलको देखेंगे॥ (४९–५३)

नावारयिष्यः संग्रामे न स्म द्रोणो व्यनंक्ष्यत ।
भवता तु बलं सर्वं धार्तराष्ट्रस्य वारितम् ॥ ४६ ॥
ततो द्रोणो हतो युद्धे पार्षतेन धनञ्जय ।
एवं वा को रणे कुर्यात्त्वदन्यः क्षत्रियो युधि ॥ ४७ ॥
यादृशं ते कृतं पार्थ जयद्रथवधं प्रति ।
निवार्य सेनां महतीं हत्वा शूरांश्च पार्थिवान् ॥ ४८ ॥
निहतः सैन्धवो राजा त्वयास्त्रबलतेजसा ।
आश्चर्यं सिन्धुराजस्य वधं जानन्ति पार्थिवाः ॥ ४९ ॥
अनाश्चर्यं हि तत्त्वत्तस्त्वं हि पार्थ महारथः ।
त्वां हि प्राप्य रणे क्षत्रमेकाहादिति भारत ॥ ५० ॥
नश्यमानमहं युक्तं मन्येयमिति मे मतिः ।
सेयं पार्थ चमूर्घोरा धार्तराष्ट्रस्य संयुगे ॥ ५१ ॥
हतसर्वस्ववीरा हि भीष्मद्रोणौ यदा हतौ ।
शीर्णप्रवरयोधाद्य हतवाजिरथद्विपा ॥ ५२ ॥
हीना सूर्येन्दुनक्षत्रैर्द्यौरिवाभाति भारती ।
विध्वस्ता हि रणे पार्थ सेनेयं भीमविक्रम ॥ ५३ ॥
आसुरीव पुरा सेना शक्रस्येव पराक्रमैः ।

रथोंको नहीं मारोगे, तो निश्चय जान लेना कि द्रोणाचार्य नहीं मारे गये। (४२-४६)

तुमने दुर्योधनकी सब सेनाको भगा दिया है। धृष्टद्युम्नने द्रोणाचार्यको मारा, अब कर्णको तुम्हारे सिवाय कौन क्षत्रिय मार सक्ता है? तुमने जयद्रथको मारनेके दिन बहुत सेनाको निवारण करके अनेक राजा और वीरोंको मारा था। इस कर्मको तुम्हारे सिवाय और कौन क्षत्री कर सक्ता है? तुमने जो अपने शस्त्रोंसे जयद्रथको मारा उसका आश्चर्य सब क्षत्री करते हैं॥ हमें निश्चय है कि तुम एक दिनमें सब क्षत्रियोंका नाश कर सकते हो॥ (४७-५०)

हे पार्थ! हम यह जानते है कि आज कौरवोंकी सब सेना नष्ट होगी। जिस समय भीष्म और द्रोणाचार्य मर गये थे, तब ही हमने जान लिया था, कि सेनाका नाश होगया और अब तो अनेक योद्धा भाग गये और हाथी घोडे और रथोंका नाश होगया। हे महापराक्रमी अर्जुन! इस समय कौरवोंकी सेना ऐसी होगयी है, जैसे सूर्य, चन्द्रमा

तद्भीमवेगं रुधिरौघवाहि खड्गाकुलं क्षत्रियजीवघाति।
अनार्तवं क्रूरमनिष्टवर्षं बभूव तत्संहरणं प्रजानाम् ॥ ४ ॥
एकं रथं सम्परिवार्य मृत्युं नयन्त्यनेके च रथाः समेताः।
एकस्तथैकं रथिनं रथाग्र्यांस्तथा रथश्चापि रथाननेकान् ॥ ५ ॥
रथं ससूतं सहयं च कश्चित्कश्चिद्रथी मृत्युवशं निनाय।
निनाय चाप्येकगजेन कश्चिद्रथान्बहून्मृत्युवशे तथाश्वान् ॥ ६ ॥
रथान्ससूतान्सहयान्गजांश्च सर्वानरीन्मृत्युवशं शरौघैः।
निन्ये हयांश्चैव तथा ससादीन्पदातिसङ्घांश्च तथैव पार्थः ॥ ७ ॥
कृपः शिखण्डी च रणे समेतौ दुर्योधनं सात्यकिरभ्यगच्छत्।
श्रुतस्तथा द्रोणपुत्रेण सार्धं युधामन्युश्चित्रसेनेन सार्धम् ॥ ८ ॥
कर्णस्य पुत्रं तु रथी सुषेणं समागतं सृञ्जयश्चोत्तमौजाः।
गान्धारराजं सहदेवः क्षुधार्तो महर्षभं सिंह इवाभ्यधावत् ॥ ९ ॥
शतानीको नाकुलिः कर्णपुत्रं युवा युवानं वृषसेनं शरौघैः।
समार्पयत्कर्णपुत्रश्च शूरः पाञ्चालेयं शरवर्षैरनेकैः ॥ १० ॥
रथर्षभः कृतवर्माणमार्छन्माद्रीपुत्रो नकुलश्चित्रयोधी।

मेघ, बाण पानीकी धार; सोनेके कवच और शस्त्र बिजलीके समान दीख पडते थे, वह घोररूपी रुधिरको बहानेवाला, चमकते हुए खड्गोंसे युक्त, क्षत्रियोंको नाश करनेवाला, दुःखदायक, प्रजाका नाश करनेके लिये ऊपर लिखा मेघ वर्षने लगा ॥ (२-४)

कहीं अनेक रथी वीर एक रथी वीरसे युद्ध करने लगे, कहीं एक अनेकसे और कहीं एक एकसे युद्ध करने लगे ॥ कहीं रथमें बैठे हुए वीरने घोडे सारथी और योद्धोंके सहित रथको काट दिया। कहीं हाथीपर चढे एक वीरने अनेक घोडे और रथोंको नाश कर दिया॥ अर्जुनने अपने बाणों से रथ, सारथी, घोडे, घोडोपर चढे वीर और अनेक हाथियों को मारडाला ॥ (५-७)

कृपाचार्यसे शिखण्डी, दुर्योधनसे सात्यकि, श्रुतसोम अश्वत्थामासे, युधामन्यु चित्रसेनसे, महारथ कर्णपुत्र सुषेणसे सृञ्जयवंशी उत्तमौजा और जैसे शार्दूल सिंहकी ओर दौडता है ऐसे ही शकुनीसे युद्ध करनेको सहदेव चले ॥ नकुलके पुत्र तरुण शतानीक कर्णपुत्र वृषसेनसे युद्ध करनेको चले, तब शतानीकने कर्णके पुत्रकी ओर; और कर्णके पुत्रने शतानीकके शरीरमें सहस्रों बाण मारे ॥ (८—१०)

इमं पापमतिं क्षुद्रमत्यन्तं पाण्डवान्प्रति ।
कर्णमद्य नरश्रेष्ठ जह्याः सुनिशितैः शरैः ॥ ६२ ॥
एतत्ते सुकृतं कर्म नात्र किञ्चन युज्यते ।
वयमप्यनुजानीमो नात्र दोषोऽस्ति कश्चन ॥ ६३ ॥
दहने यत्सपुत्राया निशि मातुस्तवानघ ।
द्यूतार्थे यच्च युष्मासु प्रावर्त्तत सुयोधनः ॥ ६४ ॥
तस्य सर्वस्य दुष्टात्मा कर्णो वै मूलमित्युत ।
कर्णाद्धि मन्यते त्राणं नित्यमेव सुयोधनः ॥ ६५ ॥
ततो मामपि संरब्धो निग्रहीतुं प्रचक्रमे ।
स्थिरा बुद्धिर्नरेन्द्रस्य धार्तराष्ट्रस्य मानद ॥ ६६ ॥
कर्णः पार्थान्रणे सर्वान्विजेष्यति न संशयः ।
कर्णमाश्रित्य कौन्तेय धार्तराष्ट्रेण विग्रहः ॥ ६७ ॥
रोचितो भवता सार्धं जानतापि बलं तव ।
कर्णो हि भाषते नित्यमहं पार्थान्समागतान् ॥ ६८ ॥
वासुदेवं च दाशार्हं विजेष्यामि महारथम् ।
प्रोत्साहयन्दुरात्मानं धार्तराष्ट्रं सुदुर्मतिम् ॥ ६९ ॥

तो भी इस पापी सदासे पाण्डवोंके द्वेषी कर्णको अपने तेज बाणोंसे अवश्य मारो। हम भी जानते हैं कि कर्णके मारनेमें तुमको कुछ दोष न लगेगा और इस समय यही काम करना तुम्हें अवश्य है ॥ (५९-६३)

देखो दुष्ट दुर्योधनने पुत्रोंके सहित तुम्हारी माताको जलानेका प्रबन्ध किया था, जुएमें बुलाकर, तुम लोगोंसे कैसा अधर्म किया था! तुम्हारे इन सब दुःखोंका मूल केवल यह पापी कर्ण ही है और इसका दुर्योधनको बडा आश्रय है। हे अर्जुन! जब मैं धर्मराजका दूत बनकर उसके घर गया था तब उसने मेरे पकडनेका भी ठीक प्रबन्ध कर लिया था। उस समय उसने कहा था कि एकले कर्ण ही निःसन्देह पाण्डवों-को युद्धमें जीतेंगे, कर्णहीका आश्रय लेकर दुर्योधनने यह युद्ध किया है। दुर्योधन तुम्हारे बलको जानता था तो भी उसने केवल कर्णके भरोसे यह युद्ध किया। (६४-६८)

कर्ण सदा कहा करता है, कि हम युद्धमें सब पाण्डवोंको महारथ कृष्णके सहित जीतेंगे, इन बातोंसे दुष्ट दुर्योधन प्रसन्न होता है जो कर्ण सदा सभामें

तद्भीमवेगं रुधिरौघवाहि खड्गाकुलं क्षत्रियजीवघाति ।
अनार्तवं क्रूरमनिष्टवर्षं बभूव तत्संहरणं प्रजानाम् ॥ ४ ॥
एकं रथं सम्परिवार्य मृत्युं नयन्त्यनेके च रथाः समेताः ।
एकस्तथैकं रथिनं रथाग्र्यांस्तथा रथश्चापि रथाननेकान् ॥ ५ ॥
रथं ससूतं सहयं च कश्चित्कश्चिद्रथी मृत्युवशं निनाय ।
निनाय चाप्येकगजेन कश्चिद्रथान्बहून्मृत्युवशे तथाश्वान् ॥ ६ ॥
रथान्ससूतान्सहयान्गजांश्च सर्वानरीन्मृत्युवशं शरौघैः ।
निन्ये हयांश्चैव तथा ससादीन्पदातिसङ्घांश्च तथैव पार्थः ॥ ७ ॥
कृपः शिखण्डी च रणे समेतौ दुर्योधनं सात्यकिरध्यगच्छत् ।
श्रुतस्तथा द्रोणपुत्रेण सार्धं युधामन्युश्चित्रसेनेन सार्धम् ॥ ८ ॥
कर्णस्य पुत्रं तु रथी सुषेणं समागतं सृञ्जयश्चोत्तमौजाः ।
गान्धारराजं सहदेवः क्षुधार्तो महर्षभं सिंह इवाभ्यधावत् ॥ ९ ॥
शतानीको नाकुलिः कर्णपुत्रं युवा युवानं वृषसेनं शरौघैः ।
समार्पयत्कर्णपुत्रश्च शूरः पाञ्चालेयं शरवर्षैरनेकैः ॥ १० ॥
रथर्षभः कृतवर्माणमार्छन्माद्रीपुत्रो नकुलश्चित्रयोधी ।

मेघ, बाण पानीकी धार; सोनेके कवच और शस्त्र बिजलीके समान दीख पडते थे, वह घोररूपी रुधिरको बहानेवाला, चमकते हुए खड्गोंसे युक्त, क्षत्रियोंको नाश करनेवाला, दुःखदायक, प्रजाका नाश करनेके लिये ऊपर लिखा मेघ वर्षने लगा ॥ (२–४)

कहीं अनेक रथी वीर एक रथी वीरसे युद्ध करने लगे, कहीं एक अनेकसे और कहीं एक एकसे युद्ध करने लगे ॥ कही रथमें बैठे हुए वीरने घोडे सारथी और योद्धोंके सहित रथको काट दिया। कहीं हाथीपर चढे एक वीरने अनेक घोडे और रथोंको नाश कर दिया॥ अर्जुनने अपने बाणों से रथ, सारथी, घोडे, घोडोपर चढे वीर और अनेक हाथियों को मारडाला ॥ (५–७)

कृपाचार्यसे शिखण्डी, दुर्योधनसे सात्यकि, श्रुतसोम अश्वत्थामासे, युधामन्यु चित्रसेनसे, महारथ कर्णपुत्र सुषेणसे सृञ्जयवंशी उत्तमौजा और जैसे शार्दूल सिंहकी ओर दौडता है ऐसे ही शकुनीसे युद्ध करनेको सहदेव चले॥ नकुलके पुत्र तरुण शतानीक कर्णपुत्र वृषसेनसे युद्ध करनेको चले, तब शतानीकने कर्णके पुत्रकी ओर; और कर्णके पुत्रने शतानीकके शरीरमें सहस्रों बाण मारे ॥ (८—१०)

तस्थौ सुविह्वलः सङ्ख्ये प्रहारजनितश्रमः ।
अथ द्रोणस्य समरे तत्कालसदृशं तदा ॥ ७९ ॥
श्रुत्वा कर्णो वचः क्रूरं ततश्चिच्छेद कार्मुकम् ।
ततश्छिन्नायुधं तेन रणे पञ्च महारथाः ॥ ८० ॥
तं चैव निकृतिप्रज्ञाः प्राहरञ्छरवृष्टिभिः ।
तस्मिन्विनिहते वीरे सर्वेषां दुःखमाविशत् ॥ ८१ ॥
प्राहसत्स तु दुष्टात्मा कर्णः स च सुयोधनः ।
यच्च कर्णोऽब्रवीत्कृष्णां सभायां परुषं वचः ॥ ८२ ॥
प्रमुखे पाण्डवेयानां कुरूणां च नृशंसवत् ।
विनष्टाः पाण्डवाः कृष्णे शाश्वतं नरकं गताः॥ ८३ ॥
पतिमन्यं पृथुश्रोणि वृणीष्व मृदुभाषिणि ।
एषा त्वं धृतराष्ट्रस्य दासीभूता निवेशनम् ॥ ८४ ॥
प्रविशारालपक्ष्माक्षि न सन्ति पतयस्तव ।
न पाण्डवाः प्रभवन्ति तव कृष्णे कथञ्चन ॥ ८५ ॥
दासभार्या च पाञ्चालि स्वयं दासी च शोभने ।
अद्य दुर्योधनो ह्येकः पृथिव्यां नृपतिः स्मृतः॥ ८६ ॥
सर्वे चास्य महीपाला योगक्षेममुपासते ।

निराश होकर क्रोधसे सांस लेता हुआ युद्ध छोडकर भाग गया, फिर एक कोनेमें जाकर और बाणोंसे व्याकुल होकर खडा होगया तब द्रोणाचार्यके समयके अनुसार दुष्ट वचन सुनकर कर्णने उनका धनुष काट दिया। (७९–८०)

तब उन्हे शस्त्रहीन जानकर छः महारथोंने मिलकर अधर्मसे मारडाला उस वीरके मरते ही सब दुःखसे व्याकुल होगये ॥ देखो सभामें भी दुष्ट दुर्योधन और कर्णही द्रौपदीको देखकर हंसे थे और द्रौपदीसे सब कौरवोंके बीचमें कहा था कि, हे कृष्णे! पाण्डवोंका नाश होगया और ये शाश्वत नरकमें गये ॥ हे उत्तम कमर और मृदु वचनवाली! अब तू धृतराष्ट्रकी दासी होगयी अब तू किसी दूसरेको अपना पति बनाले। हे कमल नयनी! अब पाण्डव तुम्हारे पति नहीं रहे, अब तू धृतराष्ट्रके घरमें जाकर दासीका काम कर ॥ (८०–८५)

हे सुन्दरी पाञ्चाली! अब तू दासकी स्त्री और दासी होगयी, दुर्योधन सब जगत्के राजा होगये। हे भद्रे! इस समय सब राजा दुर्योधनकी सेवा करते

सञ्जय उवाच- अथ त्विदानीं तुमुले विमर्दे द्विषद्भिरेको बहुभिः समावृतः।
महारणे सारथिमित्युवाच भीमश्चमूं वाहय धार्त्तराष्ट्रीम् ॥ १ ॥
त्वं सारथे याहि जवेन वाहैर्नयाम्येतान्धार्तराष्ट्रान्यमाय।
संचोदितो भीमसेनेन चैवं ससारथिः पुत्रबलं त्वदीयम् ॥ २ ॥
प्रायात्ततः सत्वरमुग्रवेगो यतो भीमस्तद्बलं गन्तुमैच्छत्।
ततोऽपरे नागरथाश्वपत्तिभिः प्रत्युद्ययुस्तं कुरवः समन्तात् ॥ ३ ॥
भीमस्य वाहाग्र्यमुदारवेगं समन्ततो बाणगणैर्निजघ्नुः।
ततः शरानापततो महात्मा चिच्छेद बाणैस्तपनीयपुङ्खैः ॥ ४ ॥
ते वै निपेतुस्तपनीयपुङ्खा द्विधा त्रिधा भीमशरैर्निकृत्ताः।
ततो राजन्नागरथाश्वयूनां भीमाहतानां वरराजमध्ये ॥ ५ ॥
घोरो निनादः प्रबभौ नरेन्द्र वज्राहतानामिव पर्वतानाम्।
ते वध्यमानाश्च नरेन्द्रमुख्या निर्भिद्यतो भीमशरप्रवेकैः ॥ ६ ॥
भीमं समन्तात्समरेऽभ्यरोहन्वृक्षं शकुन्ता इव पुष्पहेतोः।

लगे ॥ ( १४-१७ ) [ ३७९८ ]

कर्णपर्वमें पचत्तर अध्याय समाप्त।

कर्णपर्वमें छिहत्तर अध्याय।

सञ्जय बोले, हे राजन्! इस घोर युद्धमें एक वीर अनेक वीरोंसे युद्ध करने लगा। तब भीमसेनने अपने सारथीसे कहा, तुम हमारे रथको दुःशासनकी ओर ले चलो। हे सारथी! तुम बहुत वेगसे इस धृतराष्ट्रके पुत्रकी सेनाकी ओर जाओ हम अपने बाणोंसे इन सब धृष्ट-राष्ट्रके पुत्रोंका नाश करेंगे। भीमसेनके ऐसे वचन सुन उनका सारथी तुम्हारे पुत्रकी सेनाकी ओर चला जहां भीम सेनकी जानेकी इच्छा थी, वहीं सारथी बहुत शीघ्रता सहित लेगया, तब तुम्हारी ओरसे भी अनेक हाथी, घोडे और रथों-पर चढे योद्धा तथा पदाति भीमसेनसे युद्ध करनेको चले, उन्होंने महावेगवान् भीमसेनके रथकी ओर सहस्रों बाण चलाये। (१—४)

उस बाणोंको आते देख महावीर भीमसेनने उन सब बाणोंको अपने सुवर्ण भूषित बाणोंसे काट दिया। हे राजेन्द्र! वे सोनेके पङ्खवाले बाण भीमसेनके बाणोंसे प्रत्येक के तीन तीन टुकडे होकर पृथ्वीमें गिर गये, इतने ही समय में भीमसेनने तुम्हारी सेनाके कितने ही हाथियोंको मारडाला अनेक घोडे और रथ कट कर पृथ्वी में गिर गये। उस समय भीमसेनके बाणोंसे कट कर गिरते हुए हाथियोंका ऐसा शब्द होता था, जैसे वज्रसे कटते हुए पर्वतोंका।

तस्थौ सुविह्वलः सङ्ख्ये प्रहारजनितश्रमः ।
अथ द्रोणस्य समरे तत्कालसदृशं तदा ॥ ७९ ॥
श्रुत्वा कर्णो वचः क्रूरं ततश्चिच्छेद कार्मुकम् ।
ततश्छिन्नायुधं तेन रणे पञ्च महारथाः ॥ ८० ॥
तं चैव निकृतिप्रज्ञाः प्राहरञ्छरवृष्टिभिः ।
तस्मिन्विनिहते वीरे सर्वेषां दुःखमाविशत् ॥ ८१ ॥
प्राहसत्स तु दुष्टात्मा कर्णः स च सुयोधनः ।
यच्च कर्णोऽब्रवीत्कृष्णां सभायां परुषं वचः ॥ ८२ ॥
प्रमुखे पाण्डवेयानां कुरूणां च नृशंसवत् ।
विनष्टाः पाण्डवाः कृष्णे शाश्वतं नरकं गताः॥ ८३ ॥
पतिमन्यं पृथुश्रोणि वृणीष्व मृदुभाषिणि ।
एषा त्वं धृतराष्ट्रस्य दासीभूता निवेशनम् ॥ ८४ ॥
प्रविशारालपक्ष्माक्षि न सन्ति पतयस्तव ।
न पाण्डवाः प्रभवन्ति तव कृष्णे कथञ्चन ॥ ८५ ॥
दासभार्या च पाञ्चालि स्वयं दासी च शोभने ।
अद्य दुर्योधनो ह्येकः पृथिव्यां नृपतिः स्मृतः॥ ८६ ॥
सर्वे चास्य महीपाला योगक्षेममुपासते ।

---

निराश होकर क्रोधसे सांस लेता हुआ युद्ध छोडकर भाग गया, फिर एक कोनेमें जाकर और बाणोंसे व्याकुल होकर खडा होगया तब द्रोणाचार्यके समयके अनुसार दुष्ट वचन सुनकर कर्णने उनका धनुष काट दिया । (७९-८०)

तब उन्हे शस्त्रहीन जानकर छः महारथोंने मिलकर अधर्मसे मारडाला उस वीरके मरते ही सब दुःखसे व्याकुल होगये ॥ देखो सभामें भी दुष्ट दुर्योधन और कर्णही द्रौपदीको देखकर हंसे थे और द्रौपदीसे सब कौरवोंके बीचमें कहा था कि, हे कृष्णे ! पाण्डवोंका नाश होगया और ये शाश्वत नरकमें गये ॥ हे उत्तम कमर और मृदु वचनवाली ! अब तू धृतराष्ट्रकी दासी होगयी अब तू किसी दूसरेको अपना पति बनाले । हे कमल नयनी ! अब पाण्डव तुम्हारे पति नहीं रहे, अब तू धृतराष्ट्रके घरमें जाकर दासीका काम कर ॥ (८०-८५)

हे सुन्दरी पाञ्चाली ! अब तू दासकी स्त्री और दासी होगयी, दुर्योधन सब जगत्के राजा होगये । हे भद्रे ! इस समय सब राजा दुर्योधनकी सेवा करते

नैनं जीवं नाद्य जानाम्यजीवं बीभत्सुं वा तन्ममात्याद्यातिदुःखम् ॥१३॥
सोऽहं द्विषत्सैन्यमुदग्रकल्पं विनाशयिष्ये परमप्रतीतः।
एतन्निहत्याजिमध्ये समेतं प्रीतो भविष्यामि सह त्वयाद्य ॥ १४ ॥
सर्वांस्तूणान्सायकानामवेक्ष्य किं शिष्टं स्यात्सायकानां रथे मे।
का वा जातिः किं प्रमाणं च तेषां ज्ञात्वा व्यक्तं तत्समाचक्ष्व सूत १५॥
विशोक उवाच– षण्मार्गणानामयुतानि वीर क्षुराश्च भल्लाश्च तथायुताख्याः।
नाराचानां द्वे सहस्रे च वीर त्रीण्येव च प्रदराणां स्म पार्थ ॥ १६ ॥
अस्त्यायुधं पाण्डवेयावशिष्टं न यद्वहेच्छकटं षड्गवीयम्।
एतद्विद्वन्मुञ्च सहस्रशोऽपि गदासिबाहुद्रविणं च तेऽस्ति ॥ १७ ॥
प्रासाश्च मुद्गराः शक्तयस्तोमराश्च मा भैषस्त्वं संक्षयादायुधानाम्॥१८॥
भीमसेन उवाच-सूताद्येनं पश्य भीमप्रयुक्तैः सञ्छिन्दद्भिः पार्थिवानां सुवेगैः॥
छन्नं बाणैराहवं घोररूपं नष्टादित्यं मृत्युलोकेन तुल्यम् ॥ १९ ॥
अद्यैतद्वै विदितं पार्थिवानां भविष्यति ह्याकुमारं च सूत।
निमग्नो वा समरे भीमसेन एकः कुरून्वा समरे व्यजैषीत् ॥ २० ॥
सर्वे सङ्ख्ये कुरवो निष्पतन्तु मां वा लोकाः कीर्तयन्त्वाकुमारम्।

जीते हैं कि मर गये। अर्जुन भी अभी-तक लौट कर नहीं आये; जो हो अब हम इस घोर सेनाका नाश किये विना न लौटेंगे। इस सबको मार कर तुम्हारे सहित प्रसन्न होंगे, हे सारथे! तुम शीघ्र हमारे रथमें देखो कि कौनसी जातिके कितने बाण तूणीरमें शेष बचे हैं? (१३-१५)

विशोक बोला, हे कुन्तीपुत्र वीर! इस समय आपके रथमें साठ हजार मार्गण, क्षुरप्र और भल्ल दश दश सहस्र, दो सहस्र नाराच, तीन सहस्र प्रदर शेष हैं॥ ये सब शस्त्र इन छः बैलवाले छकडोंसे अलग है। हे विद्वन्! आप इनको छोडिये पश्चात् आपके हाथोंका धनुष गदा तो रक्खी ही है, तुम अपने शस्त्रोंको थोडा जान कर घबडाओ मत, अभी रथमें अनेक प्रास, मुद्गर, शक्ति और तोमर भरे हैं॥ (१६-१८)

भीमसेन बोले, हे सूत! अब तुम वेगवाले बाणोंसे राजोंको मरते, सूर्यको छिपे और आकाशको पूरित देखोगे, अब मैं इस सेनाको यमराजकी पुरीके समान कर देता हूं॥ आजसे सब राजों को यह बात स्मरण रहेगी कि एकले भीमसेनने सब कौरवोंको जीत लिया। आज ये सब कौरव मरकर पृथ्वीमें गिरे या सब मिलकर अकेले भीमसेनको

अपविद्धायुधं कर्णं दीनाः पश्यन्तु बान्धवाः ॥ ९६ ॥
हस्तिकक्षो महानस्य भल्लेनोन्मथितस्त्वया ।
प्रकम्पमानः पततु भूमावपि रथध्वजः ॥ ९७ ॥
त्वया शरशतैश्छिन्नं रथं हेमविभूषितम् ।
हतयोधाश्वमुत्सृज्य भीतः शल्यः पलायताम् ॥ ९८ ॥
त्वं चेत्कर्णसुतं पार्थ सूतपुत्रस्य पश्यतः ।
प्रतिज्ञावारणार्थाय निहनिष्यसि सायकैः ॥ ९९ ॥
हतं कर्णस्तु तं दृष्ट्वा प्रियं पुत्रं दुरात्मवान् ।
स्मरतां द्रोणभीष्माभ्यां वचः क्षत्तुश्च मानद ॥ १०० ॥
ततः सुयोधनो दृष्ट्वा हतमाधिरथिं त्वया ।
निराशो जीविते त्वद्य राज्ये चैव भवत्वरि ॥ १०१ ॥
एते द्रवन्ति पञ्चाला वध्यमानाः शितैः शरैः ।
कर्णेन भरतश्रेष्ठ पाण्डवानुज्जिहीर्षवः ॥ १०२ ॥
पञ्चालान्द्रौपदेयांश्च धृष्टद्युम्नशिखण्डिनौ ।
धृष्टद्युम्नतनूजांश्च शतानीकं च नाकुलिम् ॥ १०३ ॥
नकुलं सहदेवं च दुर्मुखं जनमेजयम् ।
सुधर्माणं सात्यकिं च विद्धि कर्णवशङ्गतान् ॥ १०४ ॥

अनेक बान्धव पृथ्वीमें पडे शस्त्र रहित रुधिरमे भीगे कर्णको देखें, आज कर्णकी हस्तिकक्षावाली ध्वजा भी तुम्हारे भल्ल बाणोंसे कटी जानेसे कांपती हुई पृथ्वीमें गिरे; सहस्रों योद्धा और सुवर्ण भूषित रथके कटनेसे शल्य डरकर युद्ध छोडकर भागे ॥ (९५-९८)

हे अर्जुन! यदि तुम कर्णके देखते उसके पुत्रको प्रतिज्ञा करके मारोगे तो अपने प्रिय पुत्रको तुम्हारे हाथसे मरते देख दुष्ट कर्ण भीष्म और द्रोणाचार्यके वचनोंको स्मरण करेगा ॥ अधिरथ पुत्र कर्णको तुम्हारे बाणोंसे मरा हुआ देख दुर्योधन राज्यसे और जीवितसे निराश होजायगा ॥ (९९-१०१)

हे भरतकुल श्रेष्ठ! ये देखो कर्णके तेज बाणोंसे व्याकुल होकर पाण्डवोंको पुकारते हुए पाञ्चाल भाग जाते हैं। पाञ्चाल, द्रौपदीके पुत्र, धृष्टद्युम्न, शिखण्डी, धृष्टद्युम्नके पुत्र, नकुल पुत्र शतानीक, नकुल, सहदेव, दुर्मुख, जनमेजय, सुधर्मा और सात्यकि ये सब कर्णके बाणोंसे व्याकुल होगये हैं ॥ (१०२-१०४)

नीलाद्धनाद्विद्युतमुच्चरन्तीं तथा पश्य विस्फुरन्तीं धनुर्ज्याम् ॥ २९ ॥
कपिर्ह्यसौ वीक्ष्यते सर्वतो वै ध्वजाग्रमारुह्य धनञ्जयस्य ।
वित्रासयन्रिपुसङ्घान्विमर्दे बिभेम्यस्मादात्मनैवाभिवीक्ष्य ॥ ३० ॥
विभ्राजते चातिमात्रं किरीटं विचित्रमेतच्च धनञ्जयस्य ।
दिवाकराभो मणिरेष दिव्यो विभ्राजते चैव किरीटसंस्थः ॥ ३१ ॥
पार्श्वे भीमं पाण्डुराभ्रप्रकाशं पश्यस्व शङ्खं देवदत्तं सुघोषम् ।
अभीषुहस्तस्य जनार्दनस्य विगाहमानस्य चमूं परेषाम् ॥ ३२ ॥
रविप्रभं वज्रनाभं क्षुरान्तं पार्श्वे स्थितं पश्य जनार्दनस्य ।
चक्रं यशोवर्धनं केशवस्य सदार्चितं यदुभिः पश्य वीर ॥ ३३ ॥
महाद्विपानां सरलद्रुमोपमाः करा निकृत्ताः प्रपतन्त्यमी क्षुरैः ।
किरीटिना तेन पुनः ससादिनः शरैर्निकृत्ताः कुलिशैरिवाद्रयः ॥३४॥
तथैव कृष्णस्य च पाञ्चजन्यं महार्हमेतं द्विजराजवर्णम् ।
कौन्तेय पश्योरसि कौस्तुभं च जाज्वल्यमानं विजयां स्रजं च॥ ३५॥
ध्रुवं रथाग्र्यः समुपैति पार्थो विद्रावयन्सैन्यमिदं परेषाम् ।
सिताभ्रवर्णैरसितप्रयुक्तैर्हयैर्महार्हैं रथिनां वरिष्ठः ॥ ३६ ॥

देखो इस हाथी सेनामें काले मेघोंमें वर्षातमें बिजलीके समान वानर युक्त ध्वजा दीख रही है, और ये अर्जुनका घूमता हुआ धनुष भी देख पडता है। ये शत्रुनाशन अर्जुनकी ध्वजा पर बैठा हुआ बंदर चारों ओर देखता है, और शत्रुओंको डराता है, मैं भी इसे देखकर डर रहा हूं ॥ (२८-३०)

ये देखो अर्जुनके माथेपर मुकुट कैसा शोभा देता है, इसके बीचमें यह मणि सूर्यके समान चमक रही है ॥ ये देखो इनके पास उत्तम शब्दवाला श्वेत अभ्रके समान अत्यन्त सफेद देवदत्त शङ्ख रक्खा है, ये कृष्ण घोडोंकी रास लिये शत्रुओंकी सेनामें रथको घुमा रहे है। देखो कृष्णके पास अत्यन्त तेज वज्रके समान दृढ सदा यादवोंसे पूजित चक्र रक्खा है ॥ (३१—३३)

ये देखो अर्जुनके बाणोंसे कटकर वृक्षके समान हाथियोंके सूंड कटते हैं। और वज्रसे कटे हुए पर्वतोंके समान वीरोंके सहित मर कर गिर रहे हैं। हे कुन्तीपुत्र ! ये चन्द्रमाके समान सफेद पाञ्चजन्य शङ्ख श्रीकृष्णके पास रक्खा है। और ये इनके हृदयमें कौस्तुभ मणि तथा विजय माला चमक रही है॥ निश्चय महारथ अर्जुन अपने बाणोंसे शत्रुओंका नाश करते हुए बहुत उत्तम

कर्णेन भरतश्रेष्ठ पश्य पश्य तथा कृतान् ॥ ११३ ॥
तांस्तथाभिमुखान्वीरान्मित्रार्थे त्यक्तजीवितान् ।
क्षयं नयति राधेयः पञ्चालाञ्छतशो रणे ॥ ११४ ॥
तद्भारत महेष्वासानगाधे मज्जतोऽप्लवे ।
कर्णार्णवे प्लवो भूत्वा पञ्चालांस्त्रातुमर्हसि ॥ ११५ ॥
अस्त्रं हि रामात्कर्णेन भार्गवादृषिसत्तमात ।
यदुपात्तं महाघोरं तस्य रूपमुदीर्यते ॥ ११६ ॥
तापनं सर्वसैन्यानां घोररूपं सुदारुणम् ।
समावृत्य महासेनां ज्वलन्तं स्वेन तेजसा ॥ ११७ ॥
एते चरन्ति संग्रामे कर्णचापच्युताः शराः ।
भ्रमराणामिव व्रातास्तापयन्ति स्म तावकान् ॥ ११८ ॥
एते द्रवन्ति पञ्चाला दिक्षु सर्वासु भारत ।
कर्णास्त्रं समरे प्राप्य दुर्निवार्यमनात्मभिः ॥ ११९ ॥
एष भीमो दृढक्रोधो वृतः पार्थ समन्ततः ।
सृञ्जयैर्योधयन्कर्णं पीड्यते निशितैः शरैः ॥ १२० ॥
पाण्डवान्सृञ्जयांश्चैव पञ्चालांश्चैव भारत ।

हे वीर ! यह देखो ये पाञ्चाल कर्णकी ओर दौडे चले जाते है और कभी पीछेको हट जाते हैं । आहह ! कर्णने इनकी कैसी दशा कर दी है, तथापि ये लोग अपने मित्रकी विजयके लिये युद्धसे विमुख नहीं होते, परन्तु कर्ण उनका नाश किये देता है । हे भारत ! अब अगाध कर्णरूपी समुद्रमें डूबते हुए पाञ्चालोंको तुम नावके समान होजाओ ॥ (११३-११५)

कर्णने जो ऋषिश्रेष्ठ जमदग्निपुत्र परशुरामसे शस्त्रविद्या सीखी है, यह उसीका महाप्रताप दीख रहा है । यह शस्त्र अपने तेजसे प्रकाशित होकर सब सेनाको व्याकुल और नाश कर रहा है, ये कर्णके बाण तुम्हारी सेनाको दुःख देते हुए वनमें भौरोंके झुण्डके समान घूम रहे है ॥ (११६-११८)

हे भारत ! ये पाञ्चाल कर्णके शस्त्रसे व्याकुल होकर चारों दिशाओंको भागे जाते है । इस शस्त्रको साधारण मनुष्य निवारण नहीं कर सक्ता ॥ ये महा क्रोधी भीमसेन सृञ्जयोंके सहित अपने बाणोंसे कर्णको व्याकुल कर रहे है ॥ जैसे रोग उपेक्षित होकर शरीरका नाश कर देता है ऐसे ही इस समय इस शस्त्र

रथाश्वमातङ्गपदातिसङ्घा बाणस्वनैर्नेमिखुरस्वनैश्च ।
संनादयन्तो वसुधां दिशश्च क्रुद्धा नृसिंहा जयमभ्युदीयुः ॥ ४ ॥
तेषां च पार्थस्य च मारिषासीद्देहासुपापक्षपणं सुयुद्धम् ।
त्रैलोक्यहेतोरसुरैर्यथासीद्देवस्य विष्णोर्जयतां वरस्य ॥ ५ ॥
तैरस्तमुच्चावचमायुधं तदेकः प्रचिच्छेद किरीटमाली ।
क्षुरार्धचन्द्रैर्निशितैश्च भल्लैः शिरांसि तेषां बहुधा च बाहून् ॥ ६ ॥
छत्राणि वालव्यजनानि केतूनश्वान्रथान्पत्तिगणान्द्विपांश्च ।
ते पेतुरुर्व्यां बहुधा विरूपा वातप्रणुन्नानि यथा वनानि ॥ ७ ॥
सुवर्णजालावतता महागजाः सवैजयन्तीध्वजयोधकल्पिताः ।
सुवर्णपुङ्खैरिषुभिः समाचिताश्चकाशिरे प्रज्वलिता यथाचलाः ॥ ८ ॥
विदार्य नागाश्वरथान्धनञ्जयः शरोत्तमैर्वासववज्रसन्निभैः ।
द्रुतं ययौ कर्णजिघांसया तथा यथा मरुत्वान्बलभेदने पुरा ॥ ९ ॥
ततः स पुरुषव्याघ्रस्तव सैन्यमरिन्दमः ।
प्रविवेश महाबाहुर्मकरः सागरं यथा ॥ १० ॥
तं हृष्टास्तावका राजन्रथपत्तिसमन्विताः ।

श्रीकृष्णने शीघ्र हांका। उस समय अर्जुन इस प्रकार युद्ध करनेको चले, जैसे जम्भासुरको मारनेके लिये इन्द्र वज्र लेकर चले थे। अर्जुनके घोडोंके खुर पहिये और धनुषका शब्द सुन कर अनेक योद्धा क्रोध करके जयके लिये चले, अनेक हाथी, घोडे और रथ भी चले, जैसे विजयी इन्द्रने तीन लोकके सुखके लिये दानवोंसे युद्ध किया था, ऐसे ही अर्जुनने एकले ही उन सबके हाथ और शिर अनेक अर्द्धचन्द्र, क्षुर और अनेक भल्लोंसे काट दिये ॥ (३-६)

जैसे आंधी चलनेसे वनके वृक्ष गिर जाते हैं, तैसे ही अर्जुनके बाण लगनेसे छत्र, चमर, केतु, रथ, अश्व, पैदल योद्धा और हाथी छिन्न भिन्न हो कर पृथ्वीमें गिर गये ॥ जैसे जलते हुए पर्वत शोभित होते हैं ऐसे ही स्वर्ण जाल ध्वजा और वीरोंके सहित बाण लगनेसे हाथी शोभित हुए ॥ जैसा पहले समयमें इन्द्र बल नामक राक्षसको मारने गये थे, ऐसे ही अर्जुन भी अपने वज्रके समान बाणोंसे हाथी, घोडे, रथ और पदातियोंसे भरी हुई सेनाको मार कर कर्णको मारने गये ॥ (७-९)

जैसे मगर समुद्रमें जाता है, ऐसे ही महाबाहु पुरुषसिंह शत्रुनाशन अर्जुनने भी तुम्हारी सेनामें प्रवेश किया।

प्रापयेयं परं लोकं किमु कर्णं महाहवे ॥ ४ ॥
पश्यामि द्रवतीं सेनां पञ्चालानां जनार्दन ।
पश्यामि कर्णं समरे विचरन्तमभीतवत् ॥ ५ ॥
भार्गवास्त्रं च पश्यामि ज्वलन्तं कृष्ण सर्वशः ।
सृष्टं कर्णेन वार्ष्णेय शक्रेणेव यथाशनिम् ॥ ६ ॥
अयं खलु स संग्रामो यत्र कर्णं मया हतम् ।
कथयिष्यन्ति भूतानि यावद्भूमिर्धरिष्यति ॥ ७ ॥
अद्य कृष्ण विकर्णा मे कर्णं नेष्यन्ति मृत्यवे ।
गाण्डीवमुक्ताः क्षिण्वन्तो मम हस्तप्रचोदिताः ॥ ८ ॥
अद्य राजा धृतराष्ट्रः स्वां बुद्धिमवमंस्यते ।
दुर्योधनमराज्यार्हं यया राज्येऽभ्यषेचयत् ॥ ९ ॥
अद्य राज्यात्सुखाच्चैव श्रियो राष्ट्रात्तथा पुरात् ।
पुत्रेभ्यश्च महाबाहो धृतराष्ट्रो विमोक्ष्यति ॥ १० ॥
गुणवन्तं हि यो द्वेष्टि निर्गुणं कुरुते प्रभुम् ।
स शोचति नृपः कृष्ण क्षिप्रमेवागते क्षये ॥ ११ ॥
यथा च पुरुषः कश्चिच्छित्त्वा चाम्रवणं महत् ।
फलं दृष्ट्वा भृशं दुःखी भविष्यति जनार्दन ।

जीत सक्ते है । कर्ण विचारेकी तो कथा ही क्या है ? हे कृष्ण ! आपकी कृपासे हम स्वर्गको भी जीत सक्ते है ॥ (१-४)

देखो कर्ण बेडर होकर हमारी सेनामें घूम रहा है और पाञ्चाल सेना भागी जाती है ॥ हे कृष्ण ! इस समय सब ओर इन्द्रके हाथसे छूटे हुए वज्रके समान कर्णका छोडा भार्गवास्त्र ही दिखाई देता है ॥ जब तक पृथ्वी रहेगी, तभी तक मनुष्य हमारे हाथसे कर्णके मारे जानेका वर्णन करेंगे ॥ हे कृष्ण ! आज हमारे हाथसे प्रेरित बाण गाण्डीवसे छूट कर कर्णका नाश करेंगे ॥ (५—८)

आज धृतराष्ट्र अपनी उस बुद्धिकी निन्दा करेंगे, कि जिससे उन्होंने अयोग्य दुर्योधनको राज्य दिया था ॥ आज राजा धृतराष्ट्र राज्य, सुख, लक्ष्मी, सेवक, नगर और पुत्रोंसे छूट जांयगे ॥ हे कृष्ण ! जो मूर्ख राजा गुणवान्का निरादर और मूर्खोंका आदर करता है, उसे नाश होनेके पश्चात् शोच करना पडता है । हे कृष्ण ! जैसे कोई मनुष्य आमका वन काट कर पीछे शोच करता है, इसी प्रकार आज सूतपुत्रके मारे जानेसे

महौघस्येव जलधेर्गिरिमासाद्य दीर्यतः ॥ २० ॥
तां तु सेनां भृशं विध्वा द्रावयित्वार्जुनः शरैः।
प्रायादभिमुखः पार्थः सूतानीकं हि मारिष ॥ २१ ॥
तस्य शब्दो महानासीत्परानभिमुखस्य वै।
गरुडस्येव पततः पन्नगार्थे यथा पुरा ॥ २२ ॥
तं तु शब्दमभिश्रुत्य भीमसेनो महाबलः।
बभूव परमप्रीतः पार्थदर्शनलालसः ॥ २३ ॥
श्रुत्वैव पार्थमायान्तं भीमसेनः प्रतापवान्।
त्यक्त्वा प्राणान्महाराज सेनां तव ममर्द ह ॥ २४ ॥
स वायुवीर्यप्रतिमो वायुवेगसमो जवे।
वायुवद्व्यचरद्भीमो वायुपुत्रः प्रतापवान् ॥ २५ ॥
तेनार्द्यमाना राजेन्द्र सेना तव विशाम्पते।
व्यभ्रश्यत महाराज भिन्ना नौरिव सागरे ॥ २६ ॥
तां तु सेनां तदा भीमो दर्शयन्पाणिलाघवम्।
शरैरवचकर्तोग्रैः प्रेषयिष्यन्यमक्षयम् ॥ २७ ॥
तत्र भारत भीमस्य बलं दृष्ट्वातिमानुषम्।
व्यभ्रमन्त रणे योधाः कालस्येव युगक्षये ॥ २८ ॥

भागने लगे। जैसे समुद्रका जल पर्वतमें लगनेसे गर्जता है, ऐसे ही उस भागती हुई सेनाका शब्द होने लगा॥ (१७-२०)

उस सेनाको अपने बाणोंसे व्याकुल करके अर्जुन कर्णकी सेनाकी ओर चले॥ जैसे सांपोंके झुण्डमें आते हुए गरुडका शब्द होता है, ऐसे ही सेनामें जाते हुए अर्जुनका घोर शब्द होने लगा ॥ उस शब्दको सुनकर महाबलवान् भीमसेन बहुत प्रसन्न हुए और उन्होंने अर्जुनको देखनेकी इच्छा की ॥ (२१-२३)

अर्जुनको आते सुन महाप्रतापी भीमसेन प्राणोंका भय छोडकर तुम्हारी सेनाका नाश करने लगे ॥ वह वायुके समान पराक्रमी वायुके समान चलनेवाला वायुपुत्र भीमसेन तुम्हारी सेनामें वायुके समान घूमने लगे॥ हे महाराज! तुम्हारी सेना भीमसेनके बाणोंसे ऐसे व्याकुल होगयी जैसे टूटी हुई नाव समुद्रमें व्याकुल होजाती है॥ (२४-२६)

भीमसेन उस समय अपने हाथकी शीघ्रता दिखाते हुए अपने बाणोंसे तुम्हारी सेनाका नाश करने लगे॥ जैसे प्रलयकालमें यमराजका रूप देखकर

योऽसौ रणे नरं नान्यं पृथिव्यामनुमन्यते ।
तस्याद्य सूतपुत्रस्य भूमिः पास्यति शोणितम् ॥ २१ ॥
अपतिर्ह्यसि कृष्णेति सूतपुत्रो यदब्रवीत् ।
धृतराष्ट्रमते कर्णः श्लाघमानः स्वकान्गुणान् ॥ २२ ॥
अनृतं तत्करिष्यन्ति मामका निशिताः शराः ।
आशीविषा इव क्रुद्धास्तस्य पास्यन्ति शोणितम् ॥२३ ॥
मया हस्तवता मुक्ता नाराचा वैद्युतत्विषः ।
गाण्डीवसृष्टा दास्यन्ति कर्णस्य परमां गतिम् ॥२४ ॥
अद्य तप्स्यति राधेयः पाञ्चालीं यत्तदाब्रवीत ।
सभामध्ये वचः क्रूर कुत्सयन्पाण्डवान्प्रति ॥ २५ ॥
ये वै षण्ढतिलास्तत्र भवितारोऽद्य ते तिलाः ।
हते वैकर्तने कर्णे सूतपुत्रे दुरात्मनि ॥ २६ ॥
अहं वः पाण्डुपुत्रेभ्यस्त्रास्यामीति यदब्रवीत् ।
धृतराष्ट्रसुतान्कर्णः श्लाघमानोऽऽत्मनो गुणान् ।
अनृतं तत्करिष्यन्ति मामका निशिताः शराः ॥ २७ ॥
उद्योगः पाण्डुपुत्राणां समाप्तिमुपयास्यति ।
हन्ताहं पाण्डवान्सर्वान्सपुत्रानिति योऽब्रवीत् ॥ २८ ॥

योद्धा किसीको नहीं समझता आज भूमि उसी कर्णका रुधिर पीवेगी। १९-२३

सूतपुत्र कर्णने जो धृतराष्ट्रकी सभामें द्रौपदीको कहा था, कि पाण्डव तेरे पति नहीं है और अपने गुणोंकी प्रशंसा की थी, आज सांपके समान विष भरे मेरे बाण उस वचनका उत्तर देंगे, और रुधिर पियेंगे, आज मेरे धनुषसे छटे हुए बिजलीके समान बाण कर्णको परमगति देंगे ॥ (२२—२४)

कर्णने जो पाण्डवोंकी निन्दा करके द्रौपदीको कठिन वचन कहे थे, आज उनको स्मरण करके बहुत ही दुःख पावेगा ॥ जो पाण्डव उस समय नपुंसक थे वही आज दुरात्मा सूतपुत्रके मरनेसे महा पुरुष होजांयगे ॥ कर्णने जो अपनी प्रशंसा करके धृतराष्ट्रके पुत्रोंसे कहा था, कि हम पाण्डवोंसे तुम्हारी रक्षा करेंगे, सो उस वचनको मेरे बाण मिथ्या कर देंगे ॥ (२५-२७)

जिस कर्णने यह कहा था, कि हम एकले ही पुत्रों सहित पांचों पाण्डवोंको मार डालेंगे आज उस कर्णके मरनेसे पाण्डवोंका सब उद्योग सफल होगा ॥

निश्चक्राम रणाद्भीमो मत्स्यो जालादिवाम्भसि ॥ ३७ ॥
हत्वा दशसहस्राणि गजानामनिवर्तिनाम् ।
नृणां शतसहस्रे द्वे द्वे शते चैव भारत ॥ ३८ ॥
पञ्च चाश्वसहस्राणि रथानां शतमेव च ।
हत्वा प्रास्यन्दयद्भीमो नदीं शोणितवाहिनीम् ॥ ३९ ॥
शोणितोदां रथावर्तां हस्तिग्राहसमाकुलाम् ।
नरमीनाश्वनक्रान्तां केशशैवलशाद्वलाम् ॥ ४० ॥
सञ्छिन्नभुजनागेन्द्रां बहुरत्नापहारिणीम् ।
ऊरुग्राहां मज्जपङ्कां शीर्षोपलसमावृताम् ॥ ४१ ॥
धनुःकाशां शरावापां गदापरिघकेतनाम् ।
हंसच्छत्रध्वजोपेतामुष्णीषवरफेनिलाम् ॥ ४२ ॥
हारपद्माकरां चैव भूमिरेणूर्मिमालिनीम् ।
आर्यवृत्तवतीं सङ्ख्ये सुतरां भीरुदुस्तराम् ॥ ४३ ॥
योधग्राहवतीं सङ्ख्ये वहन्तीं पितृसादनम् ।
क्षणेन पुरुषव्याघ्र प्रावर्तयत निम्नगाम् ॥ ४४ ॥
यथा वैतरणीमुग्रां दुस्तरामकृतात्मभिः ।
तथा दुस्तरणीं घोरां भीरूणां भयवर्धनीम् ॥ ४५ ॥

ऐसे ही भीमसेन उस सेनाको मारकर बाहर निकले ॥ भीमसेनने उस समय युद्धसे न लौटनेवाले दश सहस्र हाथी मारे और दो लाख दो सौ मनुष्य मारे॥ पांच सहस्र घोडे और सौ रथ काट डाले उससे उस स्थानमें रुधिरकी नदी बहने लगी ॥ (३६–३९)

उस नदीमें रुधिर जल,रथ भंवर,हाथी ग्राह, मनुष्य मछली, घोडे नक्र, और बाल सिवारसे दीखने लगे। मणियुक्त कटे हुए हाथ सांप, जांघ ग्राह, चर्बी कीचड, और शिर पत्थरसे दीखते थे। धनुष कांश, बाण घासके समान दीखने लगे। गिरे हुए गदा और परिघ दोनों तट, छत्र हंस, ध्वजा जन्तु, गिरी हुई पगडी फेनके समान होगई॥(४०-४२

हार पद्म, और धूल तरङ्गके समान उठने लगी। उस नदीको वीर लोग सुखमे पार होते थे, और डरपोक देखकर भागते थे। वह वीररूपी ग्राहोंसे भरी नदी उस युद्धसे बहकर यमलोकको चली। जैसे वैतरनीको देखकर पापी डरते है,ऐसे ही उस घोर नदीको देखकर कादर डरने लगे। जहां जहां महारथ

अद्य कर्णस्य चक्राङ्गाः क्रव्यादाश्च पृथग्विधाः ॥ ३७ ॥
शरैश्छिन्नानि गात्राणि विचरिष्यन्ति केशव ।
अद्य राधासुतस्याहं संग्रामे मधुसूदन ॥ ३८ ॥
शिरश्छेत्स्यामि कर्णस्य मिषतां सर्वधन्विनाम् ।
अद्य तीक्ष्णैर्विपाठैश्च क्षुरैश्च मधुसूदन ॥ ३९ ॥
रणे छेत्स्यामि गात्राणि राधेयस्य दुरात्मनः ।
अद्य राजा महत्कृच्छ्रं सन्त्यक्ष्यति युधिष्ठिरः ॥ ४० ॥
सन्तापं मानसं वीरश्चिरसम्भृतमात्मनः ।
अद्य केशव राधेयमहं हत्वा सबान्धवम् ॥ ४१ ॥
नन्दयिष्यामि राजानं धर्मपुत्रं युधिष्ठिरम् ।
अद्याहमनुगान्कृष्ण कर्णस्य कृपणान्युधि ॥ ४२ ॥
हन्ता ज्वलनसङ्काशैः शरैः सर्पविषोपमैः ।
अद्याहं हेमकवचैराबद्धमणिकुण्डलैः ॥ ४३ ॥
संस्तरिष्यामि गोविन्द वसुधां वसुधाधिपैः ।
अद्याभिमन्योः शत्रूणां सर्वेषां मधुसूदन ॥ ४४ ॥
प्रमथिष्यामि गात्राणि शिरांसि च शितैः शरैः ।
अद्य निर्धार्तराष्ट्रां च भ्रात्रे दास्यामि मेदिनीम् ॥४५॥

---

बन्धु बान्धव और सेवकोंके सहित राजा धृतराष्ट्र अपने राज्यसे भ्रष्ट होंगे। आज कर्णके मांसको गिद्ध, कौवे और शियार खांयगे। हे मधुसूदन! आज राधापुत्रके शरीरको कौवे खांयगे, और इधर उधर लेकर उडेंगे ॥ ( ३४–३८ )

आज तेज शिलापर घिसे हुए बाणो से सब धनुषधारियोंके देखते देखते हम कर्णका शिर काटेंगे ॥ आज मैं युद्धमें दुरात्मा राधापुत्रके शरीरको काटूंगा, आज महाराज युधिष्ठिर बहुत दुःखसे छूट जावेंगे ॥ हे केशव ! जब हम बान्धवोंके सहित कर्णको मारेंगे, तब महाराज युधिष्ठिर अपने हृदयके दुःखको अवश्य छोडेंगे ॥ आज हम कर्णको मारकर महाराज युधिष्ठिरको बहुत प्रसन्न करेंगे । (३९–४२)

आज मैं सुवर्णके कवच और मणिजटित कुण्डलधारी वीरोंको अग्निके समान प्रकाशमान अपने बाणोंसे मारकर पृथ्वी को पूरित कर दूंगा । हे मधुसुदन ! हे कृष्ण ! आज मैं अभिमन्युके सब शत्रुओंका शिर काटकर अपने भाई महाराज युधिष्ठिरको सब कौरवोंको मारकर पृथ्वी

चिच्छेद सप्तधा राजन्कृतहस्तो महाबलः ।
तस्मिन्निपतिते भूमौ भीमः क्रुद्धो विशाम्पते ॥ ५५ ॥
धनुश्चिच्छेद भल्लेन सौबलस्य हसन्निव ।
तदपास्य धनुश्छिन्नं सौबलेयः प्रतापवान् ॥ ५६ ॥
अन्यदादाय वेगेन धनुर्भल्लांश्च षोडश ।
तैस्तस्य तु महाराज भल्लैः सन्नतपर्वभिः ॥ ५७ ॥
द्वाभ्यां स सारथिं ह्यार्च्छद्भीमं सप्तभिरेव च ।
ध्वजमेकेन चिच्छेद द्वाभ्यां छत्रं विशाम्पते ॥ ५८ ॥
चतुर्भिश्चतुरो वाहान्विव्याध सुबलात्मजः ।
ततः क्रुद्धो महाराज भीमसेनः प्रतापवान् ॥ ५९ ॥
शक्तिं चिक्षेप समरे रुक्मदण्डामयस्मयीम् ।
सा भीमभुजनिर्मुक्ता नागजिह्वेव चञ्चला ॥ ६० ॥
निपपात रणे तूर्णं सौबलस्य महात्मनः ।
ततस्तामेव संगृह्य शक्तिं कनकभूषणाम् ॥ ६१ ॥
भीमसेनाय चिक्षेप क्रुद्धरूपो विशाम्पते ।
सा निर्भिद्य भुजं सव्यं पाण्डवस्य महात्मनः ॥ ६२ ॥
निपपात तदा भूमौ यथा विद्युन्नभश्च्युता ।
अथोत्क्रुष्टं महाराज धार्तराष्ट्रैः समन्ततः ॥ ६३ ॥

शत्रुनाशन शकुनिने शीघ्रतासे अपने बाणोंसे सात खण्ड करके गिरा दिया॥ हे राजन् ! उसके कटनेसे भीमसेनको महाक्रोध हुआ, फिर हंसकर एक बाणसे शकुनिका धनुष काट दिया। (५३–५६)

प्रतापी शकुनिने भी उस धनुषको फेंककर शीघ्रता सहित दूसरा धनुष लेकर सोलह बाण चलाये। उनमेंसे दो सारथीके, सात भीमसेनके, एक ध्वजामें, दो छत्रमें और चार चारों घोडोंको मारे, तब प्रतापी भीमसेनने महाक्रोध किया और एक घोर शक्ति शकुनिकी ओर चलायी। वह भीमसेनके हाथसे छूटकर सांपकी जीभके समान लहराती हुई शकुनिकी ओर चली। (५६–६१)

तब शकुनिने उस सुवर्णमयी शक्तिको हाथसे पकडकर क्रोध कर भीमसेनपर चलायी। वह महात्मा भीमसेनके बायें हाथको छेदकर आकाशसे गिरी हुई बिजलीके समान पृथ्वीमें गिर गई। उस समय आपकी सेना प्रसन्न होकर चारों ओरसे गर्जने लगी; परन्तु भीम-

को वाप्यन्यो मत्समोऽस्ति क्षमावांस्तथा क्रोधे सदृशोऽन्यो न मेऽस्ति ५४॥
अहं धनुष्मानसुरान्सुरांश्च सर्वाणि भूतानि च सङ्गतानि ।
स्वबाहुवीर्याद्गमये पराभवं मत्पौरुषं विद्धि परं परेभ्यः ॥ ५५ ॥
शरार्चिषा गाण्डिवेनाहमेकः सर्वान्कुरून्बाह्लिकांश्चाभिहत्य ।
हिमात्यये कक्षगतो यथाग्निस्तथा दहेयं सगणान्प्रसह्य ॥ ५६ ॥
पाणौ पृषत्का लिखिता ममैते धनुश्च दिव्यं विततं सबाणम् ।
पादौ च मे सरथौ सध्वजौ च न मादृशं युद्धगतं जयन्ति ॥ ५७ ॥
इत्येवमुक्त्वार्जुन एकवीरः क्षिप्रं रिपुघ्नः क्षतजोपमाक्षः ।
भीमं मुमुक्षुः समरे प्रयातः कर्णस्य कायाच्च शिरो जिहीर्षुः ॥ ५८ ॥ [३७८१]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां कर्णपर्वणि अर्जुनवाक्ये चतुःसप्ततितमोऽध्यायः॥७४॥

धृतराष्ट्र उवाच— समागमे पाण्डवसृञ्जयानां महाभये मामकानामगाधे ।
धनञ्जये तात रणाय याते कर्णेन तद्युद्धमथोऽत्र कीदृक् ॥ १ ॥
सञ्जय उवाच— तेषामनीकानि बृहद्ध्वजानि रणे समृद्धानि समागतानि ।
गर्जन्ति भेरीनिनदोन्मुखानि नादैर्यथा मेघगणास्तपान्ते ॥ २ ॥
महागजाभ्राकुलमस्त्रतोयं वादित्रनेमीतलशब्दवच्च ।
हिरण्यचित्रायुधविद्युतं च शरासिनाराचमहास्त्रधारम् ॥ ३ ॥

मेरे समान धनुर्वेदका जाननेवाला पराक्रमी क्रोधी, क्षमावान, और योद्धा जगत्में कोई नहीं है, मैं अपने बलसे धनुष धारण करके देवता और राक्षसोंके सहित सब जगत्को नाश कर सक्ता हूं। जैसे गर्मीके दिनोंमें अग्नि काष्ठको जलाती है, ऐसे ही मैं गाण्डीवसे छूटे बाणोंसे इस सब सेनाको नाश कर सक्ता हूं। मेरे हाथमें पैरोंमें अनेक उत्तम रेखा है। मेरे समान मनुष्योंको युद्धमें कोई नहीं जीत सक्ता ॥ ऐसे कहते कहते अर्जुनके नेत्र लाल होगये, तब वे भीमसेनको युद्धमे छुडानेके लिये और कर्णके शरीरसे कर्णका सिर काटनेको, गये ॥ ( ५४-५८ ) [ ३७८१ ]

कर्णपर्वमें चौहत्तर अध्याय समाप्त ।

कर्णपर्वमें पचत्तर अध्याय ।

धृतराष्ट्र बोले, हे तात सञ्जय ! इस कौरव और सृञ्जयोंके समागममें जिस समय हमारे पुत्रोंको घोर आपत्तिका समय आया और अर्जुन कर्णसे युद्ध करनेको चले तब आगे क्या हुआ? (१)

सञ्जय बोले, हे राजन् ! वह इकट्ठी हुई सेना उस समय अनेक ध्वजाओंसे शोभित थी, अनेक मेघोंके समान भेर और नगारे बज रहे थे, उस सेनामें हाथी

भयेन महताऽऽविष्टः पुत्रो दुर्योधनस्तव।
अपायाज्जवनैरश्वैः साक्षेपो मातुलं प्रति ॥ ७३ ॥
पराङ्मुखं तु राजानं दृष्ट्वा सैन्यानि भारत।
विप्रजग्मुः समुत्सृज्य द्वैरथानि समन्ततः ॥ ७४ ॥
तान्दृष्ट्वा विद्रुतान्सर्वान्धार्तराष्ट्रान्पराङ्मुखान्।
जवेनाभ्यापतद्भीमः किरन् शरशतान्बहून् ॥ ७५ ॥
ते वध्यमाना भीमेन धार्तराष्ट्राः पराङ्मुखाः।
कर्णमासाद्य समरे स्थिता राजन्समन्ततः ॥ ७६ ॥
स हि तेषां महावीर्यो द्वीपोऽभूत्सुमहाबलः।
भिन्ननौका यथा राजन्द्वीपमासाद्य निर्वृताः ॥ ७७ ॥
भवन्ति पुरुषव्याघ्र नाविकाः कालपर्यये।
तथा कर्णं समासाद्य तावकाः पुरुषर्षभ ॥ ७८ ॥
समाश्वस्ताः स्थिता राजन्संप्रहृष्टाः परस्परम्।
समाजग्मुश्च युद्धाय मृत्युं कृत्वा निवर्तनम् ॥७९॥ [३९१७]

इति श्रीमहाभारते० कर्णपर्वणि शकुनिपराजये सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

धृतराष्ट्र उवाच- ततो भग्नेषु सैन्येषु भीमसेनेन संयुगे।

समय तुम्हारी सेना डरके मारे इधर उधर भागने लगी ॥ (६९-७२)

तब तुम्हारे पुत्र दुर्योधन भी भयसे व्याकुल होकर शकुनि बचेंगे कि नहीं यह शोच करते हुए रथको दौडाकर युद्धसे भागे ॥ स्वयं राजाहीको युद्धसे भागते देख तुम्हारी सेनाके सब प्रधान वीर भागते लगे ॥ उन्हें भागते देख अनेक बाण छोडते हुए भीमसेन उनके पीछे दौडे ॥ (७३—७५)

हे राजन्! तब वे सब तुम्हारे पुत्र भीमसेनके बाणोंसे व्याकुल होकर कर्णके पास जाकर खडे हुए ॥ जैसे डूबते हुए मनुष्य द्वीप अर्थात् थाहमें पहुंचकर सुख पाते हैं, ऐसे ही वे सब योद्धा महावीर कर्णके पास जाकर सुखी हुए॥ हे पुरुषसिंह! जैसे डूबते हुओंको नाव मिलती है, ऐसेही तुम्हारे पुत्रोंको कर्ण मिल गये, वहां आकर सब सावधान हुए, और एक दूसरेसे कुशल पूछने लगे, थोडे समयके पश्चात् फिर युद्ध करनेको चले, और यह समझ लिया कि मृत्यु रोकनेसे नहीं रुकती है॥ (७६-७९)

कर्णपर्वमें सतत्तर अध्याय समाप्त ।[३९१७]

कर्णपर्वमें अठत्तर अध्याय।

धृतराष्ट्र बोले, हे सञ्जय! जब भीम

पञ्चालानामधिपो याज्ञसेनिः सेनापतिः कर्णमार्छत्ससैन्यम् ॥ ११॥
दुःशासनो भारत भारती च संशप्तकानां पृतना समृद्धा ।
भीमं रणे शस्त्रभृतां वरिष्ठं भीमं समार्छत्तमसह्यवेगम् ॥ १२ ॥
कर्णात्मजं तत्र जघान वीरस्तथाच्छिनच्चोत्तमौजाः प्रसह्य ।
तस्योत्तमाङ्गं निपपात भूमौ निनादयद्द्यां निनदेन खं च ॥ १३ ॥
सुषेणशीर्षं पतितं पृथिव्यां विलोक्य कर्णोऽथ तदार्तरूपः ।
क्रोधाद्धयांस्तस्य रथं ध्वजं च बाणैः सुधारैर्निशितैरकृन्तत् ॥ १४ ॥
स तूत्तमौजा निशितैः पृषत्कैर्विव्याध खड्गेन च भास्वरेण ।
पार्ष्णिग्रहांश्चैव कृपस्य हत्वा शिखण्डिवाहं स ततोऽध्यरोहत् ॥१५॥
कृपं तु दृष्ट्वा विरथं रथस्थो नैच्छच्छरैस्ताडयितुं शिखण्डी ।
तं द्रौणिरावार्य रथं कृपस्य समुज्जह्रे पङ्कगतां यथा गाम् ॥ १६ ॥
हिरण्यवर्मा निशितैः पृषत्कैस्तवात्मजानामनिलात्मजो वै ।
अतापयत्सैन्यमतीव भीमः काले शुचौ मध्यगतो यथार्कः ॥१७॥ ३७९८

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां कर्णपर्वणि सकुलद्वन्द्वयुद्धे पञ्चसप्ततितमोऽध्यायः ७५

महापराक्रमी विचित्र योद्धा माद्रीपुत्र नकुलने कृतवर्मकी ओर बाण चलाये, सेनापति पाञ्चालदेशके राजा धृष्टद्युम्न एकले ही सेनाके सहित कर्णसे युद्ध करने लगे॥ हे भारत! तुम्हारी संशप्तक सेनाके सहित बली दुःशासन शस्त्र जाननेवालोंमें श्रेष्ठ असह्य वेगवाले भीमसेनसे युद्ध करनेको उपस्थित हुए॥ उत्तमौजा क्रोध करके कर्णके पुत्रसे युद्ध करने लगे। अनन्तर एक बाणसे उसका शिर काटकर पृथ्वीमें गिरा दिया, वह शब्दसे आकाश और भूमिको पूरित करता हुआ पृथ्वीमें गिर पडा। ११-१३

उस अपने पुत्रका शिर कटा देख कर्ण रोने लगे और क्रोध करके उत्तमौजाके रथ, घोडे, ध्वजाको काट दिया॥ तब महापराक्रमी उत्तमौजा भी कर्णके बाणोंसे व्याकुल होकर खड्ग लेकर रथसे उतरे और कृपाचार्यके रथके पहियोंकी रक्षा करनेवालोंको मारकर शिखण्डीके रथपर चढ गये॥ शिखण्डीने कृपाचार्यके रथको काट दिया, परन्तु विरथ कृपाचार्यको फिर मारना धर्म न समझा तब अश्वत्थामाने कृपाचार्यको अपने रथपर चढाकर इस प्रकार बचाया जैसे कीचडमें फंसी गायको कोई बचावें॥ जैसे गर्मीके समयमें दो पहरका सूर्य प्रजाको तपाता है ऐसे ही सुवर्ण कवचधारी भीमसेन अपने बाणोंसे दुःशासनकी सेनाको दुःख देने

द्राव्यमाणं बलं दृष्ट्वा भीमसेनेन धीमता।
यन्तारमब्रवीत्कर्णः पञ्चालानेव मां वह ॥ ९ ॥
मद्रराजस्ततः शल्यः श्वेतानश्वान्महाजवान्।
प्राहिणोच्चेदिपञ्चालान्करूषांश्च महाबलः ॥ १० ॥
प्रविश्य च महत्सैन्यं शल्यः परबलार्दनः।
न्ययच्छत्तुरगान्हृष्टो यत्र यत्रैच्छदग्रणीः ॥ ११ ॥
तं रथं मेघसंकाशं वैयाघ्रपरिवारणम्।
संदृश्य पाण्डुपञ्चालास्त्रस्ता ह्यासन्विशाम्पते ॥ १२ ॥
ततो रथस्य निनदः प्रादुरासीन्महारणे।
पर्जन्यसमनिर्घोषः पर्वतस्येव दीर्यतः ॥ १३ ॥
ततः शरशतैस्तीक्ष्णैः कर्ण आकर्णनिःसृतैः।
जघान पाण्डवबलं शतशोऽथ सहस्रशः ॥ १४ ॥
तत्तथा समरे कर्म कुर्वाणमपराजितम्।
परिवव्रुर्महेष्वासाः पाण्डवानां महारथाः ॥ १५ ॥
तं शिखण्डी च भीमश्च धृष्टद्युम्नश्च पार्षतः।
नकुलः सहदेवश्च द्रौपदेयाश्च सात्यकिः ॥ १६ ॥
परिवव्रुर्जिघांसन्तो राधेयं शरवृष्टिभिः।
सात्यकिस्तु तदा कर्णं विंशत्या निशितैः शरैः ॥१७॥

के बलसे अपनी सेनाको व्याकुल देख कर्ण पाञ्चाल सेनाकी ओर चले। (७-९)

महाबलवान् मद्रराज शल्यने कर्णके वचन सुन अत्यन्त शीघ्र चलनेवाले, सफेद घोडोंको चेदि, पाञ्चाल और करुष देशीय सेनाकी ओर हांका, वहां जाकर मद्रराजने कर्णकी इच्छानुसार घोडोंको हांका। उस सिंहके चमडेसे मढे हुए और मेघके समान शब्दवाले रथको देखकर पाञ्चाल और पाण्डवोंकी सेना डरने लगी ॥ (१०-१२)

हे पृथ्वीनाथ! उस समय युद्धभूमिमें उस रथका ऐसा शब्द हुआ जैसे मेघ गर्जता है, अथवा पर्वत फटता है॥ कर्णने अपने कान तक खींचकर पाण्डवोंके सहस्रों योद्धाओंको मारडाला, इस प्रकार अपनी सेनाका नाश होते देख पाण्डवोंके प्रधान महारथ विजयी कर्णसे युद्ध करनेको चले। शिखण्डी, भीमसेन, धृष्टद्युम्न, नकुल, सहदेव, द्रौपदीके पुत्र और सात्यकि ये सब इकट्ठे होकर कर्णके ऊपर बाण वर्षाने लगे।(१३-१७)

पञ्चालानामधिपो याज्ञसेनिः सेनापतिः कर्णमाछेत्ससैन्यम् ॥११॥
दुःशासनो भारत भारती च संशप्तकानां पृतना समृद्धा ।
भीमं रणे शस्त्रभृतां वरिष्ठं भीमं समाछेत्तमसह्यवेगम् ॥ १२ ॥
कर्णात्मजं तत्र जघान वीरस्तथाच्छिनच्चोत्तमौजाः प्रसह्य ।
तस्योत्तमाङ्गं निपपात भूमौ निनादयद्गां निनदेन खं च ॥ १३ ॥
सुषेणशीर्षं पतितं पृथिव्यां विलोक्य कर्णोऽथ तदार्तरूपः ।
क्रोधाद्धयांस्तस्य रथं ध्वजं च बाणैः सुधारैर्निशितैरकृन्तत्॥ १४ ॥
स तूत्तमौजा निशितैः पृषत्कैर्विव्याध खड्गेन च भास्वरेण ।
पार्ष्णिग्रहांश्चैव कृपस्य हत्वा शिखण्डिवाहं स ततोऽध्यरोहत् ॥१५॥
कृपं तु दृष्ट्वा विरथं रथस्थो नैच्छच्छरैस्ताडयितुं शिखण्डी ।
तं द्रौणिरावार्य रथं कृपस्य समुज्जहे पङ्कगतां यथा गाम् ॥ १६ ॥
हिरण्यवर्मा निशितैः पृषत्कैस्तवात्मजानामनिलात्मजो वै ।
अतापयत्सैन्यमतीव भीमः काले शुचौ मध्यगतो यथार्कः ॥१७॥३७९८

इति श्रीमहाभारते शतसाहस्र्या संहितायां वैयासिक्यां कर्णपर्वणि सकुलद्वन्द्वयुद्धे पञ्चसप्ततितमोऽध्यायः ७५

महापराक्रमी विचित्र योद्धा माद्रीपुत्र नकुलने कृतवर्माकी ओर बाण चलाये, सेनापति पाञ्चालदेशके राजा धृष्टद्युम्न एकले ही सेनाके सहित कर्णसे युद्ध करने लगे ॥ हे भारत ! तुम्हारी संशप्तक सेनाके सहित बली दुःशासन शस्त्र जाननेवालोंमें श्रेष्ठ असह्य वेगवाले भीमसेनसे युद्ध करनेको उपस्थित हुए ॥ उत्तमौजा क्रोध करके कर्णके पुत्रसे युद्ध करने लगे । अनन्तर एक बाणसे उसका शिर काटकर पृथ्वीमें गिरा दिया, वह शब्दसे आकाश और भूमिको पूरित करता हुआ पृथ्वीमें गिर पडा । ११-१३

उस अपने पुत्रका शिर कटा देख कर्ण रोने लगे और क्रोध करके उत्तमौजाके रथ, घोडे, ध्वजाको काट दिया॥ तब महापराक्रमी उत्तमौजा भी कर्णके बाणोंसे व्याकुल होकर खड्ग लेकर रथसे उतरे और कृपाचार्यके रथके पहियोंकी रक्षा करनेवालोंको मारकर शिखण्डीके रथपर चढ गये ॥ शिखण्डीने कृपाचार्यके रथको काट दिया, परन्तु विरथ कृपाचार्यको फिर मारना धर्म न समझा तब अश्वत्थामाने कृपाचार्य को अपने रथपर चढाकर इस प्रकार बचाया जैसे कीचडमें फंसी गायको कोई बचावें ॥ जैसे गर्मीके समयमें दो पहरका सूर्य प्रजाको तपाता है ऐसे ही सुवर्ण कवचधारी भीमसेन अपने बाणोंसे दुःशासनकी सेनाको दुःख देने

ते वध्यमानाः समरे चेदिमत्स्या विशाम्पते।
कर्णमेकमभिद्रुत्य शरसङ्घैः समार्पयन् ॥ २७ ॥
तान्जघान शितैर्बाणैः सूतपुत्रो महारथः।
ते वध्यमानाः समरे चेदिमत्स्या विशाम्पते ॥ २८ ॥
प्राद्रवन्त रणे भीताः सिंहत्रस्ता मृगा इव।
एतदत्यद्भुतं कर्म दृष्टवानस्मि भारत ॥ २९ ॥
यदेकः समरे शूरान्सूतपुत्रः प्रतापवान्।
यतमानान्परं शक्त्या योधयानांश्च धन्विनः ॥ ३० ॥
पाण्डवेयान्महाराज शरैर्वारितवान्रणे।
तत्र भारत कर्णस्य लाघवेन महात्मनः ॥ ३१ ॥
तुतुषुर्देवताः सर्वाः सिद्धाश्च सह चारणैः।
अपूजयन्महेष्वासा धार्तराष्ट्रा नरोत्तमम् ॥ ३२ ॥
कर्णं रथवरश्रेष्ठं श्रेष्ठं सर्वधनुष्मताम्।
ततः कर्णो महाराज ददाह रिपुवाहिनीम् ॥ ३३ ॥
कक्षमिद्धो यथा वह्निर्निदाघे ज्वलितो महान्।
ते वध्यमानाः कर्णेन पाण्डवेयास्ततस्ततः ॥ ३४ ॥
प्राद्रवन्त रणे भीताः कर्णं दृष्ट्वा महारथम्।
तत्राक्रन्दो महानासीत्पञ्चालानां महारणे ॥ ३५ ॥

मारने लगे। सब वीर कर्णके बाणोंसे व्याकुल होकर उनकी ओर सहस्रों बाण चलाने लगे॥ सूतपुत्र कर्ण भी उन्हें अपने तेज बाणोंसे मारने लगे। उनके बाणोंसे व्याकुल होकर वे सब कर्णसे डरकर इस प्रकार भागे, जैसे सिंहसे डरकर हरिन भागते हैं। (२६-२९)

उस समय हमने यह आश्चर्य देखा कि अकेले प्रतापी सूतपुत्र कर्ण अत्यन्त यत्न करते हुए अनेक धनुपधारियोंसे युद्ध करते रहे। हे महाराज! हे भारत! अकेले कर्णने पाण्डवोंके अनेक वीरोंको अपने बाणोंसे निवारण कर दिया, महात्मा कर्णकी शीघ्रतासे देवता और सिद्ध बहुत प्रसन्न हुए। तुम्हारे पुत्रोंने भी पुरुष श्रेष्ठ कर्णका बहुत सत्कार किया॥ (३०—३३)

शत्रुओंकी सेनाको नाश करते हुए धनुपधारियोंमें श्रेष्ठ महारथ कर्ण अत्यन्त शोभित हुए, जैसे आग काठको जलाती है ऐसे कर्णने पाण्डवोंकी सेनाको जला दिया, इनके बाणोंसे व्याकुल होकर

ततोऽभियाते तव सैन्ये स भीमः प्रादुश्चक्रे वेगमनन्तवेगः ॥ ७ ॥
यथान्तकाले क्षपयन्दिधक्षुर्भूतान्तकृत्काल इवात्तदण्डः ।
तस्यातिवेगस्य रणेऽतिवेगं नाशक्नुवन्वारयितुं त्वदीयाः ॥ ८ ॥
व्यात्ताननस्यापततो यथैव कालस्य काले हरतः प्रजा वै ।
ततो बलं भारत भारतानां प्रदह्यमानं समरे महात्मना ॥ ९ ॥
भीतं दिशोऽकीर्यत भीमनुन्नं महानिलेनाभ्रगणा यथैव ।
ततो धीमान्सारथिमब्रवीद्बली स भीमसेनः पुनरेव हृष्टः ॥ १० ॥
सूताभिजानीहि स्वकान्परान्वा रथान्ध्वजांश्चापततः समेतान् ।
युद्धयन्ह्यहं नाभिजानामि किञ्चिन्मा सैन्यं स्वं छादयिष्ये पृषत्कैः ॥११॥
अरीन्विशोकाभिनिरीक्ष्य सर्वतो रथो ध्वजाग्राणि धुनोति मे भृशम् ।
राजातुरो नागमयत्किरीटी बहूनि दुःखान्यभियातोऽस्मि सूत ॥ १२ ॥
एतद् दुःखं सारथे धर्मराजो यन्मां हित्वा यातवाञ्शत्रुमध्ये ।

जैसे फूलयुक्त वृक्षपर अनेक पक्षी दौडते है । ऐसे ही तुम्हारी सेनाके वीर भीमसेनकी ओर दौडे । तब भीमसेनने अपने घोर पराक्रमको प्रगट किया ॥ (४-७)

जैसे प्रलयकालमें दण्ड धारण करके यमराज प्रजाको नाश करनेके लिये दौडते हैं, ऐसे ही भीमसेन तुम्हारी सेनाका नाश करने लगे । उस समय महा पराक्रमी भीमसेनके वेगको कोई भी योद्धा न सह सका ॥ हे भारत ! जैसे प्रलयकालमें कोई नाश करते मुख बाये यमराजको नहीं देख सक्ता, ऐसे ही कोई योद्धा भीमसेनकी ओर न देख सका । इस प्रकारसे सेनाका नाश करते देख तुम्हारी सेना चारों ओरको इस प्रकार भागने लगी जैसे वायुके लगनेसे मेघ । (७-१०)

तब महा बुद्धिमान् भीमसेनसे प्रसन्न होकर अपने सारथीसे कहा, हे सूत ! हम इस समय युद्ध कर रहे हैं । इसलिये हमें अपनी और कौरवोंकी सेना नहीं दिखाई देती है । परन्तु तुम सबकी ध्वजाओंको पहचानते हो, इसलिये तुम ऐसी युक्ति करना जिससे हम अपनी सेनाको बाणोंसे न मार सके ॥ हे सूत! इस समय हमारे सब शत्रु प्रसन्न हो रहे हैं । और हमें यह जान पडता है कि महाराज बहुत पीडित हैं । क्यों कि अर्जुन उन्हें देखकर अभीतक नहीं लौटे इसीसे हमारा हृदय इस समय दुःखसे व्याकुल हो रहा है ॥(१०-१२)

हमें यह विचार कर बहुत दुःख होता है, कि धर्मराज हमें युद्धमें अकेला छोडकर चले गये, न जाने वे सब

विषमं च समं चैव हतैरश्वपदातिभिः ॥ ४४ ॥
रथैश्च कुञ्जरैश्चैव न प्राज्ञायत किञ्चन।
नापि स्वे न परे योधाः प्राज्ञायन्त परस्परम् ॥ ४५ ॥
घोरे शरान्धकारे तु कर्णास्त्रे च विजृंभिते।
राधेयचापनिर्मुक्तैः शरैः काञ्चनभूषणैः ॥ ४६ ॥
संछादिता महाराज पाण्डवानां महारथाः।
ते पाण्डवेयाः समरे राधेयेन पुनः पुनः ॥ ४७ ॥
अभज्यन्त महाराज यतमाना महारथाः।
मृगसंघान्यथा क्रुद्धः सिंहो द्रावयते वने ॥ ४८ ॥
पञ्चालानां रथश्रेष्ठान्द्रावयञ्शात्रवांस्तथा।
कर्णस्तु समरे योधांस्त्रासयन्सुमहायशाः ॥ ४९ ॥
कालयामास तत्सैन्यं यथा पशुगणान्वृकः।
दृष्ट्वा तु पाण्डवीं सेनां धार्तराष्ट्राः पराङ्मुखीम् ॥ ५० ॥
तत्राजग्मुर्महेष्वासा रुवन्तो भैरवान्रवान्।
दुर्योधनो हि राजेन्द्र मुदा परमया युतः ॥ ५१ ॥
वादयामास संहृष्टो नानावाद्यानि सर्वशः।
पञ्चालाऽपि महेष्वासा भग्नास्तत्र नरोत्तमाः ॥ ५२ ॥

गये। उस समय अनेक हाथी, घोडे और पैदलोंके मरनेसे पृथ्वीमें मांस और रुधिरकी कीचड होगयी। किसीको वहां जानेकी शक्ति नहीं रही और पृथ्वी ऊंची नीचि होगयी। कटे हुए हाथी और रथोंसे इधर कुछ नहीं जाना जाता था, कोई योद्धा अपने और परायेको नहीं पहचानता था॥ (४१-४५)

राधापुत्रके छूटे हुए बाणोंसे चारों ओर अन्धकार होरहा था, हे महाराज! राधापुत्रने बार बार अपने बाणोंसे समर भूमिमें पराक्रमी पाण्डवोंके महारथोंको व्याकुल कर दिया, तब वे सब युद्ध छोड कर ऐसे भागे, जैसे वनमें सिंहको देख मृग भागते हैं। महायशस्वी कर्णने पाञ्चाल आदि महारथोंको डराकर भगा दिया, जैसे भेडियेको देख बकरी भागती है, ऐसे ही पाण्डवोंकी सेना कर्णको देख भागी। (४६-५०)

पाण्डवोंकी सेनाको भागते देख तुम्हारे पुत्र दुर्योधन अपने धनुषधारी भाइयोंके सहित बहुत प्रसन्न होते हुए कर्णके पास गर्जते हुए आये और अनेक प्रकारके बाजे बजानेको आज्ञा दी। तब

सर्वानेकस्तानहं पातयिष्ये ते वा सर्वे भीमसेनं तुदन्तु ॥ २१ ॥
आशास्तारः कर्म चाप्युत्तमं ये तन्मे देवाः केवलं साधयन्तु ।
आयात्विहाद्यार्जुनः शत्रुघाती शक्रस्तूर्णं यज्ञ इवोपहूतः ॥ २२ ॥
ईक्षस्वैतां भारतीं दीर्यमाणामेते कस्माद्विद्रवन्ते नरेन्द्राः ।
व्यक्तं धीमान्सव्यसाची नराग्र्यः सैन्यं ह्येतच्छादयत्याशु बाणैः ॥२३॥
पश्य ध्वजांश्च द्रवतो विशोक नागान्हयान्पत्तिसङ्घांश्च सङ्ख्ये ।
रथान्विकीर्णाञ्शरशक्तिताडितान्पश्यस्वैतान्रथिनश्चैव सूत ॥ २४ ॥
आपूर्यते कौरवी चाप्यभीक्ष्णं सेना ह्यसौ सुभृशं हन्यमाना ।
धनञ्जयस्याशनितुल्यवेगैर्ग्रस्ता शरैः काञ्चनबर्हिजालैः ॥ २५ ॥
एते द्रवन्ति स्म रथाश्वनागाः पदातिसङ्घानतिमर्दयन्तः ।
समुह्यमानाः कौरवाः सर्व एव द्रवन्ति नागा इव दाहभीताः ॥२६॥
हाहाकृताश्चैव रणे विशोक मुञ्चन्ति नादान्विपुलान्गजेन्द्राः ॥ २७ ॥
विशोक उवाच-किं भीम नैनं त्वमिहाश्रृणोषि विस्फारितं गाण्डिवस्यातिघोरम्।
क्रुद्धेन पार्थेन विकृष्यतोऽद्य कच्चिन्नेमौ तव कर्णौ विनष्टौ ॥ २८ ॥
सर्वे कामाः पाण्डव ते समृद्धाः कपिर्ह्यसौ दृश्यते हस्तिसैन्ये ।

गिरावे, आजसे यह कीर्त्ति सदाके लिये स्थिर हुई इस समय मेरी यही आशा है। सब देवता इसको पूर्ण करें। (१९-२२)

जैसे यज्ञमें इन्द्र जाते हैं, तैसे ही इस समय शत्रुनाशन अर्जुन यहां पहुंच जायं। इधर देखो ये कौरवोंकी सेनाके प्रधान राजा क्यों भागे जाते हैं। निश्चय अर्जुन आगये, और इसी सेनाको अपने बाणोंसे छा रहे हैं॥ हे विशोक! ये देखो राजाओंके ध्वज भागते हुए दीखते हैं। ये हाथी, घोडे भगे चले आते हैं। ये अनेक बाण शक्ति और तोमरोंसे व्याकुल अनेक वीर, इधर उधरको भाग रहे हैं॥ (२२-२४)

अब तुम खडे होकर अर्जुनकी ध्वजा देखो, ये अर्जुनके सुवर्ण पङ्खवाले, वज्र तुल्य बाणोंसे पीडित कौरवोंकी सेना इधरको भागी जाती है, जैसे वनमें आग लगनेसे हाथी भागते हैं तैसे हाथी, घोडे, रथ और पदाति अपनी सेनाको मारते हुए भागे जाते हैं। हे विशोक! ये देखो अनेक हाथी हाहाकार करते हुए इधर उधरको भाग रहे हैं॥(२५-२७)

विशोक बोला, हे भीमसेन! क्या तुम्हारे कान फूट गये? तुम क्रोध भरे अर्जुनके हाथसे खिचते हुए गाण्डीवका घोर शब्द नहीं सुनते? हे पाण्डव! अब आपके सब काम सिद्ध होगये, ये

कर्णपुत्रौ तु राजेन्द्र भ्रातरौ सत्यविक्रमौ ।
निजघ्नाते बलं क्रुद्धौ पाण्डवानामितस्ततः ॥ ६२ ॥
तत्र युद्धं महच्चासीत्क्रूरं विशसनं महत् ।
तथैव पाण्डवाः शूरा धृष्टद्युम्नशिखण्डिनौ ॥ ६३ ॥
द्रौपदेयाश्च संक्रुद्धा अभ्यघ्नंस्तावकं बलम् ।
एवमेष क्षयो वृत्तः पाण्डवानां ततस्ततः ॥
तावकानामपि रणे भीमं प्राप्य महाबलम् ॥ ६४ ॥ [३९८१]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां कर्णपर्वणि
सकुलयुद्धे अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

सञ्जय उवाच— अर्जुनस्तु महाराज हत्वा सैन्यं चतुर्विधम् ।
सूतपुत्रं च संक्रुद्धं दृष्ट्वा चैव महारणे ॥ १ ॥
शोणितोदां महीं कृत्वा मांसमज्जास्थिपंकिलाम् ।
मनुष्यशीर्षपाषाणां हस्त्यश्वकृतरोधसम् ॥ २ ॥
शूरास्थिचयसंकीर्णां काकगृध्रानुनादिताम् ।
छत्रहंसप्लवोपेतां वीरवृक्षापहारिणीम् ॥ ३ ॥
हारपद्माकरवतीमुष्णीषवरफेनिलाम् ।

भी पाण्डवोंके सहस्रों वीरोंको मारने लगे ॥ (५९-६१)

कर्णके दोनों महारथ पुत्र भी पाण्डवोंकी सेनाका नाश करने लगे । इसी प्रकार पाण्डवोंकी ओरसे वीर धृष्टद्युम्न, शिखण्डी, द्रौपदीके पांचों पुत्र क्रोध करके तुम्हारी सेनाका नाश करने लगे। इस प्रकार यह घोर युद्ध प्रलय कालके समान हुआ । तुम्हारी सेना भी महा पराक्रमी भीमसेनसे घोर युद्ध करने लगी ॥ ( ६२-६४ ) [ ३९८१ ]

कर्णपर्वमें अठत्तर अध्याय समाप्त ।

कर्णपर्वमें उनासी अध्याय ।

सञ्जय बोले, हे राजन् ! अर्जुनने भी चतुरङ्गिणी सेनाका नाश करके और कर्णको क्रोधमें भरा देखकर मांस, चर्बी हड्डी और रुधिरकी कीचड करके पत्थरोंके ढेरके समान मनुष्योंके शिर काट कर, रुधिरकी नदी बहा कर, मरे हुए हाथियोंके तट बनाकर रुधिरकी नदी वहा दी । (१-२)

इस नदीमें चारों ओर शूर वीरोंकी हड्डी और काकगिद्ध आदिकोंके शब्द सुननेमें आने लगे । कटे हुए छत्र हंसोंके समान दीखने लगे । मरे वीर टूटे वृक्षोंके समान वहने लगे । हार, पद्म, पगडी,

रथान्हयान्पत्तिगणांश्च सायकैर्विदारितान्पश्य पतन्त्यमी यथा ।
तवानुजेनासरराजतेजसा महावनानीव सुपर्णवायुना ॥ ३७ ॥
चतुःशतान्पश्य रथानिमान्हतान्सवाजिसूतान्समरे किरीटिना ।
महेषुभिः सप्तशतानि दन्तिनां पदातिसादींश्च रथाननेकशः ॥ ३८ ॥
अय समभ्येति तवान्तिकं बली निघ्नन्कुरूंश्चित्र इव ग्रहोऽर्जुनः ।
समृद्धकामोऽसि हतास्तवाहिता बलं तवायुश्च चिराय वर्धताम् ॥ ३९ ॥
भीमसेन उवाच- ददानि ते ग्रामवरांश्चतुर्दश प्रियाख्याने सारथे सुप्रसन्नः ।
दासीशतं चापि रथांश्च विंशतिं यदर्जुनं वेदयसे विशोक ॥ ४० ॥ ३८३८

इति श्रीमहाभारते० संहितायां वैयासिक्यां कर्णपर्वणि भीमसेनविशोकसंवादे षट्सप्ततितमोऽध्यायः ॥७६॥

सञ्जय उवाच— श्रुत्वा तु रथनिर्घोषं सिंहनादं च संयुगे ।
अर्जुनः प्राह गोविन्दं शीघ्रं नोदय वाजिनः ॥ १ ॥
अर्जुनस्य वचः श्रुत्वा गोविन्दोऽर्जुनमब्रवीत् ।
एष गच्छामि सुक्षिप्रं यत्र भीमो व्यवस्थितः ॥ २ ॥
तं यान्तमश्वैर्हिमशङ्खवर्णैः सुवर्णमुक्तामणिजालनद्धैः ।
जम्भं जिघांसुं प्रगृहीतवज्रं जयाय देवेन्द्रमिवोग्रमन्युम् ॥ ३ ॥

सफेद मेघके समान रङ्गवाले, घोडोंके रथ पर बैठे हुए इधर ही को चले आते है, जैसे गरुडके पङ्खका वायु लगनेसे वनके वृक्ष गिरते है,ऐसे ही इन्द्रके समान तेजस्वी अर्जुनके बाणोंसे ये हाथी, घोडे और पदाति गिर रहे है ॥ (३४-३७)

अर्जुनने अपने बाणोंसे इतने ही समयमें घोडे और सारथियों समेत चार सौ रथ, सातसौ हाथी और अनेक घोडे और पदाति मारडाले,अब ये बलवान् अर्जुन हमारे पास चले आते है। ईश्वर करें आपकी अवस्थाकी और बलकी वृद्धि हो। अब शत्रुओंका नाश होगा ॥(३८-३९)

भीमसेन बोले, हे विशोक ! तुमने जो हमें अर्जुनको दिखाया इससे हम प्रसन्न होकर तुम्हें चौदह बडे बडे गांव, सौ दासी और बीस रथ, देते हैं ॥ ( ४० ) [ ३८३८ ]

कर्णपर्वमें छिहत्तर अध्याय समाप्त ।

कर्णपर्वमें सतत्तर अध्याय ।

सञ्जय बोले, हे राजन् ! भीमसेनका सिंहनाद और रथका शब्द सुनकर अर्जुन श्रीकृष्णसे बोले, कि रथ शीघ्रही हांको अर्जुनके वचन सुन श्रीकृष्ण बोले, अब हम भीमसेनके पास शीघ्र ही जाते है ॥ (१—२)

अनन्तर सोनेकी मणि और मोतियोंसे भूषित शङ्खके समान घोडोंको

राधेयो ह्यन्यथा पार्थान्सृंजयांश्च महारथान् ।
निःशेषान्समरे कुर्यात्पश्यतां नो जनार्दन ॥ १३ ॥
ततः प्रायाद्रथेनाशु केशवस्तव वाहिनीम् ।
कर्णं प्रति महेष्वासं द्वैरथे सव्यसाचिना ॥ १४ ॥
प्रयातश्च महाबाहुः पाण्डवानुज्ञया हरिः ।
आश्वासयन्रथेनैव पाण्डुसैन्यानि सर्वशः ॥ १५ ॥
रथघोषः स संग्रामे पाण्डवेयस्य सम्बभौ ।
वासवाशनितुल्यस्य मेघौघस्येव मारिष ॥ १६ ॥
महता रथघोषेण पाण्डवः सत्यविक्रमः ।
अभ्ययादप्रमेयात्मा निर्जयंस्तव वाहिनीम् ॥ १७ ॥
तमायान्तं समीक्ष्यैव श्वेताश्वं कृष्णसारथिम् ।
मद्रराजोऽब्रवीत्कर्णं केतुं दृष्ट्वा महात्मनः ॥ १८ ॥
अयं स रथ आयाति श्वेताश्वः कृष्णसारथिः ।
निघ्नन्नमित्रान्समरे यं कर्ण परिपृच्छसि ॥ १९ ॥
एष तिष्ठति कौन्तेयः संस्पृशन्गाण्डिवं धनुः ।
तं हनिष्यसि चेदद्य तन्नः श्रेयो भविष्यति ॥ २० ॥
धनुर्ज्याचन्द्रताराङ्का पताका किङ्किणीयुता ।

मेरी सम्मतिमें रथ इसीकी ओर हांकिये। हे कृष्ण! आप ऐसा उपाय कीजिये जिसमें कर्ण हमारे देखते देखते सोमक और पाञ्चालोंका नाश न कर सके ॥ (११–१३)

अर्जुनके ऐसे वचन सुन श्रीकृष्णने कर्णसे युद्ध करनेको शीघ्रतासे रथ हांका। श्रीकृष्ण अर्जुनकी सम्मतिसे अपनी सेनाको प्रसन्न करते हुए कर्णसे युद्ध करनेको चले, उस समय अर्जुनके रथका शब्द ऐसा हुआ जैसा विजली सहित बादलका। महापराक्रमी अर्जुन अपने रथका शब्द करते हुए, और तुम्हारी सेनाको जीतते हुए कर्णसे युद्ध करनेको चले ॥ (१४–१७)

उस समय श्रीकृष्ण सारथी और सफेद घोडोंसे युक्त अर्जुनकी ध्वजाको देख मद्रराज शल्य कर्णसे बोले, हे कर्ण! जिसको तुम पूछते थे, यह सफेद घोडे और कृष्ण सारथी सहित शत्रुओंका नाश करते हुए उसी अर्जुनका रथ चला आता है, वे देखो रथके भीतर गाण्डीव धनुष धारण किये अर्जुन बैठे हैं। तुम उनको आज युद्धमें मारो तो हमारा सबका कल्याण होगा॥ १८-२०

गजाश्वसादिबहुलाः पाण्डवं समुपाद्रवन् ॥ ११ ॥
तेषामापततां पार्थमारावः सुमहानभूत् ।
सागरस्येव क्षुब्धस्य यथा स्यात्सलिलस्वनः ॥ १२ ॥
ते तु तं पुरुषव्याघ्रं व्याघ्रा इव महारथाः ।
अभ्यद्रवन्त संग्रामे त्यक्त्वा प्राणकृतं भयम् ॥ १३ ॥
तेषामापततां तत्र शरवर्षाणि मुञ्चताम् ।
अर्जुनो व्यधमत्सैन्यं महावातो घनानिव ॥ १४ ॥
तेऽर्जुनं सहिता भूत्वा रथवंशैः प्रहारिणः ।
अभियाय महेष्वासा विव्यधुर्निशितैः शरैः ॥ १५ ॥
ततोऽर्जुनः सहस्राणि रथवारणवाजिनाम् ।
प्रेषयामास विशिखैर्यमस्य सदनं प्रति ॥ १६ ॥
ते वध्यमानाः समरे पार्थचापच्युतैः शरैः ।
तत्र तत्र स्म लीयन्ते भये जाते महारथाः ॥ १७ ॥
तेषां चतुःशतान्वीरान्यतमानान्महारथान् ।
अर्जुनो निशितैर्बाणैरनयद्यमसादनम् ॥ १८ ॥
ते वध्यमानाः समरे नानालिङ्गैः शितैः शरैः ।
अर्जुनं समभित्यज्य दुद्रुवुर्वै दिशो दश ॥ १९ ॥
तेषां शब्दो महानासीद् द्रवतां वाहिनीमुखे ।

हे राजन् ! तुम्हारी ओरसे भी अनेक योद्धा हाथी, घोडे, रथ और पदातियोंके सहित अर्जुनसे युद्ध करनेको चले ॥ जैसे चढते हुए समुद्रका शब्द होता है, ऐसे ही इस तुम्हारी सेनाका घोर शब्द हुआ ॥ (१०—१२)

तुम्हारी सेनाके वीर मरनेका भय छोडकर अर्जुनकी ओर इस प्रकार दौडे, जैसे सिंह सिंहपर दौडे ॥ जैसे आंधी मेघोंको व्याकुल कर देती है, ऐसे ही उन शस्त्र चलाती सेनाको अर्जुनने अपने बाणोंसे व्याकुल कर दिया ॥ अनन्तर सब वीर इकट्ठे हो रथोंपर बैठकर अर्जुनसे युद्ध करनेको आये, तब अर्जुनने अपने बाणोंसे सहस्रों हाथी, घोडे और मनुष्योंको मार डाला ॥ (१३—१६)

अर्जुनके बाणोंसे व्याकुल होकर वे सब वीर अपने अपने स्थानोंपर मूर्च्छित होने लगे । अर्जुनने उस समय अत्यन्त यत्न करते हुए चार सौ वीरोंको मार डाला। अनन्तर अर्जुनके उन महा घोर बाणोंसे व्याकुल होकर वे सब वीर इधर उधरको

व्याकुलीकृतमत्यर्थं परसैन्यं किरीटिना।
नानामृगसहस्राणां यूथं केसरिणा यथा ॥ ३० ॥
त्वामभिप्रेप्सुरायाति कर्ण निघ्नन्वरान्रथान्।
असह्यमानो राधेय तं याहि प्रति भारत ॥ ३१ ॥
एषा विदीर्यते सेना धार्तराष्ट्री समन्ततः।
अर्जुनस्य भयात्तूर्णं निघ्नतः शात्रवान्बहून् ॥ ३२ ॥
वर्जयन्सर्वसैन्यानि त्वरते हि धनञ्जयः।
त्वदर्थमिति मन्येऽहं यथास्योदीर्यते वपुः ॥ ३३ ॥
न ह्यवस्थास्यते पार्थो युयुत्सुः केन चित्सह।
त्वामृते क्रोधदीप्तो हि पीड्यमाने वृकोदरे ॥ ३४ ॥
विरथं धर्मराजं तु दृष्ट्वा सुदृढविक्षतम्।
शिखण्डिनं सात्यकिं च धृष्टद्युम्नं च पार्षतम् ॥ ३५ ॥
द्रौपदेयान्युधामन्युमुत्तमौजसमेव च।
नकुलं सहदेवं च भ्रातरौ द्वौ समीक्ष्य च ॥ ३६ ॥
सहसैकरथः पार्थस्त्वामभ्येति परन्तपः।
क्रोधरक्तेक्षणः क्रुद्धो जिघांसुः सर्वपार्थिवान् ॥ ३७ ॥

पुण्य नाश होनेपर देवता गिरते हैं, ऐसे ही इन रथोंसे वीर गिर रहे हैं॥ जैसे सिंहको देख सहस्रों हरिण व्याकुल होजाते हैं। ऐसे ही इस समय अर्जुनके बाणोंसे तुम्हारी सेना व्याकुल होरही है॥ (२८–३०)

हे राधापुत्र! ये प्रधान वीरोंको नाश करते अर्जुन तुम्हींसे युद्ध करनेको चले आते है। इनके वेगको और कोई नहीं सह सक्ता। इस लिये तुम ही इनसे युद्ध करनेको चले आते हो, ये देखो अर्जुनके बाणोंसे व्याकुल होकर धृतराष्ट्रकी सेना भागी जाती है॥ ये महातेजस्वी अर्जुन सब सेनाको छोडकर केवल तुम्हारी ही ओर चले आते हैं॥ (३१–३३)

इस समय भीमसेनको व्याकुल देख अर्जुनको बहुत क्रोध हुआ है, इससे हमें निश्चय होता है कि ये तुम्हारे सिवाय किसीसे नहीं लडेंगे॥ आज महाराज धर्मराजको रथहीन और घावोंसे बहुत व्याकुल देखकर, शिखण्डी धृष्टद्युम्न, सात्यकि, द्रौपदीके पुत्र युधामन्यु, उत्तमौजा, नकुल सहदेव दोनों भाई इन सबको व्याकुल देखकर ये क्रोधसे नेत्र लाल किये, सब राजोंको मारनेकी

तथार्दितान्भीमबलान्भीमसेनेन भारत ।
दृष्ट्वा दुर्योधनो राजा इदं वचनमब्रवीत् ॥ २९ ॥
सैनिकांश्च महेष्वासान्योधांश्च भरतर्षभ ।
समादिशन्रणे सर्वान्हत भीममिति स ह ॥ ३० ॥
तस्मिन्हते हतं मन्ये पाण्डुसैन्यमशेषतः ।
प्रतिगृह्य च तामाज्ञां तव पुत्रस्य पार्थिवाः ॥ ३१ ॥
भीमं प्रच्छादयामासुः शरवर्षैः समन्ततः ।
गजाश्च बहुला राजन्नराश्च जयगृद्धिनः ॥ ३२ ॥
रथे स्थिताश्च राजेन्द्र परिवव्रुर्वृकोदरम् ।
स तैः परिवृतः शूरैः शूरो राजन्समन्ततः ॥ ३३ ॥
शुशुभे भरतश्रेष्ठो नक्षत्रैरिव चन्द्रमाः ।
परिवेषी यथा सोमः परिपूर्णो विराजते ॥ ३४ ॥
स रराज तथा संख्ये दर्शनीयो नरोत्तमः ।
निर्विशेषो महाराज यथा हि विजयस्तथा ॥ ३५ ॥
तस्य ते पार्थिवाः सर्वे शरवृष्टिं समासृजन् ।
क्रोधरक्तेक्षणाः शूरा हन्तुकामा वृकोदरम् ॥ ३६ ॥
तां विदार्य महासेनां शरैः सन्नतपर्वभिः ।

प्रजा घबराती है, ऐसे ही इस समय भीमसेनका रूप देखकर तुम्हारी सेनाके वीर डरने लगे । अपने महाबलवान वीरोंको भीमसेनके बलसे व्याकुल देखकर राजा दुर्योधन ऐसे वचन बोले.तुम सब साधारण और प्रधान योद्धा भीमसेनको मारो, इसके मारे जानेसे पाण्डवोंकी सब सेना आपसे आप मर जायगी । (२७-३१)

तुम्हारे पुत्रकी ऐसी आज्ञा सुन सब राजोंने भीमसेनको बाणोंमे छा दिया, अनेक पैदल और हाथियोंपर चढे वीर भी भीमसेनकी ओर दौडे । अनेक रथपर चढे योद्धा भी भीमसेन से युद्ध करने लगे । वीर भीमसेन इन सब वीरोंसे घिरकर इस प्रकार शोभित हुए, जैसे परिवेप युक्त पूर्ण चन्द्रमा नक्षत्रोंके सहित होवे । उस समय पुरुषश्रेष्ठ भीमसेन साक्षात् अर्जुनके समान दीखने लगे ॥ (३१-३५)

वे सब राजा भी क्रोधसे लालनेत्र करके भीमसेनको मारनेके लिये अनेक प्रकारके बाण वर्षाने लगे ॥ जैसे मछली जालसे निकल जलमें घूमने लगती है,

भयहा यो भवेद्वीरस्त्वामृते सूतनन्दन।
एते त्वां कुरवः सर्वे द्वीपमासाद्य संयुगे ॥ ४५ ॥
धिष्ठिताः पुरुषव्याघ्र त्वत्तः शरणकांक्षिणः।
वैदेहाम्बष्ठकाम्बोजास्तथा नग्नजितस्त्वया ॥ ४६ ॥
गान्धाराश्च यथा धृत्या जिताः संख्ये सुदुर्जयाः।
तां धृतिं कुरु राधेय ततः प्रत्येहि पाण्डवम् ॥ ४७ ॥
वासुदेवं च वार्ष्णेयं प्रीयमाणं किरीटिना।
प्रत्युद्याहि महाबाहो पौरुषे महति स्थितः ॥ ४८ ॥

कर्ण उवाच— प्रकृतिस्थोऽसि मे शल्य इदानीं संमतस्तथा।
प्रतिभासि महाबाहो मा भैषीस्त्वं धनञ्जयात् ॥ ४९ ॥
पश्य बाह्वोर्बलं मेऽद्य शिक्षितस्य च पश्य मे।
एकोऽद्य निहनिष्यामि पाण्डवानां महाचमूम् ॥ ५० ॥
कृष्णौ च पुरुषव्याघ्र ततः सत्यं ब्रवीमि ते।
नाहत्वा युधि तौ वीरौ व्यपयास्ये कथञ्चन ॥ ५१ ॥
शिश्ये वा निहतस्ताभ्यामनित्यो हि रणे जयः।
कृतार्थोऽद्य भविष्यामि हत्वा वाप्यथवा हतः ॥ ५२ ॥

शल्य उवाच— अजय्यमेनं प्रवदन्ति युद्धे महारथाः कर्ण रथप्रवीरम्।
एकाकिनं किमुकृष्णाभिगुप्तं विजेतुमेनं क इहोत्सहेत ॥ ५३ ॥

---

समर्थ नहीं। हे पुरुषसिंह ! विदेह, अंबष्ठ, काम्बोज, मगध और गान्धार देशके सब क्षत्रियोंको जिस बलसे तुमने जीता था, आज उसी बलसे अर्जुनके सङ्गमें युद्ध करो। हे महाबाहु ! परम साहससे अर्जुनके मित्र कृष्णसे युद्ध करनेके चलो ॥ (४४—४८)

कर्ण बोले, हे महाबाहो शल्य ! मै इस समय अत्यन्त सावधान हूं, इसलिये तुम अर्जुनसे कुछ मत डरो, अब तुम हमारे बाहु और शिक्षाका बल देखो आज मैं अकेला ही पाण्डवोंकी सब सेनाका नाश करूंगा॥ हे पुरुषसिंह ! आज मै प्रतिज्ञा करता हूं कि विना कृष्ण और अर्जुनके मारे युद्धसे नहीं लौटूंगा, अथवा वे ही मुझे मार डालेंगे, क्योंकि युद्धमें जय और पराजयका कुछ निश्चय नहीं रहता। जो हो दोनों ही प्रकारसे मेरा कल्याण है ॥ (४९-५२)

शल्य बोले, हे कर्ण ! सब महारथ अकेले अर्जुनहीको अजेय अर्थात् अजीत कहते है और इस समय तो साक्षात्

यतो यतः पाण्डवेयः प्रविष्टो रथसत्तमः ।
ततस्ततोऽपातयत योधाञ्शतसहस्रशः ॥ ४६ ॥
एवं दृष्ट्वा कृतं कर्म भीमसेनेन संयुगे ।
दुर्योधनो महाराज शकुनिं वाक्यमब्रवीत् ॥ ४७ ॥
जहि मातुल संग्रामे भीमसेनं महाबलम् ।
अस्मिञ्जिते जितं मन्ये पाण्डवेयं महाबलम् ॥ ४८ ॥
ततः प्रायान्महाराज सौबलेयः प्रतापवान् ।
रणाय महते युक्तो भ्रातृभिः परिवारितः ॥ ४९ ॥
स समासाद्य संग्रामे भीमं भीमपराक्रमम् ।
वारयामास तं वीरो वेलेव मकरालयम् ॥ ५० ॥
स न्यवर्तत तं भीमो वार्यमाणः शितैः शरैः ।
शकुनिस्तस्य राजेन्द्र वामपार्श्वे स्तनान्तरे ॥ ५१ ॥
प्रेषयामास नाराचान्रुक्मपुङ्खाञ्शिलाशितान् ।
वर्म भित्त्वा तु ते घोराः पाण्डवस्य महात्मनः ॥ ५२ ॥
न्यमज्जन्त महाराज कङ्कबर्हिणवाससः ।
सोऽतिविद्धो रणे भीमः शरं रुक्मविभूषितम् ॥ ५३ ॥
प्रेषयामास स रुषा सौबलं प्रति भारत ।
तमायान्तं शरं घोरं शकुनिः शत्रुतापनः ॥ ५४ ॥

भीमसेन जाते थे, वहीं सैकडों और सहस्रों वीरोंका नाश करते थे ॥ ४३-४६

दुर्योधन इस भीमसेनके घोर कर्मको देख शकुनिसे बोले, हे मामा ! इस महाबलवान भीमसेनको युद्धमें जीतो इसके जीतनेमे पाण्डवोंकी सब सेना हार जायगी ।। तब महापराक्रमी सुबल पुत्र शकुनि अपने भाइयोंके सहित भीमसेनमे घोर युद्ध करनेको चले ॥ जैसे पर्वतमें लगनेमे समुद्रका वेग कम होजाता है ऐसे ही शकुनिके आनेसे भीमसेनका वेग कम होगया ॥ तब भीमसेनने भी क्रोध करके शकुनिसे युद्ध करनेकी इच्छा की । (४७-५१)

उस समय शकुनिने भीमके बाएं हाथ की सन्धिमें सोनेके पङ्खवाले अनेक बाण मारे । वे बाण महात्मा भीमसेनके कवचको काटकर शरीरमें घुस गये। (५१-५२)

उन सोने और पक्षियोंके पङ्खोंसे युक्त बाणोंके लगनेसे भीमसेनने क्रोध करके एक सोनेके पङ्खवाला तेजबाण शकुनिकी ओर चलाया, उसे आता देख

महादेवं तोषयामास योऽस्त्रैः साक्षात्सुयुद्धेन महानुभावः।
लेभे ततः पाशुपतं सुघोरं त्रैलोक्यसंहारकरं महास्त्रम् ॥ ६१ ॥
पृथक्पृथग्लोकपालाः समेता ददुर्महास्त्राण्यप्रमेयाणि सङ्ख्ये।
यैस्ताञ्जघानाशु रणे नृसिंहः स कालकेयानसुरान्समेतान्॥ ६२ ॥
तथा विराटस्य पुरे समेतान्सर्वानस्मानेकरथेन जित्वा।
जहार तद्गोधनमाजिमध्ये वस्त्राणि चादत्त महारथेभ्यः ॥ ६३ ॥
तमीदृशं वीर्यगुणोपपन्नं कृष्णद्वितीयं परमं नृपाणाम्।
तमाह्वयन्साहसमुत्तमं वै जाने स्वयं सर्वलोकस्य शल्य ॥ ६४ ॥
अनन्तवीर्येण च केशवेन नारायणेनाप्रतिमेन गुप्तः।
वर्षायुतैर्यस्य गुणा न शक्या वक्तुं समेतैरपि सर्वलोकैः ॥ ६५ ॥
महात्मनः शङ्खचक्रासिपाणेर्विष्णोर्जिष्णोर्वसुदेवात्मजस्य।
भयं न मे जायते साध्वसं च दृष्ट्वा कृष्णावेकरथे समेतौ ॥ ६६ ॥
अतीव पार्थो युधि कार्मुकिभ्यो नारायणश्चाप्रति चक्रयुद्धे।
एवंविधौ पाण्डववासुदेवौ चलेत्स्वदेशाद्धिमवान्न कृष्णौ ॥ ६७ ॥

अर्जुनके सङ्ग कौन युद्ध कर सक्ता है ? (५७-६०)

जिस महानुभावने अपने बाणोंसे महादेवको युद्धमें प्रसन्न किया था, जिनको शिवने प्रसन्न होकर तीन लोकको नाश करनेमें समर्थ महा घोर पाशुपत अस्त्र दिया ॥ जिनको सब लोकपालोंने अलग अलग महा घोर शस्त्र दिये हैं। जिन्होंने उन्हीं शस्त्रोंसे समस्त कालकेय दानवोंका नाश किया। जिस एकलेने हम सबको विराट नगरमें जीत कर गौ छीन ली थीं और सब महारथोंके वस्त्र उतार लिये थे ॥ (६१-६३)

हे शल्य ! आज हम उस ही वीर सब गुणोंसे भरे सब क्षत्रियोंमें श्रेष्ठ अर्जुनसे साहसके समेत पुकार कर युद्ध करेंगे ॥ सो अर्जुन आज पराक्रमी सब लोकोंके स्वामी साक्षात् नारायण श्रीकृष्णसे रक्षित हैं। अब उनके गुण तीनों लोक इकट्ठे होकर दस सहस्र वर्ष तक कहैं, तो भी पार नहीं पासक्ते ॥ हे शल्य ! शङ्ख, चक्र और गदाधारी जगत्को जीतनेवाले महात्मा वसुदेव पुत्र श्रीकृष्ण और अर्जुनको एक रथ पर बैठा देख मैं भयसे नहीं कांपता हूं ॥ (६४—६६)

हमें निश्चय है, कि अर्जुन महा धनुषधारी और कृष्ण चक्र युद्धमें अद्वितीय है, चाहे हिमाचल अपने स्थानसे चल जाय परन्तु ये दोनों युद्धमें नहीं

न तु तं ममृषे भीमः सिंहनादं तरस्विनाम् ।
अन्यद्गृह्य धनुः सज्यं त्वरमाणो महाबलः ॥ ६४ ॥
मुहूर्तादिव राजेन्द्र च्छादयामास सायकैः ।
सौबलस्य बलं संख्ये त्यक्त्वाऽऽत्मानं महाबलः ॥६५॥
तस्याश्वांश्चतुरो हत्वा सूतं चैव विशाम्पते ।
ध्वजं चिच्छेद भल्लेन त्वरमाणः पराक्रमी ॥ ६६ ॥
हताश्वं रथमुत्सृज्य त्वरमाणो नरोत्तमः ।
तस्थौ विस्फारयंश्चापं क्रोधरक्तेक्षणः श्वसन् ॥ ६७ ॥
शरैश्च बहुधा राजन्भीममार्छत्समन्ततः ।
प्रतिहत्य तु वेगेन भीमसेनः प्रतापवान् ॥ ६८ ॥
धनुश्चिच्छेद संक्रुद्धो विव्याध च शितैः शरैः ।
सोऽतिविद्धो बलवता शत्रुणा शत्रुकर्शनः ॥ ६९ ॥
निपपात तदा भूमौ किंचित्प्राणो नराधिपः ।
ततस्तं विह्वलं ज्ञात्वा पुत्रस्तव विशाम्पते ॥ ७० ॥
अपोवाह रथेनाजौ भीमसेनस्य पश्यतः ।
रथस्थे तु नरव्याघ्रे धार्तराष्ट्राः पराङ्मुखाः ॥ ७१ ॥
प्रदुद्रुवुर्दिशो भीता भीमाज्जाते महाभये ।
सौबले निर्जिते राजन्भीमसेनेन धन्विना ॥ ७२ ॥

सेनने उस गर्जनेको क्षमा नहीं किया और शीघ्रतासे फिर धनुष लेकर मृत्युके भयको छोड कर शकुनिकी सब सेनाको क्षण मात्रमें वाणोंसे छा दिया ॥(६१-६५)

अनन्तर बहुत शीघ्रता सहित शकुनिके घोडे और सारथीको मारके ध्वजा काट दी, तब शकुनि क्रोधसे सांस लेते उस रथसे उतरे और लाल नेत्र करके धनुषको टङ्कारने लगे और वहींसे भीमसेनकी ओर अनेक वाण चलाने लगे। परन्तु प्रतापी भीमसेनने इनके सब शस्त्रोंको काट दिया, और एक वाणसे उसका धनुष काटकर उनके शरीरमें अनेक वाण मारे। (६६-६९)

शत्रुनाशन शकुनि बलवान् शत्रुके वाणोंसे पीडित होकर मूर्च्छित हो पृथ्वीमें गिर पडे। हे पृथ्वीनाथ! इन्हें व्याकुल देख तुम्हारे पुत्रने अपने रथपर चढा कर भीमसेनके आगेसे भगा दिया, उस समय अकेले भीमसेनने सब सेनाको जीत लिया, जिस समय शकुनि भीमसेनके वाणोंसे व्याकुल हुए, उस

धनञ्जयास्त्रैस्तु शरैर्विदारिता हता निपेतुर्नरवाजिकुञ्जराः ॥ ७५ ॥
शरार्चिषं गाण्डिवचारुमण्डलं युगान्तसूर्यप्रतिमानतेजसम् ।
न कौरवाः शेकुरुदीक्षितुं जयं यथा रविं व्याधितचक्षुषो जनाः ॥ ७६ ॥
शरोत्तमान्संप्रहितान्महारथैश्चिच्छेद पार्थः प्रहसञ्छरौघैः ।
भूयश्च तानहनद्बाणसङ्घान्गाण्डीवधन्वायतपूर्णमण्डलम् ॥ ७७ ॥
यथोग्ररश्मिः शुचिशुक्रमध्यगः सुखं विवस्वान् हरते जलौघान् ।
तथाऽर्जुनो बाणगणान्निरस्य ददाह सेनां तव पार्थिवेन्द्र ॥ ७८ ॥
तमभ्यधावद्विसृजन्कृपः शरांस्तथैव भोजस्तव चात्मजः स्वयम् ।
महारथो द्रोणसुतस्य सायकैरवाकिरंस्तोयधरा यथाचलम् ॥ ७९ ॥
जिघांसुभिस्तान् कुशलः शरोत्तमान् महाहवे सम्प्रहितान्प्रयत्नतः ।
शरैः प्रचिच्छेद स पाण्डवस्त्वरन् पराभिनद्वक्षसि चेषुभिस्त्रिभिः ८०॥
स गाण्डिवव्यायतपूर्णमण्डलस्तपन् रिपूनर्जुनभास्करो बभौ ।
शरोग्ररश्मिः शुचिशुक्रमध्यगो यथैव सूर्यः परिवेषवांस्तथा ॥ ८१ ॥
अथाग्र्यबाणैर्दशभिर्धनञ्जयं पराभिनद् द्रोणसुतोऽच्युतं त्रिभिः ।
चतुर्भिरश्वांश्चतुरः कपिं ततः शरैश्च नाराचवरैरवाकिरत् ॥ ८२ ॥

है, किस समय चढाते हैं, किस समय छोडते हैं, सो कोई नहीं देख सक्ते थे, केवल मरते हुए मनुष्य हाथी और घोडे दीखते थे, जैसे रोग युक्त नेत्रवाले, मनुष्य सूर्यकी ओर नहीं देख सक्ते, वैसे ही बाण किरण और धनुष मण्डलवाले, अर्जुनको कोई शत्रु नहीं देख सक्ता था ॥ ( ७३—७६ )

हे राजेन्द्र उस समय अर्जुनने हंसते हंसते शत्रुओंके अच्छे बाणोंको काट कर शत्रुओंके ऊपर सैकडों बाण चलाये ॥ जैसे जेठ वैशाखका सूर्य अपनी किरणोंसे जगत्के जलको खींचता है ऐसे ही अर्जुन अपने बाणोंसे तुम्हारी सेनाके प्राण लेने लगे ॥ जैसे पर्वतके ऊपर मेघ जल वर्षाते हैं, ऐसे ही कृपाचार्य, अश्वत्थामा, महारथ कृतवर्मा और स्वतः राजा दुर्योधन अर्जुनके ऊपर बाण वर्षाने लगे ॥ ( ७७-७९ )

अर्जुनने उनके बाण काट कर सबके हृदयमें तीन तीन बाण मारे जैसे जेठ वैशाखका सूर्य जगत्को तपाता है, ऐसे ही बाण किरण और धनुष मण्डलवाले, अर्जुनरूपी सूर्य तुम्हारी सेनाको तपाने लगे ॥ ( ८०-८१ )

तब अश्वत्थामाने दस बाण अर्जुनके, तीन श्रीकृष्णके और एक एक चारों घोडोंको मारकर अर्जुनकी ध्वजामें

दुर्योधनोऽब्रवीत्किं नु सौबलो वाऽपि सञ्जय ॥ १ ॥
कर्णो वा जयतां श्रेष्ठो योधा वा मामका युधि ।
कृपो वा कृतवर्मा वा द्रौणिर्दुःशासनोऽपि वा ॥ २ ॥
अत्यद्भुतमहं मन्ये पाण्डवेयस्य विक्रमम् ।
यदेकः समरे सर्वान्योधयामास मामकान् ॥ ३ ॥
यथाप्रतिज्ञं योधानां राधेयः कृतवानपि ।
कुरूणामथ सर्वेषां कर्णः शत्रुनिषूदनः ॥ ४ ॥
शर्म वर्म प्रतिष्ठा च जीविताशा च सञ्जय ।
तत्प्रभग्नं बलं दृष्ट्वा कौन्तेयेनामितौजसा ॥ ५ ॥
राधेयो वाप्याधिरथिः कर्णः किमकरोद्युधि ।
पुत्रा वा मम दुर्धर्षा राजानो वा महारथाः ॥
एतन्मे सर्वमाचक्ष्व कुशलो ह्यसि सञ्जय ॥ ६ ॥

सञ्जय उवाच— अपराह्णे महाराज सूतपुत्रः प्रतापवान् ।
जघान सोमकान्सर्वान्भीमसेनस्य पश्यतः ॥ ७ ॥
भीमोऽप्यतिबलं सैन्यं धार्तराष्ट्रं व्यपोथयत् ।
अथ कर्णोऽब्रवीच्छल्यं पञ्चालान्प्रापयस्व माम् ॥ ८ ॥

सेनके डरसे हमारी सेना भागी तब दुर्योधन और शकुनिने क्या किया ? विजय करनेवालोंमें श्रेष्ठ कर्ण, कृपाचार्य, अश्वत्थामा, कृतवर्मा, और दुःशासन आदि हमारे वीरोंने क्या किया ? हमें भीमसेनका यह पराक्रम सुनकर बहुत ही आश्चर्य होता है, कि वह अकेला ही हमारी सब सेनासे युद्ध करता रहा ॥ (१–३)

अकेले राधापुत्र शत्रुनाशन कर्णने भी अपनी प्रतिज्ञाके अनुसार शत्रुओंका नाश किया ॥ उस समय हमारी सेनाकी रक्षा और कल्याणका भार कर्णही पर था । उन्होंने कुन्तीपुत्रका ऐसा घोर पराक्रम देख क्या किया ? अथवा हमारे महापराक्रमी पुत्र और महारथ राजोंने क्या किया ? सो तुम हमसे कहो, क्यों कि यह सब विषय तुम्हारा जाना है ॥ (३–६)

सञ्जय बोले, हे महाराज ! जिस समय भीमसेनके देखते कर्णने सोमकवंशका नाश किया । उस समय दिनके दो भाग बीत गये थे, भीमसेनने भी अपने बलसे तुम्हारी सेनाका नाश किया तब कर्णने शल्यसे कहा, कि हमारा रथ पाञ्चाल सेनामें ले चलो । भीमसेन

ततः प्रकीर्णं सुमहद्बलं तव प्रदारितं सेतुरिवाम्भसा यथा ॥९० ॥
ततोऽर्जुनस्याशु रथेन केशवश्चकार शत्रूनपसव्यमातुरान् ।
ततः प्रयातं त्वरितं धनञ्जयं शतक्रतुं वृत्रनिजघ्नुषं यथा ॥ ९१ ॥
समन्वधावन्पुनरुत्थितैर्ध्वजै रथैः सुयुक्तैरपरे युयुत्सवः ।
अथाभिसृत्य प्रतिवार्य तानरीन्धनञ्जयस्याभिमुखं महारथाः ॥ ९२ ॥
शिखण्डिशैनेययमाः शितैः शरैर्विदारयन्तो व्यनदन्सुभैरवम् ।
ततोऽभिजघ्नुः कुपिताः परस्परं शरैस्तदाञ्जोगतिभिः सुतेजनैः॥ ९३ ॥
कुरुप्रवीराः सह सृञ्जयैर्यथासुराः पुरा देवगणैस्तथाहवे ।
जयेप्सवः स्वर्गमनाय चोत्सुकाः पतन्ति नागाश्वरथाः परन्तप ॥९४॥
जगर्जुरुच्चैर्बलवच्च विव्यधुः शरैः सुमुक्तैरितरेतरं पृथक् ।
शरान्धकारे तु महात्मभिः कृते महामृधे योधवरैः परस्परम् ॥
चतुर्दिशो वै विदिशश्च पार्थिव प्रभा च सूर्यस्य तमोवृताभवत् ॥९५॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां कर्णपर्वणि
सङ्कुलयुद्धे ऊनाशीतितमोऽध्यायः ॥ ७९ ॥ [ ४०७६ ]

बांध टूटनेसे पानी चारों ओर फैल जाता है, इसी प्रकार इन वीरोंके व्याकुल होनेसे तुम्हारी सेना इधर उधर भागने लगी ॥ ( ८९-९० )

तब कृष्णने बहुत शीघ्रतासे अर्जुन के रथको सब शत्रुओंकी दहिनी ओर पहुंचा दिया। जैसे इन्द्र वृत्रासुरके मारनेको चले थे, वैसे ही अर्जुन भी कर्णको मारने चले, तब अनेक महारथ ध्वजा उडाते हुए उत्तम घोडोंके रथोंपर चढकर अर्जुनसे युद्ध करनेको आये परन्तु अर्जुनने अपने बाणोंसे सबको रोक दिया ॥ ( ९१-९२ )

उधर शिखण्डी, धृष्टद्युम्न, सात्यकि और नकुल सहदेव गर्ज गर्ज कर अपने तेज बाणोंसे तुम्हारी सेनाको नाश करने लगे ॥ हे शत्रुनाशन! जैसे देवता और दानवोंका युद्ध हुआ था, इसी प्रकार यह कौरव पाण्डवोंका युद्ध हुआ। सब वीर अपनी अपनी विजयकी इच्छासे युद्ध करने लगे। अनेक योद्धा, हाथी और रथोंसे गिरकर स्वर्गको चले गये॥ अनेक योद्धा परस्पर गर्ज कर तेज बाण चलाने लगे। उस समय युद्धभूमिमें बाणोंका अन्धकार होगया। हे पृथ्वी नाथ! चारों दिशा कोने और सूर्य भी बाणोंमे छिप कर अन्धकार हो गया ॥ ( ९३-९५ ) [४०७६]

कर्णपर्वमें उनासी अध्याय समाप्त।

अताडयद्रणे शूरो जत्रुदेशे नरोत्तमः ।
शिखण्डी पञ्चविंशत्या धृष्टद्युम्नश्च सप्तभिः ॥ १८ ॥
द्रौपदेयाश्चतुःषष्ट्या सहदेवश्च सप्तभिः ।
नकुलश्च शतेनाजौ कर्णं विव्याध सायकैः ॥ १९ ॥
भीमसेनस्तु राधेयं नवत्या नतपर्वणाम् ।
विव्याध समरे क्रुद्धो जत्रुदेशे महाबलः ॥ २० ॥
अथ प्रहस्याधिरथिर्व्याक्षिपद्धनुरुत्तमम् ।
मुमोच निशितान्बाणान्पीडयन्सुमहाबलः ॥ २१ ॥
तान्प्रत्यविध्यद्राधेयः पञ्चभिः पञ्चभिः शरैः ।
सात्यकेस्तु धनुश्छित्त्वा ध्वजं च भरतर्षभ ॥ २२ ॥
तं तथा नवभिर्बाणैराजघान स्तनान्तरे ।
भीमसेनं ततः क्रुद्धो विव्याध त्रिंशता शरैः ॥ २३ ॥
सहदेवस्य भल्लेन ध्वजं चिच्छेद मारिष ।
सारथिं च त्रिभिर्बाणैराजघान परन्तपः ॥ २४ ॥
विरथान्द्रौपदेयांश्च चकार भरतर्षभ ।
अक्ष्णोर्निमेषमात्रेण तदद्भुतमिवाभवत् ॥ २५ ॥
विमुखीकृत्य तान्सर्वान्शरैः सन्नतपर्वभिः ।
पञ्चालानहनच्छूरांश्चेदीनां च महारथान् ॥ २६ ॥

सात्यकिने वीस तीक्ष्ण बाण कर्णके कण्ठमें मारे, वीर शिखण्डीने पचीस, धृष्टद्युम्नने सात, द्रौपदीके पुत्रोंने चौंसठ, सहदेवने सात और नकुलने सौ तेजबाण कर्णके शरीरमें मारे, उसी समय महा पराक्रमी भीमसेनने क्रोध करके कर्णके कण्ठमें नव्वे तेज बाण मारे ॥ १७-२०

तब महापराक्रमी कर्णने क्रोध करके अपना उत्तम धनुष घुमाया और अनेक तीक्ष्ण बाण छोडे ॥ हे भरत कुलसिंह ! कर्णने सब वीरोंके शरीरमें पांच पांच बाण मारे, सात्यकिका धनुष और ध्वजा काट दी, और नौ बाण सात्यकिके हृदयमें मारे, फिर क्रोध करके भीमसेनकी ओर वीस बाण चलाये, एक बाणसे सहदेवकी ध्वजा काट दी और तीन बाण उनके सारथीको मारे और द्रौपदीके पुत्रोंके रथ काट दिये । कर्णके क्षण भरमें ये कर्म देखकर सब वीर आश्चर्य करने लगे ॥ (२१—२५)

इन सबको इस प्रकार विमुख करके चेदी और पाञ्चाल देशीय महारथोंको

सुवर्णवर्णसन्नाहैर्योधैः कनकभूषणैः ।
आस्थिताः क्लृप्तवर्माणो भद्रा नित्यमदा द्विपाः ॥१०॥
क्रुद्धाः क्रूरैर्महामात्रैः पार्ष्ण्यङ्गुष्ठप्रचोदिताः ।
चतुःशताः शरवरैर्हताः पेतुः किरीटिना ॥ ११ ॥
पर्यस्तानीव शृङ्गाणि समृद्धानि महागिरेः ।
धनञ्जयशराभ्यस्तैः स्तीर्णा भूर्वरवारणैः ॥ १२ ॥
समन्ताज्जलदप्रख्यान्वारणान्मदवर्षिणः ।
अभिपेदेऽर्जुनरथो घनान्भिन्दन्निवांशुमान् ॥ १३ ॥
हतैर्गजमनुष्याश्वैर्भिन्नैश्च बहुधा रथैः ।
विशस्त्रयन्त्रकवचैर्युद्धशौण्डैर्गतासुभिः ॥ १४ ॥
अपविद्धायुधैर्मार्गः स्तीर्णोऽभूत्फाल्गुनेन वै ।
व्यस्फारयच्च गाण्डीवं सुमहद्भैरवारवम् ॥ १५ ॥
घोरवज्रविनिष्पेषं स्तनयित्नुरिवाम्बरे ।
ततः प्रादीर्यत चमूर्धनञ्जयशराहता ॥ १६ ॥
महावातसमाविद्धा महानौरिव सागरे ।
नानारूपाः प्राणहराः शरा गाण्डीवचोदिताः ॥१७॥
अलातोल्काशनिप्रख्यास्तव सैन्यं विनिर्दहन् ।

बिना सारथी पृथ्वीमें गिर गये। कहीं मतवाले हाथी सोनेके कवचवाले वीरोंके सहित मरकर गिर गये॥ इस प्रकार अंकुश और क्रोधी महावतों सहित चार सौ हाथी कटकर पृथ्वीमें गिर गये। वह पृथ्वी गिरे हाथियोंसे इस प्रकार शोभित हुई जैसे पर्वतोंके शिखर गिरनेसे ॥ (८-१२)

जैसे सूर्य मेघोंको काटकर निकलता है, ऐसे ही अर्जुन मतवाले हाथियोंको काट कर सेनासे बाहर निकले। उस भूमिमें अनेक हाथी, घोडे, रथ और महा योद्धा मनुष्य शस्त्र रहित होकर और मरकर गिर गये। गाण्डीव धनुष पर घोर टङ्कार देते हुए अर्जुनने गिरे हुए शस्त्रोंसे मार्गको पूरित कर दिया। जैसे बिजली और वज्रका शब्द आकाशमें होता है ऐसे ही अर्जुनके धनुषका शब्द होने लगा। तब वह सेना बाणोंसे व्याकुल होकर इधर उधरको भागने लगी ॥ (१३-१६)

जैसे समुद्रमें कोई नाव वायुसे व्याकुल होजाती है, ऐसेही गाण्डीवसे छूटे अनेक प्रकारके प्राणहारक बाणोंसे वह

वध्यतां सायकैस्तीक्ष्णैः कर्णचापवरच्युतैः ।
तेन शब्देन वित्रस्ता पाण्डवानां महाचमूः ॥ ३६ ॥
कर्णमेकं रणे योधं मेनिरे तत्र शात्रवाः ।
तत्राद्भुतं पुनश्चक्रे राधेयः शत्रुकर्शनः ॥ ३७ ॥
यदेनं पाण्डवाः सर्वे न शेकुरभिवीक्षितुम् ।
यथौघः पर्वतश्रेष्ठमासाद्याभिप्रदीर्यते ॥ ३८ ॥
तथा तत्पाण्डवं सैन्यं कर्णमासाद्य दीर्यते ।
कर्णोऽपि समरे राजन्विधूमोऽग्निरिव ज्वलन् ॥ ३९ ॥
दहंस्तथौ महाबाहुः पाण्डवानां महाचमूम् ।
शिरांसि च महाराज कर्णाश्चैव सकुण्डलान् ॥ ४० ॥
बाहूंश्च वीरो वीराणां चिच्छेद लघु चेषुभिः ।
हस्तिदन्तत्सरून्खड्गान्ध्वजाञ्शक्तीर्हयान्गजान् ॥४१॥
रथांश्च विविधान्राजन्पताका व्यजनानि च ।
अक्षं च युगयोक्त्राणि चक्राणि विविधानि च ॥ ४२ ॥
चिच्छेद बहुधा कर्णो योधव्रतमनुष्ठितः ।
तत्र भारत कर्णेन निहतैर्गजवाजिभिः ॥ ४३ ॥
अगम्यरूपा पृथिवी मांसशोणितकर्दमा ।

पाण्डवोंकी सेना रणसे इधर उधर भागने लगी, उस समय भागती पाञ्चाल सेनाका घोर शब्द होने लगा, कर्णके धनुषका शब्द सुनकर पाण्डवोंकी सेना डरसे व्याकुल होगयी, सबने जान लिया कि कर्णके समान कोई योद्धा नहीं है । (३३-३७)

तब शत्रुनाशन कर्णने फिर विचित्र कर्म करना आरम्भ किया, जैसे पानी पर्वतमें लगनेसे इधर उधरको फैल जाता है, ऐसे ही पाण्डवोंकी सेना कर्णको देखकर इधर उधर भागी । कोई पाण्डवोंका वीर उस समय कर्णकी ओर देख न सका । हे राजन् ! उस समय कर्णका रूप ऐसा हुआ जैसे धुंआ रहित जलती अग्नि । (३७-३९)

महाबाहु कर्णने अपने बाणोंसे वीरोंके शिर, कुण्डल सहित कान और अनेक वीरोंके हाथ काट दिये । हाथी दांतके मूंठवाले खड्ग, ध्वजा, शक्ति, घोडे, हाथी और रथोंको भी काट दिया । पहिये और पहियोंकी नाभि, धुरी, घोडोंकी लगाम कर्णने काट दिये । उनके बाणोंसे अनेक घोडे और हाथी मर

अपसव्यांस्तु तांश्चक्रे रथेन मधुसूदनः ॥ २७ ॥
नियुक्तान्हि स तान्मेने यमायाशु किरीटिना।
ततस्ते प्राद्रवञ्शूराः पराङ्मुखरथेऽर्जुने ॥ २८ ॥
तेषामापततां केतूनश्वांश्चापानि सायकान्।
नाराचैरर्धचन्द्रैश्च क्षिप्रं पार्थो न्यपातयत् ॥ २९ ॥
अथान्यैर्दशभिर्भल्लैः शिरांस्येषामपातयत्।
रोषसंरक्तनेत्राणि संदष्टौष्ठानि भूतले ॥ ३० ॥
तानि वक्त्राणि विबभुः कमलानीव भूरिशः।
तांस्तु भल्लैर्महावेगैर्दशभिर्दश कौरवान् ॥ ३१ ॥
रुक्माङ्गदान्रुक्मपुङ्खैर्हत्वा प्रायादमित्रहा ॥ ३२ ॥ [४१०८]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां कर्णपर्वणि सकुलयुद्धेऽशीतितमोऽध्यायः ॥ ८० ॥

सञ्जय उवाच— तं प्रयान्तं महावेगैरश्वैः कपिवरध्वजम्।
युद्धायाभ्यद्रवन्वीराः कुरूणां नवती रथाः ॥ १ ॥
कृत्वा संशप्तका घोरं शपथं पारलौकिकम्।
परिवव्रुर्नरव्याघ्रा नरव्याघ्रं रणेऽर्जुनम् ॥ २ ॥
कृष्णः श्वेतान्महावेगानश्वान्काञ्चनभूषणान्।

को चले,वे सब धनुष धारण करके उन से युद्ध करनेको आये। तब श्रीकृष्णने उन सबोंके रथोंको अपने रथके बाये कर दिया। तब उन सब वीरोंने जाना कि अब हम नहीं बचेंगे ऐसा विचार कर वे सब युद्धसे भाग गये॥ २५–२८

अर्जुनने अपने तेज नाराच और अर्ध चन्द्र बाणोंसे उनके घोडे, ध्वजा और धनुष काट दिये, फिर दश बाणों से ओठ चबाते लाल नेत्रवाले दशों वीरोंके शिर काट डाले। वे दशों शिर पृथ्वीमें गिरकर कमलके समान शोभित होने लगे, इस प्रकार दश बाणोंसे सुवर्ण भूषणधारण किये दश कौरवोंको मारकर शत्रुनाशन अर्जुन अगाडी चले॥ ( २९—३२ ) [४१०८]

कर्णपर्वमें अस्सी अध्याय समाप्त।

कर्णपर्वमें एकासी अध्याय।

सञ्जय बोले, हे राजन्! वानरयुक्त ध्वजावाले अर्जुनको शीघ्र चलनेवाले घोडोंके रथपर चढ जाते देख तुम्हारी सेनाके नव्वे महारथ युद्ध करनेको चले। ये सब संशप्तक प्रतिज्ञा करके और मृत्यु का निश्चय करके अर्जुनकी ओर इस प्रकार चले, जैसे अनेक सिंह सिंहकी ओर जाते है॥ परन्तु कृष्णने मोतियों

न्यवर्तन्त यथा शूरं मृत्युं कृत्वा निवर्तनम् ।
तान्निवृत्तान्रणे शूरान्राधेयः शत्रुतापनः ॥ ५३ ॥
अनेकशो महाराज बभञ्ज पुरुषर्षभः ।
तत्र भारत कर्णेन पञ्चाला विंशती रथाः ॥ ५४ ॥
निहताः सायकैः क्रोधाच्चेदयश्च परं शताः ।
कृत्वा शून्यांस्तथोपस्थान्वाजिपृष्ठांश्च भारत ॥ ५५ ॥
निर्मनुष्यान्गजस्कन्धान्पादातांश्चैव विद्रुतान् ।
आदित्य इव मध्याह्ने दुर्निरीक्ष्यः परन्तपः ॥ ५६ ॥
कालान्तकवपुः शूरः सूतपुत्रोऽभ्यराजत ।
एवमेतन्महाराज नरवाजिरथद्विपान् ॥ ५७ ॥
हत्वा तस्थौ महेष्वासः कर्णोऽरिगणसूदनः ।
यथा भूतगणान्हत्वा कालस्तिष्ठेन्महाबलः ॥ ५८ ॥
तथा स सोमकान्हत्वा तस्थावेको महारथः ।
तत्राद्भुतमपश्याम पञ्चालानां पराक्रमम् ॥ ५९ ॥
वध्यमानाऽपि यत्कर्णं नाजह्रू रणमूर्धनि ।
राजा दुःशासनश्चैव कृपः शारद्वतस्तथा ॥ ६० ॥
अश्वत्थामा कृतवर्मा शकुनिश्च महाबलः ।
न्यहनत्पाण्डवीं सेनां शतशोऽथ सहस्रशः ॥ ६१ ॥

महाधनुषधारी पाञ्चाल युद्ध छोडकर भाग गये, और फिर वे मृत्युका निश्चय करके लौटे । उन वीरोंको लौटता देख शत्रुनाशन कर्णने अनेक वीरोंको मार डाला । (५०–५४)

कर्णने बीस पाञ्चाल महारथोंको मारा, सौ घोडे और रथों पर चढे क्षत्री मारे गये । अनेक हाथी वीरोंसे रहित होगये, पदाति युद्धको छोड कर भाग गये, उस समय कर्णका तेज दोपहरके सूर्यके समान दीखता था । उस समय मनुष्य, घोडे और हाथियोंको मारते हुए वीर कर्ण यमराजके समान दीखने लगे, जैसे महा बलवान् यमराज प्रजाका नाश करके खडे होते हैं, ऐसे ही क्षत्रियोंको मार कर कर्ण खडे हुए। (५४–५९)

मैंने उस समय कर्णसे युद्ध करते पाञ्चालोंका विचित्र बल देखा, उस समय उन्होंने बाणोंसे पीडित होकर भी युद्धको नहीं छोडा। राजा दुर्योधन, दुःशासन, शरद्वतीपुत्र कृपाचार्य, अश्वत्थामा, कृतवर्मा और महाबलवान् शकुनि

कर्णिनालीकनाराचैस्तोमरप्रासशक्तिभिः।
मुसलैर्भिन्दिपालैश्च रथस्थं पार्थमार्दयन् ॥ १२ ॥
तां शस्त्रवृष्टिमतुलां द्विपहस्तैः प्रवेरिताम्।
चिच्छेद निशितैर्भल्लैरर्धचन्द्रैश्च फाल्गुनः ॥ १३ ॥
अथ तान्द्विरदान्सर्वान्नानालिङ्गैः शरोत्तमैः।
सपताकध्वजारोहान्गिरीन्वज्रैरिवाहनत् ॥ १४ ॥
ते हेमपुङ्खैरिषुभिरर्दिता हेममालिनः।
हताः पेतुर्महानागाः साग्निज्वाला इवाद्रयः ॥ १५ ॥
ततो गाण्डीवनिर्घोषो महानासीद्विशाम्पते।
स्तनतां कूजतां चैव मनुष्यगजवाजिनाम् ॥ १६ ॥
कुञ्जराश्च हता राजन्दुद्रुवुस्ते समन्ततः।
अश्वाश्च पर्यधावन्त हतारोहा दिशो दश ॥ १७ ॥
रथा हीना महाराज रथिभिर्वाजिभिस्तथा।
गन्धर्वनगराकारा दृश्यन्ते स्म सहस्रशः ॥ १८ ॥
अश्वारोहा महाराज धावमाना इतस्ततः।
तत्र तत्रैव दृश्यन्ते निहताः पार्थसायकैः ॥ १९ ॥

सौ हाथियोंपर चढे म्लेच्छ तुम्हारे पुत्रकी आज्ञासे अर्जुनसे युद्ध करनेको आये॥ वे सब रथपर बैठे हुए अर्जुनकी ओर बाण, तोमर, प्रास, शक्ति, मूसल और भिन्दिपाल चलाने लगे॥ ( १०-१२ )

अर्जुनने उन हाथियोंपर चढे वीरोंके छोडे हुए बाणोंको अर्धचन्द्र और नाराच नामक बाणोंसे काट दिया॥ जैसे इन्द्रने वज्रसे अनेक पर्वतोंको काट दिया था, ऐसे ही अर्जुनने भी उन सब हाथियोंको पताका ध्वजा और वीरोंके सहित काट डाला॥ जैसे अग्निकी ज्वाला सहित अनेक पर्वत कटकर पृथ्वीमें गिरते हैं, ऐसे ही वे सब हाथी सोनेके पङ्खवाले बाणोंसे व्याकुल होकर पृथ्वीमें गिर गये॥ (१३-१५)

हे पृथ्वीनाथ! इस समय मरते हुए हाथी, मनुष्य और घोडे तथा गाण्डीव धनुषका घोर शब्द होने लगा॥ हे पृथ्वीनाथ! अनेक हाथी बाण लगनेसे इधर उधरको भागने लगे, वीरोंके मरनेसे घोडे भी भागने लगे॥ हे महाराज! सहस्रों रथ, सारथी और वीरोंसे रहित होकर गन्धर्व नगरोंके समान इधर उधर फिरने लगे॥ (१६-१८)

इसी प्रकार अर्जुनके बाणोंसे व्याकुल

धनुःशरध्वजोपेतां नरक्षुद्रकपालिनीम् ॥ ४ ॥
चर्मवर्मभ्रमोपेतां रथोडुपसमाकुलाम् ।
जयैषिणां च सुतरां भीरूणां च सुदुस्तराम् ॥ ५ ॥
नदीं प्रावर्तयित्वा च बीभत्सुः परवीरहा ।
वासुदेवमिदं वाक्यमब्रवीत्पुरुषर्षभः ॥ ६ ॥

अर्जुन उवाच— एष केतू रणे कृष्ण सूतपुत्रस्य दृश्यते ।
भीमसेनादयश्चैते योधयन्ति महारथम् ॥ ७ ॥
एते द्रवन्ति पञ्चालाः कर्णत्रस्ता जनार्दन ।
एष दुर्योधनो राजा श्वेतच्छत्रेण धार्यता ॥ ८ ॥
कर्णेन भग्नान्पञ्चालान्द्रावयन्बहु शोभते ।
कृपश्च कृतवर्मा च द्रौणिश्चैव महारथः ॥ ९ ॥
एते रक्षन्ति राजानं सूतपुत्रेण रक्षिताः ।
अवध्यमानास्तेऽस्माभिर्घातयिष्यन्ति सोमकान् ॥ १० ॥
एष शल्यो रथोपस्थे रश्मिसंचारकोविदः ।
सूतपुत्ररथं कृष्ण वाहयन्बहु शोभते ॥ ११ ॥
तत्र मे बुद्धिरुत्पन्ना वाहयात्र महारथम् ।
नाहत्वा समरे कर्णं निवर्तिष्ये कथञ्चन ॥ १२ ॥

फेन, धनुष, बाण, ध्वजा और मनुष्योंके कपाल बहने लगे, ढाल और कवच भंवरके समान घूमने लगे। रथ डोंगीके समान दीखने लगे, उसको देख वीर लोग प्रसन्न और कायर डरने लगे ॥ (३-५)

इस प्रकार पुरुषसिंह अर्जुन इस घोर नदीको बहाकर श्रीकृष्णसे ऐसे बोले, हे कृष्ण ! यही ध्वजा महारथ सूतपुत्रकी दीख पडती है । उनसे भीमसेन आदि योद्धा युद्ध कर रहे हैं । हे जनार्दन ! ये देखो कर्णके डरसे पाञ्चाल भागे जाते हैं, ये सफेद छत्रधारी राजा दुर्योधन खडे हैं, ये महारथ कृपाचार्य, अश्वत्थामा और कृतवर्मा खडे हैं । यह हमारी सेना भागी जाती है । ये सब वीर कर्णकी सहायतासे दुर्योधनकी रक्षा करते हैं । (६-१०)

यदि अब हम उन्हें न मारेंगे तो सोमक सेनाका नाश होजागया । ये घोडोंकी विद्या जाननेवाले शल्य सूतपुत्रका रथ हांकते शोभित होरहे हैं । आज मैंने यह प्रतिज्ञा की है कि कर्णको विना मारे नहीं लौटूंगा । इसलिये अब

कर्णिनालीकनाराचैस्तोमरप्रासशक्तिभिः ।
मुसलैर्भिन्दिपालैश्च रथस्थं पार्थमार्दयन् ॥ १२ ॥
तां शस्त्रवृष्टिमतुलां द्विपहस्तैः प्रवेरिताम् ।
चिच्छेद निशितैर्भल्लैरर्धचन्द्रैश्च फाल्गुनः ॥ १३ ॥
अथ तान्द्विरदान्सर्वान्नानालिङ्गैः शरोत्तमैः ।
सपताकध्वजारोहान्गिरीन्वज्रैरिवाहनत् ॥ १४ ॥
ते हेमपुङ्खैरिषुभिरर्दिता हेममालिनः ।
हताः पेतुर्महानागाः साग्निज्वाला इवाद्रयः ॥ १५ ॥
ततो गाण्डीवनिर्घोषो महानासीद्विशाम्पते ।
स्तनतां कूजतां चैव मनुष्यगजवाजिनाम् ॥ १६ ॥
कुञ्जराश्च हता राजन्दुद्रुवुस्ते समन्ततः ।
अश्वाश्च पर्यधावन्त हतारोहा दिशो दश ॥ १७ ॥
रथा हीना महाराज रथिभिर्वाजिभिस्तथा ।
गन्धर्वनगराकारा दृश्यन्ते स्म सहस्रशः ॥ १८ ॥
अश्वारोहा महाराज धावमाना इतस्ततः ।
तत्र तत्रैव दृश्यन्ते निहताः पार्थसायकैः ॥ १९ ॥

सौ हाथियोंपर चढे म्लेच्छ तुम्हारे पुत्रकी आज्ञासे अर्जुनसे युद्ध करनेको आये॥ वे सब रथपर बैठे हुए अर्जुनकी ओर बाण, तोमर, प्रास, शक्ति, मूसल और भिन्दिपाल चलाने लगे॥ ( १०-१२ )

अर्जुनने उन हाथियोंपर चढे वीरोंके छोडे हुए बाणोंको अर्धचन्द्र और नाराच नामक बाणोंसे काट दिया॥ जैसे इन्द्रने वज्रसे अनेक पर्वतोंको काट दिया था, ऐसे ही अर्जुनने भी उन सब हाथियोंको पताका ध्वजा और वीरोंके सहित काट डाला॥ जैसे अग्निकी ज्वाला सहित अनेक पर्वत कटकर पृथ्वीमें गिरते है, ऐसे ही वे सब हाथी सोनेके पङ्खवाले बाणोंसे व्याकुल होकर पृथ्वीमें गिर गये॥ (१३-१५)

हे पृथ्वीनाथ! इस समय मरते हुए हाथी, मनुष्य और घोडे तथा गाण्डीव धनुषका घोर शब्द होने लगा॥ हे पृथ्वीनाथ! अनेक हाथी बाण लगनेसे इधर उधरको भागने लगे, वीरोंके मरनेसे घोडे भी भागने लगे॥ हे महाराज! सहस्रों रथ, सारथी और वीरोंसे रहित होकर गन्धर्व नगरोंके समान इधर उधर फिरने लगे॥ (१६-१८)

इसी प्रकार अर्जुनके बाणोंसे व्याकुल

पश्य कर्णार्जुनस्यैषा सौदामन्यम्बरे यथा ॥ २१ ॥
एष ध्वजाग्रे पार्थस्य प्रेक्षमाणः समन्ततः ।
दृश्यते वानरो भीमो वीराणां भयवर्धनः ॥ २२ ॥
एतच्चक्रं गदा शङ्खः शार्ङ्गं कृष्णस्य च प्रभो ।
दृश्यते पाण्डवरथे वाहयानस्य वाजिनः ॥ २३ ॥
एतत्कूजति गाण्डीवं विसृष्टं सव्यसाचिना ।
एते हस्तवता मुक्ता घ्नन्त्यमित्रान्शिताः शराः ॥ २४ ॥
विशालायतताम्राक्षैः पूर्णचन्द्रनिभाननैः ।
एषा भूः कीर्यते राज्ञां शिरोभिरपलायिनाम् ॥ २५ ॥
एते परिघसङ्काशाः पुण्यगन्धानुलेपनाः ।
उद्धृता रणशूराणां पात्यन्ते सायुधा भुजाः ॥ २६ ॥
निरस्तजिह्वा नेत्रांता वाजिनः सह सादिभिः ।
पतिताः पात्यमानाश्च क्षितौ क्षीणा विशेरते ॥ २७ ॥
एते पर्वतशृङ्गाणां तुल्या हैमवता गजाः ।
संछिन्नकुम्भाः पार्थेन प्रपतन्त्यद्रयो यथा ॥ २८ ॥
गन्धर्वनगराकारा यथा वाते नरेश्वराः ।
विमानादिव पुण्यान्ते स्वर्गिणो निपतन्त्यमी ॥ २९ ॥

हे कर्ण ! जैसे आकाशमें विजली चमकती है ऐसे ही धनुपके रोदे चन्द्रमा और तारोंसे युक्त यह अर्जुनकी ध्वजा चमक रही है । ये वीरोंको भय देनेवाले चारों ओर देखते हुए भयङ्कर बन्दर अर्जुनकी ध्वजापर बैठे हुए दीख रहे हैं । ये घोडे हांकते हुए, श्रीकृष्णके शङ्ख, चक्र, गदा और शार्ङ्ग धनुप रथमें रक्खे हैं ॥ ये अर्जुनके धनुपका शब्द आ रहा है, इधर उनके तेज वाणोंसे अनेक वीर मर रहे हैं ॥ (२१-२४)

ये देखो युद्धसे न भागनेवाले लाल कमलके समान बडे नेत्रवाले राजोंके शिरोंसे यह भूमि भरी जाती है, देखो चन्दन आदि सुगन्ध लगे परिघके समान सुन्दर वीरोंके कटे हुए हाथ शस्त्रों सहित कटे जाते हैं ॥ ये अनेक घोडे आंख फैलाये जीभ निकाले पृथ्वीमें गिर पडे हैं और ये ऊपर बैठनेवाले योद्धा भी मर गये हैं । (२५-२७)

हिमाचलकी तराईके पर्वत शृंगके समान शरीरवाले हाथी अर्जुनके वाणोंसे कटकर टूटे हुए पर्वतोंके समान पृथ्वीमें गिर रहे हैं ॥ जैसे बडे बडे विमानोंसे

कर्णिनालीकनाराचैस्तोमरप्रासशक्तिभिः ।
मुसलैर्भिन्दिपालैश्च रथस्थं पार्थमार्दयन् ॥ १२ ॥
तां शस्त्रवृष्टिमतुलां द्विपहस्तैः प्रवेरिताम् ।
चिच्छेद निशितैर्भल्लैरर्धचन्द्रैश्च फाल्गुनः ॥ १३ ॥
अथ तान्द्विरदान्सर्वान्नानालिङ्गैः शरोत्तमैः ।
सपताकध्वजारोहान्गिरीन्वज्रैरिवाहनत् ॥ १४ ॥
ते हेमपुङ्खैरिषुभिरर्दिता हेममालिनः ।
हताः पेतुर्महानागाः साग्निज्वाला इवाद्रयः ॥ १५ ॥
ततो गाण्डीवनिर्घोषो महानासीद्विशाम्पते ।
स्तनतां कूजतां चैव मनुष्यगजवाजिनाम् ॥ १६ ॥
कुञ्जराश्च हता राजन्दुद्रुवुस्ते समन्ततः ।
अश्वाश्च पर्यधावन्त हतारोहा दिशो दश ॥ १७ ॥
रथा हीना महाराज रथिभिर्वाजिभिस्तथा ।
गन्धर्वनगराकारा दृश्यन्ते स्म सहस्रशः ॥ १८ ॥
अश्वारोहा महाराज धावमाना इतस्ततः ।
तत्र तत्रैव दृश्यन्ते निहताः पार्थसायकैः ॥ १९ ॥

सौ हाथियोंपर चढे म्लेच्छ तुम्हारे पुत्रकी आज्ञासे अर्जुनसे युद्ध करनेको आये॥ वे सब रथपर बैठे हुए अर्जुनकी ओर बाण, तोमर, प्रास, शक्ति, मूसल और भिन्दिपाल चलाने लगे॥ ( १०-१२ )

अर्जुनने उन हाथियोंपर चढे वीरोंके छोडे हुए बाणोंको अर्धचन्द्र और नाराच नामक बाणोंसे काट दिया॥ जैसे इन्द्रने वज्रसे अनेक पर्वतोंको काट दिया था, ऐसे ही अर्जुनने भी उन सब हाथियोंको पताका ध्वजा और वीरोंके सहित काट डाला॥ जैसे अग्निकी ज्वाला सहित अनेक पर्वत कटकर पृथ्वीमें गिरते हैं, ऐसे ही वे सब हाथी सोनेके पङ्खवाले बाणोंसे व्याकुल होकर पृथ्वीमें गिर गये॥ (१३-१५)

हे पृथ्वीनाथ ! इस समय मरते हुए हाथी, मनुष्य और घोडे तथा गाण्डिव धनुषका घोर शब्द होने लगा॥ हे पृथ्वीनाथ ! अनेक हाथी बाण लगनेसे इधर उधरको भागने लगे, वीरोंके मरनेसे घोडे भी भागने लगे॥ हे महाराज! सहस्रों रथ, सारथी और वीरोंसे रहित होकर गन्धर्व नगरोंके समान इधर उधर फिरने लगे॥ (१६-१८)

इसी प्रकार अर्जुनके बाणोंसे व्याकुल

त्वरितोऽभिपतत्यस्मांस्त्यक्त्वा सैन्यान्यसंशयम् ।
त्वं कर्ण प्रतियाह्येनं नास्त्यन्यो हि धनुर्धरः ॥ ३८ ॥
न तं पश्यामि लोकेऽस्मिंस्त्वत्तो ह्यन्यं धनुर्धरम् ।
अर्जुनं समरे क्रुद्धं यो वेलामिव धारयेत् ॥ ३९ ॥
न चास्य रक्षां पश्यामि पार्श्वतो न च पृष्ठतः ।
एक एवाभियाति त्वां पश्य साफल्यमात्मनः ॥ ४० ॥
त्वं हि कृष्णौ रणे शक्तः संसाधयितुमाहवे ।
तवैव भारो राधेय प्रत्युद्याहि धनञ्जयम् ॥ ४१ ॥
समानो ह्यसि भीष्मेण द्रोणद्रौणिकृपेण च ।
सव्यसाचिनमायान्तं निवारय महारणे ॥ ४२ ॥
लेलिहानं यथा सर्पं गर्जन्तमृषभं यथा ।
वनस्थितं यथा व्याघ्रं जहि कर्ण धनञ्जयम् ॥ ४३ ॥
एते द्रवन्ति समरे धार्तराष्ट्रा महारथाः ।
अर्जुनस्य भयात्तूर्णं निरपेक्षा जनाधिपाः ॥ ४४ ॥
द्रवतामथ तेषां तु नान्योऽस्ति युधि मानवः ।

---

इच्छासे अर्जुन तुम्हारी ही ओर चले आते हैं ॥ (३४-३७)

हे कर्ण ! तुम इस सब सेनाको छोडकर शीघ्रता सहित केवल अर्जुनहीसे युद्ध करनेको चलो, क्यों कि तुम्हारे सिवाय और किसी धनुषधारीको उनसे युद्ध करनेकी शक्ति नहीं है। हम तुम्हारे सिवाय लोकमें दूसरे वीरको ऐसा नहीं देखते जो क्रोध भरे अर्जुनसे युद्ध कर सके, देखो अपने प्रारब्धके फलको, देखो अर्जुनके आगे पीछे कोई रक्षा करनेवाला नहीं है, ये एकले ही तुमसे लडनेको चले आते हैं ॥(३८-४०)

हे राधापुत्र ! तुमही कृष्ण और अर्जुनसे लड सकते हो । इनके मारनेका भार तुम्हारे ही शिर है, इसलिये तुमही इससे लडनेको जाओ, तुम भीष्म द्रोणाचार्य, और अश्वत्थामाके समान बली हो, इसलिये अर्जुनसे युद्ध करो ॥ हे कर्ण ! जैसे कोई मनुष्य लहराते सांप, मतवाले सांड और बलवान सिंहसे युद्ध करता है, ऐसे ही आज तुम अर्जुनसे युद्ध करो ॥ (४१-४३)

ये तुम्हारी सेनाके महारथ अर्जुनके बाणोंसे पीडित होकर और युद्धकी इच्छा छोडकर भागे जाते हैं। हे सूतपुत्र ! अब इन भागते हुए वीरोंका भय नाश करनेमें तुम्हारे सिवाय और कोई

भग्नमूर्धास्थिचरणाः क्रव्यादगणभोजनाः ॥ २८ ॥
असृङ्मांसवसाभिश्च तृप्तिमभ्यागता गदा ।
अस्थीन्यप्यश्नती तस्थौ कालरात्रीव दुर्दृशा ॥ २९ ॥
सहस्राणि दशाश्वानां हत्वा पत्तींश्च भूयसः ।
भीमोऽभ्यधावत्संक्रुद्धो गदापाणिरितस्ततः ॥ ३० ॥
गदापाणिं ततो भीमं दृष्ट्वा भारत तावकाः ।
मेनिरे समनुप्राप्तं कालदण्डोद्यतं यमम् ॥ ३१ ॥
स मत्त इव मातङ्गः संक्रुद्धः पाण्डुनन्दनः ।
प्रविवेश गजानीकं मकरः सागरं यथा ॥ ३२ ॥
विगाह्य च गजानीकं प्रगृह्य महतीं गदाम् ।
क्षणेन भीमः संक्रुद्धस्तन्निन्ये यमसादनम् ॥ ३३ ॥
गजान्सकङ्कटान्मत्तान्सारोहान्सपताकिनः ।
पततः समपश्याम सपक्षान्पर्वतानिव ॥ ३४ ॥
हत्वा तु तद्गजानीकं भीमसेनो महाबलः ।
पुनः स्वरथमास्थाय पृष्ठतोऽर्जुनमभ्ययात् ॥ ३५ ॥
हतं पराङ्मुखप्रायं निरुत्साहं परं बलम् ।

---

शिरसे रहित होकर दांत निकालकर पृथ्वीमें गिर पडे ॥ (२५–२८)

गिद्ध और स्यार उनका मांस खाने लगे । वह गदा मांस, चर्बी, रुधिर और हड्डियोंको खाती हुई कालरात्रिके समान भयानक दीखने लगी और मांस रुधिरसे तृप्त होगई । दश सहस्र घोडोंको मारकर क्रोध भरे भीमसेन गदा लेकर इधर उधर घूमने लगे ॥(२९-३०)

हे महाराज ! गदाधारी भीमसेनको देखकर तुम्हारी सेनाने साक्षात् दण्ड-धारी यमराज समझ लिया ॥ महापराक्रमी मतवाले हाथीके समान भीमसेन उस सेनाका नाश करके तुम्हारी हाथी सेनामें इस प्रकार घुमे जैसे भारी मगर जलमें घुमता है ॥ भीमसेनने क्रोध करके क्षणमात्रमें अपनी गदासे उन सब हाथियोंको मारडाला ॥ (३१-३३)

हमने उस समय झूल अम्बारी और वीरोंके सहित अनेक हाथियोंको पक्ष-युक्त पर्वतोंके समान गिरते देखा ॥ इस प्रकार उस गजसेनाका नाश करके भीमसेन फिर अपने रथपर बैठ और पीछेसे अर्जुन की रक्षा करने को चले ॥ ( ३४— ३५ )

हे महाराज ! उस समय जो तुम्हारी

कर्ण उवाच-नैतादृशो जातु बभूव लोके रथोत्तमो यावदुपश्रुतं नः ।
तमीदृशं प्रतियोत्स्यामि पार्थं महाहवे पश्य च पौरुषं मे ॥ ५४ ॥
रणे चरत्येष रथप्रवीरः सितैर्हयैः कौरवराजपुत्रः ।
स वाद्य मां नेष्यति कृच्छ्रमेतत्कर्णस्यान्तादेतदन्तास्तु सर्वे ॥ ५५ ॥
अस्वेदिनौ राजपुत्रस्य हस्ताववेपमानौ जातकिणौ बृहन्तौ ।
दृढायुधः कृतिमान् क्षिप्रहस्तो न पाण्डवेयेन समोऽस्ति योधः ॥ ५६ ॥
गृह्णात्यनेकानपि कङ्कपत्रानेकं यथा तान्प्रति योज्य चाशु ।
ते क्रोशमात्रे निपतन्त्यमोघाः कस्तेन योधोऽस्ति समः पृथिव्याम् ॥५७॥
अतोषयत्खाण्डवे यो हुताशं कृष्णद्वितीयोऽतिरथस्तरस्वी ।
लेभे चक्रं यत्र कृष्णो महात्मा धनुर्गाण्डीवं पाण्डवः सव्यसाची ॥५८॥
श्वेताश्वयुक्तं च सुघोषमुग्रं रथं महाबाहुरदीनसत्त्वः ।
महेषुधी चाक्षये दिव्यरूपे शस्त्राणि दिव्यानि च हव्यवाहात् ॥५९॥
तथेन्द्रलोके निजघान दैत्यानसङ्ख्येयान् कालकेयांश्च सर्वान् ।
लेभे शङ्खं देवदत्तं स तत्र को नाम तेनाभ्यधिकः पृथिव्याम् ॥६०॥

श्रीकृष्ण उनकी रक्षा कर रहे है इस समय उसके जीतनेका कौन साहस कर सक्ता है ? (५३)

कर्ण बोले, हे शल्य! हमने जहांतक सुना है तहांतक अर्जुनके समान योद्धा नहीं सुना सो हम आज उसीसे युद्ध करेंगे, तुम हमारे पराक्रमको देखो ॥ ये कौरव राजपुत्र महारथ अर्जुन सफेद घोडोंके रथपर चढे हुए सेनामें घूम रहे हैं सो आज हमें मारेंगे वा इन्हें मार कर हम ही सब पाण्डवोंका नाश करेंगे। इन राजपुत्रके बडे बडे हाथोंमें धनुषकी ठेठ पड गई है तो भी कांपते नहीं और न पसीना ही आता है, इनके समान शीघ्र शस्त्र चलानेवाला और योद्धा जगत्में कोई नहीं है ॥ (५४-५६)

ये अनेक बाण हाथमें लेकर एक बाणके समान शीघ्रता सहित छोडते है, वे सब बाण एक कोसतक जा सकते है। ऐसे वीर अर्जुनसे कौन युद्ध कर सक्ता है ? इन्हीं अर्जुनने महारथ और महातेजस्वी कृष्णकी सहायतासे खाण्डव वनमें अग्निको तृप्त किया था । वहींसे श्रीकृष्णको चक्र और अर्जुनको गांडीव धनुष मिला था । वहींसे यह उत्तम शब्दवाला सफेद घोडोंके सहित रथ, दिव्य अक्षय तूणीर और अनेक दिव्य शस्त्र मिले थे, इन्होंने देवलोकमें जाकर असंख्य कालकेय नामक दानवोंको मारा था । तब देवदत्त शङ्ख पाया था, उन

देवैरपि न शक्यस्त्वं परिज्ञातुं कुतो मया।
त्वयि सर्वे स्म दृश्यन्ते भावा ये जगति स्थिताः ॥ ५२ ॥
त्वामुपासन्त वरदं देवा ब्रह्मादयोऽनघ।
सर्वस्त्वमसि देवानां कर्ता कारयिता च ह ॥ ५३ ॥
त्वत्प्रसादात्सुराः सर्वे मोदन्तीहाकुतोभयाः।
एवं स्तुत्वा महादेवं स ऋषिः प्रणतोऽभवत् ॥ ५४ ॥
यदिदं चापलं देव कृतमेतत्स्वयादिकम्।
ततः प्रसादयामि त्वां तपो मे न क्षरेदिति ॥ ५५ ॥
ततो देवः प्रीतमनास्तमृषिं पुनरब्रवीत्।
तपस्ते वर्धतां विप्र मत्प्रसादात्सहस्रधा ॥ ५६ ॥
आश्रमे चेह वत्स्यामि त्वया सार्धमहं सदा।
सप्तसारस्वते चास्मिन्यो मामर्चिष्यते नरः ॥ ५७ ॥
न तस्य दुर्लभं किञ्चिद्भवितेह परत्र वा।
सारस्वतं च ते लोकं गमिष्यन्ति न संशयः ॥ ५८ ॥
एतन्मङ्कणकस्यापि चरितं भूरितेजसः।
स हि पुत्रः सुकन्यायामुत्पन्नो मातरिश्वना ॥५९॥ [२३१५]

इति श्रीमहाभारते० शल्यपर्वांतर्गतगदापर्वणि बलदेव० सारस्वतोपाख्याने अष्टत्रिंशोऽध्याय ॥ ३८ ॥

मिल जाता है। आपको देवता भी नहीं जान सक्ते, मेरी तो कथा ही क्या है? जगत्के सब भाव तुममें दिखाई देते हैं हे पाप रहित! ब्रह्मादिक देवता भी आपकी उपासना करते हैं। हे देव! तुम जगत्के रूप और देवतोंके भी बनानेवाले हो, आपकी कृपासे सब देवता निर्भय होकर आनन्द करते हैं। हमने जो चपलता करी, वह भूल थी, अब हम आपसे यह वरदान मांगते हैं कि हमारी तपस्या क्षीण न होवे। (५०-५५)

मुनिके ऐसे वचन सुन महादेव प्रसन्न होकर बोले, हे ब्राह्मण! हमारे आशीर्वादसे तुम्हारा तप सहस्रों गुणा बढेगा, हम तुम्हारे सङ्ग इस आश्रममें सदा निवास करेंगे, जो मनुष्य इस सारस्वत तीर्थमें हमारी पूजा करेगा उसे जगत् में कोई वस्तु दुर्लभ नहीं होगी। मरकर वह मनुष्य सारस्वत लोकमें जायगा, हमने यह महातेजस्वी मंकणककी कथा तुमसे कही, ये मङ्कणक मातरिश्वा मुनि और सुकन्याके पुत्र थे। ( ५५—५९ ) [ २३१५ ]

शल्यपर्वमें अडतीस अध्याय समाप्त।

उभौ हि शूरौ बलिनौ दृढायुधौ महारथौ संहननोपपन्नौ ।
एतादृशौ फाल्गुनवासुदेवौ कोऽन्यः प्रतीयान्मदृते तौ तु शल्य ॥ ६८ ॥
मनोरथो यस्तु ममाद्य तस्य मद्रेश युद्धं प्रति पाण्डवस्य ।
नैतच्चिरादाशु भविष्यतीदमत्यद्भुतं चित्रमतुल्यरूपम् ॥ ६९ ॥
एतौ च हत्वा युधि पातयिष्ये मां वापि कृष्णौ निहनिष्यतोऽद्य ।
इति ब्रुवञ्शल्यममित्रहन्ता कर्णो रणे मेघ इवोन्ननाद ॥ ७० ॥
अभ्येत्य पुत्रेण तवाभिनन्दितः समेत्य चोवाच कुरुप्रवीरम् ।
कृपं च भोजं च महाभुजावुभौ तथैव गान्धारपतिं सहानुजम् ॥ ७१ ॥
गुरोः सुतं चावरजं तथात्मनः पदातिनोऽथ द्विपसादिनश्च तान् ।
निरुध्यताभिद्रवताच्युतार्जुनौ श्रमेण संयोजयताशु सर्वशः ॥ ७२ ॥
यथा भवद्भिर्भृशविक्षतावुभौ सुखेन हन्यामहमद्य भूमिपाः ।
तथेति चोक्त्वा त्वरिताः स्म तेऽर्जुनं जिघांसवो वीरतराः समाययुः ॥७३॥
शरैश्च जघ्नुर्युधि तं महारथा धनञ्जयं कर्णनिदेशकारिणः ।
नदीनदं भूरिजलो महार्णवो यथा तथा तान्समरेऽर्जुनोऽग्रसत् ॥ ७४ ॥
न सन्दधानो न तथा शरोत्तमान्प्रमुञ्चमानो रिपुभिः प्रदृश्यते ।

---

हारेंगे ॥ हे शल्य ! ये दोनों महारथ महा शस्त्रधारी और महायोद्धा है । इन दोनोंसे मेरे सिवाय और कौन युद्ध कर सक्ता है ॥ हे महाराज ! बहुत दिनसे महा पराक्रमी अर्जुनसे जो मेरी इच्छा है, सो आज तक पूरी न हुई इससे अधिक और क्या आश्चर्य होगा? आज मैं या तो इन दोनोंको मारूंगा, या मुझे वे ही मार डालेंगे, ऐसे कह कर शत्रुनाशन कर्ण मेघके समान गर्जने लगा ॥ ( ६७-७० )

अनन्तर दुर्योधन, कृपाचार्य, कृतवर्मा, और भाइयोंके सहित शकुनिसे ऐसा बोले, तथा अश्वत्थामा अपने छोटे भाई तथा और भी सब पैदल, हाथी, घोडे और रथोंपर चढे वीरोंसे कहा कि तुम सब केवल अर्जुनसे युद्ध करना और इन दोनोंको थका दो । हे वीरो ! तुम लोग अर्जुन और कृष्णको घावोंसे व्याकुल कर दो, तब मैं सुखसे इन्हें मार डालूंगा । ( ७१-७२ )

कर्णके वचन सुन सब लोग, अर्जुनसे युद्ध करनेको गये । और कृष्णके वचनानुसार अर्जुनके ऊपर अनेक प्रकारके शस्त्र वरसाने लगे, जैसे समुद्र सब नदियोंको शान्त कर देता है, वैसे ही अर्जुनने भी उन सब वीरोंको शान्त कर दिया ॥ अर्जुन किस समय बाण लेते

हत्वा चाश्वान्सात्यकेः सूतपुत्रः कैकेयपुत्रं न्यवधीद्विशोकम् । ३ ॥
तमभ्यधावन्निहते कुमारे कैकेयसेनापतिरुग्रकर्मा ।
शरैर्विधुन्वन्भृशमुग्रवेगैः कर्णात्मजं चाप्यहनत्प्रसेनम् ॥ ४ ॥
तस्यार्धचन्द्रैस्त्रिभिरुच्चकर्त प्रहस्य बाहू च शिरश्च कर्णः ।
स स्यन्दनाद्गामगमद्गतासुः परश्वधैः शाल इवावरुग्णः ॥ ५ ॥
हताश्वमञ्जोगतिभिः प्रसेनः शिनिप्रवीरं निशितैः पृषत्कैः ।
प्रच्छाद्य नृत्यन्निव कर्णपुत्रः शैनेयबाणाभिहतः पपात ॥ ६ ॥
पुत्रे हते क्रोधपरीतचेताः कर्णः शिनीनामृषभं जिघांसुः ।
हतोऽसि शैनेय इति ब्रुवन्स व्यवासृजद्बाणममित्रसाहम् ॥ ७ ॥
तमस्य चिच्छेद शरं शिखण्डी त्रिभिस्त्रिभिश्च प्रतुतोद कर्णम् ।
शिखण्डिनः कार्मुकं च ध्वजं च छित्त्वा क्षुराभ्यां न्यपतत्सुजातः ॥८॥
शिखण्डिनं षड्भिरविध्यदुग्रो धार्ष्टद्युम्नेः स शिरश्चोच्चकर्त ।
तथाभिनत्सुतसोमं शरेण सुसंशितेनाधिरथिर्महात्मा ॥ ९ ॥
अथाक्रन्दे तुमुले वर्तमाने धार्ष्टद्युम्ने निहते तत्र कृष्णः ।

मार डाले, फिर सात्यकिके घोडे मार कर राजपुत्र कैकय देशीय विशोकसे युद्ध करनेको गये और उसे मार डाला ॥ (१ - ३)

राजपुत्र विशोकको मरा देख उसका सेनापति उग्रकर्मा तीक्ष्ण बाण वर्षाते हुए कर्णकी ओर दौडा और कर्णके पुत्र प्रसेनको मारने लगा ॥ कर्णने तीन अर्द्धचन्द्र बाणोंसे उग्रकर्माके दोनों हाथ और शिर काट लिया, वह शाल वृक्षके समान पृथ्वीमें कट कर गिर गये ॥ तब कर्णपुत्र प्रसेनने घोडे रहित रथपर बैठे हुए सात्यकि की ओर तीक्ष्ण बाण चलाये तब सात्यकिने अपने बाणोंसे उसे मार कर गिरा दिया ॥ (४—६)

पुत्रके मरनेसे कर्णको महा क्रोध हुआ और सात्यकिको मारनेके लिये मनमें इच्छा की। फिर सात्यकी मारे गये, ऐसा कह कर एक शत्रुनाशन घोर बाण उनपर चलाया। तब शिखण्डीने उस बाणको तीन बाणोंसे काट दिया, और तीन बाण कर्णके शरीरमें मारे, कर्णने अपने दो बाणोंसे शिखण्डीकी ध्वजा और एक बाणसे धृष्टद्युम्नके पुत्रका शिर काट दिया। फिर महात्मा कर्णने सुतसोमकी ओर अनेक बाण चलाये। (७-९)

धृष्टद्युम्नके पुत्रके मरनेसे पाण्डवोंकी सब सेनामें हाहाकार होने लगा, तब श्रीकृष्णने अर्जुनसे कहा कि, हे कुन्ती-

तथापि तं प्रस्फुरदात्तकार्मुकं त्रिभिः शरैर्यन्तृशिरः क्षुरेण ।
हयांश्चतुर्भिश्च पुनस्त्रिभिर्ध्वजं धनञ्जयो द्रौणिरथादपातयत् ॥ ८३ ॥
स रोषपूर्णो मणिवज्रहाटकैरलंकृतं तक्षकभोगवर्चसम् ।
महाधनं कार्मुकमन्यदाददे यथा महाहिप्रवरं गिरेस्तटात् ॥ ८४ ॥
स्वमायुधं चोपनिकीर्य भूतले धनुश्च कृत्वा सगुणं गुणाधिकः ।
समार्दयत्तावजितौ नरोत्तमौ शरोत्तमैर्द्रौणिरविध्यदन्तिकात् ॥ ८५ ॥
कृपश्च भोजश्च तवात्मजाश्च ते शरैरनेकैर्युधि पाण्डवर्षभम् ।
महारथाः संयुगमूर्धनि स्थितास्तमोनुदं वारिधरा इवापतन् ॥ ८६ ॥
कृपस्य पार्थः सशरं शरासनं हयान्ध्वजान्सारथिमेव पत्रिभिः ।
समार्पयद्बाहुसहस्रविक्रमस्तथा यथा वज्रधरः पुरा बलेः ॥ ८७ ॥
स पार्थबाणैर्विनिपातितायुधो ध्वजावमर्दे च कृते महाहवे ।
कृतः कृपो बाणसहस्रयन्त्रितो यथापगेयः प्रथमं किरीटिना ॥ ८८ ॥
शरैः प्रचिच्छेद तवात्मजस्य ध्वजं धनुश्च प्रचकर्त नर्दतः ।
जघान चाश्वान्कृतवर्मणः शुभान्ध्वजं च चिच्छेद ततः प्रतापवान् ॥ ८९ ॥
स वाजिसूतेष्वसनान्सकेतनाञ्जघान नागाश्वरथांस्त्वरंश्च सः ।

अनेक बाण मारे तब अर्जुनने क्रोध करके एक बाणसे उनके सारथी, चारसे चारों घोडे और एकसे ध्वजा काट दी। अनन्तर अश्वत्थामा सुवर्ण और रत्नोंसे जटित महा सांपके समान भयङ्कर धनुष लेकर उस रथसे इस प्रकार कूदे जैसे घोर सर्प पर्वतसे गिरता है। फिर अपने सब शस्त्र रथसे खींचकर पृथ्वीमें गिरा दिये और अनेक तेज बाण कृष्ण तथा अर्जुनकी ओर चलाये ( ८१-८५ )

जैसे सूर्यकी ओर अनेक मेघ दौडते हैं। ऐसे ही युद्धमें खडे पाण्डव श्रेष्ठ अर्जुनकी ओर मेघके समान बाण वर्षाते हुए, कृपाचार्य, कृतवर्मा और दुर्योधन दौडे। जैसे वज्रधारी इन्द्रने बलिको अपने बाणोंसे व्याकुल कर दिया था, ऐसे ही सहस्र बाहुके समान अर्जुनने अपने बाणोंसे कृपाचार्यके घोडे, सारथी ध्वजा और बाणोंके सहित धनुष काट दिये, जैसे अर्जुनने अपने बाणोंसे भीष्मको व्याकुल कर दिया था, ऐसे ही घोडे, सारथी, ध्वजा कटनेसे कृपाचार्य व्याकुल होगये। ( ८६-८८ )

इसी प्रकार दुर्योधनके घोडे और सारथीको मारकर ध्वजा और धनुष काट दिया, फिर कृतवर्माके घोडोंको मार डाला। फिर हाथी, घोडे, और रथोंपर चढे अनेक वीरोंको मारने लगे। जैसे

तान्पञ्चभिस्त्वभ्यहनत्पृषत्कैः कर्णस्ततः सिंह इवोन्ननाद ॥ १८ ॥
तस्यास्यतस्तानभिनिघ्नतश्च ज्याबाणहस्तस्य धनुःस्वनेन।
साद्रिद्रुमा स्यात्पृथिवी विशीर्णेत्यतीव मत्वा जनता व्यषीदत् ॥ १९ ॥
स शक्रचापप्रतिमेन धन्वना भृशायतेनाधिरथिः शरान्सृजन्।
बभौ रणे दीप्तमरीचिमण्डलो यथांशुमाली परिवेषवांस्तथा ॥ २० ॥
शिखण्डिनं द्वादशभिः पराभिनच्छितैः शरैः षड्भिरथोत्तमौजसम्।
त्रिभिर्युधामन्युमविध्यदाशुगैस्त्रिभिस्त्रिभिः सोमकपार्षतात्मजौ ॥२१ ॥
पराजिताः पञ्च महारथास्तु ते महाहवे सूतसुतेन मारिष।
निरुद्यमास्तस्थुरमित्रनन्दना यथेन्द्रियार्थात्मवता पराजिताः ॥ २२ ॥
निमज्जतस्तानथ कर्णसागरे विपन्ननावो वणिजो यथार्णवे।
उद्दध्रिरे नौभिरिवार्णवाद्रथैः सुकल्पितैर्द्रौपदिजाः स्वमातुलान् ॥ २३ ॥
ततः शिनीनामृषभः शितैः शरैर्निकृत्य कर्णप्रहितानिषून्बहून्।
विदार्य कर्णं निशितैरयस्मयैस्तवात्मजं ज्येष्ठमविध्यदष्टभिः ॥ २४ ॥
कृपोऽथ भोजश्च तवात्मजस्तथा स्वयं च कर्णो निशितैरताडयत्।

सिंहके समान गर्जने लगे, उस समय शत्रुओंको मारते हुए कर्णके शब्दसे पृथ्वी फट जायगी ऐसा जानकर और वन तथा पर्वत फट जायंगे, ऐसे विचार कर सब जगत् डरने लगा। जैसे जेठ, वैशाखका सूर्य अपनी किरणोंसे तेज दिखाई देता है, ऐसेही इन्द्रधनुषके समान अपनी धनुषसे बाण छोडते हुए अधिरथपुत्र कर्ण भी महा तेजस्वी दीखने लगे ॥ ( १८-२० )

शिखण्डीके शरीरमें बारह, उत्तमौजाके छः, युधामन्युके तीन, सोमक राजपुत्र और शिखण्डीके तीन तीन बाण मारे ॥ जब महारथ सूतने इन पांचों महारथोंको जीत लिया, तब सब लोग आत्मज्ञानीसे निरुद्ध विषयोंके समान निरुद्यम होकर खडे होगये ॥ जैसे कोई उत्तम मनुष्य समुद्रमें डूबते हुए बनियोंको अपनी नाव पर चढाकर बचाता है, ऐसे ही अपने मामाओंकी रक्षा करनेको द्रौपदीके पांचों पुत्र अपने रथोंपर बैठे हुए तेज बाण वर्षाते हुए कर्णसे युद्ध करनेको आये ॥ २१-२३

तब सात्यकिने क्रोध करके अपने तेज बाणोंसे कर्णके सब बाण काट डाले, और दुर्योधनके शरीरमें आठ बाण मारे ॥ तब कृपाचार्य, कृतवर्मा राजा दुर्योधन और कर्ण अपने तेज बाणोंसे अकेले सात्यकि से युद्ध करने लगे। ( २४--२५ )

सञ्जय उवाच- राजन्कुरूणां प्रवरैर्बलैर्भीममभिद्रुतम् ।
मज्जन्तमिव कौन्तेयमुज्जिहीर्षुर्धनञ्जयः ॥ १ ॥
विमृद्य सूतपुत्रस्य सेनां भारत सायकैः ।
प्राहिणोन्मृत्युलोकाय परवीरान्धनञ्जयः ॥ २ ॥
ततोऽस्याम्बरमाश्रित्य शरजालानि भागशः ।
अदृश्यन्त तथान्ये च निजघ्नुस्तव वाहिनीम् ॥ ३ ॥
स पक्षिसङ्घाचरितमाकाशं पूरयञ्शरैः ।
धनञ्जयो महाबाहुः कुरूणामन्तकोऽभवत् ॥ ४ ॥
ततो भल्लैः क्षुरप्रैश्च नाराचैर्विमलैरपि ।
गात्राणि प्राच्छिनत्पार्थः शिरांसि च चकर्त ह ॥ ५ ॥
छिन्नगात्रैर्विकवचैर्विशिरस्कैः समन्ततः ।
पातितैश्च पतद्भिश्च योधैरासीत्समावृता ॥ ६ ॥
धनञ्जयशराभ्यस्तैः स्यन्दनाश्वरथद्विपैः ।
संछिन्नभिन्नविध्वस्तैर्व्यङ्गाङ्गावयवैः स्तृता ॥ ७ ॥
सुदुर्गमा सुविषमा घोरात्यर्थं सुदुर्दृशा ।
रणभूमिरभूद्राजन्महावैतरणी यथा ॥ ८ ॥
ईषाचक्राक्षभङ्गैश्च व्यश्वैः साश्वैश्च युध्यताम् ।
ससूतैर्हतसूतैश्च रथैः स्तीर्णाभवन्मही ॥ ९ ॥

कर्णपर्वमें अस्सी अध्याय ।

सञ्जय बोले, हे राजन् ! जैसे कोई डूबते हुए मनुष्यको बचानेके लिये दौ-डता है, ऐसे ही तुम्हारे प्रधान वीरोंसे युद्ध करते हुए अर्जुन भीमसेनकी ओर चले, और कर्णकी सेनामें जाकर अनेक वीरोंको मार डाला, तब अर्जुनके वाण सब आकाशमें छा गये, और तुम्हारी सेनाका नाश करने लगे ॥ (१-३)

अर्जुनने अपने वाणोंसे पक्षियोंके समान आकाशको पूरित कर दिया, तब अनेक प्रकारके तेज भल्ल और नाराच वाणोंसे अर्जुनने वीरोंके शिर और शरीर काट डाले, उस समय मुण्ड रहित शरीर और शरीर रहित मुण्डोंसे वह रणभूमि पूरित होगयी, वह भूमि अर्जुनके वाणोंसे कटे हुए अङ्गरहित हाथी, घोडे और मनुष्य तथा रथोंसे पूरित होगयी ॥ (४-७)

हे राजन् ! वह रणभूमि भयानक कुरूप और दुर्गम होगयी, जैसे यमलो-ककी वैतरणी नदी ॥ कटे हुए रथ और घोडोंके सहित, कहीं सारथी युक्त, कहीं

सक्तप्रभिन्नाविव वासितान्तरे महागजौ मन्मथसक्तचेतसौ ॥३२॥
तवात्मजस्याथ वृकोदरस्त्वरन्धनुः क्षुराभ्यां ध्वजमेव चाच्छिनत् ।
ललाटमप्यस्य बिभेद पत्रिणा शिरश्च कायात्प्रजहार सारथेः॥ ३३ ॥
स राजपुत्रोऽन्यदवाप्य कार्मुकं वृकोदरं द्वादशभिः पराभिनत् ।
स्वयं नियच्छंस्तुरगानजिह्मगैः शरैश्च भीमं पुनरप्यवीवृषत् ॥ ३४ ॥
ततः शरं सूर्यमरीचिसप्रभं सुवर्णवज्रोत्तमरत्नभूषितम् ।
महेन्द्रवज्राशनिपातदुःसहं मुमोच भीमाङ्गविदारणक्षमम् ॥ ३५ ॥
स तेन निर्विद्धतनुर्वृकोदरो निपातितः स्रस्ततनुर्गतासुवत् ।
प्रसार्य बाहू रथवर्यमाश्रितः पुनः स संज्ञामुपलभ्य चानदत् ॥ ३६ ॥

इति श्रीमहाभारते-शतसाहस्र्यां० कर्णपर्वणि दुःशासनभीमसेनयुद्धे द्व्यशीतितमोऽध्यायः ॥८२॥[४२०१]

सञ्जय उवाच—तत्राकरोद्दुष्करं राजपुत्रो दुःशासनस्तुमुलं युद्ध्यमानः ।
चिच्छेद भीमस्य धनुः शरेण षष्ट्या शरैः सारथिमप्यविध्यत् ॥ १ ॥
स तत्कृत्वा राजपुत्रस्तरस्वी विव्याध भीमं नवभिः पृषत्कैः ।
ततोऽभिनद्बहुभिः क्षिप्रमेव वरेषुभिर्भीमसेनं महात्मा ॥ २ ॥

---

दोनों शरीर नाश करनेवाले बाणोंसे घोर युद्ध करने लगे ॥ और दोनों-के शरीरसे रुधिर बहने लगा, तब भीमसेनने क्रोध करके एक एक क्षुर बाण-से तुम्हारे पुत्रकी ध्वजा और धनुष काट दिये। और उनके माथेमें अनेक बाण मारे, फिर सारथीका शिर काट कर पृथ्वीमें गिरा दिया ॥ ( ३१-३३ )

तब राजपुत्र दुःशासन आप ही घोडे हांकने लगा, और अपने बारह तेज बाण भीमसेनके शरीरमें मारे, तब एक इन्द्रके वज्रके समान घोर, सूर्य किरण के समान प्रभावाले, सुवर्ण और नीलम आदि मणियोंसे जटित, भीमसेनको मारनेमें समर्थ घोर बाण दुःशासनने छोडा, उस बाणके लगनेसे भीमसेनका कवच कट गया, शरीरसे रुधिर बहने लगा और हाथ पैर फैलकर मरे हुएके समान रथमे गिर पडे। थोडे समयमें फिर उठकर गर्जने लगे ॥ ( ३३-३६ )

कर्णपर्वमें बियासी अध्याय समाप्त। [४२०१]

कर्णपर्वमें तिरासी अध्याय।

सञ्जय बोले, हे राजन् ! उस समय युद्ध करते हुए राजपुत्र दुःशासनने घोर कर्म किया एक बाणसे भीमसेनका धनुष काट दिया, और साठ बाण उनके सारथीके शरीरमें मारे। अनन्तर महात्मा राजपुत्रने भीमसेनके शरीरमें नौ तेज बाण मारकर फिर अनेक बाण मारे ॥ ( १-२ )

महागिरौ वेणुवनं निशि प्रज्वालितं यथा ॥ १८ ॥
तथा तव महासैन्यं प्रास्फुरच्छरपीडितम् ।
सस्फिपष्टदग्धविध्वस्तं तव सैन्यं किरीटिना ॥ १९ ॥
कृतं प्रविहतं बाणैः सर्वतः प्रद्रुतं दिशः ।
महावने मृगगणा दावाग्नित्रासिता यथा ॥ २० ॥
कुरवः पर्यवर्तन्त निर्दग्धाः सव्यसाचिना ।
उत्सृज्य च महाबाहुं भीमसेनं तथा रणे ॥ २१ ॥
बलं कुरूणामुद्विग्नं सर्वमासीत्पराङ्मुखम् ।
ततः कुरुषु भग्नेषु बीभत्सुरपराजितः ॥ २२ ॥
भीमसेनं समासाद्य मुहूर्तं सोऽभ्यवर्तत ।
समागम्य च भीमेन मन्त्रयित्वा च फाल्गुनः ॥ २३॥
विशल्यमरुजं चास्मै कथयित्वा युधिष्ठिरम् ।
भीमसेनाभ्यनुज्ञातस्ततः प्रायाद्धनञ्जयः ॥ २४ ॥
नादयन्रथघोषेण पृथिवीं द्यां च भारत ।
ततः परिवृतो वीरैर्दशभिर्योधपुङ्गवैः ॥ २५ ॥
दुःशासनादवरजैस्तव पुत्रैर्धनञ्जयः ।
ते तमभ्यर्दयन्बाणैरुल्काभिरिव कुञ्जरम् ॥ २६ ॥
आततेष्वसनाः शूरा नृत्यन्त इव भारत ।

सेना व्याकुल होगई । जैसे वनमें आग लगनेसे बांस जलते है, तैसेही बिजली और वज्रके समान बाणोंसे तुम्हारी सेना भस्म होने लगी। अर्जुनने तुम्हारी सेनाका नाश कर दिया। जैसे वनमें आग लगनेसे हरिन भागते हैं, तैसेही तुम्हारी सेना अर्जुनके बाणोंसे इधर उधरको भागने लगी ॥ (१७—२०)

तब सब प्रधान योद्धा भीमसेनको छोडकर अर्जुनसे युद्ध करनेको आये, उस समय तुम्हारी सब सेना युद्धसे विमुख होकर इधर उधरको भागने लगी। तब अर्जुन भीमसेनके पास गये और थोडे समयतक खडे होकर कुछ सम्मति करते रहे। उन्होंने भीमसेनसे महाराज का कुशल कहा और फिर उनकी आज्ञा लेकर युद्ध करनेको चले गये॥ २१-२४

उस समय उनके रथके शब्दसे पृथ्वी और आकाश पूरित होगये। तब जैसे कोई मनुष्य आग जलाकर हाथीको डराता है ऐसे ही दुःशासनसे छोटे महा योद्धा तुम्हारे दसपुत्र अर्जुनसे युद्ध करने

हयाः ससूता निहता नरेन्द्र चूर्णीकृतश्चास्य रथः पतन्त्या।
दुःशासनं पाण्डवाः प्रेक्ष्य सर्वे हृष्टाः पञ्चालाः सिंहनादानमुञ्चन् ॥११॥
तं पातयित्वाथ वृकोदरोऽथ जगर्ज हर्षेण विनादयन्दिशः।
नादेन तेनाखिलपार्श्ववर्तिनो मूर्छाकुलाः पतितास्त्वाजमीढ ॥ १२ ॥
भीमोऽपि वेगादवतीर्य यानाद्दुःशासनं वेगवानभ्यधावत्।
ततः स्मृत्वा भीमसेनस्तरस्वी सापत्नकं यत्प्रयुक्तं सुतैस्ते ॥ १३ ॥
तस्मिन्सुघोरे तुमुले वर्तमाने प्रधानभूयिष्ठतरैः समन्तात्।
दुःशासनं तत्र समीक्ष्य राजन्भीमो महाबाहुरचिन्त्यकर्मा ॥ १४ ॥
स्मृत्वाऽथ केशग्रहणं च देव्या वस्त्रापहारं च रजस्वलायाः।
अनागसो भर्तृपराङ्मुखाया दुःखानि दत्तान्यपि विप्रचिन्त्य ॥ १५ ॥
जज्वाल क्रोधादथ भीमसेन आज्यप्रसिक्तो हि यथा हुताशः।
तत्राह कर्णं च सुयोधनं च कृपं द्रौणिं कृतवर्माणमेव ॥ १६ ॥
निहन्मि दुःशासनमद्य पापं संरक्ष्यतामद्य समस्तयोधाः।
इत्येवमुक्त्वा सहसाभ्यधावन्निहन्तुकामोऽतिबलस्तरस्वी ॥ १७ ॥
तथा तु विक्रम्य रणे वृकोदरो महागजं केसरिको यथैव।

और वस्त्रोंसे रहित होकर पृथ्वीमें गिर पडे ॥ (७-१०)

हे महाराज! इसी गदासे दुःशासनके रथ, घोडे, सारथी आदिका चूरा होगया, दुःशासनकी यह दशा देख पाञ्चाल और पाण्डव प्रसन्न होकर सिंहके समान गर्जने लगे ॥ हे आजमीढ! दुःशासनको गिराकर भीमसेन प्रसन्न होकर गर्जने लगे, उस शब्दसे पास खडे सब वीरोंको मूर्च्छा आगई ॥ तब बलवान् भीमसेन तुम्हारे पुत्रोंके वैरको स्मरण करके शीघ्रता सहित अपने रथसे उतरे और दुःशासन की ओर दौडे ॥ ( ११—१३ )

उस घोर युद्धमें दुःशासनकी यह घोर दशा देख सब प्रधान वीरोंके बीचमें घोर कर्म करनेवाले भीमसेनने द्रौपदीके वस्त्र और बाल खींचने, रजस्वला दशामें सभामें लाने, पतियोंके आगे कठोर वचन कहने आदि दुःखोंको स्मरण करके ऐसा क्रोध किया जैसे जलती अग्निपर घी पडनेसे अधिक ज्वाला होती है। (१४—१६)

तब कर्ण, कृपाचार्य, अश्वत्थामा और कृतवर्मासे कहा, अब हम दुःशासनको मारते हैं तुम सब इकट्ठे होकर उसकी रक्षा करो ॥ ऐसा कहकर वेगसे उसकी ओर दौडे जैसे सिंह मतवाले

मुक्ताजालप्रतिच्छन्नान्प्रैषीत्कर्णरथं प्रति ॥ ३ ॥
ततः कर्णरथं यान्तमरिघ्नं तं धनञ्जयम् ।
बाणवर्षैरभिघ्नन्तः संशप्तकरथा ययुः ॥ ४ ॥
त्वरमाणांस्तु तान्सर्वान्ससूतेष्वसनध्वजान् ।
जघान नवतिं वीरानर्जुनो निशितैः शरैः ॥ ५ ॥
तेऽपतन्त हता बाणैर्नानारूपैः किरीटिना ।
सविमाना यथा सिद्धाः स्वर्गात्पुण्यक्षये तथा ॥ ६ ॥
ततः सरथनागाश्वाः कुरवः कुरुसत्तमम् ।
निर्भया भरतश्रेष्ठमभ्यवर्तन्त फाल्गुनम् ॥ ७ ॥
तदायस्तमनुष्याश्वमुदीर्णवरवारणम् ।
पुत्राणां ते महासैन्यं समरौत्सीद्धनञ्जयम् ॥ ८ ॥
शक्त्यृष्टितोमरप्रासैर्गदानिस्त्रिंशसायकैः ।
प्राच्छादयन्महेष्वासाः कुरवः कुरुनन्दनम् ॥ ९ ॥
तामन्तरिक्षे विततां शस्त्रवृष्टिं समन्ततः ।
व्यधमत्पाण्डवो बाणैस्तमः सूर्य इवांशुभिः ॥ १० ॥
ततो म्लेच्छाः स्थिता मत्तैस्त्रयोदशशतैर्गजैः ।
पार्श्वतो व्यहनन्पार्थं तव पुत्रस्य शासनात् ॥ ११ ॥

के जालयुक्त सफेद बहुत शीघ्र चलनेवाले घोडोंको कर्णहीकी ओर हांका॥ १-३

शत्रुनाशन अर्जुनको कर्णके रथकी ओर जाते देख बाण वर्षाते हुए संशप्तक योद्धा दौडे॥ उनको अपनी ओर आते देख अर्जुनने तेज बाणोंसे इन सबको घोडे, सारथी और धनुषोंके सहित काट डाला॥ जैसे पुण्य नाश होनेमें विमानोंके सहित देवता पृथ्वीमें गिरते है, ऐसे ही अर्जुनके अनेक रङ्गवाले बाणोंसे वे सब योद्धा मरकर गिर गये॥ (४-६)

हे कुरुकुलश्रेष्ठ! जब अनेक कौरव निर्भय होकर कुरुकुलश्रेष्ठ अर्जुनसे युद्ध करनेको चले तब हाथी, घोडे, रथ मनुष्योंसे भरी हुई तुम्हारे पुत्रोंकी महा सेनाने अर्जुनको चारों ओरसे घेर लिया॥ महाधनुषधारी कौरवोंने कुरुकुलश्रेष्ठ अर्जुनके ऊपर शक्ति, तोमर, गदा, प्रास और बाण चलाये और खड्गोंसे युद्ध करने लगे॥ (७-९)

जैसे सूर्य अपनी किरणोंसे अन्धकारका नाश कर देते हैं, ऐसेही अर्जुनने अपने बाणोंसे उस आकाशमें छायी हुई बाण वर्षाको काट दिया॥ तब तेरह

तस्मिन्क्षणे पाण्डवस्य बाह्वोर्बलमदृश्यत ।
यत्साद्विनो वारणांश्च रथांश्चैकोऽजयद्युधि ॥ २० ॥
ततस्त्र्यङ्गेण महता बलेन भरतर्षभ ।
दृष्ट्वा परिवृतं राजन्भीमसेनः किरीटिनम् ॥ २१ ॥
हतावशेषानुत्सृज्य त्वदीयान्कतिचिद्रथान् ।
जवेनाभ्यद्रवद्राजन्धनञ्जयरथं प्रति ॥ २२ ॥
ततस्तत्प्राद्रवत्सैन्यं हतभूयिष्ठमातुरम् ।
दृष्ट्वार्जुनं तदा भीमो जगाम भ्रातरं प्रति ॥ २३ ॥
हतावशिष्टांस्तुरगानर्जुनेन महाबलान् ।
भीमो व्यधमदभ्रान्तो गदापाणिर्महाहवे ॥ २४ ॥
कालरात्रिमिवात्युग्रां नरनागाश्वभोजनाम् ।
प्राकाराट्टपुरद्वारदारणीमतिदारुणाम् ॥ २५ ॥
ततो गदां नृनागाश्वेष्वाशु भीमो व्यवासृजत् ।
सा जघान बहूनश्वानश्वारोहांश्च मारिष ॥ २६ ॥
कार्ष्णायसतनुत्राणान्नरानश्वांश्च पाण्डवः ।
पोथयामास गदया सशब्दं तेऽपतन्हताः ॥ २७ ॥
दन्तैर्दशन्तो वसुधां शेरते क्षतजोक्षिताः ।

होकर अनेक घुडचढे इधर उधर घूमने लगे ॥ उस समय अर्जुनने ऐसा पराक्रम किया कि हाथी, घोडे और रथों पर चढे सब वीरोंको जीत लिया ॥ (१९–२०)

तब महाबाहु भीमसेन अर्जुनको तीन प्रकारकी महासेनासे घिरा हुआ देख तुम्हारी बची हुई सेनाको छोड अर्जुनके रथकी ओर वेगसे चले। भीमसेनको अर्जुनकी ओर जाते देख वह बची हुई सब सेना इधर उधरको भागने लगी। अर्जुनसे जो सेना बची थी उस सबको बलवान भीमसेनने गदासे मार डाला। ( २१–२४ )

तब भीमसेन कालरात्रिके समान भयानक मनुष्य, हाथी और घोडोंकी खानेवाली, छारदीवाली, ( पुरकोट ) कटारी और नगरके द्वारोंको तोडनेवाली महाभयङ्कर गदा, घोडे, हाथी और मनुष्योंपर चलाने लगे ॥ उससे तुम्हारी सेनाका नाश होने लगा। भीमसेनने लोहेके कवच पहने अनेक हाथी और मनुष्योंको अपनी गदासे मारकर पृथ्वीमें गिरा दिया, अनेक वीर हाथ, पैर और

दुःशासनं जीवितं प्रोत्सृजन्तमाक्षिप्य योधांस्तरसा महाबलः ॥ २६ ॥
एवं क्रुद्धो भीमसेनः करेण उत्पाटयामास भुजं महात्मा।
दुःशासनं तेन स वीरमध्ये जघान वज्राशनिसन्निभेन ॥ २७ ॥
उत्कृत्य वक्षः पतितस्य भूमावथापिबच्छोणितमस्य कोष्णम्।
ततो निपात्यास्य शिरोऽपकृत्य तेनासिना तव पुत्रस्य राजन् ॥ २८ ॥
सत्यां चिकीर्षुर्मतिमान्प्रतिज्ञां भीमोऽपिबच्छोणितमस्य कोष्णम्।
आस्वाद्य चास्वाद्य च वीक्षमाणः क्रुद्धो हि चैनं निजगाद वाक्यम्॥ २९ ॥
स्तन्यस्य मातुर्मधुसर्पिषोर्वा माध्वीकपानस्य च सत्कृतस्य।
दिव्यस्य वा तोयरसस्य पानात्पयोदधिभ्यां मथिताच्च मुख्यात्॥ ३० ॥
अन्यानि पानानि च यानि लोके सुधामृतस्वादुरसानि तेभ्यः।
सर्वेभ्य एवाभ्यधिको रसोऽयं ममाद्य चास्याहितलोहितस्य ॥ ३१ ॥
अथाह भीमः पुनरुग्रकर्मा दुःशासनं क्रोधपरीतचेताः।
गतासुमालोक्य विहस्य सुस्वरं किं वा कुर्या मृत्युना रक्षितोऽसि॥३२ ॥
एवं ब्रुवाणं पुनराद्रवन्तमास्वाद्यमानं तमतिप्रहृष्टम्।
ये भीमसेनं ददृशुस्तदानीं भयेन तेऽपि व्यथिता निपेतुः ॥ ३३ ॥
ये चापि नासन्व्यथिता मनुष्यास्तेषां करेभ्यः पतितं हि शस्त्रम्।

जिस क्षत्रीको अपने बलका अभिमान हो, वह मरते हुए दुःशासनको बचावे। मैं अभी इस दुष्टके हाथ तोडूंगा, ऐसा कहकर भीमसेनने वज्रके समान हाथसे दुःशासनका हाथ उखाड लिया और वज्र और बिजलीके समान उस हाथसे दुःशासनको मारने लगे॥ (२५—२७)

फिर छाती चीरकर उसका गर्म रुधिर पिया और फिर अपने खड्गसे उसका शिर काट लिया॥ अपनी प्रतिज्ञा सत्य करनेके लिये दुःशासनका रुधिर चाखते हुए बोले, मैंने ऐसा स्वाद माताके दूध, घी, शहद और उत्तम जलमें भी नहीं पाया था। और भी जगत्में जो अमृतके समान वस्तु हैं, उनमें भी ऐसा स्वाद कभी नहीं पाया जैसा आज इस दुष्ट दुःशासनके रुधिरमें पाया॥ ( २८-३१ )

दुःशासनको मरा देख क्रोधमें भरकर घोर कर्मवाले भीमसेन फिर बोले, आह! अब मैं तेरा क्या कर सक्ता हूं? अब मृत्यु तेरी रक्षा कर रही है॥ रुधिर पीते भीमसेनको देख सब क्षत्री डरके मारे इधर उधरको भागने लगे, और भीमसेन प्रसन्न होते हुए दुःशासनको छोड चल दिये। जो डरके मारे

तस्मिन्क्षणे पाण्डवस्य बाह्वोर्बलमदृश्यत ।
यत्सादिनो वारणांश्च रथांश्चैकोऽजयद्युधि ॥ २० ॥
ततस्त्र्यङ्गेण महता बलेन भरतर्षभ ।
दृष्ट्वा परिवृतं राजन्भीमसेनः किरीटिनम् ॥ २१ ॥
हतावशेषानुत्सृज्य त्वदीयान्कतिचिद्रथान् ।
जवेनाभ्यद्रवद्राजन्धनञ्जयरथं प्रति ॥ २२ ॥
ततस्तत्प्राद्रवत्सैन्यं हतभूयिष्ठमातुरम् ।
दृष्ट्वार्जुनं तदा भीमो जगाम भ्रातरं प्रति ॥ २३ ॥
हतावशिष्टांस्तुरगानर्जुनेन महाबलान् ।
भीमो व्यधमदभ्रान्तो गदापाणिर्महाहवे ॥ २४ ॥
कालरात्रिमिवात्युग्रां नरनागाश्वभोजनाम् ।
प्राकाराट्टपुरद्वारदारणीमतिदारुणाम् ॥ २५ ॥
ततो गदां नृनागाश्वेष्वाशु भीमो व्यवासृजत् ।
सा जघान बहूनश्वानश्वारोहांश्च मारिष ॥ २६ ॥
कार्ष्णायसतनुत्राणान्नरानश्वांश्च पाण्डवः ।
पोथयामास गदया सशब्दं तेऽपतन्हताः ॥ २७ ॥
दन्तैर्दशन्तो वसुधां शेरते क्षतजोक्षिताः ।

होकर अनेक घुडचढे इधर उधर घूमने लगे ॥ उस समय अर्जुनने ऐसा पराक्रम किया कि हाथी, घोडे और रथों पर चढे सब वीरोंको जीत लिया ॥ (१९-२०)

तब महाबाहु भीमसेन अर्जुनको तीन प्रकारकी महासेनासे घिरा हुआ देख तुम्हारी बची हुई सेनाको छोड अर्जुनके रथकी ओर वेगसे चले। भीमसेनको अर्जुनकी ओर जाते देख वह बची हुई सब सेना इधर उधरको भागने लगी । अर्जुनसे जो सेना बची थी उस सबको बलवान भीमसेनने गदासे मार डाला । ( २१-२४ )

तब भीमसेन कालरात्रिके समान भयानक मनुष्य, हाथी और घोडोंकी खानेवाली, छारदीवाली, ( पुरकोट ) कटारी और नगरके द्वारोंको तोडनेवाली महाभयङ्कर गदा, घोडे, हाथी और मनुष्योंपर चलाने लगे ॥ उससे तुम्हारी सेनाका नाश होने लगा । भीमसेनने लोहेके कवच पहने अनेक हाथी और मनुष्योंको अपनी गदासे मारकर पृथ्वीमें गिरा दिया, अनेक वीर हाथ, पैर और

एष ते रुधिरं कण्ठात्पिबामि पुरुषाधम ॥ ४२ ॥
ब्रूहीदानीं तु संहृष्टः पुनर्गौरिति गौरिति ।
ये तदास्मान्प्रनृत्यन्ति पुनर्गौरिति गौरिति ॥ ४३ ॥
तान्वयं प्रतिनृत्यामः पुनर्गौरिति गौरिति ।
प्रमाणकोट्यां शयनं कालकूटस्य भोजनम् ॥ ४४ ॥
दंशनं चाहिभिः कृष्णैर्दाहं च जतुवेश्मनि ।
द्यूतेन राज्यहरणमरण्ये वसतिश्च या ॥ ४५ ॥
द्रौपद्याः केशपक्षस्य ग्रहणं च सुदारुणम् ।
इष्वस्त्राणि च संग्रामेष्वसुखानि च वेश्मनि ॥ ४६ ॥
विराटभवने यश्च क्लेशोऽस्माकं पृथग्विधः ।
शकुनेर्धार्तराष्ट्रस्य राधेयस्य च मन्त्रिते ॥ ४७ ॥
अनुभूतानि दुःखानि तेषां हेतुस्त्वमेव हि ।
दुःखान्येतानि जानीमो न सुखानि कदाचन ।
धृतराष्ट्रस्य दौरात्म्यात्सपुत्रस्य सदा वयम् ॥ ४८ ॥
इत्युक्त्वा वचनं राजञ्जयं प्राप्य वृकोदरः ।
पुनराह महाराज स्मयंस्तौ केशवार्जुनौ ॥ ४९ ॥
असृग्दिग्धो विस्रवल्लोहितास्यः क्रुद्धोऽत्यर्थं भीमसेनस्तरस्वी ।

गर्जते हुए कौरवोंको सुनाकर बोले, अब मैं इस नीचका रुधिर कण्ठतक पीऊंगा, यही मूर्ख सभामें पाण्डवोंको बैल कहकर नाचता था, अब वही बैल मरा पडा है। अब हमभी इस बैलको मारकर बैल बैल कहकर नाचते हैं। (४० ४४)

उन मूर्खोंने मुझे प्रमाणकोटिमें सुला कर कालकूट विष खिलाया था और कृष्णसर्पोंसे कटवाया था तथा हमें लाखके घरमें जलाना चाहता था, जुआ खेलकर कपटसे हमारा राज्य छीना और तेरह वर्षके लिये वनको भेजा था॥ इसी दुष्टने द्रौपदीके बाल पकडकर खींचे थे, इसीसे युद्धमें और घरमें हमें शस्त्रोंसे मारना चाहता था, उन्हीं दुष्टोंने शकुनि और राधापुत्रकी सम्मतिसे हम पाचोंको विराट नगरमें रखकर अलग अलग दुःख दिये थे, हमें यह निश्चय है, कि जितने दुःख पडे हैं इन सबका मूल यही दुष्ट था। ( ४४—४८ )

हमने पुत्रों सहित धृतराष्ट्रके राज्यमें सदा दुःखही पाया सुख कभी नहीं। ऐसा कहकर और विजय पाकर भीमसेन कृष्ण और अर्जुनसे बोले, हे वीर! मैं

तस्मिन्क्षणे पाण्डवस्य बाह्वोर्बलमदृश्यत ।
यत्सादिनो वारणांश्च रथांश्चैकोऽजयद्युधि ॥ २० ॥
ततस्त्र्यङ्गेण महता बलेन भरतर्षभ ।
दृष्ट्वा परिवृतं राजन्भीमसेनः किरीटिनम् ॥ २१ ॥
हतावशेषानुत्सृज्य त्वदीयान्कतिचिद्रथान् ।
जवेनाभ्यद्रवद्राजन्धनञ्जयरथं प्रति ॥ २२ ॥
ततस्तत्प्राद्रवत्सैन्यं हतभूयिष्ठमातुरम् ।
दृष्ट्वार्जुनं तदा भीमो जगाम भ्रातरं प्रति ॥ २३ ॥
हतावशिष्टांस्तुरगानर्जुनेन महाबलान् ।
भीमो व्यधमदभ्रान्तो गदापाणिर्महाहवे ॥ २४ ॥
कालरात्रिमिवात्युग्रां नरनागाश्वभोजनाम् ।
प्राकाराट्टपुरद्वारदारणीमतिदारुणाम् ॥ २५ ॥
ततो गदां नृनागाश्वेष्वाशु भीमो व्यवासृजत् ।
सा जघान बहूनश्वानश्वारोहांश्च मारिष ॥ २६ ॥
कार्ष्णायसतनुत्राणान्नरानश्वांश्च पाण्डवः ।
पोथयामास गदया सशब्दं तेऽपतन्हताः ॥ २७ ॥
दन्तैर्दशन्तो वसुधां शेरते क्षतजोक्षिताः ।

होकर अनेक घुडचढे इधर उधर घूमने लगे ॥ उस समय अर्जुनने ऐसा पराक्रम किया कि हाथी, घोडे और रथों पर चढे सब वीरोंको जीत लिया ॥ (१९-२०)

तब महाबाहु भीमसेन अर्जुनको तीन प्रकारकी महासेनासे घिरा हुआ देख तुम्हारी बची हुई सेनाको छोड अर्जुनके रथकी ओर वेगसे चले। भीमसेनको अर्जुनकी ओर जाते देख वह बची हुई सब सेना इधर उधरको भागने लगी । अर्जुनसे जो सेना बची थी उस सबको बलवान भीमसेनने गदासे मार डाला । ( २१-२४ )

तब भीमसेन कालरात्रिके समान भयानक मनुष्य, हाथी और घोडोंकी खानेवाली, छारदीवाली, ( पुरकोट ) कटारी और नगरके द्वारोंको तोडनेवाली महाभयङ्कर गदा, घोडे, हाथी और मनुष्योंपर चलाने लगे ॥ उससे तुम्हारी सेनाका नाश होने लगा । भीमसेनने लोहेके कवच पहने अनेक हाथी और मनुष्योंको अपनी गदासे मारकर पृथ्वीमें गिरा दिया, अनेक वीर हाथ, पैर और

रुक्माङ्गदान्रुक्मपुङ्खैः पार्थो निन्ये यमक्षयम् ।
हतेषु तेषु वीरेषु प्रदुद्राव बलं तव ॥ ६ ॥
पश्यतः सूतपुत्रस्य पाण्डवस्य भयार्दितम् ।
ततः कर्णो महाराज प्रविवेश महद्भयम् ॥ ७ ॥
दृष्ट्वा भीमस्य विक्रान्तमन्तकस्य प्रजास्विव ।
तस्य त्वाकारभावज्ञः शल्यः समितिशोभनः ॥ ८ ॥
उवाच वचनं कर्णं प्राप्तकालमरिन्दमम् ।
मा व्यथां कुरु राधेय नैव त्वय्युपपद्यते ॥ ९ ॥
एते द्रवन्ति राजानो भीमसेनभयार्दिताः ।
दुर्योधनश्च संमूढो भ्रातृव्यसनकर्शितः ॥ १० ॥
दुःशासनस्य रुधिरे पीयमाने महात्मना ।
व्यापन्नचेतसश्चैव शोकोपहतचेतसः ॥ ११ ॥
दुर्योधनमुपासन्ते परिवार्य समन्ततः ।
कृपप्रभृतयश्चैते हतशेषाः सहोदराः ॥ १२ ॥
पाण्डवा लब्धलक्षाश्च धनञ्जयपुरोगमाः ।
त्वामेवाभिमुखाः शूरा युद्धाय समुपस्थिताः ॥ १३ ॥
स त्वं पुरुषशार्दूल पौरुषेण समास्थितः ।
क्षत्रधर्मं पुरस्कृत्य प्रत्युद्याहि धनञ्जयम् ॥ १४ ॥

शिर सुवर्ण कवच सहित काट डाला। उन दशोंके मरनेसे तुम्हारी सेना इधर उधरको भागने लगी। उस समय कर्ण भी देख रहे थे, और तुम्हारी सेना भाग चली। ( ३—७ )

तब कर्ण भी भयसे कांपने लगे, यमराज के समान भीमसेन का पराक्रम देख कर्ण बहुत डर गया, उनकी चेष्टा देख पराक्रमी शल्य समयानुसार यों बोले, हे राधापुत्र! तुम डरो मत, डरना तुमको अनुचित है, ये देखो तुम्हारी औरके सब राजा भीमसेनके डरसे भागे जाते है। राजा दुःशासनके शोकसे मूर्खसे होगये है। इस समय धृतराष्ट्रके पुत्र दुर्योधन दुःशासनका रुधिर पिया जानेसे मूर्खके समान खडा है। और कुछ नहीं कर सक्ता, ये सब कृपाचार्य आदि वीर और बचे हुए भाई राजा दुर्योधन को समझा रहे हैं ॥ ( ७-१२ )

ये सब अर्जुन आदि पाण्डव वीर विजय पाकर केवल तुम्हारी सेना ही से लडनेके लिये चले आते हैं। हे पुरुष

व्यालम्बत महाराज प्रायशः शस्त्रवेष्टितम् ॥ ३६ ॥
विलम्बमानं तत्सैन्यमप्रगल्भमवस्थितम् ।
दृष्ट्वा प्राच्छादयद्बाणैरर्जुनः प्राणतापनैः ॥ ३७ ॥
नराश्वरथमातङ्गा युधि गाण्डीवधन्वना ।
शरव्रातैश्चिता रेजुः कदम्बा इव केसरैः ॥ ३८ ॥
ततः कुरूणामभवदार्तनादो महान्नृप ।
नराश्वनागासुहरैर्वध्यतामर्जुनेषुभिः ॥ ३९ ॥
हाहाकृतं भृशं त्रस्तं लीयमानं परस्परम् ।
अलातचक्रवत्सैन्यं तदाभ्रमत तावकम् ॥ ४० ॥
ततस्तद्युद्धमभवत्कुरूणां सुमहद्बलैः ।
न ह्यत्रासीदनिर्भिन्नो रथः सादी हयो गजः ॥ ४१ ॥
आदीप्तमिव तत्सैन्यं शरैश्छिन्नतनुच्छदम् ।
आसीत्स्वशोणितक्लिन्नं फुल्लाशोकवनं यथा ॥ ४२ ॥
तं दृष्ट्वा कुरवस्तत्र विक्रान्तं सव्यसाचिनम् ।
निराशाः समपद्यन्त सर्वे कर्णस्य जीविते ॥ ४३ ॥
अविषह्यं तु पार्थस्य शरसम्पातमाहवे ।

सेना मरनेसे बची सो उत्साह रहित और शस्त्रोंसे व्याकुल होकर इधर उधर भागने लगी ॥ उस सेनाकी ऐसी दशा देख अर्जुनने प्राण नाशक बाण चलाये॥ जैसे फूले हुए कदब केसरोंसे शोभित होते हैं, ऐसेही अर्जुनके बाणोंसे विद्ध हुए मनुष्य, हाथी और घोडे दीखने लगे ॥ ( ३६-३८ )

हे महाराज ! उस समय अर्जुनके बाणोंसे व्याकुल तुम्हारी सेनाके हाथी, घोडे और मनुष्योंका घोर शब्द होने लगा ॥ तुम्हारी सेनामें हाहाकार होने लगा, एक मनुष्य दूसरेकी आड लेनेकी इच्छा करने लगा ॥ थोडे समयमें वह सब सेना कुम्हारके चाकके समान घूमने लगी ॥ यह महाबलवान् पाण्डवोंके सङ्ग कौरवोंका घोर युद्ध हुआ, ऐसा हाथी या घोडा कोई न था, कि जिसके शरीर में शस्त्र न लगा हो ॥ ( ३९-४१ )

जैसे फूले हुए अशोकोंका वन शोभित होता है, ऐसेही रुधिरमें भीगी, बाणोंसे व्याकुल, टूटे कवचवाली तुम्हारी सेना दीखने लगी ॥ सब कौरवोंने अर्जुनके इस पराक्रमको देखकर कर्णके जीनेकी आशा छोड दी ॥ अर्जुनके बाणोंको न सहकर और अर्जुनसे हारकर कौरवोंकी

जज्वाल कर्णस्य सुतोऽतिमात्रमिद्धो यथाज्याहुतिभिर्हुताशः॥ २२ ॥
कर्णस्य पुत्रो नकुलस्य राजन्सर्वानश्वानक्षिणोदुत्तमास्त्रैः ।
वनायुजान्वै नकुलस्य शुभ्रानुदग्रगान्हेमजालावनद्धान् ॥ २३ ॥
ततो हताश्वादवरुह्य यानादादाय चर्मामलरुक्मचन्द्रम् ।
आकाशसङ्काशमसिं प्रगृह्य दोधूयमानः खगवच्चचार ॥ २४ ॥
ततोऽन्तरिक्षे च रथाश्वनागं चिच्छेद तूर्णं नकुलश्चित्रयोधी ।
ते प्रापतन्नसिना गां विशस्ता यथाश्वमेधे पशवः शमित्रा ॥ २५ ॥
द्विसाहस्राः पातिता युद्धशौण्डा नानादेश्याः सुभृताः सत्यसन्धाः ।
एकेन सङ्ख्ये नकुलेन कृत्ता जयेप्सुनानुत्तमचन्दनाङ्गाः ॥ २६ ॥
तमापतन्तं नकुलं सोऽभिपत्य समन्ततः सायकैः प्रत्यविध्यत् ।
स तुद्यमानो नकुलः पृषत्कैर्विव्याध वीरं स चुकोप विद्धः ॥ २७ ॥
महाभये रक्ष्यमाणो महात्मा भ्रात्रा भीमेनाकरोत्तत्र भीमम् ।
तं कर्णपुत्रो व्यधमन्तमेकं नराश्वमातङ्गरथाननेकान् ॥ २८ ॥
क्रीडन्तमष्टादशभिः पृषत्कैर्विव्याध वीरं नकुलं सरोषः ।

---

अनेक दिव्य बाण चलाये॥ जैसे आहुति देनेसे अग्नि बढती है ऐसे ही अपनी बुद्धि, बल और बाण लगने और क्रोधसे कर्णका पुत्र प्रकाशित होने लगा॥ ( २०-२२ )

अनन्तर कर्णके पुत्रने सोनेके जाल-वाले शीघ्रगामी अति उत्तम बाणोंसे नकुलके सफेद घोडोंको मार डाला तब नकुल उस मरे हुए घोडोंवाले रथसे आकाशके समान निर्मल चन्द्रमाके समान चमकते हुए खड्ग और ढाल लेकर कूदे और खड्गको घुमाते हुए उस युद्धमें पक्षीके समान घूमने लगे, तब विचित्र योद्धा नकुलने कूद कूद कर अनेक हाथी, घोडे और मनुष्योंको मार डाला, वह सब इस प्रकार मर मरकर पृथ्वीमें गिरे, जैसे शमिताके हाथसे अश्वमेध यज्ञमें पशु॥ ( २३-२५ )

एकले नकुलने अपनी विजयके लिये अनेक देशोंके उत्पन्न हुए महा योद्धा, सत्यवादी चन्दन आदिसे विभूषित दो सहस्र क्षत्रियोंको मारा॥ इस प्रकार युद्ध करते नकुलके शरीरमें कर्णके पुत्रने अनेक बाण मारे, उन बाणोंके लगनेसे वीर नकुलको और भी क्रोध चढा। तब भीमसेनसे रक्षित नकुलने भयानक कर्म किया। लीलासे अनेक मनुष्य, घोडे, हाथी और रथोंको विद्ध करतेहुए एकले नकुलको देख कर्ण पुत्रने क्रोधमें नकुलके शरीरमें अठारह तेजबाण मारे। २६-२८

तान्प्रद्रुतान्कुरून्दृष्ट्वा कर्णः शस्त्रभृतां वरः ।
सञ्चिन्तयित्वा पार्थस्य वधे दध्रे मनः श्वसन् ॥ ५३ ॥
विस्फार्य सुमहच्चापं ततश्चाधिरथिर्वृषः ।
पञ्चालान्पुनराधावत्पश्यतः सव्यसाचिनः ॥ ५४ ॥
ततः क्षणेन क्षितिपाः क्षतजप्रतिमेक्षणाः ।
कर्णं ववर्षुर्बाणौघैर्यथा मेघा महीधरम् ॥ ५५ ॥
ततः शरसहस्राणि कर्णमुक्तानि मारिष ।
व्ययोजयन्त पञ्चालान्प्राणैः प्राणभृतां वर ॥ ५६ ॥
ततः शब्दो महानासीत्पञ्चालानां महामते ।
वध्यतां सूतपुत्रेण मित्रार्थे मित्रगृद्धिना ॥ ५७ ॥ [४१६५]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां कर्णपर्वणि सकुरुयुद्धे एकाशीतितमोऽध्यायः ॥८१॥

सञ्जय उवाच— ततः कर्णः कुरुषु प्रद्रुतेषु वरूथिना श्वेतहयेन राजन् ।
पाञ्चालपुत्रान्व्यधमत्सूतपुत्रो महेषुभिर्वात इवाभ्रसङ्घान् ॥ १ ॥
सूतं रथादञ्जलिकैर्निपात्य जघान चाश्वाञ्जनमेजयस्य ।
शतानीकं सुतसोमं च भल्लैरवाकिरद्धनुषी चाप्यकृन्तत् ॥ २ ॥
धृष्टद्युम्नं निर्बिभेदाथ षड्भिर्जघानाश्वांस्तरसा तस्य संख्ये ।

---

उन सब कौरवोंको भागते देख शस्त्र धारीयोंमें श्रेष्ठ कर्णने सांस लेकर अर्जुनके मारनेका विचार किया ॥ तब अधिरथपुत्र कर्ण अपने धनुष पर टङ्कार देकर अर्जुनके आगेसे पाञ्चाल सेनाकी ओर दौडे ॥ जैसे अनेक मेघ पर्वत पर जल वर्षाते है, ऐसे ही पाण्डवोंकी ओरके अनेक राजा क्रोधसे लाल नेत्र करके कर्णके ऊपर बाण वर्षाने लगे ॥(५३-५५)

हे मनुष्य श्रेष्ठ ! तब कर्णने भी अपने बाणोंसे सहस्रों पांचालोंको मार डाला॥ हे बुद्धिमानोंमें श्रेष्ठ ! उस समय मित्रके लिये युद्ध करते हुए कर्णके बाणोंसे व्याकुल पांचाल सेनाका घोर शब्द होने लगा ॥ (५६-५७) [४१६५]

कर्णपर्वमें एकासी अध्याय समाप्त ।

कर्णपर्वमें बियासी अध्याय ।

सञ्जय बोले, हे राजन् ! जैसे वायु मेघोंको व्याकुल कर देता है, तैसे ही सूतपुत्र कर्णने अपने बाणोंसे पांचाल देशीय राजपुत्रोंको व्याकुल कर दिया। कर्णने अपने बाणोंसे राजपुत्र शतानीक और सुतसोमके घोडे और सारथीको मारकर धनुष काट दिया, फिर उनके शरीरमें अनेक बाण मारे, तब धृष्टद्युम्नके शरीरमें छः बाण मार कर उनके घोडे

महारथावेकरथे समेतौ शरैः प्रभिन्दन्निव पाण्डवेयौ ॥ ३७ ॥
तस्मिन्रथे निहते पाण्डवस्य क्षिप्रं च खड्गे विशिखैर्निकृत्ते ।
अन्ये च संहत्य कुरुप्रवीरास्ततो भ्यघ्नञ्शरवर्षैरुपेत्य ॥ ३८ ॥
तौ पाण्डवेयौ परितः समेतान्संहूयमानाविव हव्यवाहौ ।
भीमार्जुनौ वृषसेनाय क्रुद्धौ ववर्षतुः शरवर्षं सुघोरम् ॥ ३९ ॥
अथाब्रवीन्मारुतिः फाल्गुनं च पश्यस्वैनं नकुलं पीड्यमानम् ।
अयं च नो बाधते कर्णपुत्रस्तस्माद्भवान्प्रत्युपयातु कार्णिम् ॥ ४० ॥
स तन्निशम्यैव वचः किरीटी रथं समासाद्य वृकोदरस्य ।
अथाब्रवीन्नकुलो वीक्ष्य वीरमुपागतं शातय शीघ्रमेनम् ॥ ४१ ॥
इत्येवमुक्तः सहसा किरीटी भ्रात्रा समक्षं नकुलेन संख्ये ।
कपिध्वजं केशवसंगृहीतं प्रैषदुदग्रो वृषसेनाय वाहम् ॥ ४२ ॥[४२९५]

इति श्रीमहाभारते० कर्णपर्वणि वृषसेनयुद्धे नकुलपराजये चतुरशीतितमोऽध्यायः ॥ ८४ ॥

सञ्जय उवाच– नकुलमथ विदित्वा छिन्नबाणासनासिं
विरथमरिशरार्तं कर्णपुत्रास्त्रभग्नम् ।
पवनधुतपताकाह्रादिनो वल्गिताश्वा वरपुरुषनियुक्तास्ते रथैः शीघ्रमीयुः ॥ १ ॥

कर चढे, जैसे सिंह पर्वतपर चढे ॥ तब वीर वृषसेनने महा क्रोध करके एक रथ पर बैठे दोनों महारथोंपर अनेक वाण वर्षाये ॥ ( ३५-३७ )

जब वीर नकुलका खड्ग और रथ कट गया, तब अनेक कौरव इकठ्ठे होकर वाण वर्षाते हुए उन पर दौडे ॥ तब भीमसेन और अर्जुन भी अग्निके समान क्रोधसे भरकर कौरवोंकी ओर अनेक वाण चलाने लगे ॥ तब भीमसेनने अर्जुनसे कहा, इस कर्णके पुत्रने हमारी सेना और नकुलको बहुत व्याकुल किया है, इस [illegible] ये आप इससे युद्ध करने को आइये [illegible] तब अर्जुनने अपने रथको भीमसेनके रथके पास पहुंचा दिया, तब नकुलने अर्जुनसे कहा कि, इस वृषसेनको आप ही मारिये। भीमसेनके आगे नकुलके ऐसे वचन सुन अर्जुनने वानर ध्वजा और कृष्ण सारथी वाला रथ वृषसेनकी ओर शीघ्र चलाया ॥ ( ३८– ४२ ) [४२९५]

कर्णपर्वमें चौरासी अध्याय समाप्त ।

कर्णपर्वमें पचासी अध्याय ।

नकुलको खड्ग, धनुप और रथसे हीन सुनकर तथा वृषसेनके बाणोंसे व्याकुल जानकर द्रुपदके पांचों महारथ पुत्र, सात्यकी और द्रौपदीके पांचों पुत्र ध्वजा उडाते घोडोंको कुदाते रथोंपर

अपाञ्चाल्यं क्रियते याहि पार्थ कर्णं जहीत्यब्रवीद्राजसिंह ॥ १० ॥
ततः प्रहस्याशु नरप्रवीरो रथं रथेनाधिरथेर्जगाम ।
भये तेषां त्राणमिच्छन्सुबाहुरभ्याहतानां रथयूथपेन ॥ ११ ॥
विस्फार्य गाण्डीवमथोग्रघोषं ज्यया समाहत्य तले भृशं च ।
बाणान्धकारं सहसैव कृत्वा जघान नागाश्वरथध्वजांश्च ॥ १२ ॥
प्रतिश्रुतः प्राहरदन्तरिक्षे गुहा गिरीणामपतन्वयांसि ।
यन्मण्डलज्येन विजृम्भमाणो रौद्रे मुहूर्तेऽभ्यपतत्किरीटी ॥१३॥
तं भीमसेनोऽनुययौ रथेन पृष्ठे रक्षन्पाण्डवमेकवीरः ।
तौ राजपुत्रौ त्वरितौ रथाभ्यां कर्णाय यातावरिभिर्विषक्तौ ॥१४॥
तत्रान्तरे सुमहान्सूतपुत्रश्चक्रे युद्धं सोमकान्सम्प्रगृह्य ।
रथाश्वमातङ्गगणाञ्जघान प्रच्छादयामास शरैर्दिशश्च ॥ १५ ॥
तमुत्तमौजा जनमेजयश्च क्रुद्धौ युधामन्युशिखण्डिनौ च ।
कर्णं विभेदुः सहिताः पृषत्कैः सन्नर्दमानाः सह पार्षतेन ॥ १६ ॥
ते पञ्च पञ्चालरथप्रवीरा वैकर्तनं कर्णमभिद्रवन्तः ।
तस्माद्रथाच्च्यावयितुं न शेकुर्धैर्यात्कृतात्मानमिवेन्द्रियार्थाः॥ १७ ॥
तेषां धनूंषि ध्वजवाजिसूतांस्तूर्णं पताकाश्च निकृत्य बाणैः ।

पुत्र ! कर्ण पाञ्चालोंका नाश किये देता है, इसलिये तुम चल कर उसे जीतो। तब पुरुषसिंह अर्जुनने हंसकर अपनी सेनाकी रक्षाके लिये और कर्णको मारनेके लिये चले और गाण्डीव धनुषके रोदेपर घोर टंकार देकर हाथी, घोडे, और मनुष्योंको मारकर बाणोंका अन्धकार कर दिया। जिस समय अर्जुन कर्णसे युद्ध करनेको चले उस समय रौद्रमुहूर्त्त था, उस धनुषके शब्दसे ऐसी प्रतिध्वनि हुई मानो पर्वतोंकी गुफा फटने लगी। इनके पीछे रक्षा करते हुए महावीर भीमसेन चले, ये दोनों शत्रुनाशन राजपुत्र कर्णको मारने चले॥ (१०-१४)

इसी बीचमें महारथ सूतपुत्रने सोमक और पांचालोंसे घोर युद्ध किया। पाण्डवोंकी ओरसे भी क्रोध करके उत्तमौजा, जनमेजय युधामन्यु, शिखण्डी और धृष्टद्युम्न युद्ध करने लगे॥ जैसे महात्मा आत्मज्ञानी मनुष्यको इन्द्रियोंके विषय नहीं जीत सकते, ऐसे ही पाञ्चाल देशी पांच वीर महारथ कर्णके धैर्य और रथको न तोड सके। (१५-१७)

इन सबके घोडे, सारथी और ध्वजाओंको अपने तेज बाणोंसे काट कर कर्ण

अथाभवद्युद्धमतीव दारुणं पुनः कुरूणां सह पाण्डुसृञ्जयैः ।
शरासिशक्त्यृष्टिगदापरश्वधैर्नराश्वनागासुहरं भृशाकुलम् ॥ ९ ॥
रथाश्वमातङ्गपदातिभिस्ततः परस्परं विप्रहताः पतन्क्षितौ ।
यथा सविद्युत्स्तनिता बलाहकाः समाहता दिग्भ्य इवोग्रमारुतैः॥ १० ॥
ततः शतानीकमतान्महागजांस्तथा रथान्पत्तिगणांश्च तान्बहून् ।
जघान भोजस्तु हयानथापतन्क्षणाद्विशस्ताः कृतवर्मणः शरैः ॥ ११ ॥
अथापरे द्रौणिहता महाद्विपास्त्रयः ससर्वायुधयोधकेतनाः ।
निपेतुरुर्व्यां व्यसवो निपातितास्तथा यथा वज्रहता महाचलाः ॥ १२ ॥
कुलिन्दराजावरजादनन्तरः स्तनान्तरे पत्रिवरैरताडयत् ।
तवात्मजं तस्य तवात्मजः शरैः शितैः शरीरं व्यहनद् द्विपं च तम्॥१३॥
स नागराजः सह राजसूनुना पपात रक्तं बहु सर्वतः क्षरन् ।
महेन्द्रवज्रप्रहतोऽम्बुदागमे यथा जलं गैरिकपर्वतस्तथा ॥ १४ ॥
कुलिन्दपुत्रप्रहितोऽपरो द्विपः क्राथंससूताश्वरथं व्यपोथयत् ।
ततोऽपतत्क्राथशराभिघातितः सहेश्वरो वज्रहतो यथा गिरिः ॥ १५ ॥

सेना बहुत प्रसन्न हुई, सब योद्धा शंख बजाने लगे । फिर बाण वर्षाते हुए कुलिन्द देशकी सेनापर दौडे ॥ तब पाञ्चाल, सृञ्जय और कौरवोंका घोर युद्ध होने लगा। अनेक शक्ति, खड्ग, गदा और बाण चलने लगे। तथा हाथी, घोडे, और मनुष्य मरने लगे ॥ जैसे बडी आंधी चलनेसे बिजलीके सहित मेघ सब दिशाओंमें गिरने लगते है, ऐसे ही शस्त्रधारी हाथी, घोडे, और रथों पर चढे तथा पैदल योद्धा मर मर कर गिरने लगे ॥ (८-१०)

तब शतानीककी सेनाके मतवाले हाथियोंको और रथी तथा अनेक पदातियोंको कृतवर्माने मारकर पृथ्वीमें गिरा दिया, तब अश्वत्थामाने भी वीर और महावतोंके सहित तीन मतवाले हाथियोंको मारकर इस प्रकार पृथ्वीमें गिरा दिया, जैसे इन्द्र अपने वज्रसे काटकर पर्वतोंको गिराते है ॥ कुलिन्द राजके तीसरे भाईने तुम्हारे पुत्रके शरीरमें अनेक बाण मारे, उन्होंने भी अपने तेज बाणोंसे उसे हाथीके समेत मारकर गिरा दिया ॥ दुर्योधनके बाण लगनेसे वह हाथी राजपुत्रके सहित भूमिपर गिरपडा और उस हाथी के शरीरसे इस प्रकार रुधिर बहने लगा, जैसे वर्षाकाल में गेरु के पर्वत से जल बहता है ॥ (११-१४)

तीसरे कुलिन्द राजपुत्रके हाथीने

स तैश्चतुर्भिर्युयुधे युद्धसत्तमो दिगीश्वरैर्दैत्यपतिर्यथा तथा ॥ २५ ॥
समाततेनेष्वसनेन कूजता भृशाग्रतेनामितबाणवर्षिणा ।
बभूव दुर्धर्षतरः स सात्यकिः शरन्नभोमध्यगतो यथा रविः ॥ २६ ॥
पुनः समास्थाय रथान्सुदंशिताः शिनिप्रवीरं जुगुपुः परन्तपाः ।
समेत्य पञ्चालमहारथा रणे मरुद्गणाः शक्रमिवारिनिग्रहे ॥ २७ ॥
ततोऽभवद्युद्धमतीव दारुणं तवाहितानां तव सैनिकैः सह ।
रथाश्वमातङ्गविनाशनं तथा यथा सुराणामसुरैः पुराभवत् ॥ २८ ॥
रथा द्विपा वाजिपदातयस्तथा भवन्ति नानाविधशस्त्रवेष्टिताः ।
परस्परेणाभिहताश्च चस्खलुर्विनेदुरार्ता व्यसवोऽपतंस्तथा ॥ २९ ॥
तथागतं भीममभीस्तवात्मजः ससार राजावरजः किरञ्शरैः ।
तमभ्यधावत्त्वरितो वृकोदरो महारुरुं सिंह इवाभिपेदिवान् ॥ ३० ॥
ततस्तयोर्युद्धमतीव दारुणं प्रदीव्यतोः प्राणदुरोदरं द्वयोः ।
परस्परेणाभिनिविष्टरोषयोरुदग्रयोः शम्बरशक्रयोर्यथा ॥ ३१ ॥
शरैः शरीरार्तिकरैः सुतेजनैर्निजघ्नतुस्तावितरेतरं भृशम् ।

अकेले सात्यकि भी इन चारो वीरोंसे इस प्रकार लडे, जैसे चार लोकपालोंसे दैत्यराज लडे,जैसे आकाशमें सूर्य शीघ्र चलते है, ऐसे ही उस समय घोर धनुषधारी सात्यकि धनुष टङ्कारते हुए उस युद्धभूमिमें घूमने लगे॥ उस समय वाण वर्षाते हुए सात्यकिकी ओर कोई नहीं देख सक्ता था। जैसे दैत्योंसे लडते हुए इन्द्रकी रक्षा करनेको मरुत नामक देवता दौडते हैं, ऐसे ही उत्तम रथोंपर चढ कर महारथ पाञ्चाल देशी अनेक योद्धा सात्यकिकी रक्षा करनेको इकट्ठे होकर आये॥ जैसे पहले समयमें देवता और राक्षसोंका घोर युद्ध हुआ था, वैसाही यह युद्ध भी हुवा॥ २५-२८

उस समय रथ, घोडे हाथी और मनुष्य दुःखसे पीडित होकर घोर शब्द करने लगे, और मर मर कर पृथ्वीमें गिरने लगे॥ उसी समय दुर्योधनके छोटे भाई तुम्हारे पुत्र दुःशासन वेडर होकर वाण वर्षाते हुए भीमसेनकी ओर दौडे। भीमसेन भी दुःशासनकी ओर इस प्रकार चले, जैसे महासिंह छोटे हरिण पर दौडे॥ ( २९-३० )

तब ये दोनों क्रोधमें भरकर प्राणोंकी आशा छोड कर महाघोर बाणोंसे इस प्रकार युद्ध करने लगे, जैसे पहले समयमें वीर शंबर और इन्द्र लडे थे॥ जैसे एक हथिनीके लिये दो काममोहित हाथी युद्ध करते हैं, ऐसे ही ये

त्रिभिश्च भीमं नकुलं च सप्तभिर्जनार्दनं द्वादशभिश्च सायकैः ॥ २२ ॥
तदस्य कर्मातिमनुष्यकर्मणः समीक्ष्य हृष्टाः कुरवोऽभ्यपूजयन् ।
पराक्रमज्ञास्तु धनञ्जयस्य ये हुतोऽयमग्नाविति ते तु मेनिरे ॥२३ ॥
ततः किरीटी परवीरघाती हताश्वमालोक्य नरप्रवीरः ।
माद्रीसुतं नकुलं लोकमध्ये समीक्ष्य कृष्णं भृशविक्षतं च॥ २४ ॥
समभ्यधावद्वृषसेनमाहवे स सूतजस्य प्रमुखे स्थितस्तदा ।
तमापतन्तं नरवीरमुग्रं महाहवे बाणसहस्रधारिणम् ॥ २५ ॥
अभ्यापतत्कर्णसुतो महारथं यथा महेन्द्रं नमुचिः पुरा तथा ।
ततो द्रुतं चैकशरेण पार्थं शितेन विध्वा युधि कर्णपुत्रः ॥ २६ ॥
ननाद नादं सुमहानुभावो विध्वेव शक्रं नमुचिः स वीरः।
पुनः स पार्थं वृषसेन उग्रैर्बाणैरविद्धयद्भुजमूले तु सव्ये ॥ २७ ॥
तथैव कृष्णं नवभिः समार्दयत्पुनश्च पार्थं दशभिर्जघान ।
पूर्वं यथा वृषसेनप्रयुक्तैरभ्याहतः श्वेतहयः शरैस्तैः ॥ २८ ॥
संरम्भमीषद्गमितो वधाय कर्णात्मजस्याथ मनः प्रदध्रे ।
ततः किरीटी रणमूर्ध्नि कोपात्कृत्वा त्रिशाखां भ्रुकुटिं ललाटे ॥ २९ ॥
मुमोच तूर्णं विशिखान्महात्मा वधे धृतः कर्णसुतस्य सङ्ख्ये ।

---

शतानीक के शरीर में तीन, अर्जुनके तीन,कृष्णके बारह, भीमसेनके तीन और नकुलके सात बाण मारे ॥ (२०–२२)

वृषसेनका यह अमानुप कर्म देख सब कौरव बडे प्रसन्न हुए परन्तु अर्जुनके पराक्रम जाननेवाले वीरोंने जाना कि यह आगमें घी पड रहा है ॥ तब शत्रुनाशन अर्जुन अपने भाई नकुलको सब सेनाके बीचमें रथहीन और कृष्णको घावोंसे व्याकुल देख कर्णके आगे वृपसेनकी ओर दौडे। सहस्रों बाणधारी महापराक्रमी वीर अर्जुनको अपनी ओर आते देख वीर वृपसेन इस प्रकार दौडे जैसे पहले समयमें नमुची इन्द्रकी ओर दौडा था। (२३–२६)

तब वीर कर्णपुत्रने एक तेज बाण अर्जुनके हृदयमें मारा, फिर वेगसे इस प्रकार गर्जे जैसे इन्द्रके शरीरमें बाण मारकर नमुची गर्जे थे, फिर अर्जुनके शरीरमें अनेक तेज बाण मारे,फिर कृष्णके शरीरमें नौ बाण मारकर अर्जुनके शरीरमें पहलेके समान दस बाण मारे ॥ (२६—२८)

तब अर्जुनने कर्णपुत्रको मारनेके लिये युद्धमें क्रोधसे भौंह टेढी की, फिर शस्त्र छोडकर और यमराजके समान

ततः क्रुद्धो भीमसेनस्तरस्वी शक्तिं चोग्रां प्राहिणोत्ते सुताय ।
तामापतन्तीं सहसातिघोरां दृष्ट्वा सुतस्ते ज्वलितामिवोल्काम् ॥ ३ ॥
आकर्णपूर्णैरिषुभिर्महात्मा चिच्छेद पुत्रो दशभिः पृषत्कैः ।
दृष्ट्वा तु तत्कर्म कृतं सुदुष्करं प्रापूजयन्सर्वयोधाः प्रहृष्टाः ॥ ४ ॥
अथाशु भीमं च शरेण भूयो गाढं स विव्याध सुतस्त्वदीयः ।
चुक्रोध भीमः पुनराशु तस्मै भृशं प्रजज्वाल रुषाभिवीक्ष्य ॥ ५ ॥
विद्धोऽस्मि वीराशु भृशं त्वयाद्य सहस्व भूयोऽपि गदाप्रहारम् ।
उक्त्वैवमुच्चैः कुपितोऽथ भीमो जग्राह तां भीमगदां वधाय ॥ ६ ॥
उवाच चाद्याहमहं दुरात्मन्पास्यामि ते शोणितमाजिमध्ये ।
अथैवमुक्तस्तनयस्तवोग्रां शक्तिं वेगात्प्राहिणोन्मृत्युरूपाम् ॥ ७ ॥
आविध्य भीमोऽपि गदां सुघोरां विचिक्षिपे रोषपरीतमूर्तिः ।
सा तस्य शक्तिं सहसा विरुज्य पुत्रं तवाजौ ताडयामास मूर्ध्नि ॥ ८ ॥
स विक्षरन्नाग इव प्रभिन्नो गदामस्मै तुमुले प्राहिणोद्वै ।
तयाहरद्दश धन्वन्तराणि दुःशासनं भीमसेनः प्रसह्य ॥ ९ ॥
तया हतः पतितो वेपमानो दुःशासनो गदया वेगवत्या ।
विध्वस्तवर्माभरणाम्बरस्रग् विचेष्टमानो भृशवेदनातुरः ॥ १० ॥

तब तेजस्वी भीमसेनने क्रोध करके एक जलती हुई बिजलीके समान शक्ति दुःशासनकी ओर चलाई। उसे आते देख तुम्हारे पुत्रने कानतक खींच कर दश बाण मारे और उनसे वह शक्ति कटकर पृथ्वीमें गिर गई ॥ ( ३–४ )

दुःशासनका यह कर्म देखकर सब योद्धा प्रसन्न होकर दुःशासनकी प्रशंसा करने लगे तब फिर एक तेज बाण उन्होंने भीमसेनके हृदयमें मारा। उसके लगनेसे भीमसेन क्रोध करके बोले, हे वीर ! हम तुम्हारे बाणोंसे अत्यन्त व्याकुल होगये अब तुम भी हमारी गदाका एक प्रहार सहो, ऐसा कह भीमसेनने दुःशासनके मारनेको गदा उठाई और बोले कि, हे दुरात्मा ! अब हम तेरा इन सब वीरोंके देखते ही रुधिर पीयेंगे। (४–७)

भीमसेनके ऐसे वचन सुन दुःशासनने एक मृत्युके समान घोररूपी शक्ति चलाई तब भीमसेनने क्रोध करके गदाको घुमाया उससे दुःशासकी शक्ति टूट गई और गदा उनके शिरमें लगी उसके लगनेसे दुःशासनके शिरसे रुधिर बहने लगा और दश धनुष पीछे जाकर गिरा। उस वेगवती गदाके लगनेसे कांपते हुए दुःशासन कवच, माला

सम्प्रेक्ष्य बाणाभिहतं पतन्तं रथात्सुतं सूतजः क्षिप्रकारी॥ ३८॥
रथं रथेनाशु जगाम रोषात्किरीटिनः पुत्रवधाभितप्तः।
ततः समक्षं स्वसुतं विलोक्य कर्णो हतं श्वेतहयेन सङ्ख्ये।
संरम्भमागम्य परं महात्मा कृष्णार्जुनौ सहसैवाभ्यधावत्॥३९॥ ४३३४

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां कर्णपर्वणि वृषसेनवधे पञ्चाशीतितमोऽध्यायः॥८५॥

सञ्जय उवाच— तमायान्तमभिप्रेक्ष्य वेलोद्वृत्तमिवार्णवम्।
गर्जन्तं सुमहाकायं दुर्निवारं सुरैरपि ॥ १॥
अर्जुनं प्राह दाशार्हः प्रहस्य पुरुषर्षभः।
अयं स रथ आयाति श्वेताश्वः शल्यसारथिः ॥ २॥
येन ते सह योद्धव्यं स्थिरो भव धनञ्जय।
पश्य चैनं समायुक्तं रथं कर्णस्य पाण्डव ॥ ३॥
श्वेतवाजिसमायुक्तं युक्तं राधासुतेन च।
नानापताकाकलिलं किङ्किणीजालमालिनम् ॥ ४॥
उह्यमानमिवाकाशे विमानं पाण्डुरैर्हयैः।
ध्वजं च पश्य कर्णस्य नागकक्षं महात्मनः ॥ ५॥
आखण्डलधनुःप्रख्यमुल्लिखन्तमिवाम्बरम्।
पश्य कर्णं समायान्तं धार्तराष्ट्रप्रियैषिणम् ॥ ६॥

ऐसेही अर्जुनका बाण लगनेसे कर्णका पुत्र पृथ्वीमें गिरा। उसको रथसे गिरता देख बलवान् कर्ण शोक और क्रोधमें भर कर अर्जुनको मारने दौडे। महात्मा कर्ण क्रोधमें भरकर कृष्ण और अर्जुनको मारने चले॥ ( ३५-३९ ) [४३३४]

कर्णपर्वमें पचासी अध्याय समाप्त।

कर्णपर्वमें छियासी अध्याय।

सञ्जय बोले, हे राजन्! उस समुद्रके समान बडे शरीरवाले सूतपुत्रको अपनी ओर आते देख और देवतोंसे भी न हारने योग्य जानकर श्रीकृष्णने अर्जुनसे कहा, यह सफेद घोडे और शल्य सारथीवाला कर्णका रथ चला आता है। हे पाण्डव अर्जुन! अब तुम सावधान हो! आज इसीसे तुम्हें युद्ध करना होगा। यह सफेद घोडेवाला राधापुत्र कर्ण अनेक पताका और अनेक घोडोंवाला रथ, तुम्हारे पास ही आगया, ये देखो यह कर्णका सफेद घोडोंवाला रथ आकाशमें उडते विमानके समान चला, आता है। ( १-५ )

ये सांप युक्त कर्णकी ध्वजा फहरा रही है। इस समय हम अत्यन्त ऊंची

तस्य पार्थ प्रसादेन देवदेवस्य शूलिनः ॥ १५ ॥
जहि कर्णं महाबाहो नमुचिं वृत्रहा यथा।
श्रेयस्तेऽस्तु सदा पार्थ युद्धे जयमवाप्नुहि ॥ १६ ॥

अर्जुन उवाच— ध्रुव एव जयः कृष्ण मम नास्त्यत्र संशयः।
सर्वलोकगुरुर्यस्त्वं तुष्टोऽसि मधुसूदन ॥ १७ ॥
चोदयाश्वान्हृषीकेश रथं मम महारथ।
नाहत्वा समरे कर्णं निवर्तिष्यति फाल्गुनः ॥ १८ ॥
अद्य कर्णं हतं पश्य मच्छरैः शकलीकृतम्।
मां वा द्रक्ष्यसि गोविन्द कर्णेन निहतं शरैः ॥ १९ ॥
उपस्थितमिदं घोरं युद्धं त्रैलोक्यमोहनम्।
यज्जनाः कथयिष्यन्ति यावद्भूमिर्धरिष्यति ॥ २० ॥
एवं ब्रुवंस्तदा पार्थः कृष्णमक्लिष्टकारिणम्।
प्रत्युद्ययौ रथेनाशु गजं प्रति गजो यथा ॥ २१ ॥
पुनरप्याह तेजस्वी पार्थः कृष्णमरिन्दम।
चोदयाश्वान्हृषीकेश कालोऽयमतिवर्तते।
एवमुक्तस्तदा तेन पाण्डवेन महात्मना ॥ २२ ॥

है। और सब देवताओंसे वरदान पाये हैं, तुम देवदेव महादेव की कृपासे कर्णको इस प्रकार जीतो जैसे इन्द्रने नमुचीको जीता था। हे अर्जुन! हे महाबाहो! तुम्हारी सदा कल्याण हो अब युद्धमें विजय करो॥ (१३-१६)

अर्जुन बोले, हे मधुनामक दानवके मारनेवाले कृष्ण! जब तीनलोकके कर्त्ता आप मुझपर प्रसन्न हुए तो युद्धमें निश्चय ही मेरी जीत होगी। मैं कदापि नहीं हारूंगा॥ हे महारथ कृष्ण! आप यह निश्चय जान लीजिये कि कर्णके मारे विना आज अर्जुन नहीं लौटेंगे, अब आप हमारे घोडोंको प्रेरित किजिये॥ हे गोविन्द! अब आप हमारे बाणोंसे कर्णको अथवा कर्णके बाणोंसे हमें मरा देखेंगे, आज यह ऐसा घोर युद्ध होगा कि जबतक पृथ्वी रहेगी तबतक इसका वर्णन भी रहेगा॥ (१७-२०)

महारथ कृष्णसे ऐसा कहकर अर्जुन कर्णकी ओर इस प्रकार चले, जैसे मतवाला हाथी मतवाले हाथीपर दौडे॥ फिर अर्जुनने श्रीकृष्णसे कहा। हे कृष्ण! बहुत समय नष्ट हुआ जाता है घोडोंको शीघ्र हांको। महात्मा पाण्डवके ऐसे वचन सुनकर श्रीकृष्णने पाण्डवोंकी

निगृह्य दुःशासनमेकवीरः सुयोधनस्याधिरथेः समक्षम् ॥ १८ ॥
रथादवप्लुत्य गतः स भूमौ यत्नेन तस्मिन्प्रणिधाय चक्षुः ।
असिं समुद्यम्य सितं सुधारं कण्ठे पदाक्रम्य च वेपमानम् ॥ १९ ॥
उवाच तद्गौरिति यद् ब्रुवाणो हृष्टो वदे· कर्णसुयोधनाभ्याम् ।
ये राजसूयावभृथे पवित्रा जाताः कचा याज्ञसेन्या दुरात्मन् ॥ २० ॥
ते पाणिना कतरेणावकृष्टास्तद् ब्रूहि त्वां पृच्छति भीमसेनः ।
श्रुत्वा तु तद्भीमवचः सुघोरं दुःशासनो भीमसेनं निरीक्ष्य ॥ २१ ॥
जज्वाल भीमं स तदा स्मयन संशृण्वतां कौरवसोमकानाम् ।
उक्तस्तदाजौ स तथा सरोषं जगाद भीमं परिवर्तनेत्रः ॥ २२ ॥

अयं करिकराकारः पीनस्तनविमर्दनः ।
गोसहस्रप्रदाता च क्षत्रियान्तकरः करः ॥ २३ ॥
अनेन याज्ञसेन्या मे भीम केशा विकर्षिताः ।
पश्यतां कुरुमुख्यानां युष्माकं च सभासदाम् ॥ २४ ॥

एवं ब्रुवाणं राजसुतं निशम्य ब्रुवन्तमाजौ विनिपीड्य वक्षः ।
भीमो बलात्तं प्रतिगृह्य दोर्भ्यामुच्चैर्ननादाथ समस्तयोधान् ॥ २५ ॥
उवाच यस्यास्ति बलं स रक्षत्वसौ भवेदद्य निरस्तबाहुः ।

---

हाथी को पकड लेता है, ऐसे ही बलवान् भीमसेनने दौडकर दुर्योधन और कर्णके आगे दुःशासनको पकड लिया ॥ ( १६—१८ )

अनन्तर कांपते हुए दुःशासनके गलेपर पैर रखकर खड्ग खींचा और क्रोध करके उसकी ओर देखने लगे, और क्रोध करके बोले, हे दुरात्मन्! बोल तूही है जो राजसूय यज्ञमें द्रौपदीके केश पवित्र हुए थे उनको तैने कर्ण और दुर्योधनके आगे अपने हाथसे पकडा था। अब भीमसेन पूछते हैं, कि तैने कौनसे हाथमें द्रौपदी के केशोंको पकडा था? (१९–२१)

भीमसेनके ऐसे वचन सुन और उन की ओर देख क्रोधसे कौरव और सृञ्जयोंके बीचमें राजपुत्र दुःशासनने ऐसे घोर वचन कहे, हे भीम! ये देखो हाथीकी सूंडके समान, पीनस्तन मर्दक, सहस्रों गौओंको देनेवाला और क्षत्रियोंका नाश करनेवाला यही मेरा हाथ है, जिसने प्रधान कौरव और तुम्हारे सबके देखते ही द्रौपदीके केश खींचे थे ॥ (२१-२४)

ऐसे कहते हुए, राजपुत्रकी छातीको भीमसेनने अपने हाथोंके बलसे दबाकर फिर पुकारकर सब योद्धाओंसे कहा,

तौ रथौ सम्प्रसक्तौ तु दृष्ट्वा भारत पार्थिवाः ।
सिंहनादरवांश्चक्रुः साधुवादांश्च पुष्कलान् ॥ ८ ॥
दृष्ट्वा च द्वैरथं ताभ्यां तत्र योधाः सहस्रशः ।
चक्रुर्बाहुस्वनांश्चैव तथा चैवावधूननम् ॥ ९ ॥
आजघ्नुः कुरवस्तत्र वादित्राणि समन्ततः ।
कर्णं प्रहर्षयिष्यन्तः शङ्खान्दध्मुश्च सर्वशः ॥ १० ॥
तथैव पाण्डवाः सर्वे हर्षयन्तो धनञ्जयम् ।
तूर्यशङ्खनिनादेन दिशः सर्वा व्यनादयन् ॥ ११ ॥
क्ष्वेडितास्फोटितोत्कुष्टैस्तुमुलं सर्वतोऽभवत् ।
बाहुशब्दैश्च शूराणां कर्णार्जुनसमागमे ॥ १२ ॥
तौ दृष्ट्वा पुरुषव्याघ्रौ रथस्थौ रथिनां वरौ ।
प्रगृहीतमहाचापौ शरशक्तिध्वजायुतौ ॥ १३ ॥
वर्मिणौ बद्धनिस्त्रिंशौ श्वेताश्वौ शङ्खशोभितौ ।
तूणीरवरसम्पन्नौ द्वावप्येतौ सुदर्शनौ ॥ १४ ॥
रक्तचन्दनदिग्धाङ्गौ समदौ गोवृषाविव ।
चापविद्युद्ध्वजोपेतौ शस्त्रसम्पत्तियोधिनौ ॥ १५ ॥
चामरव्यजनोपेतौ श्वेतच्छत्रोपशोभितौ ।

हे भारत! उन दोनों रथोंको एक स्थान पर खडा देख दोनों ओरके वीर सिंहोंके समान गर्जकर साधु साधु कहने लगे ॥ उन दोनोंको युद्धके लिये उपस्थित देख सब योद्धा लोग प्रसन्न होकर ताल ठोंकने लगे। कर्णके प्रसन्न करनेके लिये चारों ओरसे शङ्ख आदि बाजे बजाते हुए तुम्हारी ओरके अनेक योद्धा उनके पास गये॥ इसी प्रकार पाण्डवोंके योद्धा भी अर्जुनको प्रसन्न करनेके लिये चारों ओरसे शङ्ख आदि अनेक बाजे बजाने लगे ॥ (८-११)

उस कर्ण और अर्जुनके समागममें वीरोंके ताल और गर्जनेके शब्दसे सब दिशा पूरित होगईं ॥ उन दोनों पुरुषसिंहको धनुष, बाण, ध्वजा युक्त कवच और हत्थी पहने उत्तम शङ्ख धारण किये सफेद घोडोंके रथोंपर बैठे देख उनके सुन्दर रूपसे सब प्रसन्न होगये ॥ उत्तम लाल चंदन लगे, ध्वजा और पताकायुक्त रथोंपर बैठे, उत्तम बाणोंसे युद्ध करनेवाले, दोनों वीर ऐसे शोभित हुए जैसे दो सूर्य। ये दोनों महारथ सफेद छत्र, चमर, पङ्ख तथा कृष्ण और

भयाच्च संचुकुशुरस्त्वदीयास्ते निमीलिताक्षा ददृशुः समन्ततः ॥ ३४ ॥
तं तत्र भीमं ददृशुः समन्ताद्दौःशासनं तद्रुधिरं पिबन्तम् ।
सर्वेऽपलायन्त भयाभिपन्ना न वै मनुष्योऽयमिति ब्रुवाणाः ॥ ३५ ॥
तस्मिन्कृते भीमसेनेन रूपे दृष्ट्वा जनाः शोणितं पीयमानम् ।
सम्प्राद्रवंश्चित्रसेनेन सार्धं भीमं रक्षो भाषमाणा भयार्ताः ॥ ३६ ॥
युधामन्युं प्रद्रुतं चित्रसेनं सहानीकस्त्वभ्यगाद्राजपुत्रः ।
विव्याध चैनं निशितैः पृषत्कैर्व्यपेतभीः सप्तभिराशुमुक्तैः ॥ ३७ ॥
संक्रान्तभोग इव लेलिहानो महोरगः क्रोधविषं सिसृक्षुः ।।
निवृत्य पाञ्चालजमभ्यविध्यत्त्रिभिः शरैः सारथिमस्य षड्भिः ॥ ३८ ॥
ततः सुपुङ्खेन सुयन्त्रितेन सुसंशिताग्रेण शरेण शूरः ।
आकर्णमुक्तेन समाहितेन युधामन्युस्तस्य शिरो जहार ॥ ३९ ॥
तस्मिन्हते भ्रातरि चित्रसेने क्रुद्धः कर्णः पौरुषं दर्शयानः ।
व्यद्रावयत्पाण्डवानामनीकं प्रत्युद्यातो नकुलेनामितौजाः ॥ ४० ॥
भीमोऽपि हत्वा तत्रैव दुःशासनममर्षणम् ।
पूरयित्वाञ्जलिं भूयो रुधिरस्योग्रनिःस्वनः ॥ ४१ ॥
शृण्वतां लोकवीराणामिदं वचनमब्रवीत् ।

नहीं भगे उनके हाथसे शस्त्र गिर गये और अनेक क्षत्री आंख बन्द कर पृथ्वीमें बैठ गये, भीमसेनको दुःशासनका रुधिर पीते देख सब क्षत्री भयसे व्याकुल हो कर यह मनुष्य नहीं है; ऐसा कहते हुए भागने लगे। सब क्षत्री कहने लगे भीमसेन राक्षस है। तब राजा चित्रसेन भी युद्धको छोड भागे ॥ ( ३२-३५ )

उनको भागते देख अनेक वाण छोडते हुए निडर युधामन्यु उनके पीछे दौडे और सात वाण उनके शरीरमें मारे। जैसे चोट लगनेसे भागता हुआ विषभरा सांप किसी पर काटनेको दौडता है, ऐसे ही चित्रसेन उन वाणोंके लगनेसे लौटे और तीन वाण राजपुत्र युधामन्यु और छः वाण उनके सारथीके मारे, तब युधामन्युने क्रोध करके एक अत्यन्त वेगसे उत्तम पङ्खवाला घोर वाण कानतक खींचकर चित्रसेनपर चलाया उससे उनका शिर कटकर पृथ्वीमें गिर गया ॥ ( ३७-३९ )

अपने भाईको मरा देख कर्णको महा क्रोध हुआ, तब वे अपने वाणोंसे पाण्डवोंकी सेनाको व्याकुल करते नकुलसे युद्ध करनेको गये. भीमसेनभी दुःशासन को मारकर एक अञ्जली रुधिर लेकर

उभौ वरायुधधरावुभौ रणकृतश्रमौ ।
उभौ च बाहुशब्देन नादयन्तौ नभस्तलम् ॥ २४ ॥
उभौ विश्रुतकर्माणौ पौरुषेण बलेन च ।
उभौ च सदृशौ युद्धे शम्बरामरराजयोः ॥ २५ ॥
कार्तवीर्यसमौ चोभौ तथा दाशरथेः समौ ।
विष्णुवीर्यसमौ चोभौ तथा भवसमौ युधि ॥ २६ ॥
उभौ श्वेतहयौ राजन्रथप्रवरवाहिनौ ।
सारथीप्रवरौ चैव तयोरास्तां महारणे ॥ २७ ॥
ततो दृष्ट्वा महाराज राजमानौ महारथौ ।
सिद्धचारणसङ्घानां विस्मयः समपद्यत ॥ २८ ॥
तव पुत्रास्ततः कर्णं सबला भरतर्षभ ।
परिवव्रुर्महात्मानं क्षिप्रमाहवशोभिनम् ॥ २९ ॥
तथैव पाण्डवा हृष्टा धृष्टद्युम्नपुरोगमाः ।
परिवव्रुर्महात्मानं पार्थमप्रतिमं युधि ॥ ३० ॥
तावकानां रणे कर्णो ग्लहो ह्यासीद्विशाम्पते ।
तथैव पाण्डवेयानां ग्लहः पार्थोऽभवत्तदा ॥ ३१ ॥
त एव सभ्यास्तत्रासन्प्रेक्षकाश्चाभवन्स्म ते ।
तत्रैषां ग्लहमानानां ध्रुवौ जयपराजयौ ॥ ३२ ॥

विजयमें सन्देह होगया, वे दोनों उत्तम शस्त्र धारण किये दोनों युद्धसे थके वीर अपने तालके शब्दसे आकाशको पूरित करने लगे ॥ ये दोनों समान बलवान् योद्धा समान पराक्रमी जगत् प्रसिद्ध बलमें इन्द्र और शम्बरके तुल्य थे ॥ (२३–२५)

दोनों ही कृतवीर्य पुत्र अर्जुन, दशरथ पुत्र राम, विष्णु और शिवके समान योद्धा थे ॥ वे दोनों युद्धमें सफेद घोडे उत्तम सारथी और उत्तम रथोंके सहित खडे हुए । हे महाराम ! उन दोनोंको युद्धमें खडे देख सब सिद्ध चारण आदिके संघ आश्चर्य करने लगे ॥ (२६—२८)

हे महाराज ! तब तुम्हारे सब पुत्र शीघ्रता सहित बहुत सेना सङ्गमें लेकर वीर कर्णकी रक्षा करने लगे ॥ इसी प्रकार धृष्टद्युम्न आदि अनेक योद्धा अद्वितीय वीर अर्जुनकी रक्षा करने लगे॥ हे पृथ्वीनाथ ! उस समय दोनों ओरसे कर्ण और अर्जुन जुवारियोंके दांवके समान होगये और सब वीर सभासदोंके

दुःशासने यद्रणे संश्रुतं मे तद्वै सत्यं कृतमद्येह वीरौ ॥ ५० ॥
अत्रैव दास्याम्यपरं द्वितीयं दुर्योधनं यज्ञपशुं विशस्य ।
शिरो मृदित्वा च पदा दुरात्मनः शान्तिं लप्स्ये कौरवाणां समक्षम् ५१
एतावदुक्त्वा वचनं प्रहृष्टो ननाद चोच्चै रुधिरार्द्रगात्रः ।
ननर्द चैवातिबलो महात्मा वृत्रं निहत्येव सहस्रनेत्रः ॥ ५२ ॥ [४२५३]

इति श्रीमहाभारते शतसाहस्र्या संहितायां वैयासिक्यां कर्णपर्वणि दुःशासवधे त्र्यशीतितमोऽध्यायः ॥८३॥

सञ्जय उवाच— दुःशासने तु निहते तव पुत्रा महारथाः ।
महाक्रोधविषा वीराः समरेष्वपलायिनः ॥ १ ॥
दश राजन्महावीर्या भीमं प्राच्छादयञ्शरैः ।
निषङ्गी कवची पाशी दण्डधारो धनुर्धरः ॥ २ ॥
अलोलुपः सहः षण्ढो वातवेगसुवर्चसौ ।
एते समेत्य सहिता भ्रातृव्यसनकर्शिताः ॥ ३ ॥
भीमसेनं महाबाहुं मार्गणैः समवारयन् ।
स वार्यमाणो विशिखैः समन्तात्तैर्महारथैः ॥ ४ ॥
भीमः क्रोधाग्निरक्ताक्षः क्रुद्धः काल इवाबभौ ।
तांस्तु भल्लैर्महावेगैर्दशभिर्दश भारतान् ॥ ५ ॥

क्रोधी भीमसेन हूं इस समय मैंने जो दुःशासनका रुधिर पिया है वही मेरे मुखसे बह रहा है । मैंने जो सभामें प्रतिज्ञाकी थी सो सत्य कर ली अब मैं सब कौरवोंके बीचमें दूसरी प्रतिज्ञा करता हूं कि, इस यज्ञमें अपने पैरसे दुरात्मा दुर्योधनरूपी पशुका शिर पीसकर बलिदान करूंगा तभी शांत हूगा ॥ जैसे वृत्रासुरको मारकर इन्द्र प्रसन्न हुए थे ऐसेही महाबलवान् महात्मा भीमसेन दुःशासनको मारकर प्रसन्न होकर गर्जने और नाचने लगे ॥ ( ४८—५२ )

कर्णपर्वमें तिरासी अध्याय समाप्त । [४२५३]

कर्णपर्वमें चौरासी अध्याय ।

सञ्जय बोले, हे राजन्! दुःशासनके मरनेपर युद्धसे न भागनेवाले महारथ तुम्हारे पुत्रोंको महा क्रोध हुआ; तब निषङ्गी, कवची, पाशी, दण्डधारी, धनुर्धारी, अलोलुप, सह, षंढ, वातवेग और सुवर्चा ये सब दुःशासनके शोकसे व्याकुल होकर भीमसेनके ऊपर घोर बाण वर्षाने लगे । ( १—४ )

भीमसेन उन महारथोंके बाणोंसे व्याकुल होकर क्रोधके मारे यमराजके समान होगये और अत्यन्त शीघ्र चलने वाले दश बाणोंसे उन दशों वीरोंका

मुनयश्चारणाः सिद्धा वैनतेया वयांसि च ॥ ४१ ॥
रत्नानि निधयः सर्वे वेदाश्चाख्यानपञ्चमाः ।
सोपवेदोपनिषदः सरहस्याः ससंग्रहाः ॥ ४२ ॥
वासुकिश्चित्रसेनश्च तक्षको मणिकस्तथा ।
सर्पाश्चैव तथा सर्वे काद्रवेयाश्च सान्वयाः ॥ ४३ ॥
विषवन्तो महाराज नागाश्चार्जुनतोऽभवन् ।
ऐरावताः सौरभेया वैशालेयाश्च भोगिनः ॥ ४४ ॥
एतेऽभवन्नर्जुनतः क्षुद्रसर्पाश्च कर्णतः ।
ईहामृगा व्यालमृगा माङ्गल्याश्च मृगद्विजाः ॥ ४५ ॥
पार्थस्य विजये राजन्सर्वे एवाभिसंस्तृताः ।
वसवो मरुतः साध्या रुद्रा विश्वेऽश्विनौ तथा ॥ ४६ ॥
अग्निरिन्द्रश्च सोमश्च पवनोऽथ दिशो दश ।
धनञ्जयस्य ते पक्षे आदित्याः कर्णतोऽभवन् ॥ ४७ ॥
विशः शूद्राश्च सूताश्च ये च सङ्करजातयः ।
सर्वशस्ते महाराज राधेयमभजंस्तदा ॥ ४८ ॥
देवास्तु पितृभिः सार्धं सगणाः सपदानुगाः ।
यमो वैश्रवणश्चैव वरुणश्च यतोऽर्जुनः ॥ ४९ ॥
ब्रह्म क्षत्रं च यज्ञाश्च दक्षिणाश्चार्जुनं श्रिताः ।

---

राक्षस और गुह्यकोंने प्रसन्न होकर कर्ण-का पक्ष लिया। मुनि, चारण, सिद्ध, गरुड, और पक्षी, रत्न, खान, वेद, इतिहास, उपवेद, उपनिषद्, रहस्य और संग्रह, वासुकी, चित्रसेन, तक्षक और मणिक आदि कद्रुके पुत्र सब विषीले सर्प अर्जुनकी ओर हुए। ऐरावत और मय तथा शालेय आदि साँप ये सब भी अर्जुन ही की ओर थे। और छोटे छोटे साँप कर्णकी ओर हुए। ( ४०–४५ )

भेडिये, हरिण, खरहे, मोगल्य आदि सब जीव जन्तु, अर्जुनकी विजयकी इच्छा करने लगे। वसु, मरुत, साध्य, रुद्र, विश्वदेव, अश्विनीकुमार, अग्नि, इन्द्र, चन्द्रमा, वायु, दशों दिशा, ये सब अर्जुनकी ओर और आदित्य नामक देवता कर्णके पक्षमें हुए। हे राजन्! बनिये, शूद्र, सूत और सब वर्णसङ्कर कर्णकी विजय चाहने लगे। देवता पितर और उनके सब सेवक, वरुण, कुबेर और यमराज अर्जुनकी विजयकी इच्छा करने लगे॥ ( ४५–४९ )

भारो हि धार्तराष्ट्रेण त्वयि सर्वः समाहितः ।
तमुद्वह महाबाहो यथाशक्ति यथाबलम् ॥ १५ ॥
जये स्याद्विपुला कीर्तिर्ध्रुवः स्वर्गः पराजये ।
वृषसेनश्च राधेय संक्रुद्धस्तनयस्तव ॥ १६ ॥
त्वयि मोहं समापन्ने पाण्डवानभिधावति ।
एतच्छ्रुत्वा तु वचनं शल्यस्यामिततेजसः ॥
हृदि चावश्यकं भावं चक्रे युद्धाय सुस्थिरम् ॥ १७ ॥
ततः क्रुद्धो वृषसेनोऽभ्यधावदवस्थितं प्रमुखे पाण्डवं तम् ।
वृकोदरं कालमिवात्तदण्डं गदाहस्तं योधयन्तं त्वदीयान् ॥ १८ ॥
तमभ्यधावन्नकुलः प्रवीरो रोषादमित्रं प्रतुदन्पृषत्कैः ।
कर्णस्य पुत्रं समरे प्रहृष्टं पुरा जिघांसुर्मघवेव जम्भम् ॥ १९ ॥
ततो ध्वजं स्फाटिकचित्रकम्बुकं चिच्छेद वीरो नकुलः क्षुरेण ।
कर्णात्मजस्येष्वसनं च चित्रं भल्लेन जाम्बूनदचित्रनद्धम् ॥ २० ॥
अथान्यदादाय धनुः स शीघ्रं कर्णात्मजः पाण्डवमभ्यविध्यत् ।
दिव्यैरस्त्रैरभ्यवर्षच्च सोऽपि कर्णस्य पुत्रो नकुलं कृतास्त्रः ॥ २१ ॥
शराभिघाताच्च रुषा च राजन्स्वया च भासास्त्रसमीरणाच्च ।

---

शार्दूल ! अब तुम क्षत्रियोंके धर्मानुसार अत्यन्त उत्साह करके अर्जुनसे लडनेको चलो ॥ हे महाबाहो ! दुर्योधनने युद्धका सब भार तुम्हारे ही भरोसे छोड दिया, सो अब तुम अपने बल और उत्साहके अनुसार उनका उपकार करो। हे राधापुत्र! विजय होनेसे अचल कीर्त्ति होगी और मरनेसे सदैवके लिये स्वर्ग मिलेगा । (१३-१६)

वे तुम्हारे पुत्र क्रोधी वृषसेन खडे हैं । ये तुमको डरा हुआ देखकर आप ही पाण्डवोंसे युद्ध करने जाना चाहते हैं । महा तेजस्वी शल्यके ऐसे वचन सुन कर्णने लडनेका दृढ सङ्कल्प किया ॥ तब दण्डधारी यमराजके समान गदाधारी भीमसेनको कौरवोंसे युद्ध करते देख वृषसेन उनसे लडनेको चले, उनको आते देख घोर बाण वर्षाते हुए नकुल इस प्रकार दौडे जैसे अपने शत्रु जम्भको मारनेके लिये इन्द्र दौडे थे ॥(१६-१९)

तब नकुलने एक बाणसे कर्णके पुत्रकी स्फटिक दण्डवाली ध्वजा काट दी और एक बाणसे सुवर्ण भूषित धनुष काट दिया । वृषसेनने उस धनुषको फेंककर शीघ्रतासे दूसरा धनुष लिया और नकुलकी ओर अस्त्रविद्याके अनुसार

हत्वार्जुनं मम सुतः कर्णो जयतु संयुगे ।
हत्वा कर्णं जयत्वद्य मम पुत्रो धनञ्जयः ॥ ५९ ॥
इति सूर्यस्य चैवासीद्विवादो वासवस्य च ।
पक्षसंस्थितयोस्तत्र तयोर्विबुधसिंहयोः ।
द्वैपक्ष्यमासीद्देवानामसुराणां च भारत ॥ ६० ॥
समेतौ तौ महात्मानौ दृष्ट्वा कर्णधनञ्जयौ ।
अकम्पन्त त्रयो लोकाः सहदेवर्षिचारणाः ॥ ६१ ॥
सर्वे देवगणाश्चैव सर्वभूतानि यानि च ।
यतः पार्थस्ततो देवा यतः कर्णस्ततोऽसुराः ॥ ६२ ॥
रथयूथपयोः पक्षौ कुरुपाण्डववीरयोः ।
दृष्ट्वा प्रजापतिं देवाः स्वयम्भुवमचोदयन् ॥ ६३ ॥
कोऽनयोर्विजयी देव कुरुपाण्डवयोधयोः ।
समोऽस्तु विजयो देव एतयोर्नरसिंहयोः ॥ ६४ ॥
कर्णार्जुनविवादेन सर्वं संशयितं जगत् ।
स्वयम्भो ब्रूहि नस्तथ्यमेतयोर्विजयं प्रभो ॥ ६५ ॥
स्वयम्भो ब्रूहि तद्वाक्यं समोऽस्तु विजयोऽनयोः ।
तदुपश्रुत्य मघवा प्रणिपत्य पितामहम् ॥ ६६ ॥

और सूर्यने कहा कि कर्ण अर्जुनको जीते। इन्द्र कहने लगे, हमारा पुत्र अर्जुन कर्णको मार विजय पावै, इसी प्रकार देव श्रेष्ठ सूर्य और इन्द्र अपना अपना पक्ष लेकर विवाद करने लगे॥ हे भारत! उस समय सब देवता और दानवोंके दो पक्ष होगये॥ (५६-६०)

दोनों वीरोंको एकत्र खडा देख ऋषि, चारण, भूत और देवतोंके सहित तीनों लोक कांपने लगे॥ सब देवता अर्जुन और सब राक्षस कर्णकी प्रशंसा करने लगे॥ इसी प्रकार दोनों सेनाके मनुष्य अपने अपने वीरोंकी प्रशंसा करने लगे, प्रजापतियोंके सहित ब्रह्माको आये देख सब देवतोंने उनसे कहा, हे देव! इन पुरुषसिंह वीरोंमें किसीकी विजय होगी? हमलोगोंको जान पडता है कि, ये दोनों समान ही रहेंगे॥ (६१-६४)

हे प्रभु! इन दोनोंके युद्धमें सब जगत्‌को सन्देह है। इसमें जो कुछ सत्य है, सो आप हमसे कहिये॥ हे ब्रह्मन्! आप ऐसा उपाय कीजिये, जिसमें ये दोनों समान ही रहें। देवतोंके ऐसे वचन सुन इन्द्र ब्रह्माको प्रणाम

स तेन विद्धोऽतिभृशं तरस्वी महाहवे वृषसेनेन राजन् ॥ २९ ॥
क्रुद्धेन धावन्समरे जिघांसुः कर्णात्मजं पाण्डुसुतो नृवीरः ।
वितत्य पक्षौ सहसापतन्तं श्येनं यथैवामिषलुब्धमाजौ ॥ ३० ॥
अवाकिरद्वृषसेनस्ततस्तं शितैः शरैर्नकुलमुदारवीर्यम् ।
स तान्मोघांस्तस्य कुर्वञ्शरौघाश्चचार मार्गान्नकुलश्चित्ररूपान् ॥ ३१ ॥
अथास्य तूर्णं चरतो नरेन्द्र खड्गेन चित्रं नकुलस्य तस्य ।
महेषुभिर्व्यधमत्कर्णपुत्रो महाहवे चर्म सहस्रतारम् ॥ ३२ ॥
तं चायसं निशितं तीक्ष्णधारं विकोशमुग्रं गुरुभारसाहम् ।
द्विषच्छरीरान्तकरं सुघोरमाधुन्वतः सर्पमिवोग्ररूपम् ॥ ३३ ॥
क्षिप्रं शरैः षड्भिरमित्रसाहश्चकर्त खड्गं निशितैः सुवेगैः ।
पुनश्च दीप्तैर्निशितैः पृषत्कैः स्तनान्तरे गाढमथाभ्यविद्धयत् ॥ ३४ ॥
कृत्वा तु तद्दुष्करमार्यजुष्टमन्यैर्नरैः कर्म रणे महात्मा ।
ययौ रथं भीमसेनस्य राजञ्शराभितप्तो नकुलस्त्वरावान् ॥ ३५ ॥
स भीमसेनस्य रथं हताश्वो माद्रीसुतः कर्णसुताभितप्तः ।
आपुप्लुवे सिंह इवाचलाग्रं सम्प्रेक्ष्यमाणस्य धनञ्जयस्य ॥ ३६ ॥
ततः क्रुद्धो वृषसेनो महात्मा ववर्ष ताविषुजालेन वीरः ।

हे राजन् ! तब उन्होंने खेलते हुए नकुलके शरीरमें अठारह तेज बाण मारे। उन बाणोंके लगनेसे वीर तेजस्वी नकुल कर्णके पुत्रको मारनेके लिये हाथ फैला कर इस प्रकार दौडे जैसे कोई बाज पङ्ख फैला कर मांसके लिये पक्षीकी ओर दौडता है ॥ यद्यपि वृषसेनने वीर नकुलके मारनेके लिये अनेक बाण चलाये परन्तु उन्होंने उन सबको अपनी चालोंसे काटदिया ॥ ( २९-३१ )

इस प्रकार विचित्र गतियोंसे घूमते हुए विचित्र योद्धा नकुलकी अनेक तारोंवाली ढालको वृषसेनने सहस्रो बाणोंसे काट दिया, तब नकुल घोर शत्रुओंके नाश करनेवाले महा प्रकाशमान् सर्पके समान विष भरे केवल खड्ग ही को घुमाने लगे, तब कर्णके पुत्रने छः तेज बाणोंसे उनका खड्ग भी काट दिया और अनेक बाण उनके हृदयमें मारे ॥ ( ३२-३४ )

तब अन्य मनुष्योंसे न करने योग्य यह घोर कर्म करके और बाणोंसे व्याकुल होकर नकुल दौडकर भीमसेनके रथपर चढ गये ॥ अर्जुनके देखते देखते माद्रीपुत्र नकुल वृषसेनके बाणोंसे पीडित होकर भीमसेनके रथपर इस प्रकार कूद-

पार्थः सर्वगुणोपेतो देवकार्यमिदं यतः ॥ ७५ ॥
क्लिश्यन्ते पाण्डवा नित्यं वनवासादिभिर्भृशम् ।
सम्पन्नस्तपसा चैव पर्याप्तः पुरुषर्षभः ॥ ७६ ॥
अतिक्रमेच माहात्म्याद्दिष्टमप्यर्थपर्ययम् ।
अतिक्रान्ते च लोकानामभावो नियतं भवेत् ॥ ७७ ॥
न विद्यते व्यवस्थानं क्रुद्धयोः कृष्णयोः क्वचित् ।
स्रष्टारौ जगतश्चैव सततं पुरुषर्षभौ ॥ ७८ ॥
नरनारायणावेतौ पुराणावृषिसत्तमौ ।
अनियम्यौ नियन्तारावेतौ तस्मात्परन्तपौ ॥ ७९ ॥
नैतयोस्तु समः कश्चिद्दिवि वा मानुषेषु वा ।
अनुगम्यास्त्रयो लोकाः सह देवर्षिचारणैः ॥ ८० ॥
सर्वदेवगणाश्चापि सर्वभूतानि यानि च ।
अनयोस्तु प्रभावेन वर्तते निखिलं जगत ॥ ८१ ॥
कर्णो लोकानयं मुख्यानाप्नोतु पुरुषर्षभः ।
कर्णो वैकर्तनः शूरो विजयस्त्वस्तु कृष्णयोः ॥ ८२ ॥
वसूनां समलोकत्वं मरुतां वा समाप्नुयात ।

---

इनकी विजय क्यों नहीं होगी ? और ये तो देवतोंका काम है ॥ (७१–७५)

महात्मा पाण्डवों ने वनमें रहकर बहुत दुःख भोगा है। इससे ये ही जीतेंगे, पुरुषसिंह अर्जुन तपसे सम्पन्न होनेके कारण कर्णको जीतनेमें समर्थ भी हैं ॥ यदि अर्जुन युद्धमें न जीते तो प्रारब्ध ही उलटी हो सक्ती है। और उसके लौटनेसे सब जगत्का नाश हो सक्ता है ॥ ये ही पुरुषसिंह कृष्ण और अर्जुन जगत्के पति हैं। इस लिये इनके क्रुद्ध होनेमे कोई नहीं बच सक्ता ॥ (७६–७८)

श्रीकृष्ण और अर्जुन प्राचीन नर और नारायण ऋषि हैं, ये जगत्को अपने नियममें रखते है। और आप भी नियमसे चलते हैं, इससे इनके शत्रुओंका नाश होगा, इनके समान कोई मनुष्य और देवता भी नहीं है। सब सिद्ध और चारण तीनों लोकोंके सहित इनके पीछे चलते है, सब देवता आदि चर अचर जगत् इन्हीं दोनोंकी शक्तिमे चलता है ॥ (७९–८१)

महापराक्रमी कर्ण मरकर स्वर्गको जाय और अर्जुनकी विजय होय ॥ कर्ण, भीष्म और द्रोणाचार्यके सहित चाहे

द्रुपदसुतवरिष्ठाः पञ्च शैनेयषष्ठा द्रुपददुहितृपुत्राः पञ्च चामित्रसाहाः ।
द्विरदरथनराश्वान्सूदयन्तस्त्वदीयान्भुजगपतिनिकाशैर्मार्गणैरात्तशस्त्राः २॥
अथ तव रथमुख्यास्तान्प्रतीयुस्त्वरन्तः कृपहृदिकसुतौ च द्रौणिदुर्योधनौ च ।
शकुनिसुतवृकौ च क्राथदेवावृधौ च द्विरदजलजघोषैः स्यन्दनैः कार्मुकैश्च ३॥
तव नृप रथिवीरास्तान्दशैकं च वीरान्नवरशरवराग्रैस्ताडयन्तोऽभ्यरुन्धन् ।
नवजलदसवर्णैर्हस्तिभिस्तानुदीयुर्गिरिशिखरनिकाशैर्भीमवेगैः कुलिन्दाः४॥
सुकल्पिता हैमवता मदोत्कटा रणाभिकामैः कृतिभिः समास्थिताः ।
सुवर्णजालैर्वितता बभुर्गजास्तथा यथा खे जलदाः सविद्युतः ॥ ५ ॥
कुलिन्दपुत्रो दशभिर्महायसैः कृपं ससूताश्वमपीडयद्भृशम् ।
ततः शरद्वत्सुतसायकैर्हतः सहैव नागेन पपात भूतले ॥ ६ ॥
कुलिन्दपुत्रावरजस्तु तोमरैर्दिवाकरांशुप्रतिमैरयस्मयैः ।
रथं च विक्षोभ्य ननाद नर्दतस्ततोऽस्य गान्धारपतिः शिरोऽहरत् ॥ ७ ॥
ततः कुलिन्देषु हतेषु तेष्वथ प्रहृष्टरूपास्तव ते महारथाः ।
भृशं प्रदध्मुर्लवणाम्बुसम्भवान्परांश्च बाणासनपाणयोऽभ्ययुः ॥ ८ ॥

बैठे शिक्षित सारथियोंके सहित दौडे। ये सब महापराक्रमी वीर सांपोंके समान बाणोंसे तुम्हारे हाथी घोडे, और पदातियोंका नाश करने लगे ॥ (१–२)

तुम्हारी ओरसे भी उस सबको मारनेके लिये मेघ और हाथीके समान शब्दवाले रथोंपर चढकर कृपाचार्य, कृतवर्मा, राजा दुर्योधन, अश्वत्थामा, उलूक तथा वृक, क्राथ, और देवावृध दिव्य धनुप धारण करके दौडे ॥ हे महाराज ! ये सब वीर पहले कहे पाण्डवोंके ग्यारह वीरोंपर बाण वर्षाते हुए चले, तब नवीन काले मेघके समान काले वर्णवाले, पर्वतोंके शिखरके समान भारी शीघ्र चलनेवाले, हाथियोंपर चढकर कुलिंददेशके क्षत्री दौडे ॥ (३–४)

जैसे बिजलियोंके सहित काले मेघ आकाशमें शोभित होते हैं, तैसेही सुवर्ण जालवाले, शिक्षित महावतों सहित महावीर योद्धासे युक्त हाथी शोभित होने लगे ॥ तब कुलिन्द देशके राजपुत्रने अपने बाणोंसे कृपाचार्यको घोडोंके सहित व्याकुल कर दिया, अनन्तर कृपाचार्यने हाथीके सहित उसे मारडाला तब वह हाथीके सहित भूमिपर गिरपडा ॥ उसके छोटे भाईने सूर्यकी किरणोंके समान अनेक तोमर कृपाचार्यके रथकी ओर चलाये, तब शकुनिने बाणोंसे उसका शिर काट लिया ॥ (५–७)

इन दोनों राजपुत्रोंके मरनेसे तुम्हारी

तयोर्ध्वजौ वीतमलौ शुशुभाते रथे स्थितौ ।
राहुकेतू यथाकाशे उदितौ जगतः क्षये ॥ ९२ ॥
कर्णस्याशीविषनिभा रत्नसारमयी दृढा ।
पुरन्दरधनुःप्रख्या हस्तिकक्ष्या विराजते ॥ ९३ ॥
कपिश्रेष्ठस्तु पार्थस्य व्यादितास्य इवान्तकः ।
दंष्ट्राभिर्भीषयन्भाभिर्दुर्निरीक्ष्यो रविर्यथा ॥ ९४ ॥
युद्धाभिलाषुको भूत्वा ध्वजो गाण्डीवधन्वनः ।
कर्णध्वजमुपातिष्ठत्स्वस्थानाद्वेगवान्कपिः ॥ ९५ ॥
उत्पपात महावेगः कक्ष्यामभ्याहनत्तदा ।
नखैश्च दशनैश्चैव गरुडः पन्नगं यथा ॥ ९६ ॥
सा किङ्किणीकाभरणा कालपाशोपमायसी ।
अभ्यद्रवत्सुसंरब्धा हस्तिकक्ष्याथ तं कपिम् ॥ ९७ ॥
तयोर्घोरतरे युद्धे द्वैरथे द्यूत आहिते ।
प्राकुर्वतां ध्वजौ युद्धं पूर्वं पूर्वतरं तदा ॥ ९८ ॥
हया हयानभ्यहेषन्स्पर्धमानाः परस्परम् ।
अविध्यत्पुण्डरीकाक्षः शल्यं नयनसायकैः ॥ ९९ ॥
शल्यश्च पुण्डरिकाक्षं तथैवाभिसमैक्षत ।
तत्राजयद्वासुदेवः शल्यं नयनसायकैः ॥ १०० ॥

में प्रलयके समय उदय हुए राहु और केतुके समान दीखने लगी॥ कर्णके रथ पर इन्द्रधनुष और सांपके समान हाथीके चिन्हसे युक्त सुवर्ण और मणियोंसे जटित उत्तम ध्वजा लगी थी॥ (९१-९३)

इसी प्रकार सूर्यके समान तेजस्वी अर्जुनकी ध्वजापर बैठे हुए हनुमान अपने तेज और दांतोंसे मनुष्यों को डरा रहे थे, युद्धकी इच्छा करके महातेजस्वी वन्दर अर्जुनकी ध्वजासे कर्णकी ध्वजापर जाते हुए जान पडते थे। जैसे गरुड सांपोंको मारडालते हैं ऐसे ही हनुमानने कूदकर कर्णकी ध्वजाके हाथी को दांत और नाखूनोंसे चीर डाला॥ कर्णकी लोहेकी बनी ध्वजा भी उस वन्दरसे लडनेको दौडी उनका घोर युद्ध होनेके पहिले ही इनकी ध्वजाओंमें घोर युद्ध होने लगा॥ (९४-९८)

दोनोंके घोडे परस्पर द्वेष करके बोलने लगे, श्रीकृष्णने अपने तेज नेत्ररूपी बाण शल्यको मारे, इसी प्रकार शल्यने श्रीकृष्णकी ओर देखा परन्तु

रथी द्विपस्थेन हतोऽपतच्छरैः क्राथाधिपः पर्वतजेन दुर्जयः ।
सवाजिसूतेष्वसनध्वजस्तथा यथा महावातहतो महाद्रुमः ॥ १६ ॥
वृको द्विपस्थं गिरिराजवासिनं भृशं शरैर्द्वादशभिः पराभिनत् ।
ततो वृकं साश्वरथं महाद्विपो द्रुतं चतुर्भिश्चरणैर्व्यपोथयत् ॥ १७ ॥
स नागराजः सनियन्तृकोऽपतत्तथा हतो बभ्रुसुतेषुभिर्भृशम् ।
स चापि देवावृधसूनुरर्दितः पपात नुन्नः सहदेवसूनुना ॥ १८ ॥
विषाणगात्रावरयोधपातिना गजेन हन्तुं शकुनिं कुलिन्दजः ।
जगाम वेगेन भृशार्दयंश्च तं ततोऽस्य गान्धारपतिः शिरोऽहरत् ॥१९ ॥
ततः शतानीकहता महागजा हया रथाः पत्तिगणाश्च तावकाः ।
सुपर्णवातप्रहता यथोरगास्तथा गता गां विवशा विचूर्णिताः ॥ २० ॥
ततोऽभ्यविद्ध्यद्बहुभिः शितैः शरैः कालिङ्गपुत्रो नकुलात्मजं स्मयन् ।
ततोऽस्य कोपाद्विचकर्त नाकुलिः शिरः क्षुरेणाम्बुजसन्निभाननम्॥ २१ ॥
ततः शतानीकमविध्यदायसैस्त्रिभिः शरैः कर्णसुतोऽर्जुनं त्रिभिः ।

दौडकर घोडोंके समेत क्राथका रथ उल्टा कर तोड डाला ॥ परन्तु क्राथ बच गये, तब उन्होंने अपने बाणोंसे राज कुमार सहित हाथीको मारकर इस प्रकार गिरा दिया, जैसे इन्द्र वज्रसे काटकर पर्वतको गिराते है ॥ तब एक पर्वतवासी कुलिन्ददेशके हाथीपर चढे योद्धाने अपने बाणोंसे रथ, सारथी और घोडोंके सहित राजा क्राथको मार कर इस प्रकार गिरा दिया, जैसे वायु वृक्षको गिरा देता है ॥ (१५—१६)

तब वृकने उस वीरकी ओर बारह बाण चलाये। उसी समय उस हाथीने दौडकर अपने चारों पैरोंसे घोडे सारथी और रथके सहित वृकका चूरा कर दिया ॥ अनन्तर बभ्रुके पुत्रने उस हाथीको अपने बाणोंसे महावतके सहित मारडाला उसे सहदेवके पुत्रने मारकर पृथ्वीमें गिरा दिया ॥ तब कुलिन्द देशका चौथा राजपुत्र बडे दांतवाले मतवाले हाथीपर चढकर शकुनिको मारने दौडे। तब शकुनिने अपने बाणोंसे उसका शिर काट लिया ॥ (१७-१९)

इतने ही समयमें शतानीकने तुम्हारे अनेक हाथी, घोडे और मनुष्योंको इस प्रकार मार डाला जैसे गरुड सांपोंको मार डालता है ॥ तब कलिङ्गदेशके राजपुत्रने क्रोध करके नकुलपुत्र शतानीककी ओर अनेक बाण चलाये। नकुलपुत्र शतानीकने एक बाणसे उसका कमलके समान मुखयुक्त शिर काटकर पृथ्वी में गिरा दिया, तब कर्णके पुत्रने क्रोध करके

सच्छत्रकवचं चैव सशक्तिशरकार्मुकम् ।
द्रष्टास्यद्य रणे कृष्ण शरैश्छिन्नमनेकधा ॥ १०९ ॥
अद्यैव सरथं साश्वं सशक्तिकवचायुधम् ।
संचूर्णितमिवारण्ये पादपं दन्तिना यथा ॥ ११० ॥
अद्य राधेयभार्याणां वैधव्यं समुपस्थितम् ।
ध्रुवं स्वप्नेष्वनिष्टानि ताभिर्दृष्टानि माधव ॥ १११ ॥
द्रष्टासि ध्रुवमद्यैव विधवाः कर्णयोषितः ।
नहि मे शाम्यते मन्युर्यदनेन पुरा कृतम् ॥ ११२ ॥
कृष्णां सभागतां दृष्ट्वा मूढेनादीर्घदर्शिना ।
अस्मांस्तथावहसता क्षिपता च पुनः पुनः ॥ ११३ ॥
अद्य द्रष्टासि गोविन्द कर्णमुन्मथितं मया ।
वारणेनेव मत्तेन पुष्पितं जगतीरुहम् ॥ ११४ ॥
अद्य ता मधुरा वाचः श्रोतासि मधुसूदन ।
दिष्ट्या जयसि वार्ष्णेय इति कर्णे निपातिते॥ ११५ ॥
अद्याभिमन्युजननीं प्रहृष्टः सान्त्वयिष्यसि ।
कुन्तीं पितृष्वसारं च प्रहृष्टः सजनार्दन ॥ ११६ ॥
अद्य बाष्पमुखीं कृष्णां सान्त्वयिष्यसि माधव ।

मेरे शत्रु कर्णके छत्र, धनुष, बाण और शक्ति सब कट गये, जैसे कोई हाथी वनमें वृक्षका चूरा कर देता है ऐसा ही मैं कवच, घोडे, शक्ति, बाण धनुष के सहित कर्णको मार कर गिरा दूं-गा ॥ (१०७-११०)

हे माधव ! आज राधापुत्रकी सब स्त्री विधवा होजायंगी। निश्चय आज रातको उन्होंने बुरे स्वप्न देखे होंगे। इसने जो हमारा पहले दोष किया है सो मेरा क्रोध शान्त नहीं हुआ, इसलिये आप इसकी सब स्त्रियोंको विधवा देखेंगे ॥ जिस समय द्रौपदी सभामें आई थी तब इस मूर्ख अदूरदर्शीने हंसकर हम लोगों को और द्रौपदीको अनेक दुर्वचन कहे थे ॥ जैसे मतवाला हाथी फूले फले वृक्षको तोड डालता है, ऐसे ही मैं आज कर्णको मार डालूंगा ॥ ( १११-११४)

हे मधुसूदन यदुकुल श्रेष्ठ ! अब आप कर्णके मरनेके पश्चात् इन मीठे वचनोंको सुनेंगे कि प्रारब्धसे कर्ण मारा गया ॥ हे जनार्दन ! अब तुम्हारे पिताकी बहन कुन्ती और तुम्हारी बहन अभिमन्युकी माता प्रसन्न होंगी, अब तुम अपने अमृत

आरक्तनेत्रोऽन्तकशत्रुहन्ता उवाच कर्णं भृशमुत्स्मयंस्तदा ॥ ३० ॥
दुर्योधनं द्रौणिमुखांश्च सर्वानहं रणे वृषसेनं तमुग्रम् ।
सम्पश्यतः कर्ण तवाद्य सङ्ख्ये नयामि लोकं निशितैः पृषत्कैः ॥ ३१ ॥
ऊनं च तावद्धि जना वदन्ति सर्वैर्भवद्भिर्मम सूनुर्हतोऽसौ ।
एको रथो मद्विहीनस्तरस्वी अहं हनिष्ये भवतां समक्षम् ॥ ३२ ॥
संरक्ष्यतां रथसंस्थाः सुतोऽयमहं हनिष्ये वृषसेनमुग्रम् ।
पश्चाद्वधिष्ये त्वामपि सम्प्रमूढमहं हनिष्येऽर्जुन आजिमध्ये ॥ ३३ ॥
तमद्य मूलं कलहस्य सङ्ख्ये दुर्योधनापाश्रयजातदर्पम् ।
त्वामद्य हन्तास्मि रणे प्रसह्य अस्यैव हन्ता युधि भीमसेनः ॥ ३४ ॥
दुर्योधनस्याधमपूरुषस्य यस्यानयादेष महान्क्षयोऽभवत् ।
स एवमुक्त्वा विनिमृज्य चापं लक्ष्यं हि कृत्वा वृषसेनमाजौ ॥ ३५ ॥
ससर्ज बाणान्विशिखान्महात्मा वधाय राजन्कर्णसुतस्य सङ्ख्ये ।
विव्याध चैनं दशभिः पृषत्कैर्मर्मस्वशङ्कं प्रहसन्किरीटी ॥ ३६ ॥
चिच्छेद चास्येष्वसनं भुजौ च क्षुरैश्चतुर्भिर्निशितैः शिरश्च ।
स पार्थबाणाभिहतः पपात रथाद्विबाहुर्विशिरा धरायाम् ॥ ३७ ॥
सुपुष्पितो वृक्षवरोऽतिकायो वातेरितः शाल इवाद्रिशृङ्गात् ।

---

लाल नेत्र करके कर्णसे बोले, हे कर्ण ! मैं तुम्हारे और दुर्योधन तथा अश्वत्थामाके आगे वृषसेनको मारता हूं ॥ तुम सब लोगोंने मेरे पुत्र बलवान अकेले अभिमन्युको मेरे पीछे मिलकर मार डाला था, परन्तु मैं तुम्हारे सबके देखते देखते इस कर्णके पुत्रको मारता हूं ॥ (२९–३२)

रे मूर्ख ! मै अर्जुन हूं, इस तेरे पुत्रको मार कर पीछे तुझे भी मारूंगा, रथमें बैठे सब क्षत्रियोंको उचित है, कि इसीकी रक्षा करें ॥ अब मैं वृषसेनको मारता हूं, अब मै सब वैरके मूल तुझे मारकर दुर्योधनका आश्रय तोडूंगा। थोडे ही समयमें दुर्योधनको भी भीमसेन मार डालेंगे ॥ (३३–३४)

इस नीच मूर्ख दुर्योधनकी दुर्बुद्धिसे यह क्षत्रियोंका नाश हुआ ऐसा कहकर अर्जुनने धनुप पर टङ्कार दी और वृपसेनको लक्ष्य करके युद्धमें अनेक बाण चलाये, फिर हंसकर दश बाण उसको मारनेके लिये मर्मस्थानोंमें मारे, फिर चार बाणोंसे उसके दोनों हाथ धनुप और शिर काट दिये, तब वह पृथ्वीमें गिर गया। जैसे पर्वतका शिखर गिरनेसे फला फूला शालका वृक्ष टूट जाता है

भयातुरा एकरथौ समाश्रयंस्ततोऽभवत्त्वद्भुतमेव सर्वतः ।
ततोऽस्त्रमस्त्रेण परस्परं तौ विधूय वाताविव पूर्वपश्चिमौ ॥ ७ ॥
घनान्धकारे वितते तमोनुदौ यथोदितौ तद्वदतीव रेजतुः ।
न चाभिसर्तव्यमिति प्रचोदिताः परे त्वदीयाश्च तथावतस्थिरे ॥ ८ ॥
महारथौ तौ परिवार्य सर्वतः सुरासुराः शम्बरवासवाविव ।
मृदङ्गभेरीपणवानकस्वनैः ससिंहनादैर्नदतुर्नरोत्तमौ ॥ ९ ॥
शशाङ्कसूर्याविव मेघनिःस्वनैर्विरेजतुस्तौ पुरुषर्षभौ तदा ।
महाधनुर्मण्डलमध्यगावुभौ सुवर्चसौ बाणसहस्रदीधिती ॥ १० ॥
दिधक्षमाणौ सचराचरं जगद्युगान्तसूर्याविव दुःसहौ रणे ।
उभावजेयावहितान्तकावुभावुभौ जिघांसू कृतिनौ परस्परम् ॥ ११ ॥
महाहवे वीतभयौ समीयतुर्महेन्द्रजम्भाविव कर्णपाण्डवौ ।
ततो महास्त्राणि महाधनुर्धरौ विमुञ्चमानाविषुभिर्भयानकैः ॥ १२ ॥
नराश्वनागानमितान्निजघ्नतुः परस्परं चापि महारथौ नृप ।

अन्धकार होगया । तब दोनों ओरके वीरोंको कुछ नहीं दीख पडा ॥ (४–६)

तब सब योद्धा भयसे कर्ण और अर्जुनके पास खडे होगये, उस समय ये दोनों एक दूसरेके बाण काटते हुए इस प्रकार युद्ध करने लगे । उन दोनोंके बाण परस्पर ऐसे मिलने लगे, जैसे पूर्व और पश्चिमके वायु मिल जाते है ॥ उस घोर अन्धकारमें अर्जुन और कर्ण दो सूर्यके समान प्रकाश करने लगे । यद्यपि वे और वीरोंसे युद्ध करनेको कहते थे, तो भी वहां कोई नहीं जाता था ॥ जैसे शम्बर और इन्द्रने अपने बाणोंसे देवता और राक्षसोंकी सेनाको पूरित कर दिया था, ऐसेही इन दोनोंने भी दोनों दलों को व्याकुल कर दिया । अनेक शङ्ख नगारेके शब्द सुनकर दोनों पुरुषसिंह सिंहके समान गर्जने लगे ॥ (७—९)

ये दोनों रथोंमें बैठे हुए धनुष घुमाते सहस्रों बाणरूपी किरणधारी दोनों वीर इस प्रकार शोभित हुए, जैसे मेघोंके बीचमें सूर्य और चन्द्रमा । जैसे जगत्को जलानेके लिये प्रलयकालमें अग्नि और सूर्य मिलकर इकट्ठे होजाते है, ऐसे ही दूसरेके मारनेके लिये ये दोनों अजेय वीर युद्ध करनेको उपस्थित हुए। जैसे निर्भय होकर इन्द्र और जंभ युद्ध करनेको खडे हुए थे, ऐसे ही महाधनुषधारी कर्ण और अर्जुन घोर बाण छोडते हुए युद्ध करनेको खडे हुए ॥ (१०-१२)

हे राजन् ! तब ये दोनों पुरुषश्रेष्ठ अपने बाणोंसे अनेक हाथी, घोडे और

शरधारा विमुञ्चन्तं धारासारमिवाम्बुदम् ।
एष मद्रेश्वरो राजा रथाग्रे पर्यवस्थितः ॥ ७ ॥
नियच्छति हयानस्य राधेयस्यामितौजसः ।
शृणु दुन्दुभिनिर्घोषं शङ्खशब्दं च दारुणम् ॥ ८ ॥
सिंहनादांश्च विविधाञ्शृणु पाण्डव सर्वतः ।
अन्तर्धाय महाशब्दान्कर्णेनामिततेजसा ॥ ९ ॥
दोधूयमानस्य भृशं धनुषः शृणु निःस्वनम् ।
एते दीर्यन्ति सगणाः पञ्चालानां महारथाः ॥ १० ॥
दृष्ट्वा केसरिणं क्रुद्धं मृगा इव महावने ।
सर्वयत्नेन कौन्तेय हन्तुमर्हसि सूतजम् ॥ ११ ॥
नहि कर्णशरानन्यः सोढुमुत्सहते नरः ।
सदेवासुरगन्धर्वांस्त्रीँल्लोकान्सचराचरान् ॥ १२ ॥
त्वं हि जेतुं रणे शक्तस्तथैव विदितं मम ।
भीममुग्रं महात्मानं त्र्यक्षं शर्वं कपर्दिनम् ॥ १३ ॥
न शक्ता द्रष्टुमीशानं किं पुनर्योधितुं प्रभुम् ।
त्वया साक्षान्महादेवः सर्वभूतशिवः शिवः ॥ १४ ॥
युद्धेनाराधितः स्थाणुर्देवाश्च वरदास्तव ।

ध्वजाकी शोभा इन्द्रधनुषके समान दीख रही है, ये दुर्योधनके प्रियके लिये रथमें बैठे सूतपुत्र चले आते हैं । ये मेघकी धाराके समान कर्णके बाण चले आते है। ये साक्षात् मद्रदेशके राजा महाराज शल्य तेजस्वी कर्णके रथपर बैठे घोडोंको हांक रहे हैं। इधर अनेक नगारे और शङ्ख बज रहे हैं, ये देखो चारों ओर महा तेजस्वी कर्णके गर्जनेका शब्द चला आता है, इससे ये सब शब्द छिपे जाते है ॥ (५-९)

ये कर्णके धनुषका शब्द सुनकर पाञ्चाल महारथ भागे जाते है ॥ इस समय उनकी दशा ऐसीही रही जैसे वन में सिंहको देख कर हरिणोंकी। तुम ही इसे मारो क्यों कि तुम्हारे सिवाय जगत् में ऐसा कोई नहीं है जो इनके बाणोंको सह सके। तुम देवता, राक्षस और गन्धर्वोंके सहित चर अचर तीनों लोकोंको युद्धमें जीत सकते हो। (१०-१३)

तुमने तीन नेत्रधारी भगवान् शिवको प्रसन्न किया है उन्हें कोई देख भी नहीं सक्ता है। परन्तु तुमने उन्हींसे युद्ध किया तुमने उन्हें युद्धमें प्रसन्न किया

अथाब्रवीद् द्रोणसुतस्तवात्मजं करं करेण प्रतिपीड्य सान्त्वयन्॥ २० ॥
प्रसीद दुर्योधन शाम्य पाण्डवैरलं विरोधेन धिगस्तु विग्रहम्।
हतो गुरुर्ब्रह्मसमो महास्त्रवित्तथैव भीष्मप्रमुखा महारथाः ॥२१॥
अहं त्ववध्यो मम चापि मातुलः प्रशाधि राज्यं सह पाण्डवैश्चिरम्।
धनञ्जयः शाम्यति वारितो मया जनार्दनो नैव विरोधमिच्छति ॥२२ ॥
युधिष्ठिरो भूतहिते रतः सदा वृकोदरस्तद्वशगस्तथा यमौ।
त्वया तु पार्थैश्च कृते च संविदे प्रजाः शिवं प्राप्नुयुरिच्छया तव॥ २३ ॥
व्रजन्तु शेषाः स्वपुराणि बान्धवा निवृत्तयुद्धाश्च भवन्तु सैनिकाः।
न चेद्वचः श्रोष्यसि मे नराधिप ध्रुवं प्रतप्तासि हतोऽरिभिर्युधि ॥ २४ ॥
इदं च दृष्टं जगता सह त्वया कृतं यदेकेन किरीटमालिना।
यथा न कुर्याद्बलभिन्न चान्तको न चापि धाता भगवान्न यक्षराट् ॥२५॥
अतोऽपि भूयान्स्वगुणैर्धनञ्जयो न चातिवर्तिष्यति मे वचोऽखिलम्।
तवानुयात्रां च सदा करिष्यति प्रसीद राजेन्द्र शमं त्वमाप्नुहि ॥२६॥

परन्तु कर्ण और दुर्योधन न कुछ घबराये न कुछ आश्चर्यमें आये, तब अश्वत्थामाने दुर्योधनका हाथ पकड कर ऐसे वचन कहे, महाराज दुर्योधन! आप प्रसन्न हूजिये और पाण्डवोंसे सन्धि कर लीजिये लडाईको धिक्कार है। देखो सब शस्त्रोंके जाननेवाले, ब्रह्माके समान बुद्धिमान तुम्हारे गुरु और भीष्म आदि अनेक वीर मारे गये,हम और कृपाचार्य अवध्य हैं। आप पाण्डवोंसे मिलकर बहुत दिन तक राज्य कीजिये, मैं अर्जुनको युद्धसे रोक देता हूं। कृष्ण युद्धको चाहते ही नहीं ॥ (२०-२२)

महाराज युधिष्ठिर सदा ही जगत्का कल्याण चाहते हैं। भीमसेन, नकुल और सहदेव उनकी आज्ञाहीमें हैं। अब सन्धि होना केवल आपकी इच्छा ही पर है, आपका और पाण्डवोंका मेल होनेसे प्रजा बहुत दिन तक सुख पावेगी दोनों ओर सम्बन्धी अपने अपने घर चले जांय,सेना युद्धसे निवृत्त होय। हे महाराज! यदि आप हमारे इन वचनोंको नहीं सुनियेगा तो शत्रुओंके हाथसे मरकर बहुत दुःख पाइयेगा। तुमने और सब जगत्ने अर्जुनके इस पराक्रमको देखा, ऐसा काम इन्द्र, यमराज, ब्रह्मा, और साक्षात् कुबेर भी नहीं कर सक्ते॥ (२३-२५)

ये सब होनेपर भी पाण्डव हमारे वचनको नहीं टालेंगे। वे सदा आपकी आज्ञामें रहेंगे, हे राजोंके महाराज! आप सन्धि कर लीजिये, और प्रसन्न

जयेन संपूज्य स पाण्डवं तदा प्रचोदयामास हयान्मनोजवान् ।
स पाण्डुपुत्रस्य रथो मनोजवः क्षणेन कर्णस्य रथाग्रतोऽभवत् ॥२३॥४३५७

इति श्रीमहाभारते शतसाहस्र्यां० कर्णपर्वणि कर्णार्जुनद्वैरथे वासुदेववाक्ये षडशीतितमोऽध्यायः ॥८६॥

सञ्जय उवाच— वृषसेनं हतं दृष्ट्वा शोकामर्षसमन्वितः ।
पुत्रशोकोद्भवं वारि नेत्राभ्यां समवासृजत् ॥ १ ॥
रथेन कर्णस्तेजस्वी जगामाभिमुखो रिपुम् ।
युद्धायामर्षताम्राक्षः समाहूय धनञ्जयम् ॥ २ ॥
तौ रथौ सूर्यसङ्काशौ वैयाघ्रपरिवारितौ ।
समेतौ ददृशुस्तत्र द्वाविवार्कौ समुद्गतौ ॥ ३ ॥
श्वेताश्वौ पुरुषौ दिव्यावास्थितावरिमर्दनौ ।
शुशुभाते महात्मानौ चन्द्रादित्यौ यथा दिवि ॥ ४ ॥
तौ दृष्ट्वा विस्मयं जग्मुः सर्वसैन्यानि मारिष ।
त्रैलोक्यविजये यत्ताविन्द्रवैरोचनाविव ॥ ५ ॥
रथज्यातलनिह्रादैर्बाणसिंहरवैस्तथा ।
तौ रथावभ्यधावन्तौ समालोक्य महीक्षिताम् ॥ ६ ॥
ध्वजौ च दृष्ट्वा संसक्तौ विस्मयः समपद्यत ।
हस्तिकक्षं च कर्णस्य वानरं च किरीटिनः ॥ ७ ॥

जय ऐसा कहकर घोडोंको वायुके समान हांका। थोडे समयमें वह वायुके समान तेज रथ कर्ण के रथ के आगे जा पहुंचा ॥ ( २१-२३ ) [४३५७]

कर्णपर्वमें छियासी अध्याय समाप्त ।

कर्णपर्वमें सतासी अध्याय ।

सञ्जय बोले, हे राजन् ! वृषसेनको मरा देख महातेजस्वी कर्ण पुत्रके शोक से रोने लगे ॥ फिर क्रोधसे लालनेत्र करके अर्जुनको पुकारते हुए युद्ध करने को चले ॥ वे दोनो सिंहके चमडेसे मढे हुए रथ उस समय उदय हुए दो सूर्यके समान दीखने लगे ॥ (१-३)

सफेद घोडोंके रथपर चढे हुए शत्रुओंको मारनेवाले दोनों वीर आकाशमें उदय हुए चन्द्रमा और सूर्यके समान दीखने लगे ॥ उन दोनोंको तीन लोकके जीतनेके लिये इन्द्र और वैरोचनके समान खडे हुए देख सब वीर आश्चर्य करने लगे। वे दोनों वीर सब राजोंके आगे धनुष, ताल और गर्जनेका शब्द करने लगे। कर्णकी नाग युक्त और अर्जुनकी वानर युक्त ध्वजा देखके सब कोई आश्चर्य करने लगे ॥ (४—७)

समाहिताभिद्रवताहितान्मम सबाणहस्ताः किमु जोषमासत ॥३४॥ ४५०८

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां कर्णपर्वणि अश्वत्थामवाक्येऽष्टाशीतितमोऽध्याय ८८

सञ्जय उवाच- तौ शङ्खभेरीनिनदे समृद्धे समीयतुः श्वेतहयौ नराग्र्यौ।
वैकर्तनः सूतपुत्रोऽर्जुनश्च दुर्मन्त्रिते तव पुत्रस्य राजन् ॥ १ ॥
यथा गजौ हैमवतौ प्रभिन्नौ प्रवृद्धदन्ताविव वासितार्थे।
तथा समाजग्मतुरुग्रवीर्यौ धनञ्जयश्चाधिरथिश्च वीरौ ॥ २ ॥
बलाहकेनेव महाबलाहको यदृच्छया वा गिरिणा यथा गिरिः।
तथा धनुर्ज्यातलनेमिनिःस्वनैः समीयतुस्ताविषुवर्षवर्षिणौ ॥ ३ ॥
प्रवृद्धशृङ्गद्रुमवीरुदोषधी प्रवृद्धनानाविधनिर्झरौकसौ।
यथाचलावाचलितौ महाबलौ तथा महास्त्रैरितरेतरं हतः ॥ ४ ॥
स सन्निपातस्तु तयोर्महानभूत्सुरेशवैरोचनयोर्यथा पुरा।
शरैर्विनुन्नाङ्गनियन्तृवाहयोः सुदुःसहोऽन्यैः कटुशोणितोदकः ॥ ५ ॥
प्रभूतपद्मोत्पलमत्स्यकच्छपौ महाह्रदौ पक्षिगणैरिवावृतौ।
सुसन्निकृष्टावनिलोद्धुतौ यथा तथा रथौ तौ ध्वजिनौ समीयतुः॥ ६॥

ऐसा कहकर दुर्योधनने अश्वत्थामाको अनुकूल कर लिया और फिर अपने वीरोंसे कहा, तुम लोग क्यों चुपचाप खडे हो, अब शीघ्र शस्त्र लेकर शत्रुओंका नाश करो॥ ( ३३-३४ ) [४५०८]

कर्णपर्वमें अठासी अध्याय समाप्त।

कर्णपर्वमें नवासी अध्याय।

सञ्जय बोले, हे राजन्! तब पुरुष-श्रेष्ठ श्वेतघोडेवाले कर्ण और अर्जुन शङ्ख और भेर आदिका शब्द सुनाते हुए युद्ध करनेको उपस्थित हुए, जैसे एक हथिनीके लिये बडे दांतवाले हिमाचलकी तराईके दो मतवाले हाथी युद्ध करते हैं, ऐसे ही कर्ण और अर्जुन भी युद्ध करने लगे॥ जैसे दो मेघ या दो पर्वत युद्ध करनेको चलते हैं ऐसे ही वे दोनों वीर ताल, धनुष और रथके शब्द करते हुए युद्ध करनेको चले॥ (१-३)

जैसे अनेक वृक्ष और फली फूली लताओंके सहित नाना प्रकारके झरनोंसे युक्त ऊंचे शिखरवाले दो पर्वत युद्ध करनेको चलते हैं, ऐसे ही इन दोनोंके रथ चले, इनके घोर बाण इस प्रकार चले जैसे पहले समयमें इन्द्र और विरोचनके चले थे। इन बाणोंको उन दोनोंके सिवाय दूसरा कोई नहीं सह सकता था, तब दोनोंके शरीरसे रुधिर बहने लगे; जैसे मछली कछवे आदि जन्तुओंसे भरे, वायुसे तरङ्ग लेते, पक्षियोंसे शोभित

कृष्णशल्यरथोपेतौ तुल्यरूपौ महारथौ ॥ १६ ॥
सिंहस्कन्धौ दीर्घभुजौ रक्ताक्षौ हेममालिनौ।
सिंहस्कन्धप्रतीकाशौ व्यूढोरस्कौ महाबलौ ॥
अन्योन्यवधमिच्छन्तावन्योन्यजयकांक्षिणौ ॥ १७ ॥
अन्योन्यमभिधावन्तौ गोष्ठे गोवृषभाविव।
प्रभिन्नाविव मातङ्गौ सुसंरब्धाविवाचलौ ॥ १८ ॥
आशीविषशिशुप्रख्यौ यमकालान्तकोपमौ।
इन्द्रवृत्राविव क्रुद्धौ सूर्यचन्द्रसमप्रभौ ॥ १९ ॥
महाग्रहाविव क्रुद्धौ युगान्ताय समुत्थितौ।
देवगर्भौ देवबलौ देवतुल्यौ च रूपतः ॥ २० ॥
यदृच्छया समायातौ सूर्याचन्द्रमसौ यथा।
बलिनौ समरे दृप्तौ नानाशस्त्रधरौ युधि ॥ २१ ॥
तौ दृष्ट्वा पुरुषव्याघ्रौ शार्दूलाविव धिष्ठितौ।
बभूव परमो हर्षस्तावकानां विशाम्पते ॥ २२ ॥
संशयः सर्वभूतानां विजये समपद्यत।
समेतौ पुरुषव्याघ्रौ प्रेक्ष्य कर्णधनञ्जयौ ॥ २३ ॥

शल्य सारथीके सहित एक समान दीखने लगे ॥ (१२-१६)

ये दोनों सिंहके समान कन्धे, लम्बी भुजा और लाल नेत्रवाले, दोनों वीर एक दूसरेको मारनेके लिये, अपनी विजयकी इच्छा करके इस प्रकार दौडे जैसे दो बैल युद्ध करनेको चलते है। मतवारे दो हाथियों वा क्रोधी पर्वत के समान दीखनेवाले ये दोनों सूर्य और चन्द्रमाके समान तेजस्वी, यमराज और मृत्युके समान क्रोधी, विषीले सर्पोंके समान तेज; इस प्रकार युद्ध करनेको चले जैसे इन्द्र और वृत्रासुर चले थे ॥ (१७-१९)

जैसे दो ग्रह प्रलय करनेको उदय होते हैं, ऐसे ही ये दोनों देवपुत्रों के समान पराक्रमी वीर युद्ध करनेको उपस्थित हुए, जैसे इच्छानुसार सूर्य और चन्द्रमा इकट्ठे होजांय, ऐसे ही ये दोनों वीर अनेक प्रकारके शस्त्र धारण करके युद्ध करनेको उपस्थित हुए॥ हे पृथ्वीनाथ! उन दोनों पुरुषसिंहोंको शार्दूलके समान खडा देखकर तुम्हारी सेना बहुत प्रसन्न हुई ॥ (२०—२२)

कर्ण और अर्जुनको युद्धके लिये खडा देख दोनों ओरके वीरोंको अपनी अपनी

नाराचनालीकवराहकर्णान्क्षुरांस्तथा साञ्जलिकार्धचन्द्रान् ॥ १४ ॥
ते सर्वतः समकीर्यन्त राजन्पार्थेषवः कर्णरथं विशन्तः।
अवाङ्मुखाः पक्षिगणा दिनान्ते विशन्ति केतार्थमिवाशु वृक्षम्॥ १५ ॥
यानर्जुनः सभ्रुकुटीकटाक्षं कर्णाय राजन्नसृजज्जितारिः।
तान्सायकैर्ग्रसते सूतपुत्रः क्षिप्तान्क्षिप्तान्पाण्डवस्याशु सङ्घान् ॥ १६ ॥
ततोऽस्त्रमाग्नेयममित्रसाधनं मुमोच कर्णाय महेन्द्रसूनुः।
भूम्यन्तरिक्षे च दिशोऽर्कमार्गं प्रवृत्य देहोऽस्य बभूव दीप्तः ॥ १७ ॥
योधाश्च सर्वे ज्वलिताम्बरा भृशं प्रदुद्रुवुस्तत्र विदग्धवस्त्राः।
शब्दश्च घोरोऽतिबभूव तत्र यथा वने वेणुवनस्य दह्यतः ॥ १८ ॥
तद्वीक्ष्य कर्णो ज्वलनास्त्रमुद्यतं सवारुणं तत्प्रशमार्थमाहवे।
समुत्सृजन्सूतसुतः प्रतापवान्स तेन वह्निं शमयाम्बभूव ॥ १९ ॥
बलाहकौघश्च दिशस्तरस्वी चकार सर्वास्तिमिरेण संवृताः।
ततो धरित्रीधरतुल्यरोधसः समन्ततो वै परिवार्य वारिणा ॥ २० ॥
तैश्चातिवेगात्स तथाविधोऽपि नीतः शमं वह्निरतिप्रचण्डः।
बलाहकैरेव दिगन्तराणि व्याप्तानि सर्वाणि यथा नभश्च ॥ २१ ॥
तथा च सर्वास्तिमिरेण वै दिशो मेघैर्वृता न प्रदृश्येत किञ्चित्।

---

चलाने आरम्भ किये ॥ जैसे सन्ध्याके समय पक्षी शीघ्रता सहित वृक्षकी ओर दौडते हैं, ऐसेही अर्जुनके बाण कर्णके रथकी ओर सब ओरसे दौडे ॥ हे राजन्! विजयी अर्जुन अपनी भौंह टेढी करके जितने बाण छोडते थे उन सबके झुण्डको कर्ण अपने बाणोंसे काट देते थे ॥ ( १४-१६ )

तब अर्जुनने शत्रुओंका नाश करनेके लिये आग्नेय बाण चलाया उससे भूमि, आकाश और सूर्यके मार्गतक आग फैल गई उससे कर्णका शरीर प्रदीप्त होगया॥ सब वीरोंके कपडे जलने लगे और सेना भागने लगी तब वहां ऐसा शब्द उठा जैसा जलते हुए वेणुवनमें होता है ॥ ( १७-१८ )

प्रतापी सूतपुत्र कर्णने अपनी सेनाको जलते देख उसकी शान्तिके लिये वरुण अस्त्र चलाया, तब वह सब अग्नि ठण्डी होगयी, तब अनेक पर्वत तुल्य मेघ आकाशमें आगये और जल वर्षाने लगा और पृथ्वी जलसे भर गयी, उन मेघोंसे आकाश और सब दिशा पूरित होगयीं तथा अर्जुनका शस्त्रभी शान्त होगया, उस समय ऐसा अन्धकार होगया कि किसीको कुछ नहीं दीख

ताभ्यां द्यूतं समासक्तं विजयायेतराय च ।
अस्माकं पाण्डवानां च स्थितानां रणमूर्धनि ॥ ३३ ॥
तौ तु स्थितौ महाराज समरे युद्धशालिनौ ।
अन्योन्यं प्रतिसंरब्धावन्योन्यवधकांक्षिणौ ॥ ३४ ॥
तावुभौ प्रजिहीर्षन्ताविन्द्रवृत्राविव प्रभो ।
भीमरूपधरावास्तां महाधूमाविव ग्रहौ ॥ ३५ ॥
ततोऽन्तरिक्षे साक्षेपा विवादा भरतर्षभ ।
मिथोभेदाश्च भूतानामासन्कर्णार्जुनान्तरे ॥ ३६ ॥
व्यश्रूयन्त मिथो भिन्नाः सर्वलोकास्तु मारिष ।
देवदानवगन्धर्वाः पिशाचोरगराक्षसाः ॥ ३७ ॥
प्रतिपक्षग्रहं चक्रुः कर्णार्जुनसमागमे ।
द्यौरासीत्सूतपुत्रस्य पक्षे मातेव धिष्ठिता ॥ ३८ ॥
भूमिर्धनञ्जयस्यासीन्मातेव जयकांक्षिणी ।
गिरयः सागराश्चैव नद्यश्च सजलास्तथा ॥ ३९ ॥
वृक्षाश्चौषधयश्चैव व्याश्रयन्त परस्परम् ।
असुरा यातुधानाश्च गुह्यकाश्च परन्तप ॥ ४० ॥
ते कर्णं समपद्यन्त हृष्टरूपाः समन्ततः ।

समान खडे होकर देखने लगे और पराजयका सबको निश्चय होगया ॥ २९-३२

उस समय जय और पराजयका दांव रख हम और पाण्डव युद्धरूपी जुवा खेलने लगे ॥ हे महाराज! तब वे दोनों वीर एक दूसरेको मारनेकी इच्छासे युद्ध करनेको खडे हुए जैसे दो ग्रह धुएंसे भर कर उदय होते हैं । इन्द्र और वृत्रासुर जैसे इकट्टे हुए थे, ऐसे ही ये दोनों वीर लडनेको उपस्थित हुए ॥ ( ३३-३५ )

हे भरतकुल सिंह ! आकाशमें घूमते हुए सिद्धोंका कर्ण और अर्जुनकी विजयके लिये विवाद होने लगा ॥ उस समय देवता, दानव, गन्धर्व, पिशाच, सर्प और राक्षस आदि सब जगत्निवासी जीव इन कर्णार्जुनकी विजय के लिये विवाद करने लगे। सब आकाश के देवता कर्ण और अर्जुनका पक्ष लेकर विवाद करने लगे। जिस प्रकार आकाशके घूमनेवाले सिद्धोंने माताके समान कर्णका पक्ष धारण किया था। ऐसे ही नदी, समुद्र, वृक्ष और लताओंके सहित पृथ्वीने अर्जुनका पक्ष लिया। ( ३६-४० )

हे शत्रुनाशी ! उस समय असुर,

तत्पश्चालाः सोमकाश्चापि राजन्कर्णेनाजौ पीड्यमानाः शरौघैः।
क्रोधाविष्टा विव्यधुस्तं समन्तात्तीक्ष्णैर्बाणैः सूतपुत्रं समेताः॥ ३० ॥
तान्सूतपुत्रो निजघान बाणैः पश्चालानां रथनागाश्वसङ्घान्।
अभ्यर्दयद्बाणगणैः प्रसह्य विध्वा हर्षात्सङ्गरे सूतपुत्रः ॥ ३१ ॥
ते भिन्नदेहा व्यसवो निपेतुः कर्णेषुभिर्भूमितले स्वनन्तः।
क्रुद्धेन सिंहेन यथेभयूथा महावने भीमबलेन तद्वत् ॥ ३२ ॥
पश्चालानां प्रवरान्संनिहत्य प्रसह्य योधानखिलानदीनः।
ततः स राजन्विरराज कर्णो यथाम्बरे भास्कर उग्ररश्मिः॥ ३३ ॥
कर्णस्य मत्वा तु जयं त्वदीयाः परां मुदं सिंहनादांश्च चक्रुः।
सर्वे ह्यमन्यन्त भृशाहतौ च कर्णेन कृष्णाविति कौरवेन्द्र॥ ३४ ॥
तत्तादृशं प्रेक्ष्य महारथस्य कर्णस्य वीर्यं च परैरसह्यम्।
दृष्ट्वा च कर्णेन धनञ्जयस्य तथाजिमध्ये निहतं तदस्त्रम् ॥ ३५ ॥
ततस्त्वमर्षी क्रोधसन्दीप्तनेत्रो वातात्मजः पाणिना पाणिमाच्छेत्।
भीमोऽब्रवीदर्जुनं सत्यसन्धममर्षितो निःश्वसञ्जातमन्युः ॥ ३६ ॥
कथं नु पापोऽयमपेतधर्मः सूतात्मजः समरेऽद्य प्रसह्य।

---

डाला ॥ ( २८-२९ )

हे राजन्! सोमक और पाश्चालोंने भी क्रोध करके और उनके बाणोंसे व्याकुल होकर चारों ओरसे इकट्ठे होकर कर्णके ऊपर अनेक तेज बाण चलाये॥ सूतपुत्रने भी क्रोधसे भर कर पाञ्चाल देशीय हाथी, घोडे और रथोंपर चढे हुए झुण्डके झुण्डवीर बाणोंसे काटडाले। जैसे महावन में महापराक्रमी सिंह के मारे हुए शरीर टूटे हाथी गिर पडते है, ऐसे ही सूतपुत्रके बाणोंसे व्याकुल होकर तथा मरकर अनेक पाञ्चाल योद्धा गिर गये॥ ( ३०-३२ )

हे राजन्! उस समय पाण्डवोंके अनेक वीरोंको मारकर प्रतापी कर्ण इस प्रकार शोभित हुए जैसे दोपहरमें प्रखर तेजवाले सूर्य॥ हे कौरवेन्द्र! कर्णकी इस विजयको देख और यह जानकर कि कर्णने अपने पराक्रमसे कृष्ण और अर्जुनको बहुत व्याकुल कर दिया, तुम्हारी सेनाके वीर सिंहके समान गर्जने लगे॥ ( ३३-३४ )

इस प्रकार कर्णके पराक्रमको बढते और अर्जुनके शस्त्रका नाश देखकर महापराक्रमी भीमसेनने क्रोधकर अपने हाथ मीज कर सत्यवादी अर्जुनसे ऐसे वचन कहे, हे अर्जुन! इस पापी अधर्मी सूतके बेटेने तुम्हारे देखते देखते इतने

प्रेताश्चैव पिशाचाश्च क्रव्यादाश्च मृगाण्डजाः ॥ ५० ॥
राक्षसाः सह यादोभिः श्वसृगालाश्च कर्णतः ।
देवब्रह्मनृपर्षीणां गणाः पाण्डवतोऽभवन् ॥ ५१ ॥
तुम्बुरुप्रमुखा राजन्गन्धर्वाश्च यतोऽर्जुनः ।
राधेयाः सहमौनेया गन्धर्वाप्सरसां गणाः ॥ ५२ ॥
ईहामृगाः पक्षिगणा द्विपाश्वरथपत्तिभिः ।
उह्यमानास्तथा मेघैर्वायुना च मनीषिणः ॥ ५३ ॥
दिदृक्षवः समाजग्मुः कर्णार्जुनसमागमम् ।
देवदानवगन्धर्वा नागयक्षाः पतत्रिणः ॥ ५४ ॥
महर्षयो वेदविदः पितरश्च स्वधाभुजः ।
तपो विद्यास्तथौषध्यो नानारूपबलान्विताः ॥ ५५ ॥
अन्तरिक्षे महाराज विनदन्तोऽवतस्थिरे ।
ब्रह्मा ब्रह्मर्षिभिः सार्धं प्रजापतिभिरेव च ॥ ५६ ॥
भवश्चैव स्थितो याने दिव्यं तं देशमागमत् ।
समेतौ तौ महात्मानौ दृष्ट्वा कर्णधनञ्जयौ ॥ ५७ ॥
अर्जुनो जयतां कर्णमिति शक्रोऽब्रवीत्तदा ।
जयतामर्जुनं कर्ण इति सूर्योऽभ्यभाषत ॥ ५८ ॥

ब्राह्मण, क्षत्री, यज्ञ और दक्षिणा सब अर्जुनकी ओर हुए। भूत, प्रेत, पिशाच और मांस खानेवाले, सब जीव जन्तु, राक्षस, चर, अचर, कुत्ते, और गीदड कर्णकी ओर हुए। देवऋषि, ब्रह्मऋषि और राजऋषियोंने अर्जुनका पक्ष लिया॥ तुम्बुरु आदि सब गन्धर्व, अप्सरा और मुनिपुत्र भी अर्जुनही की ओर हुए॥ (५०-५२)

जैसे वायुसे मेघ भाग जाते हैं, ऐसे ही रथको देखकर भेडिये, पक्षियोंके झुण्ड, पदाति और रथ भागने लगे। अर्जुन और कर्णका युद्ध देखनेके लिये, देवता, दानव, गन्धर्व, नाग, यक्ष और पक्षी आये॥ इसी प्रकार वेद जाननेवाले महऋषि, श्राद्ध खानेवाले पितर, अनेक रूप धारनी विद्या, तपस्या औषधी भी आकाशमें गर्जती हुई घूमने लगी॥ (५३-५६)

हे राजन्! इस समय प्रजापति और ब्रह्मऋषियोंके सहित ब्रह्मा तथा दिव्य विमान पर चढकर शिव भी महात्मा कर्ण और अर्जुनका युद्ध देखने आये॥ इन्द्रने कहा कि, अर्जुन कर्णको जीते

यया धृत्या निहतं तामसास्त्रं युगे युगे राक्षसाश्चापि घोराः ॥ ४४ ॥
दम्भोद्भवाश्चासुराश्चाहवेषु तया धृत्या जहि कर्ण त्वमद्य ।
अनेन चास्य क्षुरनेमिनाद्य सञ्छिन्धि मूर्धानमरेः प्रसह्य ॥ ४५ ॥
मया विसृष्टेन सुदर्शनेन वज्रेण शक्रो नमुचेरिवारेः ।
किरातरूपी भगवान्सुधृत्या त्वया महात्मा परितोषितोऽभूत् ॥४६॥
तां त्वं पुनर्वीर धृतिं गृहीत्वा सहानुबन्धं जहि सूतपुत्रम् ।
ततो महीं सागरमेखलां त्वं सपत्तनां ग्रामवतीं समृद्धाम् ॥ ४७ ॥
प्रयच्छ राज्ञे निहतारिसङ्घां यशश्च पार्थातुलमाप्नुहि त्वम् ।
स एवमुक्तोऽतिबलो महात्मा चकार बुद्धिं हि वधाय सौतेः ॥ ४८ ॥
स चोदितो भीमजनार्दनाभ्यां स्मृत्वा तथात्मानमवेक्ष्य सर्वम् ।
इहात्मनश्चागमने विदित्वा प्रयोजनं केशवमित्युवाच ॥ ४९ ॥
प्रादुष्करोम्येष महास्त्रमुग्रं शिवाय लोकस्य वधाय सौतेः ।
तन्मेऽनुजानातु भवान्सुराश्च ब्रह्मा भवो वेदविदश्च सर्वे ॥ ५० ॥
इत्युच्य देवं स तु सव्यसाची नमस्कृत्वा ब्रह्मणे सोऽमितात्मा ।
तदुत्तमं ब्राह्ममसह्यमस्त्रं प्रादुश्चक्रे मनसा यद्विधेयम् ॥ ५१ ॥

---

धारणासे तामस अस्त्रका नाश किया था, और जिस विद्यासे युग युगमें घोर राक्षसोंका नाश किया है, और जिससे दुष्ट दानवोंको मारा है, उसी साहससे कर्णको जीतो; अब तुम इस तेज बाणसे इस शत्रुका शिर काट लो ॥ (४२–४५)

तुमने अपने बाहुबलसे युद्धमें किरात रूपधारी भगवान् शिवको प्रसन्न किया था, जैसे इन्द्रने नमुचीका नाश किया था ऐसे हमारे इस चक्रसे इस दुष्ट कर्णका नाश करो॥ हे वीर ! यदि तुम अपने बाणोंसे आज इस सूतपुत्रको मारकर ग्राम और नगरोंके सहित समुद्रवलयांकित भूमिको अपने जेठे भाईको समर्पित करोगे, तो तुम्हें अतुल यश मिलेगा ॥ (४६–४८)

श्रीकृष्णके ऐसे वचन सुन महात्मा बलवान् अर्जुनने कर्णके मारनेका विचार किया ॥ श्रीकृष्ण और भीमसेनके ऐसे वचन सुन और अपने बलका स्मरण कर तथा अपनी सेनाकी दशा देख अर्जुन श्रीकृष्णसे ऐसे बोले, अब मैं जगत् के कल्याण और सूतपुत्रके मारनेके लिये यह घोर शस्त्र चलाता हूं। आप, सब देवता, ब्रह्मा, शिव और सब वेद विद्या जाननेवाले, हमारे इस वचनको सुने, और हमें अनुमति दें, अब हम यह शस्त्र छोडते हैं ॥ (४८–५०)

श्रीकृष्णसे ऐसे कह पराक्रमी अर्जुन

व्यज्ञापयत देवेशमिदं मतिमतां वरः ।
पूर्वं भगवता प्रोक्तं कृष्णयोर्विजयो ध्रुवः ॥ ६७ ॥
तत्तथास्तु नमस्तेऽस्तु प्रसीद भगवन्मम ।
ब्रह्मेशानावथो वाक्यमूचतुस्त्रिदशेश्वरम् ॥ ६८ ॥
विजयो ध्रुवमेवास्य विजयस्य महात्मनः ।
खाण्डवेये हुतभुक्तोषितः सव्यसाचिना ॥ ६९ ॥
स्वर्गं च समनुप्राप्य साहाय्यं शक्र ते कृतम् ।
कर्णश्च दानवः पक्ष अतः कार्यः पराजयः ॥ ७० ॥
एवं कृते भवेत्कार्यं देवानामेव निश्चितम् ।
आत्मकार्यं च सर्वेषां गरीयस्त्रिदशेश्वर ॥ ७१ ॥
महात्मा फाल्गुनश्चापि सत्यधर्मरतः सदा ।
विजयस्तस्य नियतं जायते नात्र संशयः ॥ ७२ ॥
तोषितो भगवान्येन महात्मा वृषभध्वजः ।
कथं वा तस्य न जयो जायते शतलोचन ॥ ७३ ॥
यस्य चक्रे स्वयं विष्णुः सारथ्यं जगतः प्रभुः ।
मनस्वी बलवाञ्शूरः कृतास्त्रोऽथ तपोधनः ॥ ७४ ॥
बिभर्ति च महातेजा धनुर्वेदमशेषतः ।

---

करके बोले, हे भगवन्! आपने पहले कहा था कि, कृष्ण और अर्जुनकी निश्चय विजय होगी। हम आपको प्रणाम करते हैं अब आप अपने पहले वचनको सिद्ध कीजिये। (६५—६८)

तब ब्रह्मा और शिव बोले, जिस अर्जुनने खाण्डव वनमें अग्निको तृप्त किया था और जिसने स्वर्गमें जाकर तुम्हारी सहायता की थी, उसी अर्जुनकी विजय है, कर्ण दानवोंके पक्षमें है, इसलिये हार जांयगे॥ हे देवनाथ! ऐसा ही होनेसे देवतोंका कल्याण होगा जगत्में सबको अपना कल्याण प्यारा है॥ इसलिये ऐसा ही करना चाहिये। (६८--७१)

महात्मा अर्जुन सत्यवादी और धार्मिक है इसलिये इन्होंकी विजय होनी चाहिये॥ हे सहस्र नेत्रधारी! जिस अर्जुनने युद्धमें शिवको प्रसन्न किया है, सो कर्णको क्यों नहीं जीत सकेंगे? जिनके रथको सब शस्त्र जाननेवाले, बलवान् शूरवीर तीनलोकके स्वामी साक्षात् श्रीकृष्ण हांक रहे है और जो आप भी सब शस्त्र विद्याको जानते हैं,

अन्यस्य सव्यः सह वर्मणा च क्षुरप्रकृत्तः पतितो धरण्याम् ।
एवं समस्तानपि योधमुख्यान्विध्वंसयामास किरीटमाली॥ ५९ ॥
शरैः शरीरान्तकरैः सुघोरैर्दौर्योधनं सैन्यमशेषमेव ।
वैकर्तनेनापि तथाजिमध्ये सहस्रशो बाणगणा विसृष्टाः ॥ ६० ॥
ते घोषिणः पाण्डवमभ्युपेयुः पर्जन्यमुक्ता इव वारिधाराः ।
ततः सकृष्णं च किरीटिनं च वृकोदरं चाप्रतिमप्रभावः ॥ ६१ ॥
त्रिभिस्त्रिभिर्भीमबलो निहत्य ननाद घोरं महता स्वरेण ।
सकर्णबाणाभिहतः किरीटी भीमं तथा प्रेक्ष्य जनार्दनं च ॥ ६२ ॥
अमृष्यमाणः पुनरेव पार्थः शरान्दशाष्टौ च समुद्बबर्ह ।
स केतुमेकेन शरेण विध्वा शल्यं चतुर्भिस्त्रिभिरेव कर्णम् ॥६३ ॥
ततः स मुक्तैर्दशभिर्जघान सभापतिं काञ्चनवर्मनद्धम् ।
स राजपुत्रो विशिरा विबाहुर्विवाजिसूतो विधनुर्विकेतुः ॥ ६४ ॥
हतो रथाग्रादपतत्स रुग्णः परश्वधैः शाल इवावकृत्तः ।
पुनश्च कर्णं त्रिभिरष्टभिश्च द्वाभ्यां चतुर्भिर्दशभिश्च विध्वा॥६५ ॥
चतुःशतान्द्विरदान्सायुधान्वै हत्वा रथानष्टशताञ्जघान ।

---

सुन्दर हाथ खड्गके सहित कट गया, किसीका बाया हाथ क्षुर बाणोंसे कटनेसे कवचके सहित पृथ्वीमें गिर गया, इस प्रकार अर्जुनने अनेक प्रधान वीरोंको मार डाला ॥ ( ५७-५९ )

जैसे अर्जुनने अपने तेज और घोर बाणोंसे तुम्हारी सेनाका नाश किया ऐसे ही कर्णने भी युद्धमें सहस्रों बाण चलाये वे सब बाण अर्जुन, श्रीकृष्ण और भीमसेनके शरीरमें लगे। तेजस्वी कर्णके बाण इस समय वर्षते हुए मेघकी धाराके समान चलनेलगे। फिर महाबलवान् कर्ण तीनोंके शरीरमें तीन तीन बाण मार कर सिंहके समान गर्जने लगे। (५९-६२)

उन बाणोंके लगनेसे तथा श्रीकृष्ण और भीमसेनको अत्यन्त व्याकुल देखकर और क्रोध करके अर्जुनने फिर अठारह बाण चलाये। एक ध्वजामें तीन कर्णके शरीरमें और चार शल्यके मारे, शेप दश बाण सुवर्ण कवचधारी राजकुमार सभापतिके शरीरमें मारे, उन बाणोंके लगनेसे उस राजपुत्रके हाथ, शिर, सारथी, ध्वजा, घोडे, धनुष और केतु सब कट गये। वह अपने रथसे इस प्रकार गिरा जैसे कुल्हाडीसे कटा शाल वृक्ष। (६२-६५)

फिर अर्जुनने कर्णके शरीरमें तीन,

सहितो द्रोणभीष्माभ्यां नाकलोकमवाप्नुयात् ॥ ८३ ॥
इत्युक्तो देवदेवाभ्यां सहस्राक्षोऽब्रवीद्वचः ।
आमन्त्र्य सर्वभूतानि ब्रह्मेशानानुशासनम् ॥ ८४ ॥
श्रुतं भवद्भिर्यत्प्रोक्तं भगवद्भ्यां जगद्धितम् ।
तत्तथा नान्यथा तद्धि तिष्ठध्वं विगतज्वराः ॥ ८५ ॥
इति श्रुत्वेन्द्रवचनं सर्वभूतानि मारिष ।
विस्मितान्यभवन्राजन्पूजयाञ्चक्रिरे तदा ॥ ८६ ॥
व्यसृजंश्च सुगन्धीनि पुष्पवर्षाणि हर्षिताः ।
नानारूपाणि विबुधा देवतूर्याण्यवादयन् ॥ ८७ ॥
दिदृक्षवश्चाप्रतिमं द्वैरथं नरसिंहयोः ।
देवदानवगन्धर्वाः सर्वे एवावतस्थिरे ॥ ८८ ॥
रथौ तयोः श्वेतहयौ दिव्यौ युक्तौ महात्मनोः ।
यौ तौ कर्णार्जुनौ राजन्प्रहृष्टौ व्यवतिष्ठताम् ॥ ८९ ॥
समागता लोकवीराः शङ्खान्दध्मुः पृथक् पृथक् ।
वासुदेवार्जुनौ वीरौ कर्णशल्यौ च भारत ॥ ९० ॥
तद्भीरुसन्त्रासकरं युद्धं समभवत्तदा ।
अन्योन्यस्पर्धिनोरुग्रं शक्रशम्बरयोरिव ॥ ९१ ॥

स्वर्गलोकमें निवास करें चाहे वसुओंके लोकमें रहैं ॥ देवदेव ब्रह्मा और शिवके वचन सुन इन्द्रने सब देवतोंको अपने पास बुलाकर ऐसे वचन कहे, जो कुछ इन दोनों ईश्वरोंने जगत्के कल्याणके लिये कहा सो तुम लोग सुनो, अब ऐसाही होगा सब सुखी हो॥ ८२-८५

हे राजन् ! इन्द्रके ऐसे वचन सुन सब देवता प्रसन्न हुए और आश्चर्य करके इन्द्रकी प्रशंसा करने लगे और प्रसन्न होकर सुगन्धियोंसे भरे अनेक प्रकारके फूल वर्षाने लगे ॥ और अनेक प्रकारके बाजे बजाने लगे ॥ पुरुषसिंह अर्जुन और कृष्णका युद्ध देखनेको सब देवता स्थिर हुए ॥ सफेद घोडोंसे युक्त रथमें बैठे हुए महात्मा कृष्ण और अर्जुनको सब प्रसन्न होकर देखने लगे, तब इधरसे कृष्ण और अर्जुनने उधरसे कर्ण और वीर शल्यने अपने अपने शङ्ख बजाये ॥ ( ८६-९० )

तब इन दोनोंका भयानक युद्ध इस प्रकार होने लगा जैसे परम्पर इन्द्र और शम्बरका हुआ था ॥ हे भारत ! रथपर चढे इन दोनोंकी निर्मल ध्वजा आकाश

स कार्मुकज्यातलसंनिपातः सुमुक्तबाणस्तुमुलो बभूव ॥ ७३ ॥
घ्नतोस्तथान्योन्यमिषुप्रवेकैर्धनञ्जयस्याधिरथेश्च तत्र ।
ततो धनुर्ज्या सहसातिकृष्टा सुघोषमच्छिद्यत पाण्डवस्य ॥ ७४ ॥
तस्मिन्क्षणे पाण्डवं सूतपुत्रः समाचिनोत्क्षुद्रकाणां शतेन ।
निर्मुक्तसर्पप्रतिमैरभीक्ष्णं तैलप्रधौतैः खगपत्रवाजैः ॥ ७५ ॥
षष्ट्या बिभेदाशु च वासुदेवमनन्तरं फाल्गुनमष्टभिश्च ।
पूषात्मजो मर्मसु निर्बिभेद मरुत्सुतं चायुतशः शराग्र्यैः॥ ७६ ॥
कृष्णं च पार्थं च तथा ध्वजं च पार्थानुजान्सोमकान्पातयंश्च ।
प्राच्छादयंस्ते विशिखैः पृषत्कैर्जीमूतसङ्घा नभसीव सूर्यम्॥७७ ॥
आगच्छतस्तान्विशिखैरनेकैर्व्यष्टम्भयत्सूतपुत्रः कृतास्त्रः ।
तैरस्तमस्त्रं विनिहत्य सर्वं जघान तेषां रथवाजिनागान् ॥ ७८ ॥
तथा तु सैन्यप्रवरांश्च राजन्नभ्यर्दयन्मार्गणैः सूतपुत्रः ।
ते भिन्नदेहा व्यसवो निपेतुः कर्णेषुभिर्भूमितले स्वनन्तः ॥ ७९ ॥
सिंहेन क्रुद्धेन यथा श्वयूथ्या महाबला भीमबलेन तद्वत् ।

---

युद्ध करते देख पृथ्वी और आकाशके सब देवता और मनुष्य खडे रह गये, धनुष और तालका घोर शब्द, उत्तम बाणोंका चलना और बाणोंका बाणोंसे कटना देखने योग्य था। तब अर्जुनके अपने धनुषको अत्यन्त वेगसे खींचनेसे रोदा टूट गया। ( ७२–७४ )

इतने ही समयमें सूतपुत्रने अर्जुनके शरीरमें भी क्षुद्रक बाण मारे, फिर केंचुलीसे निकले सांपके समान तेलमें धोये हुए पक्षी पङ्ख युक्त साठ बाण श्रीकृष्णके शरीरमें मारे, और फिर आठ बाण अर्जुनके मारे, फिर प्रतापी कर्णने भीमसेनके मर्मस्थानोंमें असंख्य बाण मारकर कृष्ण और अर्जुनको बाणोंसे व्याकुल करके नकुल और सहदेवके शरीरमें अनेक बाण मारकर अनेक पाञ्चाल क्षत्रियोंको मारडाला। ७४-७७

जैसे मेघ सूर्यको छिपा देते हैं, ऐसे ही उन वीरोंने भी कर्णके रथको अपने बाणोंसे छिपा दिया। उनको आते देख शस्त्रविद्या जाननेवाले,कर्णने अपने बाणों-से रोक दिया। इनके चलाये हुए बाणों को काटकर अनेक हाथी,घोडे और मनु-ष्योंको काट डाला॥ अनेक प्रधान वीर भी मर गये। वे सब शब्द करते हुए कर्णके बाणोंसे व्याकुल होकर पृथ्वीमें गिर गये, और मर गये, जैसे बलवान् सिंह बडे बडे कुत्तोंको मारडालता है, ऐसे ही कर्णने पाञ्चालोंको मार डाला,

कर्णं चाप्यजयद् दृष्ट्या कुन्तीपुत्रो धनञ्जयः ।
अथाब्रवीत्सूतपुत्रः शल्यमाभाष्य सस्मितम्॥ १०१ ॥
यदि पार्थो रणे हन्यादद्य मामिह कर्हिचित् ।
किं करिष्यसि संग्रामे शल्य सत्यमथोच्यताम् ॥ १०२ ॥

शल्य उवाच— यदि कर्णं रणे हन्यादद्य त्वां श्वेतवाहनः ।
उभावेकरथेनाहं हन्यां माधवपाण्डवौ ॥ १०३ ॥

सञ्जय उवाच— एवमेव तु गोविन्दमर्जुनः प्रत्यभाषत
तं प्रहस्याब्रवीत्कृष्णः सत्यं पार्थमिदं वचः ॥ १०४ ॥
पतेद्दिवाकरः स्थानाच्छुष्येदपि महोदधिः ।
शैत्यमग्निरियान्न त्वां हन्यात्कर्णो धनञ्जयः ॥ १०५ ॥
यदि चैतत्कथञ्चित्स्याल्लोकपर्यासनं भवेत् ।
हन्यां कर्णं तथा शल्यं बाहुभ्यामेव संयुगे ॥ १०६ ॥
इति कृष्णवचः श्रुत्वा प्रहसन्कपिकेतनः ।
अर्जुनः प्रत्युवाचेदं कृष्णमक्लिष्टकारिणम् ॥ १०७ ॥
मम तावदपर्याप्तौ कर्णशल्यौ जनार्दन ।
सपताकध्वजं कर्णं सशल्यरथवाजिनम् ॥ १०८ ॥

दोनोंके नेत्र युद्धमें श्रीकृष्ण जीते ॥ इसी प्रकार नेत्र युद्धमें कर्णको अर्जुनने जीत लिया तब कर्णने शल्यको पुकारकर ऐसे वचन कहे । हे शल्य ! आप सत्य सत्य कहो यदि अर्जुन मुझे युद्धमें मार डालेंगे तो आप क्या कीजियेगा ? (९९–१०२)

शल्य बोले, हे कर्ण ! यदि अर्जुन युद्धमें तुमको मारेंगे तो मैं एकला ही कृष्ण और अर्जुनको मार डालूंगा ॥ (१०३)

सञ्जय बोले, हे राजन् ! इसी प्रकार अर्जुनने श्रीकृष्णसे पूछा, वह सुनकर श्रीकृष्णने हंसकर कहा कि, हे कुन्तीपुत्र ! तुम जो कहते हो सो सत्य है । परन्तु चाहे समुद्र सूख जाय, अग्नि ठण्ढी होजाय, सूर्य अपने स्थानसे गिर जाय परन्तु कर्ण तुमको न मार सकेगा, यदि यह सब जगत् उलट जाय और कर्ण तुमको मारही डाले तो मैं केवल अपने हाथोंहीसे कर्ण और शल्यको पीस दूंगा ॥ (१०४–१०६)

श्रीकृष्णके ऐसे वचन सुन अर्जुन हंसकर ऐसे बोले, हे कृष्ण ! मैं एकला ही घोडे, शल्य, पताका और ध्वजाके सहित कर्णके मारनेमें समर्थ हूं । हे कृष्ण ! आप थोडे समयमें देखेंगे कि

प्रक्रीडमानोऽथ श्मशानमध्ये रौद्रे मुहूर्ते रुधिरार्द्रगात्रः ॥ ८७ ॥
ततस्त्रिभिस्तं त्रिदशाधिपोपमं शरैर्बिभेदाधिरथिर्धनञ्जयम् ।
शरांश्च पञ्च ज्वलितानिवोरगान्प्रवेशयामास जिघांसयाच्युतम् ॥ ८८ ॥
ते वर्म भित्त्वा पुरुषोत्तमस्य सुवर्णचित्रा न्यपतन्सुमुक्ताः ।
वेगेन गामाविविशुः सुवेगाः स्नात्वा च कर्णाभिमुखाः प्रतीयुः ॥ ८९ ॥
तान्पञ्च भल्लैर्दशभिः सुमुक्तैस्त्रिधा त्रिधैकैकमथोचकर्त ।
धनञ्जयास्त्रैर्न्यपतन्पृथिव्यां महाहयस्तक्षकपुत्रपक्षाः ॥ ९० ॥
ततः प्रजज्वाल किरीटमाली क्रोधेन कक्षं प्रदहन्निवाग्निः ।
तथा विनुन्नाङ्गमवेक्ष्य कृष्णं सर्वेषुभिः कर्णभुजप्रसृष्टैः ॥ ९१ ॥
स कर्णमाकर्णविकृष्टसृष्टैः शरैः शरीरान्तकरैर्ज्वलद्भिः ।
मर्मस्वविद्ध्यत्स चचाल दुःखाद्दैवाद्वातिष्ठत धैर्यबुद्धिः ॥ ९२ ॥
ततः शरौघैः प्रदिशो दिशश्च रवेः प्रभा कर्णरथश्च राजन् ।
अदृश्यमासीत्कुपिते धनञ्जये तुषारनीहारवृतं यथा नभः ॥ ९३ ॥
स चक्ररक्षानथ पादरक्षान्पुरःसरान्पृष्ठगोपांश्च सर्वान् ।
दुर्योधनेनानुमतानरिघ्नः समुद्यतान्सरथान्सारभूतान् ॥ ९४ ॥

---

कर्ण मशानमें घूमते हुए शिवके समान घूमने लगे ॥ ( ८४–८७ )

तब कर्णने इन्द्रके समान पराक्रमी अर्जुनके शरीरमें तीन और कृष्णके शरीमें मारनेके लिये अग्निके समान प्रकाशित जलते हुए पांच बाण मारे। वे बाण उनके कवच काटकर वेगसे रुधिरमें भीगकर पृथ्वीमें घुस गये। कर्णने जो तक्षकपुत्र अश्वसेनके मन्त्र युक्त पांच बाण कृष्ण की ओर चलाये थे, उन को अर्जुनने अपने दश बाणोंसे काटकर पृथ्वीमें गिरा दिया ॥ (८८–९०)

कर्णके बाणोंसे निकले हुए सांपोंसे कृष्णको व्याकुल देख अर्जुन इस प्रकार क्रोधसे जलने लगे, जैसे काठमें दबी हुई अग्नि एकबार जलती है। तब अर्जुन ने कर्णके शरीरमें कानतक खींचकर शरीर नाश करनेके योग्य अनेक बाण मारे, उनके लगनेसे कर्ण कांपने लगे। परन्तु प्रारब्ध और धीरसे भाग नहीं सके ॥ जैसे कुहर बरसनेसे आकाश छिप जाता है, ऐसे ही अर्जुनके बाणोंसे दिशा सूर्यकी किरण और कर्णका रथ ये सब छिप गये ॥ दुर्योधनकी आज्ञासे आये हुए कर्णके रथके आगे पीछे और इधर उधर रक्षा करनेवाले रथपर चढे अनेक वीरों को अर्जुनने मार डाला ॥(९१-९४)

वाग्भिश्चामृतकल्पाभिर्धर्मराजं च पाण्डवम् ॥११७॥४४७४

इति श्रीमहाभारते शतसाहस्र्यां० कर्णपर्वणि कर्णार्जुनसमागमे द्वैरथे सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

सञ्जय उवाच— तद्देवनागासुरसिद्धयक्षैर्गन्धर्वरक्षोऽप्सरसां च सङ्घैः ।
ब्रह्मर्षिराजर्षिसुपर्णजुष्टं बभौ वियद्विस्मयनीयरूपम् ॥ १ ॥
नानद्यमानं निनदैर्मनोज्ञैर्वादित्रगीतस्तुतिनृत्यहासैः ।
सर्वेऽन्तरिक्षं ददृशुर्मनुष्याः खस्थाश्च तद्विस्मयनीयरूपम् ॥ २ ॥
ततः प्रहृष्टाः कुरुपाण्डुयोधा वादित्रशङ्खस्वनसिंहनादैः ।
विनादयन्तो वसुधां दिशश्च स्वनेन सर्वान्द्विषतो निजघ्नुः ॥ ३ ॥
नराश्वमातङ्गरथैः समाकुलं शरासिशक्त्यृष्टिनिपातदुःसहम् ।
अभीरुजुष्टं हतदेहसंकुलं रणाजिरं लोहितमाबभौ तदा ॥ ४ ॥
बभूव युद्धं कुरुपाण्डवानां यथा सुराणामसुरैः सहाभवत् ।
तथा प्रवृत्ते तुमुले सुदारुणे धनञ्जयस्याधिरथेश्च सायकैः ॥ ५ ॥
दिशश्च सैन्यं च शितैरजिह्मगैः परस्परं प्रावृणुतां सुदंशितैः ।
ततस्त्वदीयाश्च परे च सायकैः कृतेऽन्धकारे ददृशुर्न किञ्चन ॥ ६ ॥

के समान वचनोंसे रोती हुई द्रौपदीको और धर्मराज युधिष्ठिर को प्रसन्न करोगे ॥ ( ११५—११७ ) [ ४४७४ ]

कर्णपर्वमें सतासी अध्याय समाप्त ।

कर्णपर्वमें अठासी अध्याय ।

सञ्जय बोले, हे राजन् ! उस समय देवता, सांप, राक्षस, सिद्ध, गन्धर्व, यक्ष और अप्सराओंके झुण्डसे आकाश भर गया और विचित्र रूपी हो गया ॥ नीचे खडे हुए सब वीरोंने उस समय आकाशमें गीत, बाजे और नाच देखकर बहुत आश्चर्य किया और उत्तम वस्तुओंको देख बहुत प्रसन्न हुए । दोनों ओरके सब योद्धा प्रसन्न होकर अनेक प्रकार के बाजे और शङ्ख बजाकर शत्रुओंको मारने लगे ॥ (१—३)

उस समय हाथी, घोडे, रथ और मनुष्योंसे भरी हुई बाण, असि, शक्ति आदि शस्त्रोंसे शोभित और मरे हुए शरीरोंसे भरी हुई वह युद्धभूमि रुधिरसे भरजानेके कारण अत्यन्त शोभित हुई, उसके समीप कादरके जानेकी सामर्थ न थी, जिस प्रकार देवता और राक्षसोंका युद्ध हुआ था, ऐसे ही यह कौरव और पाण्डवोंका घोर युद्ध हुआ । तब अर्जुन और कर्ण भी घोर बाण चलाने लगे । उस समय अर्जुन कर्णके मारनेके लिये और कर्ण अर्जुनके मारनेके लिये अपने बाणोंसे सेनाको मारने लगे । उस समय सब दिशाओंमें छाये हुए बाणोंसे युद्धमें

प्रक्रीडमानोऽथ श्मशानमध्ये रौद्रे मुहूर्ते रुधिरार्द्रगात्रः ॥ ८७ ॥
ततस्त्रिभिस्तं त्रिदशाधिपोपमं शरैर्बिभेदाधिरथिर्धनञ्जयम् ।
शरांश्च पञ्च ज्वलितानिवोरगान्प्रवेशयामास जिघांसयाच्युतम् ॥ ८८ ॥
ते वर्म भित्त्वा पुरुषोत्तमस्य सुवर्णचित्रा न्यपतन्सुमुक्ताः ।
वेगेन गामाविविशुः सुवेगाः स्नात्वा च कर्णाद्भिमुखाः प्रतीयुः ॥ ८९ ॥
तान्पञ्च भल्लैर्दशभिः सुमुक्तैस्त्रिधा त्रिधैकैकमथोचकर्त ।
धनञ्जयास्त्रैर्न्यपतन्पृथिव्यां महाहयस्तक्षकपुत्रपक्षाः ॥ ९० ॥
ततः प्रजज्वाल किरीटमाली क्रोधेन कक्षं प्रदहन्निवाग्निः ।
तथा विनुन्नाङ्गमवेक्ष्य कृष्णं सर्वेषुभिः कर्णभुजप्रसृष्टैः ॥ ९१ ॥
स कर्णमाकर्णविकृष्टसृष्टैः शरैः शरीरान्तकरैर्ज्वलद्भिः ।
मर्मस्वविद्ध्यत्स चचाल दुःखाद्दैवादवातिष्ठत धैर्यबुद्धिः ॥ ९२ ॥
ततः शरौघैः प्रदिशो दिशश्च रवेः प्रभा कर्णरथश्च राजन् ।
अदृश्यमासीत्कुपिते धनञ्जये तुषारनीहारवृतं यथा नभः ॥ ९३ ॥
स चक्ररक्षानथ पादरक्षान्पुरःसरान्पृष्ठगोपांश्च सर्वान् ।
दुर्योधनेनानुमतानरिघ्नः समुद्यतान्सरथान्सारभूतान् ॥ ९४ ॥

कर्ण सशानमें घूमते हुए शिवके समान घूमने लगे ॥ ( ८४-८७ )

तब कर्णने इन्द्रके समान पराक्रमी अर्जुनके शरीरमें तीन और कृष्णके शरीमें मारनेके लिये अग्निके समान प्रकाशित जलते हुए पांच बाण मारे। वे बाण उनके कवच काटकर वेगसे रुधिरमें भीगकर पृथ्वीमें घुस गये। कर्णने जो तक्षकपुत्र अश्वसेनके मन्त्र युक्त पांच बाण कृष्ण की ओर चलाये थे, उन को अर्जुनने अपने दश बाणोंसे काटकर पृथ्वीमें गिरा दिया ॥ (८८-९०)

कर्णके बाणोंसे निकले हुए सांपोंसे कृष्णको व्याकुल देख अर्जुन इस प्रकार क्रोधमे जलने लगे, जैसे काठमें दबी हुई अग्नि एकवार जलती है। तब अर्जुन ने कर्णके शरीरमें कानतक खींचकर शरीर नाश करनेके योग्य अनेक बाण मारे, उनके लगनेसे कर्ण कांपने लगे। परन्तु प्रारब्ध और धीरसे भाग नहीं सके ॥ जैसे कुहर बरसनेसे आकाश छिप जाता है, ऐसे ही अर्जुनके बाणोंसे दिशा सूर्यकी किरण और कर्णका रथ ये सब छिप गये ॥ दुर्योधनकी आज्ञासे आये हुए कर्णके रथके आगे पीछे और इधर उधर रक्षा करनेवाले रथपर चढे अनेक वीरों को अर्जुनने मार डाला ॥(९१-९४)

ततो विसस्रुः पुनरर्दिता नरा नरोत्तमाभ्यां कुरुपाण्डवाश्रयाः ॥ १३ ॥
सनागपत्त्यश्वरथा दिशो दश तथा यथा सिंहहता वनौकसः ।
ततस्तु दुर्योधनभोजसौबलाः कृपेण शारद्वतसूनुना सह ॥ १४ ॥
महारथाः पञ्च धनञ्जयाच्युतौ शरैः शरीरार्तिकरैरताडयन् ।
धनूंषि तेषामिषुधीन्ध्वजान्हयान्रथांश्च सूतांश्च धनञ्जयः शरैः ॥१५॥
समं प्रमथ्याशु परान्समन्ततः शरोत्तमैर्द्वादशभिश्च सूतजम् ।
अथाभ्यधावंस्त्वरिताः शतं रथाः शतं गजाश्चार्जुनमाततायिनः ॥१६॥
शकास्तुषारा यवनाश्च सादिनः सहैव काम्बोजवरैर्जिघांसवः ।
वरायुधान्पाणिगतैः शरैः सह क्षुरैर्न्यकृन्तत्प्रपतञ्शिरांसि च ॥१७॥
हयांश्च नागांश्च रथांश्च युध्यतो धनञ्जयः शत्रुगणान्क्षितौ क्षिणोत् ।
ततोऽन्तरिक्षे सुरतूर्यनिःस्वनाः ससाधुवादाहृषितैः समीरिताः ॥१८॥
निपेतुरप्युत्तमपुष्पवृष्टयः सुगन्धिगन्धाः पवनेरिताः शुभाः ।
तदद्भुतं देवमनुष्यसाक्षिकं समीक्ष्य भूतानि विसिस्मियुस्तदा ॥१९॥
तवात्मजः सूतसुतश्च न व्यथां न विस्मयं जग्मतुरेकनिश्चयौ ।

---

मनुष्योंको मारने लगे । तब दोनों ओरकी सेना फिर भागने लगी, जिस समय तुम्हारी सेना सिंहसे डरे हुए हरिनोंके समान भागने लगी, तब दुर्योधन, कृतवर्मा, कृपाचार्य, अश्वत्थामा और सुबलपुत्र शकुनि कृष्ण और अर्जुनके ऊपर शरीर काटनेवाले बाण छोडने लगे। ( १३-१५ )

तब अर्जुनने क्षणमात्रमें अपने बाणोंसे इन पाचों महारथोंके घोडे, सारथी, ध्वजा, रथ और धनुष काट दिये । तब अर्जुनने इन सबको अपने बाणोंसे व्याकुल करके सूतपुत्रके शरीरमें बारह बाण मारे ॥ (१५—१६)

उस समय सौ मतवाले हाथी और सौ रथ वधकी इच्छासे वीर अर्जुनकी ओर दौडे। इसी प्रकार घोडोंपर चढकर शक, तुषार, यवन और काम्बोज अनेक प्रकारके तेज बाण वर्षाते हुए अर्जुनसे युद्ध करनेको आये, अर्जुनने अपने क्षुर बाणोंसे उस सेनाके अनेक वीरोंके शिर काट दिये, अर्जुनने अपने बाणोंसे युद्ध करते हुए वीरोंके हाथी, घोडे और रथोंको काट डाला। उस समय आकाशमें खडे हुए देवता साधु साधु कहकर अनेक प्रकारके बाजे बजाने लगे और प्रसन्न होने लगे । अनेक सुगन्धसे युक्त वायु आकाशसे फूल वर्षाने लगा । देव मनुष्यकी साक्षीमें इस फूल वर्षाको देख वे सब वीर आश्चर्य करने लगे ॥ (१६-१९)

तदर्जुनास्त्रं व्यधमद्दहन्तं कर्णस्तु बाणैर्निशितैर्महात्मा ॥ ४ ॥
ततो विमर्दः सुमहान्बभूव तत्रार्जुनस्याधिरथेश्च राजन्।
अन्योन्यमासादयतोः पृषत्कैर्विषाणघातैर्द्विपयोरिवोग्रैः ॥ ५ ॥
तत्रास्त्रसङ्घातसमावृतं तदा बभूव राजंस्तुमुलं स्म सर्वतः।
तत्कर्णपार्थौ शरवृष्टिसङ्घैर्निरन्तरं चक्रतुरम्बरं तदा ॥ ६ ॥
ततो जालं बाणमयं महान्तं सर्वेऽद्राक्षुः कुरवः सोमकाश्च।
नान्यं च भूतं ददृशुस्तदा ते बाणान्धकारे तुमुलेऽथ किञ्चित् ॥ ७ ॥
तौ सन्दधानावनिशं च राजन्समस्यन्तौ चापि शराननेकान्।
सन्दर्शयेतां युधि मार्गान्विचित्रान्धनुर्धरौ तौ विविधैः कृतास्त्रैः ॥८॥
तयोरेवं युध्यतोराजिमध्ये सूतात्मजोऽभूदधिकः कदाचित्।
पार्थः कदाचित्त्वधिकः किरीटी वीर्यास्त्रमायाबलपौरुषेण ॥ ९ ॥
दृष्ट्वा तयोस्तं युधि सम्प्रहारं परस्परस्यान्तरमीक्षमाणयोः।
घोरं तयोर्दुर्विषहं रणेऽन्यैर्योधाः सर्वे विस्मयमभ्यगच्छन् ॥ १० ॥
ततो भूतान्यन्तरिक्षस्थितानि तौ कर्णपार्थौ प्रशशंसुर्नरेन्द्र।
भोः कर्ण साध्वर्जुन साधु चेति वियत्सु वाणी श्रूयते सर्वतोऽपि ॥११॥
तस्मिन्विमर्दे रथवाजिनागैस्तदाभिघातैर्दलिते हि भूतले।

अनुसार अर्जुनके उस शस्त्रका नाश कर दिया ॥ (१—४)

हे राजन्! जैसे दो मतवाले हाथी अपने दांतोंसे घोर युद्ध करते है, ऐसे ही अधिरथपुत्र कर्ण और अर्जुन अपने बाणोंसे एक दूसरेके मारनेको घोर युद्ध करने लगे ॥ उस समय सब युद्धभूमि बाणोंसे पूरित होगई। इसी प्रकार कर्ण और अर्जुनके बाणोंके अन्धकारमें पाञ्चाल और कौरवोंको बाणोंके जालके सिवाय और कुछ नहीं दीखता था, दोनों धनुषधारी वीर अपने अपने अभ्यासके अनुसार शीघ्रता सहित अनेक बाण चलाते हुए अनेक प्रकारकी गतियां दिखलाने लगे ॥ (५—८)

रणभूमिके बीचमें युद्ध करते हुए इन दोनोंमें कभी विद्या बल और साहसमें कर्ण और कभी अर्जुन अधिक दीखने लगते थे ॥ उन दोनोंके दूसरेसे न सहने योग्य घोर बाण घाव देखकर सब योद्धा आश्चर्य करते थे ॥ हे पृथ्वीनाथ! तब आकाशमें खडे हुए सब देवता कर्ण और अर्जुनकी प्रशंसा करने लगे। उस समय आकाशमे यही शब्द सुनाई देता था, कि कर्णको धन्य है और अर्जुनने बहुत पराक्रम किया ॥ (९—११)

ममापि मानः परमः सदा त्वयि ब्रवीम्यतस्त्वां परमाच्च सौहृदाच्च ।
निवारयिष्यामि च कर्णमप्यहं यदा भवान्सप्रणयो भविष्यति ॥ २७ ॥
वदन्ति मित्रं सहजं विचक्षणास्तथैव साम्ना च धनेन चार्जितम् ।
प्रतापतश्चोपनतं चतुर्विधं तदस्ति सर्वं तव पाण्डवेषु ॥ २८ ॥
निसर्गतस्ते तव वीर बान्धवाः पुनश्च साम्ना समवाप्नुहि प्रभो ।
त्वयि प्रसन्ने यदि मित्रतां गते हितं कृतं स्याज्जगतस्त्वयातुलम् ॥ २९ ॥
स एवमुक्तः सुहृदा वचो हितं विचिन्त्य निःश्वस्य च दुर्मनाऽब्रवीत् ।
यथा भवानाह सखे तथैव तन्ममापि विज्ञापयतो वचः शृणु ॥ ३० ॥
निहत्य दुःशासनमुक्तवान्वचः प्रसह्य शार्दूलवदेष दुर्मतिः ।
वृकोदरस्तद्धृदये मम स्थितं न तत्परोक्षं भवतः कुतः शमः ॥ ३१ ॥
न चापि कर्णं प्रसहेद्रणेऽर्जुनो महागिरिं मेरुमिवोग्रमारुतः ।
न चाश्वसिष्यन्ति पृथात्मजा मयि प्रसह्य वैरं बहुशो विचिन्त्य ॥ ३२ ॥
न चापि कर्णं गुरुपुत्रसंयुगादुपारमेत्यर्हसि वक्तुमच्युत ।
श्रमेण युक्तो महताद्य फाल्गुनस्तमेष कर्णः प्रसभं हनिष्यति ॥ ३३ ॥
तमेवमुक्त्वाप्यनुनीय चासकृत्तवात्मजः स्वाननुशास्ति सैनिकान् ।

हूजिये, हम कर्णको भी युद्धसे रोक देंगे। हे महाराज! पण्डित लोग मित्रों और शत्रुओंके लिये साम, दाम, दण्ड और नम्रता यही चार उपाय बतलाते है। सो पाण्डवोंके सङ्ग आप चारों ही कर सक्ते हैं। हे राजन्! हे महाराज! हे वीर! पाण्डव लोग जन्म हीसे आपके बन्धु हैं। आप प्रसन्न होकर इनसे सन्धि कीजिये ऐसा होनेसे सब जगत्-का अतुलनीय कल्याण होगा॥ २६ २९

गुरुपुत्रके ऐसे वचन सुन दुर्योधन लम्बी सांस लेकर और विमन होकर बोला, हे आचार्य पुत्र! आप जो कहते है सो सभी सत्य है, परन्तु मेरे भी कुछ वचन सुनिये॥ इस दुष्ट भीमसेनने जो दुःशासनको मारते समय आपके आगे शार्दूलके समान गर्जकर वचन कहे थे, सो मेरे हृदयमें शलते हैं। भला अब उन वचनोंको सुनकर सान्धि कैसे हो सक्ती है? जैसे वायु पर्वतराज मेघको नहीं उडा सक्ता ऐसे ही अर्जुन कर्णको नहीं मार सकते और मुझसे वैर करके अत्यन्त यत्न करने पर भी पाण्डव बहुत दिन नहीं जी सकेंगे॥(३०-३२)

हे गुरुपुत्र! आप इस समय कर्णसे यह भी नहीं कह सकते हैं, कि युद्ध मत करो क्योंकि अर्जुन बहुत थक गये हैं, अब कर्ण इन्हें अवश्यही मारडालेंगे॥

उभौ महेन्द्रस्य समानविक्रमावुभौ महेन्द्रप्रतिमौ महारथौ ।
महेन्द्रवज्रप्रतिमैश्च सायकैर्महेन्द्रवृत्राविव सम्प्रजघ्नतुः ॥ ७ ॥
सनागपत्त्यश्वरथे शुभे बले विचित्रवर्माभरणाम्बरायुधे ।
चकम्पतुर्विस्मयनीयरूपे वियद्गताश्चार्जुनकर्णसंयुगे ॥ ८ ॥
भुजाः सवस्त्राङ्गुलयः समुच्छ्रिताः ससिंहनादैर्हृषितैर्दिदृक्षुभिः ।
यदर्जुनो मत्त इव द्विपो द्विपं समभ्ययादाधिरथिं जिघांसया ॥ ९ ॥
उदक्रोशन्सोमकास्तत्र पार्थं पुरःसराश्चार्जुन भिन्धि कर्णम् ।
छिन्ध्यस्य मूर्धानमलं चिरेण श्रद्धां च राज्याद्धृतराष्ट्रसूनोः ॥ १० ॥
तथास्माकं बहवस्तत्र योधाः कर्णं तथा याहि याहीत्यवोचन् ।
जह्यर्जुनं कर्ण शरैः सुतीक्ष्णैः पुनर्वनं यान्तु चिराय पार्थाः ॥ ११ ॥
तथा कर्णः प्रथमं तत्र पार्थं महेषुभिर्दशभिः सम्प्राविध्यत् ॥ १२ ॥
परस्परं तौ विशिखैः सुपुङ्खैस्ततक्षतुः सूतपुत्रोऽर्जुनश्च ।
परस्परं तौ विभिदुर्विमर्दे सुभीममभ्यापततुश्च हृष्टौ ॥ १३ ॥
ततोऽर्जुनः प्रामृजदुग्रधन्वा भुजावुभौ गाण्डिवं चानुमृज्य ।

---

दो तालाव मिलते है, ऐसेही ये ध्वजा युक्त दोनों रथ मिल गये ॥ (४—६)

ये दोनों इन्द्रके समान बलवान, इन्द्रके समान उत्साही वीर इन्द्र और वृत्रासुरके समान वज्र तुल्य बाणोंसे युद्ध करने लगे ॥ अर्जुन और कर्णको रथमें बैठा देख घोडे, हाथी और रथ तथा आकाशके देवता आश्चर्य करके कांपने लगे ॥ जिस समय मतवाले हाथीकी ओर मतवाले हाथीके समान अर्जुन कर्णकी ओर चले, तब सब योद्धा शस्त्र और पङ्खोके सहित हाथ फैलाकर सिंहके समान गर्जने लगे ॥ (७— ९)

सब पाञ्चाल कहने लगे, हे अर्जुन! आप कर्णको मारिये, इसका सिर काटकर दुर्योधनको राज्यसे भ्रष्ट कीजिये ॥ इसी प्रकार हमारी ओरके योद्धा कहने लगे कि, हे कर्ण ! तुम जाओ और अपने तेज बाणोंसे शीघ्र अर्जुनको मारो और युधिष्ठिरके लिये फिर बहुत दिनको वनवास दो ॥ जब पहले कर्णने अर्जुनके शरीरमें दश बाण मारे, तब अर्जुनने भी हंसकर अत्यन्त तेज बाण कर्णकी कोखमें मारे, तब वे दोनों प्रसन्न होकर एक दूसरेकी ओर अनेक तेज बाण चलाने लगे और घोर युद्ध करने लगे ॥ (१०–१३)

तब अर्जुनने अपने हाथ फटकाकर और धनुष घुमाकर अनेक नालीक,नाराच, वराहकर्ण और अर्धचन्द्र बाण

ततस्तु वीरः शरविक्षताङ्गो दध्रे मनो छेकशयस्य तस्य ॥ १९ ॥
ततो रिपुघ्नं समधत्त कर्णः सुसञ्चितं सर्पमुखं ज्वलन्तम् ।
रौद्रं शरं सन्नतमुग्रधौतं पार्थार्थमत्यर्थचिराभिगुप्तम् ॥ २० ॥
सदार्चितं चन्दनचूर्णशायितं सुवर्णतूणीरशयं महार्चिषम् ।
आकर्णपूर्णं च विकृष्य कर्णः पार्थोन्मुखः सन्दधे चोत्तमौजाः ॥२१॥
प्रदीप्तमैरावतवंशसम्भवं शिरो जिहीर्षुर्युधि सव्यसाचिनः ।
ततः प्रजज्वाल दिशो नभश्च उल्काश्च घोराः शतशः प्रपेतुः ॥२२ ॥
तस्मिंस्तु नागे धनुषि प्रयुक्ते हाहाकृता लोकपालाः सशक्राः ।
न चापि तं बुबुधे सूतपुत्रो बाणे प्रविष्टं योगबलेन नागम् ॥ २३ ॥
दशशतनयनोऽहिं दृश्य बाणे प्रविष्टं निहत इति सुतो मे स्रस्तगात्रो बभूव।
जलजकुसुमयोनिः श्रेष्ठभावो जितात्मा
त्रिदशपतिमवोचन्मा व्यथिष्ठा जये श्रीः ॥ २४ ॥
ततोऽब्रवीन्मद्रराजो महात्मा दृष्ट्वा कर्णं प्रहितेषुं तमुग्रम् ।
न कर्ण ग्रीवामिषुरेष लप्स्यते समीक्ष्य सन्धत्स्व शरं शिरोघ्नम् ॥ २५ ॥
अथाब्रवीत्क्रोधसंरक्तनेत्रो मद्राधिपं सूतपुत्रस्तरस्वी ।
न सन्धत्ते द्विःशरं शल्य कर्णो न मादृशा जिह्मयुद्धा भवन्ति ॥२६॥

---

एक वीर अर्जुनको मारनेकी इच्छा की और बहुत दिनसे अर्जुनके लिये रक्खा हुआ तेलमें भीगा अत्यन्त तेज सांप मुखवाला बाण धनुषपर चढाया, तब कर्णने सोनेके तूणीरमें सोनेवाले, सदा चन्दन आदि सुगन्धोंसे पूजित, उस महातेजस्वी बाणको कान तक खींचकर अर्जुनका शिर काटनेके लिये अर्जुनकी ओर छोडा ॥ ( १९–२१ )

वह ऐरावत वंशमें उत्पन्न हुआ बाण अपने तेजसे सब दिशाओंको प्रकाशित करने लगा, उस सांप युक्त बाणके धनुष पर चढते ही इन्द्रादि सब देवता हाहाकार करने लगे । परन्तु कर्णने यह नहीं जाना कि इसमें योग बलसे सांप घुसा है, उस सांपको बाणमें घुसा हुआ देख सहस्र नेत्रवाले देवराज इन्द्रने यह जाना कि अर्जुन मर जायगा, बहुत घबराए, तब जगत् कर्त्ता कमलसे उत्पन्न हुए ब्रह्माने कहा तुम कुछ मत डरो ॥ (२२—२४)

तब महापराक्रमी शल्यने बाण छोडते हुए कर्णसे कहा । हे कर्ण ! तुम्हारा लक्ष्य ठीक नहीं है, यह बाण धनुषसे छूट कर अर्जुनके कण्ठमें नहीं लग सकेगा । इस लिये अर्जुनका शिर देख कर बाण छोडो। तब कर्णने क्रोध करके

अथापोवाह्यास्त्रसङ्घान्समस्तान्वायव्यास्त्रेणापतत: स कर्णात् ॥ २२ ॥
ततोऽप्यस्त्रं दयितं देवराज्ञः प्रादुश्चक्रे वज्रमतिप्रभावम् ।
गाण्डीवं ज्यां विशिखांश्चानुमन्त्र्य धनञ्जयः शत्रुभिरप्रधृष्यः॥ २३ ॥
ततः क्षुरप्राञ्जलिकार्धचन्द्रा नालीकनाराचवराहकर्णाः ।
गाण्डीवतः प्रादुरासन्सुतीक्ष्णाः सहस्रशो वज्रसमानवेगाः ॥ २४ ॥
ते कर्णमासाद्य महाप्रभावाः सुतेजना गार्ध्रपत्राः सुवेगाः ।
गात्रेषु सर्वेषु हयेषु चापि शरासने युगचक्रे ध्वजे च ॥ २५ ॥
निर्भिद्य तूर्णं विविशुः सुतीक्ष्णास्ताक्ष्यत्रस्ता भूमिमिवोरगास्ते ।
शराचिताङ्गो रुधिरार्द्रगात्रः कर्णस्तदा रोषविवृत्तनेत्रः ॥ २६ ॥
दृढज्यमानम्य समुद्रघोषं प्रादुश्चक्रे भार्गवास्त्रं महात्मा ।
महेन्द्रशस्त्राभिमुखान्विमुक्तांश्छित्त्वा कर्णः पाण्डवस्येषुसङ्घान् ॥ २७ ॥
तस्यास्त्रमस्त्रेण निहत्य सोऽथ जघान सङ्ख्ये रथनागपत्तीन् ।
अमृष्यमाणश्च महेन्द्रकर्मा महारणे भार्गवास्त्रप्रतापात् ॥ २८ ॥
पञ्चालानां प्रवरांश्चापि योधान्क्रोधाविष्टः सूतपुत्रस्तरस्वी ।
बाणैर्विव्याधाहवे सुप्रमुक्तैः शिलाशितै रुक्मपुङ्खैः प्रसह्य ॥ २९ ॥

---

पडता था। ( १९-२२ )

तब अर्जुनने उस शस्त्रकी शान्तिके लिये वायव्य अस्त्र चलाया और उससे सब मेघ उड गये । फिर अर्जुनने मंत्र पढकर गाण्डीव धनुष की डोरी और अपने बाणोंको अभिमन्त्रित करके इन्द्र का प्यारा वज्र अस्त्र चढाया। तब शत्रु नाशन अर्जुनके गाण्डीव धनुपसे अनेक वज्रके समान वेगवाले क्षुर, प्राञ्जलिक, अर्द्धचन्द्र, नालीक, नाराच और वराहकर्ण निकलने लगे ॥ (२२-२४ )

ये सब अत्यंत तीक्षण, गृध्र पंखवाले, वेगशाली, महाप्रभावी बाण कर्णके घोडे, पहिये, रथ, ध्वजा, शरीर और धनुषमें लगे। जैसे गरुडके डरसे सांप पृथ्वीमें घुस जाते है ऐसे ही वे बाण कवच काटकर कर्णके शरीरमें घुस गये तब कर्ण रुधिरसे भीग गये और क्रोधसे आंखें फाडके अर्जुनकी ओर देखने लगे। तब कर्णने क्रोध करके भार्गवास्त्र चलाया उससे अर्जुनके चलाये सब अस्त्र कट गये ॥ ( २५-२७ )

इन्द्रके समान पराक्रमी कर्णने उस भार्गवास्त्रसे अर्जुनके बाण काटकर अनेक हाथी, घोडे और पैदलोंको काट डाला॥ प्रतापी सूतपुत्रने क्रोध करके सोनेके पंखवाले शिलापर घिसे घोर बाणोंसे अनेक पाञ्चाल देशीय वीरोंको मार-

पुरन्दरार्थं तपसा प्रयत्नतः स्वयं कृतं यद्विभुना स्वयम्भुवा।
महार्हरूपं द्विषतां भयङ्करं बिभर्तुरत्यर्थसुखं सुगन्धिनम् ॥ ३४ ॥
जिघांसते देवरिपून्सुरेश्वरः स्वयं ददौ यत्सुमनाः किरीटिने।
हराम्बुपाखण्डलवित्तगोप्तृभिः पिनाकपाशाशनिसायकोत्तमैः ॥३५॥
सुरोत्तमैरप्यविषह्यमर्दितुं प्रसह्य नागेन जहार यद्वृषः।
स दुष्टभावो वितथप्रतिज्ञः किरीटमत्यद्भुतमर्जुनस्य ॥ ३६ ॥
नागो महार्हं तपनीयचित्रं पार्थोत्तमाङ्गात्प्रहरत्तरस्वी।
तद्धेमजालावततं सुघोषं जाज्वल्यमानं निपपात भूमौ ॥ ३७ ॥
तदुत्तमेपून्मथितं विषाग्निना प्रदीप्तमर्चिष्मदथो क्षितौ प्रियम्।
पपात पार्थस्य किरीटमुत्तमं दिवाकरोऽस्तादिव रक्तमण्डलः॥३८॥
स वै किरीटं बहुरत्नभूषितं जहार नागोऽर्जुनमूर्धतो बलात्।
गिरेः सुजातांकुरपुष्पितद्रुमं महेन्द्रवज्रः शिखरोत्तमं यथा ॥३९॥
मही वियद् द्यौः सलिलं च वायुना प्रसह्यमुग्रं विनिघूर्णितं यथा।
अतीव शब्दो भुवनेषु वै तदा जनाऽध्यवस्यन्व्यथिताश्च चस्खलुः ॥४०॥

---

मुकुट काट दिया, यह सुगन्धिसे भरा धारण करनेवालेकी शोभा बढानेवाला और शत्रुओंको भय देनेवाला उत्तम मुकुट ब्रह्माने बहुत तप करनेके पश्चात् इन्द्रको बना कर दिया था॥ (३२-३४)

जिस समय अर्जुनने इन्द्र, वरुण, यम, कुबेर, शिव और विष्णुके पिनाकादि शस्त्रोंसे दानवोंको मारा था, तभी इन्द्रने यह मुकुट उन्हें दिया था। जिस किरीटको देवता भी नहीं काट सक्ते थे, उसे सांप युक्त बाणसे कर्णने काट दिया परन्तु उस दुष्ट सांपकी प्रतिज्ञा पूरी न हुई अर्थात् अर्जुन न मरा। उस सांपने तेजसे सुवर्णमे बना हुआ प्रकाशमान उत्तम मुकुट काट कर पृथ्वीमें गिरा दिया॥ (३५-३७)

जैसे अस्त होते समय सूर्यका लाल मण्डल अस्ताचलसे गिरता है, ऐसे ही उस बाणके वेग और सांपके विषसे कटकर अर्जुनका सुन्दर मुकुट पृथ्वीपर गिर गया। जैसे फूलेफले वृक्षोंके सहित पर्वतका शिखर इन्द्रके वज्रसे कटकर गिरता है, ऐसे ही अर्जुनका मणिजटित मुकुट गिरा॥ जैसे बहुत आंधी आनेसे पृथ्वी जल, द्यौ और आकाशमें क्षोभ उत्पन्न होकर बडा शब्द होता है, ऐसे ही उस मुकुटके गिरनेसे सब जगत्में बडा शब्द हुआ और उस शब्दमें सब लोग भयमे व्यथित होकर स्खलित होने लगे॥ (३८-४०)

पञ्चालानां योधमुख्याननेकान्निजघ्निवांस्तव जिष्णो समक्षम् ॥ ३७ ॥
पूर्वं देवैरजितं कालकेयैः साक्षात्स्थाणोर्बाहुसंस्पर्शमेत्य ।
कथं नु त्वां सूतपुत्रः किरीटिन्नथेषुभिर्दशभिः प्रागविध्यत् ॥ ३८ ॥
त्वया क्षिप्तांश्चाग्रसद्वाणसङ्घानाश्चर्यमेतत्प्रतिभाति मेऽद्य ।
कृष्णापरिक्लेशमनुस्मर त्वं यथाब्रवीत्षण्ढतिलान्स्म वाचः ॥ ३९ ॥
रूक्षाः सुतीक्ष्णाश्च हि पापबुद्धिः सूतात्मजोऽयं गतभीर्दुरात्मा ।
संस्मृत्य सर्वं तदिहाद्य पापं जह्याशु कर्णं युधि सव्यसाचिन्॥ ४० ॥
कस्मादुपेक्षां कुरुषे किरीटिन्नुपेक्षितुं नायमिहाद्य कालः ।
यया धृत्या सर्वभूतान्यजैषीर्ग्रासं ददत्खाण्डवे पावकाय ॥ ४१ ॥
तया धृत्या सूतपुत्रं जहि त्वमहं चैनं गदया पोथयिष्ये ।
अथाब्रवीद्वासुदेवोऽपि पार्थं दृष्ट्वा रथेषून्प्रतिहन्यमानान् ॥ ४२ ॥
अमीमृदत्सर्वथा तेऽद्य कर्णो ह्यस्त्रैरस्त्रं किमिदं भो किरीटिन् ।
स वीर किं मुह्यसि नावधत्से नदन्त्येते कुरवः सम्प्रहृष्टाः ॥४३ ॥
कर्णं पुरस्कृत्य विदुर्हि सर्वे तवास्त्रमस्त्रैर्विनिपात्यमानम् ।

---

प्रधान पञ्चाल वीरोंको क्यों मार डाला? हे किरीटधारी ! तुमने पहले सब कालकेयोंको मारा था, और युद्धमें साक्षात् शिवको भी प्रसन्न किया था, तब सूतके बेटेने तुम्हारे शरीरमें दश बाण कैसे मार दिये ? ( १३–३८ )

हमे बहुत आश्चर्य होता है, कि तुम्हारे चलाये हुए सब बाण काट दिये, क्या तुम्हें द्रौपदीका कुछ भी दुःख याद न रहा ? स्मरण करो कि इसीने हमको सभाके बीचमें नपुंसक कहा था, हे सव्यसाची ! इसी मूर्ख दुष्ट पापी दुरात्मा सूतके बेटेने हमलोगोंको कठोर और रूखी वाणी सुनायी थी, उन सब को स्मरण करके इसे युद्धमें जीतो। हे किरीटधारी ! तुम अब इसे क्यों छोड रहे हो ? यह छोडनेका समय नहीं है, जिस धैर्यसे तुमने पहले खाण्डव वनमें अग्निको तृप्त किया था, इसी ही धैर्यसे अब इसे जीतो, या तो तुम इसको उसी बुद्धिसे जीतो नहीं तो मैं इस गदासे इसका चूरा कर देता हूं। (३९–४२)

तब श्रीकृष्णने भी कर्णके बाणोंको प्रबल देखकर अर्जुनसे कहा, हे अर्जुन! तुम ऐसे क्यों चुप चाप बैठे हो ? ये चारों ओरसे कर्णके बाण चले आते है। ये कौरव प्रसन्न होकर गर्ज रहे है, तुम्हें इस समय क्या होगया ? तुम्हारे शस्त्रको कर्णके शस्त्रसे कटा देख, ये सब कर्णके सहित प्रसन्न होरहे हैं । जिस

नागोऽब्रवीद्विद्धि कृतागसं मां पार्थेन मातुर्वधजातवैरम् ॥ ४६ ॥
यदि स्वयं वज्रधरोऽस्य गोप्ता तथापि याता पितृराजवेश्मनि ।
कर्ण उवाच—न नाग कर्णोऽद्य रणे परस्य बलं समास्थाय जयं बुभूषेत् ॥४७॥
न सन्दध्यां द्विः शरं चैव नाग यद्यर्जुनानां शतमेव हन्याम् ।
तमाह कर्णः पुनरेव नागं तदाजिमध्ये रविसूनुसत्तमः ॥ ४८ ॥
व्यालास्त्रसर्गोत्तमयत्नमन्युभिर्हन्तास्मि पार्थं सुसुखी व्रज त्वम् ।
इत्येवमुक्तो युधि नागराजः कर्णेन रोषादसहंस्तस्य वाक्यम् ॥ ४९ ॥
स्वयं प्रायात्पार्थवधाय राजन्कृत्वा स्वरूपं विजिघांसुरुग्रः ।
ततः कृष्णः पार्थमुवाच सङ्ख्ये महोरगं कृतवैरं जहि त्वम् ॥ ५० ॥
स एवमुक्तो मधुसूदनेन गाण्डीवधन्वा रिपुवीर्यसाहः ।
उवाच को ह्येष ममाद्य नागः स्वयं य आयाद्गरुडस्य वक्त्रम् ॥ ५१ ॥
कृष्ण उवाच-योऽसौ त्वया खाण्डवे चित्रभानुं सन्तर्पयाणेन धनुर्धरेण ।
वियद्गतो जननीगुप्तदेहो मत्वैकरूपं निहतास्य माता ॥ ५२ ॥
स एष तद्वैरमनुस्मरन्वै त्वां प्रार्थयत्यात्मवधाय नूनम् ।

---

तेजस्वी कौन हो ? सांप बोला, मैं अर्जुनका शत्रु हूं; इसने मेरी माताको मार डाला था, तुम मुझे बाण पर चढाकर छोडो तो यदि साक्षात् इन्द्र भी इनकी रक्षा करें तौ भी मैं उन्हें मार डालूंगा ॥ (४६–४७)

कर्ण बोले, हे नाग ! कर्ण दूसरेके बलसे अपनी विजय करना नहीं चाहता, हे नाग ! यदि सौ अर्जुन मुझसे युद्ध करनेको आवें तो भी मैं एक बाणको दो बार धनुष पर नहीं चढाऊंगा, तब फिर कर्णने सांपसे कहा, हे सर्प ! मैं आप ही क्रोधमें भरके नागास्त्रसे अर्जुनको मार डालूंगा, तुम सुखसे अपने घरको चले जाओ । (४७–४९)

कर्णके ऐसे कठोर वचन सुन कर वह साप घोर रूप धारण करके आपही अर्जुनको मारने चला, तब शत्रुनाशन गाण्डीव धनुषधारी अर्जुन श्रीकृष्णसे बोले, यह कौन सांप है ? जो मुझ गरुडके मुखमें आपसे आप चला आता है ॥ (४९–५१)

श्रीकृष्ण बोले, हे अर्जुन ! तुमने जो अग्निको तृप्त करते समय खाण्डव वनमें अपनी मातासे रक्षित एक सांपको एक शरीर जान कर मारा था, हे शत्रुनाशन! उस समय इसकी माता मर गई थी, और यह बच गया था। सो उसी वैरको स्मरण करके यह तुम्हारे हाथसे मरनेको आता है, देखो यह आकाशमें

तदस्य हत्वा विरराज कर्णो मुक्त्वा शरान्मेघ इवाम्बुधाराः ।
समीक्ष्य कर्णेन किरीटिनस्तु तथाजिमध्ये निहतं तदस्त्रम् ॥ ५२ ॥
ततोमर्षी बलवान्क्रोधदीप्तो भीमोऽब्रवीदर्जुनं सत्यसन्धम् ।
ननु त्वाहुर्वेदितारं महास्त्र ब्राह्मं विधेयं परमं जनास्तत् ॥ ५३ ॥
तस्मादन्यद्योजय सव्यसाचिन्निति स्मोक्तोऽप्योजयत्सव्यसाची ।
ततो दिशः प्रदिशश्चापि सर्वाः समावृणोत्सायकैर्भूरितेजाः ॥ ५४ ॥
गाण्डीवमुक्तैर्भुजगैरिवोग्रैर्दिवाकरांशुप्रतिमैर्ज्वलद्भिः ।
सृष्टास्तु बाणा भरतर्षभेण शतं शतानीव सुवर्णपुङ्खाः ॥ ५५ ॥
प्राच्छादयन्कर्णरथं क्षणेन युगान्तवन्ह्यर्ककरप्रकाशाः ।
ततश्च शूलानि परश्वधानि चक्राणि नाराचशतानि चैव ॥ ५६ ॥
निश्चक्रमुर्घोरतराणि योधास्ततो ह्यहन्यन्त समन्ततोऽपि ।
छिन्नं शिरः कस्यचिदाजिमध्ये पपात योधस्य परस्य कायात् ॥५७॥
भयेन सोऽप्याशु पपात भूमावन्यः प्रणष्टः पतितं विलोक्य ।
अन्यस्य सासिर्निपपात कृत्तो योधस्य बाहुः करिहस्ततुल्यः ॥५८ ॥

ने ब्रह्मा को प्रणाम किया, और न सहने योग्य ब्रह्म अस्त्रका प्रकाश किया॥ परन्तु कर्णने मेघकी धाराके समान बाण चलाकर अर्जुनके उस अस्त्रको भी निष्फल कर दिया । ( ५१–५२ )

अर्जुनके उस बाणको भी वृथा देखकर क्रोधसे लाल होकर महा पराक्रमी भीमसेन सत्यवादी अर्जुनसे बोले, हे अर्जुन ! सब जगत् तुम्हें शस्त्रविद्याका जाननेवाला कहता है, और यह बाण भी निष्फल होनेवाला नहीं है। इसलिये फिर तुम दूसरा बाण चलाओ, भीमसेनके ऐसे वचन सुन अर्जुनने अपने धनुष पर शस्त्र चढाया उस समय तेजस्वी अर्जुनके बाणोंसे सब दिशा और उपदिशा पूरित होगये ॥ ( ५२–५४ )

जैसे विषीले सांप सब ओर फैल जाते है, ऐसे ही गाण्डीवसे छूटे हुए सूर्यकी किरणोंके समान प्रकाशित बाण भरत कुलसिंह अर्जुनने सहस्रों छोडे । वे सोनेके पङ्खवाले बाण प्रलयकाल की अग्नि और सूर्यके समान कर्णके रथके चारों ओर छा गये, तब अनेक चक्र, त्रिशूल और प्रकाशित परश्वध तथा सैकडों नाराच उस शस्त्रसे निकल कर अनेक वीरोंका नाश करने लगे ॥५५-५७

किसी योद्धाका शिर कट कर पृथ्वीमें गिर गया,दूसरा योद्धा डरके मारे पृथ्वी में गिर गया; तीसरा उसको देखकर मरगया; किसीका हाथीकी सूंडके समान

परःशतैः पत्रिभिरिन्द्रविक्रमस्तथा यथेन्द्रो बलमोजसा रणे ॥ ६१ ॥
ततः शराणां नवतिं तदार्जुनः ससर्ज कर्णेऽन्तकदण्डसंनिभाम् ।
तैः पत्रिभिर्विद्धतनुः स विव्यथे तथा यथा वज्रविदारितोऽचलः ॥ ६२ ॥
मणिप्रवेकोत्तमवज्रहाटकैरलंकृतं चास्य वराङ्गभूषणम् ।
प्रविद्धमुर्व्यां निपपात पत्रिभिर्धनञ्जयेनोत्तमकुण्डलेऽपि च ॥ ६३ ॥
महाधनं शिल्पिवरैः प्रयत्नतः कृतं यदस्योत्तमवर्म भारम् ।
सुदीर्घकालेन ततोऽस्य पाण्डवः क्षणेन बाणैर्बहुधा व्यशातयत् ॥ ६४ ॥
स तं विवर्माणमथोत्तमेषुभिः शितैश्चतुर्भिः कुपितः पराभिनत् ।
स विव्यथेऽत्यर्थमरिप्रताडितो यथातुरः पित्तकफानिलज्वरैः ॥ ६५ ॥
महाधनुर्मण्डलनिःसृतैःशितैः क्रियाप्रयत्नप्रहितैर्बलेन च ।
ततक्ष कर्णं बहुभिः शरोत्तमैर्विभेद मर्मस्वपि चार्जुनस्त्वरन् ॥ ६६ ॥
दृढाहतः पत्रिभिरुग्रवेगैः पार्थेन कर्णो विविधैः शिताग्रैः ।
बभौ गिरिर्गैरिकधातुरक्तः क्षरन्प्रपातैरिव रक्तमम्भः ॥ ६७ ॥
ततोऽर्जुनः कर्णमवक्रगैर्नवैः सुवर्णपुङ्खैः सुदृढैरयस्मयैः ।
यमाग्निदण्डप्रतिमैः स्तनान्तरे पराभिनत्क्रौञ्चमिवाद्रिमग्निजः ॥ ६८ ॥

ने उसके हंसनेकी क्षमा न किया और मर्मोंमें इस प्रकार सैकडों बाण मारे जैसे इन्द्रने बल नामक दैत्यके मारे थे॥ तब अर्जुनने यमराजके दण्डके समान नव्वे बाण कर्णके शरीरमें मारे उनके लगनेसे वे इस प्रकार कांपने लगे, जैसे वज्र लगनेसे पर्वत ॥ ( ६०—६२ )

तब अर्जुनने सोनेका बना हुआ नीलम आदि मणियोंसे जडा कर्णका मुकुट काट कर पृथ्वीमें गिरा दिया, और उत्तम कुण्डल भी काट दिये। जिस कवचको अनेक कारीगरोंने बहुत यत्न करके बहुत दिनमें बनाया था, उसको अर्जुनने क्षण भरमें काट दिया, तब अर्जुनने इनके कवच रहित शरीरमें चार घोर बाण मारे, उनके लगनेसे कर्ण ऐसे व्याकुल होगये जैसे वात, पित्त और कफ के ज्वरमे रोगी ॥ तब अर्जुनने शीघ्रता से अपनी बुद्धि और बलसे कर्णके सब मर्मोंमें अनेक बाण मारे ॥ (६३–६६)

वीर बलवान अर्जुनके बाण लगनेसे कर्ण बहुत व्याकुल हो गये और उनके शरीरसे इस प्रकार रुधिर बहने लगा, जैसे पर्वतसे गेरु बहता है ॥ तब अर्जुनने अग्नि और यमराजके दण्डके समान सोनेके पङ्खवाले अत्यन्त शीघ्र चलनेवाले, नौ तेज बाण कर्णके हृदयमें इस प्रकार मारे जैसे स्वामिकार्तिकने क्रौंच

सहस्रशोऽश्वांश्च पुनः ससादीनष्टौ सहस्राणि च पत्तिवीरान् ॥ ६६ ॥
कर्णं ससूतं सरथं सकेतुमदृश्यमञ्जोगतिभिः प्रचक्रे ।
अथाक्रोशन्कुरवो वध्यमाना धनञ्जयेनाधिरथिं समन्तात् ॥ ६७ ॥
मुञ्चाभिविध्यार्जुनमाशु कर्ण बाणैः पुरा हन्ति कुरून्समग्रान् ।
स चोदितः सर्वयत्नेन कर्णो मुमोच बाणान्सुबहूनभीक्ष्णम् ॥ ६८ ॥
ते पाण्डुपञ्चालगणान्निजघ्नुर्मर्मच्छिदः शोणितपांसुदिग्धाः ।
तावुत्तमौ सर्वधनुर्धराणां महाबलौ सर्वसपत्नसाहौ ॥ ६९ ॥
निजघ्नतुश्चाहितसैन्यमुग्रमन्योन्यमप्यस्त्रविदौ महास्त्रैः ।
अथोपयातस्त्वरितो दिदृक्षुर्मन्त्रौषधीभिर्निरुजो विशल्यः ॥ ७० ॥
कृतः सुहृद्भिर्भिषजां वरिष्ठैर्युधिष्ठिरस्तत्र सुवर्णवर्मा ।
तथोपयातं युधि धर्मराजं दृष्ट्वा मुदा सर्वभूतान्यनन्दन् ॥ ७१ ॥
राहोर्विमुक्तं विमलं समग्रं चन्द्रं यथैवाभ्युदितं तथैव ।
दृष्ट्वा तु मुख्यावथ युध्यमानौ दिदृक्षवः शूरवरावरिघ्नौ ॥ ७२ ॥
कर्णं च पार्थं च विलोकयन्तः खस्था महीस्थाश्च जनाऽवतस्थुः ।

---

आठ, दो, दश और चार बाण मारे, फिर शस्त्रधारी वीरोंके सहित चार सौ रथोंका नाश कर दिया। एक सहस्र घोडोंपर चढे वीरोंको मारकर आठ सहस्र पैदलोंको मारा। फिर इतने तेज बाण चलाये, कि कर्ण घोडे सारथी और रथके सहित छिप गये। (६५–६७)

तब अर्जुनके बाणोंसे व्याकुल होकर सब कौरव कर्णको पुकारने लगे। हे कर्ण! अर्जुन हमारा नाश किये देता है। इसलिये, तुम इसके मारनेके लिये शीघ्र बाण चलाओ, सब कौरवोंके ऐसे वचन सुन कर्ण घोर बाण चलाने लगे। वे रुधिरमें भीगे मर्म काटनेवाले बाण पाण्डवोंकी सेनामें जाकर पाञ्चालोंका नाश करने लगे। (६७–६९)

इस प्रकार सब शत्रुओंका नाश करनेवाले महापराक्रमी कर्ण और अर्जुन घोर बाणोंसे दोनों सेनाओंका नाश करने लगे, उसी समय मन्त्र और औषधियोंसे घावोंको अच्छा करके सावधान होकर अपने मित्र और वैद्योंकी संमतिसे सोनेका कवच पहन कर युद्ध देखनेके लिये, महाराज युधिष्ठिर आये। धर्मराज युधिष्ठिरको आता देख सब लोग प्रसन्न होकर जय जय पुकार करने लगे। उस समय महाराजकी शोभा ऐसी बढ रही थी जैसे राहुसे छूटे चन्द्रमाकी। (६९—७२)

उन दोनों शत्रुनाशन प्रधान वीरोंको

महीरुहैराचितसानुकन्दरो यथा गिरीन्द्रः स्फुटकर्णिकारवान् ॥७६॥
स बाणसङ्घान्बहुधा व्यवासृजन्विभाति कर्णः शरजालरश्मिवान्।
स लोहितो रक्तगभस्तिमण्डलो दिवाकरोऽस्ताभिमुखो यथा तथा॥७७॥
बाह्वन्तरादाधिरथेर्विमुक्तान्बाणान्महाहीनिव दीप्यमानान्।
व्यध्वंसयन्नर्जुनबाहुमुक्ताः शराः समासाद्य दिशः शिताग्राः ॥७८॥
ततः स कर्णः समवाप्य धैर्यं बाणान्विमुञ्चन्कुपिताहिकल्पान्।
विव्याध पार्थं दशभिः पृषत्कैः कृष्णं च षड्भिः कुपिताहिकल्पान्॥७९॥
ततः किरीटी भृशमुग्रनिःस्वनं महाशरं सर्पविषानलोपमम्।
अयस्मयं रौद्रमहास्त्रसंभृतं महाहवे क्षेप्तुमना महामतिः ॥ ८० ॥
कालो ह्यदृश्यो नृप विप्रकोपान्निदर्शयन्कर्णवधं ब्रुवाणः।
भूमिस्तु चक्रं ग्रसतीत्यवोचत्कर्णस्य तस्मिन्वधकाल आगते ॥८१॥
ततस्तदस्त्रं मनसः प्रनष्टं यद्भार्गवोऽस्मै प्रददौ महात्मा।
चक्रं च वामं ग्रसते भूमिरस्य प्राप्ते तस्मिन्वधकाले नृवीर ॥८२॥
ततो रथो घूर्णितवान्नरेन्द्र शापात्तदा ब्राह्मणसत्तमस्य।
ततश्चक्रमपतत्तस्य भूमौ स विह्वलः समरे सूतपुत्रः ॥ ८३ ॥
स वेदिकश्चैत्य इवातिमात्रः सुपुष्पितो भूमितले निमग्नः।

कर्णकी ऐसी शोभा बढी जैसे फूले कचनार सहित गुफावाले पर्वतकी ॥ तब कर्ण भी अनेक बाण चलाने लगे, उस समय रुधिरसे भीगे कर्ण ऐसे दीखते थे जैसे अस्ताचलको जाते हुए लाल मण्डलवाले सूर्य ॥ कर्णके हाथोंसे छूटे हुए सांपके समान तेज बाणको काटकर अर्जुनके घोर बाण सब दिशाओंमें दीखने लगे ॥ (७६–७८)

तब कर्णने धैर्य धारण कर और क्रोधमें भरकर क्रोधी सांपके समान तेज बाण दश बाण अर्जुनके और छः श्रीकृष्णके मारे। तब अर्जुनने महा क्रोध करके लोहेका बना सर्प अग्नि और विषके समान एक घोर बाण शिवका मन्त्र पढकर चलाना चाहा ॥ ७९–८०

हे महाराज! जब कर्णके मरनेका समय आया तब ब्राह्मणके शापसे वध करनेके लिये अदृश्य रूपसे आकर कालने कर्णसे कहा, कि हे वीर कर्ण! पृथ्वीने तेरे रथके चक्र पकड लिये है। तब कर्ण परशुरामसे जो बाण सीखे थे सो भूल गये। हे राजन्! उस समय उस ब्राह्मणके शापसे वह रथ इधर उधरको न हिल सका। अपने रथकी यह दशा देख सूतपुत्र बहुत घबडाये ॥ (८१–८३)

पुनश्च पञ्चालवरास्तथान्ये तदन्तरे कर्णधनञ्जयाभ्याम् ॥ ८० ॥
प्रस्कन्दन्तो बलिना साधुमुक्तैः कर्णेन बाणैर्निहताः प्रसह्य ।
जयं मत्वा विपुलं वै त्वदीयास्तलान्निजघ्नुः सिंहनादांश्च नेदुः ॥८१॥
सर्वे ह्यमन्यन्त वशे कृतौ तौ कर्णेन कृष्णाविति ते विमर्दे ।
ततो धनुर्ज्यामवनाम्य शीघ्रं शरानस्तानाधिरथेर्विधम्य ॥ ८२ ॥
सुसंरब्धः कर्णशरक्षताङ्गो रणे पार्थः कौरवान्प्रत्यगृह्णात् ।
ज्यां चानुमृज्याभ्यहनत्तलत्रे बाणान्धकारं सहसा च चक्रे॥ ८३ ॥
कर्णं च शल्यं च कुरूंश्च सर्वान्बाणैरविध्यत्प्रसभं किरीटी ।
न पक्षिणो बभ्रमुरन्तरिक्षे तदा महास्त्रेण कृतेऽन्धकारे ॥ ८४ ॥
वायुर्वियत्स्थैरीरितो भूतसङ्घैरुवाह दिव्यः सुरभिस्तदानीम् ।
शल्यं च पार्थो दशभिः पृषत्कैर्भृशं तनुत्रे प्रहसन्नविध्यत्॥ ८५ ॥
ततः कर्णं द्वादशभिः सुमुक्तैर्विध्वा पुनः सप्तभिरभ्यविध्यत् ।
स पार्थबाणासनवेगमुक्तैर्दृढाहतः पत्रिभिरुग्रवेगैः ॥ ८६ ॥
विभिन्नगात्रः क्षतजोक्षिताङ्गः कर्णो बभौ रुद्र इवाततेषुः ।

---

तब और पाञ्चाल सेना गर्जती हुई कर्ण और अर्जुनके रथके बीचमें घुस गयी, परन्तु बलवान कर्णने अपने बाणोंसे उन सबको मारडाला ॥ ( ७८-८० )

तब तुम्हारी ओरके वीरोंने अपनी विजय देखकर ताली बजाई और सिंह-के समान गर्जने लगे । उस समय सबने जान लिया, कि कृष्ण और अर्जुन कर्णसे हार गये, तब अर्जुनने बहुत शीघ्रतासे धनुषपर दूसरा रोदा चढाकर अपने बाणोंसे कर्णके सब बाण काट दिये, और अनेक वीरोंको मारडाला । उस समय अर्जुनका शरीर रुधिरसे भीग गया था । फिर धनुषके रोदेको हाथसे मलकर अपने बाणोंसे अन्धकार कर दिया । (८१-८३)

फिर अर्जुनने बाणोंसे कर्ण, शल्य और सब कौरवोंको व्याकुल कर दिया । उस समय आकाशमें महास्त्रसे ऐसा अन्धकार होगया था, कि कोई पक्षी भी नहीं उड सक्ता था ॥ आकाशमें घूमते हुए देवतोंकी आज्ञासे सुगन्धयुक्त वायु चलने लगी । तब अर्जुनने हंसकर शल्यके कवचमें दश बाण मारे, फिर कर्णके शरीरमें बारह बाण मारकर सात बाण मारे, उस शीघ्र वेधवाले. उत्तम पङ्खयुक्त अर्जुनके बाण लगनेसे कर्णके शरीरमें बहुत पीडा हुई ॥ अनेक बाण लगनेमे रुधिरमें भीगे कर्ण शिवके समान शोभित होगये । उम रौद्रमुहूर्त्तमें

ऐन्द्रं ततोऽर्जुनस्यापि तं दृष्ट्वाभ्युपमन्त्रयत् ॥ ९१ ॥
गाण्डीवं ज्यां च बाणांश्च सोऽनुमन्त्र्य परन्तपः ।
व्यसृजच्छरवर्षाणि वर्षाणीव पुरन्दरः ॥ ९२ ॥
ततस्तेजोमया बाणा रथात्पार्थस्य निःसृताः ।
प्रादुरासन्महावीर्याः कर्णस्य रथमान्तिकात् ॥ ९३ ॥
तान्कर्णस्त्वग्रतो न्यस्तान्मोघांश्चके महारथः ।
ततोऽब्रवीद्वृष्णिवीरस्तस्मिन्नस्त्रे विनाशिते ॥ ९४ ॥
विसृजास्त्रं परं पार्थ राधेयो ग्रसते शरान् ।
ततो ब्रह्मास्त्रमत्युग्रं संमन्त्र्य समयोजयत् ॥ ९५ ॥
छादयित्वा ततो बाणैः कर्णं प्रत्यस्यदर्जुनः ।
ततः कर्णः शितैर्बाणैर्ज्यां चिच्छेद सुतेजनैः ॥ ९६ ॥
द्वितीयां च तृतीयां च चतुर्थीं पञ्चमीं तथा ।
षष्ठीमथास्य चिच्छेद सप्तमीं च तथाष्टमीम् ॥ ९७ ॥
नवमीं दशमीं चास्य तथा चैकादशीं वृषः ।
ज्याशतं शतसन्धानः स कर्णो नावबुध्यते ॥ ९८ ॥
ततो ज्यां विनिधायान्यामभिमन्त्र्य च पाण्डवः ।

---

जान न सका, तब फिर साहस और शक्तिको स्थिर करके ब्रह्मास्त्र चलाया, तब अर्जुनने इन्द्र बाण चलाया॥(८८-९१

शत्रुनाशन अर्जुनने धनुष, रोदे और बाणोंको मन्त्रित करके इस प्रकार शस्त्र वर्षाये, जैसे इन्द्र पानीको वर्षाता है ॥ तब वे उत्तम प्रकाशित बाण अर्जुनकी धनुषसे छूटकर कर्णके रथके चारों ओर फैल गये, तब महारथ कर्णने अपने बाणोंसे अर्जुनके सब शस्त्रोंका नाश कर दिया । (९२—९४)

उसी समय श्रीकृष्ण अर्जुनसे बोले, हे कुन्तीपुत्र ! कर्ण तुम्हारे बाणोंका नाश किये देता है । इसलिये तुम भी कोई घोर बाण चलाओ । श्रीकृष्णके ऐसे वचन सुन अर्जुनने भी ब्रह्मास्त्र चलाया, अर्जुनने अपने बाणोंसे कर्णके सब बाण काट दिये, तब कर्णने अर्जुनके धनुषका रोदा काट दिया । अनन्तर अर्जुनने दूसरा रोदा चढाया, कर्णने उसे भी काट दिया । कर्णने तीसरा चौथा पांचवां छठवां सातवां आठवां नौवां दसवां ग्यारहवां इसी प्रकार सौ रोदे काट दिये ॥ परन्तु कर्णने कितने रोदे है यह नहीं जाना ॥ (९५-९८)

तब अर्जुनने एक रोदा मन्त्रित करके

द्विसाहस्रान्समरे सव्यसाची कुरुप्रवीरानृषभः कुरूणाम् ।
क्षणेन सर्वान्सरथाश्वसूतान्निनाय राजन्क्षयमेकवीरः ॥ ९५ ॥
ततोऽपलायन्त विहाय कर्णं तवात्मजाः कुरवो येऽवशिष्टाः ।
हतानपाकीर्य शरक्षतांश्च लालप्यमानास्तनयान्पितॄंश्च ॥ ९६ ॥
स सर्वतः प्रेक्ष्य दिशो विशून्या भयावदीर्णैः कुरुभिर्विहीनः ।
न विव्यथे भारत तत्र कर्णः प्रहृष्ट एवार्जुनमभ्यधावत् ॥ ९७॥ [४६०९]

इति श्रीमहाभारते शतसाहस्त्र्यां संहितायां वैयासिक्यां कर्णपर्वणि कर्णार्जुनद्वैरथे ऊननवतितमोऽध्यायः ॥८९॥

सञ्जय उवाच– ततः प्रयाताः शरपातमात्रमवस्थिताः कुरवो भिन्नसेनाः ।
विद्युत्प्रकाशं ददृशुः समन्ताद्धनञ्जयास्त्रं समुदीर्यमाणम् ॥ १ ॥
तदर्जुनास्त्रं ग्रसति स्म कर्णो वियद्गतं घोरतरैः शरैस्तत् ।
क्रुद्धेन पार्थेन भृशाभिसृष्टं वधाय कर्णस्य महाविमर्दे ॥ २ ॥
उदीर्यमाणं स्म कुरून्दहन्तं सुवर्णपुङ्खैर्विशिखैर्ममर्द ।
कर्णस्त्वमोघेष्वसनं दृढज्यं विस्फारयित्वा विसृजञ्छरौघान् ॥ ३ ॥
रामादुपात्तेन महामहिम्ना ह्याथर्वणेनारिविनाशनेन ।

हे राजन् ! उस समय कुरुकुलश्रेष्ठ महावीर अर्जुनने अपने बाणोंसे तुम्हारी सेनाके दो सहस्र वीरोंको रथ घोडे और हाथियोंके सहित मारडाला ॥ तब बचे हुए तुम्हारे बेटे और पोते घावोंसे व्याकुल होकर चिल्लाते हुए कर्णको छोडकर युद्धमे भागे । अर्जुन भी उन भागते हुओंपर अनेक बाण छोडने लगे । सब सेनाको भागते देख और अपनेको युद्धमें अकेला जानकर भी कर्ण कुछ न डरे और बाण वर्षाते हुए प्रसन्न होकर अर्जुनकी ओर दौडे ॥ (९५—९७) [ ४६०९ ]

कर्णपर्वमें नवासी अध्याय समाप्त ।

कर्णपर्वमें नव्वे अध्याय ।

सञ्जय बोले. हे राजन् ! अनन्तर कौरवोंकी सेना भिन्न होकर भागगयी और जिस जगहमें अर्जुनके बाण नहीं पडते ऐसी जगहमें खडी होकर देखने लगी, तो बिजलीके समान प्रकाशमान अर्जुन का शस्त्र चारों ओर फैलरहा है ॥ इस घोर युद्धमें अर्जुनने जो क्रोधसे कर्णके मारनेके लिये अस्त्र छोडा था, जिसके बाण आकाशमें पूरित होरहे थे, कर्णने बाणोंसे उसे काट दिया ॥ कर्णने मेघके समान शब्दवाले अपने घोर धनुषपर टङ्कार देकर कौरवोंका नाश करते हुए अर्जुनके अस्त्रको अपने बाणोंसे काटकर फिर अनेक बाण चलाये । महात्मा कर्णने परशुरामके दिये हुए शत्रुओंका नाश करनेवाले घोर बाणसे अथर्व वेदके

भो भो पार्थ महेष्वास मुहूर्तं परिपालय ।
यावच्चक्रमिदं ग्रस्तमुद्धरामि महीतलात् ॥ १०८ ॥
सव्यं चक्रं महीग्रस्तं दृष्ट्वा दैवादिदं मम ।
पार्थ कापुरुषाचीर्णमभिसन्धिं विसर्जय ॥ १०९ ॥
न त्वं कापुरुषाचीर्णं मार्गमास्थातुमर्हसि ।
ख्यातस्त्वमसि कौन्तेय विशिष्टो रणकर्मसु ॥ ११० ॥
विशिष्टतरमेव त्वं कर्तुमर्हसि पाण्डव ।
प्रकीर्णकेशे विमुखे ब्राह्मणेऽथ कृताञ्जलौ ॥ १११ ॥
शरणागते न्यस्तशस्त्रे याचमाने तथार्जुन ।
अबाणे भ्रष्टकवचे भ्रष्टभग्नायुधे तथा ॥ ११२ ॥
न विमुञ्चन्ति शस्त्राणि शूराः साधुव्रते स्थिताः ।
त्वं च शूरतमो लोके साधुवृत्तश्च पाण्डव ॥ ११३ ॥
अभिज्ञो युद्धधर्माणां वेदान्तावभृथाप्लुतः ।
दिव्यास्त्रविदमेयात्मा कार्तवीर्यसमो युधि ॥ ११४ ॥
यावच्चक्रमिदं ग्रस्तमुद्धरामि महाभुज ।
न मां रथस्थो भूमिष्ठं विकलं हन्तुमर्हसि ॥ ११५ ॥
न वासुदेवात्त्वत्तो वा पाण्डवेय बिभेम्यहम् ।

महाधनुषधारी अर्जुन! तुम क्षणभर ठहर जाओ, जबतक मैं पहियेको ना निकाल लूं, तबतक बाण मत छोडो। हे पार्थ! प्रारब्धसे पृथ्वीने मेरे रथके दहने पहियेको पकड लिया है। इस समय बाण चलाना, तुम्हारी कादरता है। तुम जगत् प्रसिद्ध महावीर हो, इसलिये, यह नपुंसक कर्म मत करो॥ १०७-११०

हे पाण्डव! तुम उत्तम कर्म करने योग्य हो और यह भी जानते हो कि, भागते हुए, ब्राह्मण, हाथ जोडते, शरणागत, शस्त्रत्यागी, अभय मांगते हुए, बाणहीन, कवचहीन, टूटे और गिरे शस्त्रवाले मनुष्यपर, उत्तम शस्त्रधारी वीर शस्त्र नहीं चलाते। तुम जगत् प्रसिद्ध महावीर और महात्मा हो तुम युद्धके विषयोंको जाननेवाले, सब शास्त्रोंके पण्डित, शस्त्रों के जाननेवाले और कृतवीर्यपुत्र अर्जुनके समान योद्धा हो॥ (१११—११४)

हे महाबाहो! हम जबतक इस रथके पहियेको पृथ्वीमे न निकालें तबतक तुम बाण मत छोडो क्यों कि हम व्याकुल होकर पृथ्वीपर बैठे हैं, हम तुमसे और

द्विसाहस्रान्समरे सव्यसाची कुरुप्रवीरानृषभः कुरूणाम् ।
क्षणेन सर्वान्सरथाश्वसूतान्निनाय राजन्क्षयमेकवीरः ॥ ९५ ॥
ततोऽपलायन्त विहाय कर्णं तवात्मजाः कुरवो येऽवशिष्टाः ।
हतानपाकीर्य शरक्षतांश्च लालप्यमानांस्तनयान्पितॄंश्च ॥ ९६ ॥
स सर्वतः प्रेक्ष्य दिशो विशून्या भयावदीर्णैः कुरुभिर्विहीनः ।
न विव्यथे भारत तत्र कर्णः प्रहृष्ट एवार्जुनमभ्यधावत् ॥ ९७॥ [४६०५]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां कर्णपर्वणि कर्णार्जुनद्वैरथे ऊननवतितमोऽध्यायः ॥८९॥

सञ्जय उवाच– ततः प्रयाताः शरपातमात्रमवस्थिताः कुरवो भिन्नसेनाः ।
विद्युत्प्रकाशं ददृशुः समन्ताद्धनञ्जयास्त्रं समुदीर्यमाणम् ॥ १ ॥
तदर्जुनास्त्रं ग्रसति स्म कर्णो वियद्गतं घोरतरैः शरैस्तत् ।
क्रुद्धेन पार्थेन भृशाभिसृष्टं वधाय कर्णस्य महाविमर्दे ॥ २ ॥
उदीर्यमाणं स्म कुरून्दहन्तं सुवर्णपुङ्खैर्विशिखैर्ममर्द ।
कर्णस्त्वमोघेष्वसनं दृढज्यं विस्फारयित्वा विसृजञ्छरौघान् ॥ ३ ॥
रामादुपात्तेन महामहिम्ना ह्याथर्वणेनारिविनाशनेन ।

हे राजन्! उस समय कुरुकुलश्रेष्ठ महावीर अर्जुनने अपने वाणोंसे तुम्हारी सेनाके दो सहस्र वीरोंको रथ घोडे और हाथियोंके सहित मारडाला ॥ तब वचे हुए तुम्हारे बेटे और पोते घावोंसे व्याकुल होकर चिल्लाते हुए कर्णको छोडकर युद्धमे भागे। अर्जुन भी उन भागते हुओंपर अनेक वाण छोडने लगे। सब सेनाको भागते देख और अपनेको युद्धमें अकेला जानकर भी कर्ण कुछ न डरे और वाण वर्षाते हुए प्रसन्न होकर अर्जुनकी ओर दौडे ॥ (९५–९७) [ ४६०५ ]

कर्णपर्वमें नवासी अध्याय समाप्त।

कर्णपर्वमें नव्वे अध्याय।

सञ्जय बोले. हे राजन्! अनन्तर कौरवोंकी सेना भिन्न होकर भागगयी और जिस जगहमें अर्जुनके वाण नहीं पडते ऐसी जगहमें खडी होकर देखने लगी, तो बिजलीके समान प्रकाशमान अर्जुन का शस्त्र चारों ओर फैलरहा है ॥ इस घोर युद्धमें अर्जुनने जो क्रोधसे कर्णके मारनेके लिये अस्त्र छोडा था, जिसके वाण आकाशमें पूरित होरहे थे, कर्णने वाणोंसे उसे काट दिया ॥ कर्णने मेघके समान शब्दवाले अपने घोर धनुषपर टङ्कार देकर कौरवोंका नाश करते हुए अर्जुनके अस्त्रको अपने वाणोंसे काटकर फिर अनेक वाण चलाये। महात्मा कर्णने परशुरामके दिये हुए शत्रुओंका नाश करनेवाले घोर वाणसे अथर्व वेदके

यदा रजस्वलां कृष्णां दुःशासनवशे स्थिताम् ।
सभायां प्राहसः कर्ण क्व ते धर्मस्तदा गतः ॥ ७ ॥
यदनार्यैः पुरा कृष्णां क्लिश्यमानामनागसम् ।
उपप्रेक्षसि राधेय क्व ते धर्मस्तदा गतः ॥ ८ ॥
विनष्टाः पाण्डवाः कृष्णे शाश्वतं नरकं गताः ।
पतिमन्यं वृणीष्वेति वदंस्त्वं गजगामिनीम् ।
उपप्रेक्षसि राधेय क्व ते धर्मस्तदा गतः ॥ ९ ॥
राज्यलुब्धः पुनः कर्ण समाह्वयसि पाण्डवान् ।
यदा शकुनिमाश्रित्य क्व ते धर्मस्तदा गतः ॥ १० ॥
यदाभिमन्युं बहवो युद्धे जघ्नुर्महारथाः ॥
परिवार्य रणे बालं क्व ते धर्मस्तदा गतः ॥ ११ ॥
यद्येष धर्मस्तत्र न विद्यते हि किं सर्वथा तालुविशोषणेन ॥ १२ ॥
अद्येह धर्म्याणि विधत्स्व सूत तथापि जीवन्न विमोक्ष्यसे हि ।
नलो ह्यक्षैर्निर्जितः पुष्करेण पुनर्यशो राज्यमवाप वीर्यात् ॥ १३ ॥

सोते हुए पाण्डवोंको जलाया था, तब तुम्हारा धर्म कहां चला गया था ?(४–६)

हे कर्ण ! जब दुःशासनसे पकडी हुई रजस्वला द्रौपदीको देखकर तुम हंसे थे, तब तुम्हारा धर्म कहां गया था ? हे राधापुत्र ! जब सभामें दुष्टोंके द्वारा क्लेशको प्राप्त हुई निरपराधिनी द्रौपदीको देख तुमने उनका निवारण न करके उनकी उपेक्षा ही किया था, तब तुम्हारा धर्म कहां गया था ? जब तुमने द्रौपदी से कहा था कि "हे गजगामिनी ! पाण्डव नष्ट होगये, इन्हें घोर दुःख भोगना पडेगा इसलिये तुम दूसरा पति कर लो" तब तुम्हारा धर्म कहां गया था ? (७—१०)

हे कर्ण ! जब राज्यके लोभसे पाण्डवोंके सङ्ग तुमने युद्ध करना विचारा था और जब शकुनिके आश्रयसे जुआ खेला था, तब तुम्हारा धर्म कहां गया था ? जब तुमने अनेक वीरोंसे मिलकर बालक अभिमन्युको मारा था, तब तुम्हारा धर्म कहां गया था ? उन सबोंमें धर्म नहीं था ? अब इस समय धर्म है ? अब अधिक बोलनेसे मुख सूखने के सिवाय और कुछ लाभ नहीं है ॥ (१०—१२)

हे सूतपुत्र ! अब हमारे पास आकर धर्म युक्त बात कर तथापि तुम जीता न बचेगा । जैसे नल पुष्करसे जुएमें राज्य हारकर फिर राज्य और यशको प्राप्त

ततोऽन्यदस्त्रं कौन्तेयो दयितं जातवेदसः ॥ २२ ॥
मुमोच कर्णमुद्दिश्य तत्प्रजज्वाल तेजसा ।
वारुणेन ततः कर्णः शमयामास पावकम् ॥ २३ ॥
जीमूतैश्च दिशः सर्वाश्चक्रे तिमिरदुर्दिनाः ।
पाण्डवेयस्त्वसम्भ्रान्तो वायव्यास्त्रेण वीर्यवान् ॥ २४ ॥
अपोवाह तदाभ्राणि राधेयस्य प्रपश्यतः ।
ततः शरं महाघोरं ज्वलन्तमिव पावकम् ॥ २५ ॥
आददे पाण्डुपुत्रस्य सूतपुत्रो जिघांसया ।
योज्यमाने ततस्तस्मिन्बाणे धनुषि पूजिते ॥ २६ ॥
चचाल पृथिवी राजन्सशैलवनकानना ।
ववौ सशर्करो वायुर्दिशश्च रजसावृताः ॥ २७ ॥
हाहाकारश्च संजज्ञे सुराणां दिवि भारत ।
तमिषुं सन्धितं दृष्ट्वा सूतपुत्रेण मारिष ॥ २८ ॥
विषादं परमं जग्मुः पाण्डवा दीनचेतसः ।
स सायकः कर्णभुजप्रमुक्तः शक्राशनिप्रख्यरुचिः शिताग्रः ॥ २९ ॥
भुजान्तरं प्राप्य धनञ्जयस्य विवेश वल्मीकमिवोरगोत्तमः ।
स गाढविद्धः समरे महात्मा विघूर्णमानः श्लथहस्तगाण्डिवः ॥ ३० ॥
चचाल बीभत्सुरमित्रमर्दनः क्षितेः प्रकम्पे च यथाचलोत्तमः ।

---

वरुण अस्त्रसे शान्त कर दिया ॥ उस समय सब दिशाओंमें मेघ छागये और घोर अन्धकार होगया ! तब अर्जुनने वायु बाण चला कर कर्णके देखते देखते सब मेघोंको उड़ा दिया । (२१—२५)

फिर जलती हुई अग्निके समान घोर बाण कर्णने अर्जुनके मारनेको धनुष पर चढाया, जब वह श्रेष्ठ बाण धनुष पर चढा उस समय पर्वत और वनोंके सहित पृथ्वी कांपने लगी, और वायु धूलके सहित चलने लगा। हे पृथ्वीनाथ! सूतपुत्रके उस बाणको देखकर आकाश में घूमते हुए देवता हाहाकार करने लगे, और पाण्डवोंकी सेना भी बहुत मलीन हो गयी । ( २५—२९ )

वह वज्रके समान घोर बाण कर्णके धनुषसे छूटकर अर्जुनकी छातीमें लग कर इस प्रकार घुसा जैसे सांप बिलमें । उस बाणके लगनेसे महात्मा अर्जुन कांपने लगे और धनुष हाथसे गिर गया। जिस प्रकार भूकम्पमें पर्वत हिलने लगते हैं । ऐसे ही शत्रुनाशन अर्जुन

ततस्तु पातालतले शयानो नागोऽश्वसेनः कृतवैरोऽर्जुनेन ॥ १२ ॥
राजंस्तदा खाण्डवदाहमुक्तो विवेश कोपाद्वसुधातले यः ।
अथोत्पपातोर्ध्वगतिर्जवेन सन्दृश्य कर्णार्जुनयोर्विमर्दम् ॥ १३ ॥
अयं हि कालोऽस्य दुरात्मनो वै पार्थस्य वैरप्रतियातनाय ।
सञ्चिन्त्य तूर्णं प्रविवेश चैव कर्णस्य राजञ्शररूपधारी ॥ १४ ॥
ततोऽस्त्रसङ्घातसमाकुलं तदा बभूव जन्यं विततांशुजालम् ।
तत्कर्णपार्थौ शरसङ्घवृष्टिभिर्निरन्तरं चक्रतुरम्बरं तदा ॥ १५ ॥
तद्बाणजालैकमयं महान्तं सर्वेऽत्रसन्कुरवः सोमकाश्च ।
नान्यत्किञ्चिद्ददृशुः सम्पतद्वै बाणान्धकारे तुमुलेऽतिमात्रम् ॥ १६ ॥
ततस्तौ पुरुषव्याघ्रौ सर्वलोकधनुर्धरौ ।
त्यक्तप्राणौ रणे वीरौ युद्धश्रममुपागतौ ॥
समुत्क्षेपैर्वीक्ष्यमाणौ सिक्तौ चन्दनवारिणा ॥ १७ ॥
सबालव्यजनैर्दिव्यैर्दिविस्थैरप्सरोगणैः ।
शक्रसूर्यकराब्जाभ्यां प्रमार्जितमुखावुभौ ॥ १८ ॥
कर्णोऽथ पार्थं न विशेषयद्यदा भृशं च पार्थेन शराभितप्तः ।

---

जहां इस प्रकार घोडे, हाथी और मनुष्योंके आघातसे पृथ्वी विदीर्ण होगई थी, तहां अर्जुनका वैरी अश्वसेन नामक सर्प जो खाण्डव वनके जलाते समय भागकर बचा था और पृथ्वीमें रहता था कर्ण और अर्जुनका ऐसा घोर युद्ध देखकर शीघ्रता सहित क्रोधमें भरकर दौडा, उस दुष्टने यह जाना, कि अर्जुनसे वैर लेनेका यही समय है, तब बाणका रूप बनाकर कर्णके तूणीरमें घुस गया ॥ (१२—१४)

तब कर्ण और अर्जुनने अपने बाणोंमे समस्त आकाश पूरित कर दिया उस बाणोंके घोर अन्धकारमें कौरव और पाञ्चालोंको बाणोंके सिवाय और कुछ न दीखा, इन दोनोंके बाण आकाशमें छा गये, जब ये दोनों जगत् प्रसिद्ध धनुषधारी महापराक्रमी वीर पुरुषसिंह युद्धमें थक गये, तब एक दूसरेकी ओर देखने लगा। उसी समय उन दोनोंकी ओरके मनुष्य दोनोंके ऊपर चन्दन मिला जल छिडकने लगे। आकाशमें घूमती हुई अप्सरा उन दोनोंको पङ्खा करने लगी, सूर्य और इन्द्रने अपनी किरणोंसे दोनोंके मुख निरमल कर दिये ॥ (१५—१८)

जब बाणोंसे पीडित कर्ण किसी प्रकार अर्जुनसे अधिक न होसके, तब

ततोऽस्य देहं सततं सुखोचितं सुरूपमत्यर्थमुदारकर्मणः ॥ ५३ ॥
परेण कृच्छ्रेण शिरः समत्यजद्गृहं महर्द्धीव सुसङ्गमीश्वरः ।
शरैर्विभिन्नं व्यसु तत्सुवर्चसः पपात कर्णस्य शरीरमुच्छ्रितम् ॥५४॥
स्रवद्व्रणं गैरिकतोयविस्रवं गिरेर्यथा वज्रहतं महाशिरः ।
देहाच्च कर्णस्य निपातितस्य तेजः सूर्यः खं वितत्याविवेश॥ ५५ ॥
तदद्भुतं सर्वमनुष्ययोधाः सन्दृष्टवन्तो निहते स्म कर्णे ।
ततः शङ्खान्पाण्डवा दध्मुरुच्चैर्दृष्ट्वा कर्णं पातितं फाल्गुनेन॥ ५६ ॥
तथैव कृष्णश्च धनञ्जयश्च हृष्टौ यमौ दध्मतुर्वारिजातौ ।
तं सोमकाः प्रेक्ष्य हतं शयानं सैन्यैः सार्धं सिंहनादान्प्रचक्रुः ॥ ५७ ॥
तूर्याणि सञ्जघ्नुरतीव हृष्टा वासांसि चैवादुधुवुर्भुजांश्च ।
संवर्धयन्तश्च नरेन्द्रयोधा पार्थं समाजग्मुरतीव हृष्टाः ॥ ५८ ॥
बलान्विताश्चापरे ह्यप्यनृत्यन्नन्योन्यमाश्लिष्य नदन्त ऊचुः ।
दृष्ट्वा तु कर्णं भुवि वा विपन्नं कृत्तं रथात्सायकैरर्जुनस्य ॥ ५९ ॥
महानिलेनाद्रिमिवापविद्धं यज्ञावसानेऽग्निमिव प्रशान्तम् ।

गिराया पीछे धड गिर पडा, जैसे लाल मण्डलवाले सूर्य अस्ताचलसे गिरते हैं, ऐसे कर्णका शिर कटकर पृथ्वीमें गिर गया। तब सुख भोगने योग्य अत्यन्त सुन्दर उत्तम कर्मकारी कर्णका धड भी प्राण रहित होकर गिरा, धड और शिर दोनों अत्यन्त कठिनतासे इस प्रकार अलग हुए, जैसे धन भरे घरसे स्वामी। ( ५१–५४ )

जैसे पर्वतसे गेरुके झरने बहते हैं, ऐसे ही तेजस्वी कर्णके शरीरसे रुधिर बहने लगा। जैसे वज्रसे कटकर पर्वतका शिखर गिरता है, ऐसे ही कर्णका शिर कटकर पृथ्वीमें गिर गया और जीव सूर्यलोकके पास चला गया, कर्णके जीवको जाते हुए सब वीरोंने देखा। कर्णको मरा देख पाण्डव प्रसन्न होकर शङ्ख बजाने लगे॥ उसी समय अर्जुन, कृष्ण, नकुल और सहदेवने प्रसन्न होकर शङ्ख बजाये। सेना समेत कर्णको मरा देख पाञ्चाल प्रसन्न हो सिंहके समान गर्जने लगे॥ ( ५४–५७ )

सब पाण्डवोंकी सेना प्रसन्न होकर बाजे बजाने लगी, और वस्त्र घुमाकर ताली बजाकर नाचने लगी, फिर अर्जुनको धन्यवाद देनेको उनके पास सब वीर आये॥ कर्णको अपने बाणोंसे कटा हुआ और रथसे नीचे पडा देख परस्पर मिलकर नाचने कूदने और गर्जने लगे, जैसे पर्वतका टूटा हुआ शिखर, यज्ञके अन्तकी अग्नि और अस्त

इतीदमुक्त्वा विससर्ज तं शरं प्रयत्नतो वर्षगणाभिपूजितम् ।
हतोऽसि वै फाल्गुन इत्यधिक्षिपन्नुवाच चोच्चैर्गिरसूर्जितां वृषः ॥२७॥
स सायकः कर्णभुजप्रसृष्टो हुताशनार्कप्रतिमः सुघोरः ।
गुणच्युतः कर्णधनुःप्रमुक्तो वियद्गतः प्राज्वलदन्तरिक्षे ॥ २८ ॥
तं प्रेक्ष्य दीप्तं युधि माधवस्तु त्वरान्वितं स त्वरयैव लीलया ।
पदा विनिष्पिष्य रथोत्तमं स प्रावेशयत्पृथिवीं किञ्चिदेव ॥ २९ ॥
क्षितिं गता जानुभिस्तेऽथ वाहा हेमच्छन्नाश्चन्द्रमरीचिवर्णाः ।
ततोऽन्तरिक्षे सुमहान्निनादः सम्पूजनार्थं मधुसूदनस्य ॥ ३० ॥
दिव्याश्च वाचः सहसा बभूवुर्दिव्यानि पुष्पाण्यथ सिंहनादाः ।
तस्मिंस्तथा वै धरणीं निमग्ने रथे प्रयत्नान्मधुसूदनस्य ॥ ३१ ॥
ततः शरः सोऽभ्यहनत्किरीटं तस्येन्द्रदत्तं सुदृढं च धीमतः ।
अथार्जुनस्योत्तमगात्रभूषणं धरावियत्द्योसलिलेषु विश्रुतम् ॥३२॥
व्यालास्त्रसर्गोत्तमयत्नमन्युभिः शरेण मूर्ध्नः प्रजहार सूतजः ।
दिवाकरेन्दुज्वलनप्रभत्विषं सुवर्णमुक्तामणिवज्रभूषितम् ॥ ३३ ॥

शल्यसे कहा, हे शल्य ! हमारे समान मनुष्य दो बार लक्ष्य नहीं देखते और एक बार बाण चढा कर फिर उसे नहीं चढाते। ऐसा कह कर कर्णने जोरसे पुकारा कि अर्जुन मारा गया, ऐसा कह कर बहुत काल पूजित उस घोर बाणको कर्णने छोड दिया ॥ ( २५—२७ )

वह घोर सूर्य और अग्नि के समान बाण कर्ण के धनुपसे छूट कर आकाश में जाकर प्रकाश करने लगा, श्रीकृष्णने उस घोर बाणको आते देख अपनी लीलासे अपने पैरोंसे रथको ऐसा दबाया कि घोडों सहित रथ पृथ्वीमें घुस गया, और चन्द्रमाके समान सफेद सोनेके उत्तम जालवाले, घोडोंको बिठला दिया, श्रीकृष्णका यह अद्भुत कर्म देख आकाशमें खडे हुए सब देवता श्रीकृष्णकी प्रशंसा करते हुए बाजा बजाने लगे। जब श्रीकृष्णने अपने बलसे उस रथको पृथ्वीमें घुसा दिया, तब आकाशसे फूलोंकी वर्षा होने लगी और सब देवता सिंहके समान गर्ज कर अनेक प्रकारके वचन कहने लगे ॥ ( २८—३१ )

अनन्तर उस बाणसे इन्द्रका दिया हुआ स्वर्ग भूमि और पातालमें प्रसिद्ध उत्तम मुकुट कट गया। क्रोधी सूतपुत्रने इस सर्पयुक्त बाणसे मोती, नीलम आदि मणियोंसे जडा हुआ सोनेका बना सूर्य-की किरणोंके समान प्रकाशित अर्जुनका

सहस्ररश्मिर्दिनसंक्षये यथा तथापतत्कर्णशिरो वसुन्धराम्॥६७॥[४७८८]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां कर्णपर्वणि कर्णवधे एकनवतितमोऽध्यायः॥९१॥

सञ्जय उवाच– शल्यस्तु कर्णार्जुनयोर्विमर्दे बलानि दृष्ट्वा मृदितानि बाणैः।
ययौ हते चाधिरथौ पदानुगे रथेन संछिन्नपरिच्छदेन ॥ १ ॥
निपातितस्यन्दनवाजिनागं बलं च दृष्ट्वा हतसूतपुत्रम्।
दुर्योधनोऽश्रुप्रतिपूर्णनेत्रो दीनो मुहुर्निःश्वसंश्चार्तरूपः ॥ २ ॥
कर्णं तु शूरं पतितं पृथिव्यां शराचितं शोणितदिग्धगात्रम्।
यदृच्छया सूर्यमिवावनिस्थं दिदृक्षवः सम्परिवार्य तस्थुः ॥ ३ ॥
प्रहृष्टवित्रस्तविषण्णविस्मितास्तथापरे शोकहता इवाभवन्।
परे त्वदीयाश्च परस्परेण यथा यथैषां प्रकृतिस्तथाभवन् ॥ ४ ॥
प्रविद्धवर्माभरणाम्बरायुधं धनञ्जयेनाभिहतं महौजसम्।
निशाम्य कर्णं कुरवः प्रदुद्रुवुर्हतनर्षभा गाव इवाजने वने ॥ ५ ॥
भीमश्च भीमेन तदा स्वनेन नादं कृत्वा रोदसी कम्पयानः।
आस्फोटयन्वल्गते नृत्यते च हते कर्णे त्रासयन्धार्तराष्ट्रान् ॥ ६ ॥

---

सूर्य सन्ध्याको अस्ताचलसे गिरता है॥ ( ६५—६७ ) [ ४७८८ ]

कर्णपर्वमें एकानब्वे अध्याय समाप्त।

कर्णपर्वमें बानब्वे अध्याय।

सञ्जय बोले, हे राजन्! शल्य, अर्जुन और कर्णके घोर युद्धमें बाणोंकी गति और बलको देख कर तथा कर्णको पदाति मरा छोड, टुटे फूटे रथको ले डेरेमें गये॥ अपनी सेनाके हाथी घोडे और मनुष्योंको मरा देख और कर्णको पृथ्वीमें पडा देख दुर्योधन ऊंचे श्वांस लेकर आंखोंमें आंसू भरकर कुछ समय तक रोते रहे॥ अपनी इच्छासे गिरे हुए सूर्यके समान कर्णको पृथ्वीमें गिरा और बाणोंसे छटा जान कर सब सेनाके वीर देखनेको आये॥ (१—३)

कोई कर्णको पडा देख प्रसन्न हुआ, कोई शोकसे व्याकुल हो रोने लगे, कोई जैसे खडे थे, वैसे ही रह गये और कोई आश्चर्य करने लगे॥ इस प्रकार सबने अपने स्वभावके अनुसार कर्णका शोक किया। जैसे सांडके मरनेसे गौ व्याकुल होकर वनसे भागने लगती है ऐसे ही अर्जुनके बाणोंसे कवच और भूषण रहित कर्णको मरा सुन तुम्हारी सेना भागने लगी॥ (४—५)

कर्णके मरनेके पश्चात् भीमसेन ताल ठोंककर अपने घोर शब्दसे जगत्को कंपाते हुए और तुम्हारे पुत्रोंको डराते हुए नाचने और कूदने लगे॥ इसी

विना किरीटं शुशुभे स पार्थः श्यामो युवा नील इवोच्चशृङ्गः ।
ततः समुद्ग्रथ्य सितेन वाससा स्वमूर्धजानव्यथितस्तदार्जुनः ॥
विभासितः सूर्यमरीचिना दृढं शिरोगतेनोदयपर्वतो यथा ॥ ४१ ॥
गोकर्णा सुमुखी कृतेन इषुणा गोपुत्रसम्प्रेषिता ।
गोशब्दात्मजभूषणं सुविहितं सुव्यक्तगोऽसुप्रभम् ॥
दृष्ट्वा गोगतकं जहार मुकुटं गोशब्दगोपूरि वै ।
गोकर्णासनमर्दनश्च न ययावप्राप्य मृत्योर्वशम् ॥ ४२ ॥
स सायकः कर्णभुजप्रसृष्टो हुताशनार्कप्रतिमो महार्हः ।
महोरगः कृतवैरोऽर्जुनेन किरीटमाहत्य ततो व्यतीयात् ॥ ४३ ॥
तं चापि दग्ध्वा तपनीयचित्रं किरीटमाकृष्य तदर्जुनस्य ।
इयेष गन्तुं पुनरेव तूर्णं दृष्टश्च कर्णेन ततोऽब्रवीत्तम् ॥ ४४ ॥
मुक्तस्त्वयाहं त्वसमीक्ष्य कर्ण शिरो हृतं यन्न मयार्जुनस्य ।
समीक्ष्य मां मुञ्च रणे त्वमाशु हन्तास्मि शत्रुं तव चात्मनश्च ॥ ४५ ॥
स एवमुक्तो युधि सूतपुत्रस्तमब्रवीत्को भवानुग्ररूपः ।

---

मुकुट गिरनेसे श्याम सुन्दर तरुण अर्जुन ऐसे शोभित हुए जैसे उच्च शिखर वाला पर्वत । तब अर्जुनने सावधान होकर सफेद कपड़ेसे अपने बिखरे हुए बालोंको बांधा उस कपड़ेसे अर्जुनकी ऐसी शोभा बढ़ी जैसे सूर्यके सहित उदयाचलकी ॥ जिस चक्षुश्रवा सर्पिणी को अर्जुनने खाण्डव वनमें मारा था, उसके पुत्रने कर्णके बाण पर बैठ कर कर्णके धनुषसे छूट कर प्रकाशित सूर्यकी किरणोंके समान सुन्दर इन्द्रके भूषणभूत मुकुटको काट दिया, परन्तु घोड़ोंकी रासकी सीधपर दीखता हुआ अर्जुनका शिर न कटा। बाणोंसे सर्पको मारनेवाले अर्जुन भी गलेमें सांपके न लगनेसे न मरे ॥ (४१-४२)

वह कर्णके हाथसे छूटे बाण पर बैठा हुआ अग्नि और सूर्यके समान प्रकाशमान सर्प अर्जुनका मुकुट काट कर पृथ्वी पर गिर गया तब उस गिरे मुकुटको उसी सांपने अपने विषसे भस्म कर दिया, और फिर कर्णके भाथेमें जानेकी इच्छा की परन्तु जब उसे कर्णने देखा तब वह कर्णसे कहने लगा। हे कर्ण! तुमने मुझे बिना देखे छोड़ दिया था, इसीसे मैंने अर्जुनका शिर नहीं काटा, अब तुम देखकर हमें छोड़ो तो हम उस तुम्हारे और अपने शत्रुको अवश्य मारेंगे ॥ (४३-४५)

तब सूतपुत्रने उससे कहा तुम महा-

एतद्वचो मद्रपतेर्निशम्य स्वं चाप्यनीतं मनसा निरीक्ष्य ।
दुर्योधनो दीनमाना विसंज्ञः पुनः पुनर्न्यश्वसदार्तरूपः ॥ १५ ॥ [४८०३]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां कर्णपर्वणि शल्यप्रत्यागमने द्विनवतितमोऽध्यायः ॥९२॥

धृतराष्ट्र उवाच—तस्मिंस्तु कर्णार्जुनयोर्विमर्दे दग्धस्य रौद्रेऽहनि विद्रुतस्य ।
बभूव रूपं कुरुसृञ्जयानां बलस्य बाणोन्मथितस्य कीदृक् ॥ १ ॥

सञ्जय उवाच— शृणु राजन्नवहितो यथा वृत्तो महाक्षयः ।
घोरे मनुष्यदेहानामाजौ च गजवाजिनाम् ॥ २ ॥
यत्र कर्णे हते पार्थः सिंहनादमथाकरोत् ।
तदा तव सुतान्राजन्नाविवेश महद्भयम् ॥ ३ ॥
न सन्धातुमनीकानि न चैवाशु पराक्रमे ।
आसीद् बुद्धिर्हते कर्णे तव योधस्य कर्हिचित् ॥ ४ ॥
वणिजो नावि भिन्नायामगाधे विप्लवे यथा ।
अपारे पारमिच्छन्तो हते द्वीपे किरीटिना ॥ ५ ॥
सूतपुत्रे हते राजन्वित्रस्ताः शस्त्रविक्षताः ।
अनाथा नाथमिच्छन्तो मृगाः सिंहैरिवार्दिताः ॥ ६ ॥

इसका कुछ सोच मत करो। प्रारब्ध बडी बलवान् है, साहस रक्खो सर्व काल सिद्धि नहीं होती ॥ ( १२–१४ )

मद्रराज शल्यके ऐसे वचन सुन और अपने अधर्मोंको विचार राजा दुर्योधन वार वार ऊंचे स्वांस लेकर रोने लगे ॥ ( १५ ) [ ४८०३ ]

कर्णपर्वमें बानव्वे अध्याय समाप्त ।

कर्णपर्वमें तिरानव्वे अध्याय ।

धृतराष्ट्र बोले, हे सञ्जय ! इस प्रकार कर्ण और अर्जुनका घोर युद्ध होनेके पश्चात् बाणोंसे व्याकुल कुरु और पाञ्चाल सेनाका रूप कैसा होगया था ? ( १ )

सञ्जय बोले, हे राजेन्द्र ! आप सावधान होकर सुनिये उस समय युद्धमें मनुष्य, हाथी, घोडोंके मरनेके पश्चात् जो कुछ हुआ सो हम कहते हैं ॥ जब कर्णको मारकर अर्जुन सिंहके समान गर्जे, तो भी तुम्हारे पुत्र डरसे कांपने लगे ॥ उस समय तुम्हारे वीर सेनाको सम्हाल न सके और न आप ही युद्ध कर सके ॥ ( २–४ )

जैसे नाव टूटनेपर अपार समुद्रमें डूबते हुए बनिये घबराते हैं और पार जानेकी इच्छा करते हैं, ऐसे ही अर्जुनके हाथसे कर्णको मरा देख तुम्हारे पुत्र घबडाये । जैसे सिंहको देखकर हरिण डरकर भागते हैं, ऐसे ही कर्णके

नभश्च्युतां प्रज्वलितामिवोल्कां पश्यैनमायान्तममित्रसाह ॥ ५३ ॥
सञ्जय उवाच–ततः स जिष्णुः परिवृत्य रोषाच्चिच्छेद षड्भिर्निशितैः सुधारैः ।
नागं वियत्तिर्यगिवोत्पतन्तं स च्छिन्नगात्रो निपपात भूमौ ॥ ५४ ॥
गते च तस्मिन्भुजगे किरीटिना स्वयं विभुः पार्थिव भूतलादथ ।
समुज्जहाराशु पुनः पतन्तं रथं भुजाभ्यां पुरुषोत्तमस्ततः ॥ ५५ ॥
तस्मिन्मुहूर्ते दशभिः पृषत्कैः शिलाशितैर्बर्हिणबर्हवाजितैः ।
विव्याध कर्णः पुरुषप्रवीरो धनञ्जयं तिर्यगवेक्षमाणः ॥ ५६ ॥
ततोऽर्जुनो द्वादशभिः सुमुक्तैर्वराहकर्णैर्निशितैः समर्प्य ।
नाराचमाशीविषतुल्यवेगमाकर्णपूर्णायतमुत्ससर्ज ॥ ५७ ॥
स चित्रवर्मेषुवरो विदार्य प्राणान्निरस्यन्निव साधु मुक्तः ।
कर्णस्य पीत्वा रुधिरं विवेश वसुन्धरां शोणितदिग्धवाजः ॥ ५८ ॥
ततो वृषो बाणनिपातकोपितो महोरगो दण्डविघट्टितो यथा ।
तदाशुकारी व्यसृजच्छरोत्तमान्महाविषः सर्प इवोत्तमं विषम् ॥ ५९ ॥
जनार्दनं द्वादशभिः पराभिनन्नवैर्नवत्या च शरैस्तथार्जुनम् ।
शरेण घोरेण पुनश्च पाण्डवं विदार्य कर्णो व्यनदज्जहास च ॥ ६० ॥
तमस्य हर्षं ममृषे न पाण्डवो बिभेद मर्माणि ततोऽस्य मर्मवित् ।

---

उडता हुआ जलती हुई मसालके समान चला आता है ॥ ( ५२–५३ )

सञ्जय बोले, हे राजन् ! तब अर्जुन ने छः तेज बाणोंसे टेढे उडते हुए सांपको काट दिया। वह कटकर पृथ्वीमें गिर गया, जिस समय इस प्रकार वह सर्प मरगया, तब श्रीकृष्णने रथसे उतर कर अपने हाथोंसे रथ और घोडोंको उठाया, उतने ही समयमें वीर कर्णने टेढी दृष्टि करके शिला पर घिसे हुए मोरपङ्खयुक्त दश बाण अर्जुनके शरीरमें मारे ॥ ( ५४––५६ )

तब अर्जुनने भी अत्यन्त तेज बारह बाण कर्णके शरीरमें मार कर एक घोर नाराच कानतक खींचकर छोडा वह घोर बाण अर्जुनके धनुषसे छूट कर कर्णका कवच काट रुधिर पी और रुधिरमें भीग कर पृथ्वीमें घुस गया, जैसे बडा सर्प लट्ठी लगनेसे क्रोधमें भर कर विष छोडता है, ऐसे ही उस बाणके लगनेसे क्रोधमें भरकर कर्णने उत्तम बाण छोडने आरम्भ किया ॥ ( ५७—५९ )

तब श्रीकृष्णके शरीरमें नौ बाण मार कर अर्जुनके शरीरमें निनानव्वे बाण मारे; फिर एक घोर बाण मार कर गर्जने और हंसने लगे ॥ परन्तु अर्जुन-

जवेनाभ्यपतन्हृष्टा घ्नन्तो दौर्योधनं बलम् ।
तस्याश्वसादीन्सुबहूंस्ते निहत्य शितैः शरैः ॥ ३१ ॥
समभ्यधावंस्त्वरितास्तत्र युद्धमभून्महत् ।
धनञ्जयोऽपि चाभ्येत्य रथानीकं तव प्रभो ॥ ३२ ॥
विश्रुतं त्रिषु लोकेषु गाण्डीवं विक्षिपन्धनुः ।
कृष्णसारथिमायान्तं दृष्ट्वा श्वेतहयं रथम् ॥ ३३ ॥
अर्जुनं चापि योद्धारं त्वदीयाः प्राद्रवन्भयात् ।
विप्रहीणरथाश्चैव शरैश्च परिकर्षिताः ॥ ३४ ॥
पञ्चविंशतिसाहस्राः कालमार्छन्पदातयः ।
हत्वा तान्पुरुषव्याघ्रः पञ्चालानां महारथः ॥ ३५ ॥
पुत्रः पाञ्चालराजस्य धृष्टद्युम्नो महामनाः ।
भीमसेनं पुरस्कृत्य न चिरात्प्रत्यदृश्यत ॥ ३६ ॥
महाधनुर्धरः श्रीमानमित्रगणतापनः ।
पारावतसवर्णाश्वं कोविदारमयं ध्वजम् ॥ ३७ ॥
धृष्टद्युम्नं रणे दृष्ट्वा त्वदीयाः प्राद्रवन्भयात् ।
गान्धारराजं शीघ्रास्त्रमनुसृत्य यशस्विनौ ॥ ३८ ॥
न चिरात्प्रत्यदृश्येतां माद्रीपुत्रौ ससात्यकी ।
चेकितानः शिखण्डी च द्रौपदेयाश्च मारिष ॥ ३९ ॥
हत्वा त्वदीयं सुमहत्सैन्यं शङ्खांस्तथाऽधमन् ।

की ओर चले गये, उस समय शकुनि की सेनामें घोर युद्ध होने लगा । इसी प्रकार अर्जुन भी तुम्हारी रथ सेनामें जाकर जगत् विख्यात गाण्डीव धनुषको घुमाने लगे ॥ (३०—३३)

कृष्ण सारथी और सफेद घोडोंसे युक्त रथको आते देख और महायोद्धा अर्जुनको बाण छोडते देख बाणोंसे व्याकुल तुम्हारी सेना भागी, धृष्टद्युम्नने पचीस सहस्र पदातियोंको मारकर भीमसेनके सहित प्रसन्न होकर खडे होगये, उस समय सफेद घोडोंके रथपर चढे, महापराक्रमी श्रीमान् धृष्टद्युम्न कचनार ध्वजायुक्त बहुत शोभित हुए। उन्हें देखकर तुम्हारी सेना इधर उधरको भागने लगी। (३३—३८)

शीघ्र शस्त्र चलानेवाले गान्धारराज शकुनिके पास जाकर महायशस्वी नकुल और सहदेव, सात्यकी, द्रौपदीके पांचों पुत्र और शिखण्डी तेज बाण वर्षाने लगे।

ततः शरावापमपास्य सूतजो धनुश्च तच्छक्रशरासनोपमम् ।
ततो रथस्थः स मुमोह च स्खलन्प्रशीर्णमुष्टिः सुभृशाहतः प्रभो॥ ६९॥
न चार्जुनस्तं व्यसने तदेषिवान्निहन्तुमार्यः पुरुषव्रते स्थितः ।
ततस्तमिन्द्रावरजः सुसम्भ्रमादुवाच किं पाण्डव हे प्रमाद्यसे ॥ ७० ॥
नैवाहितानां सततं विपश्चितः क्षणं प्रतीक्षन्त्यपि दुर्बलीयसाम् ।
विशेषतोऽरीन्व्यसनेषु पण्डितो निहत्य धर्मं च यशश्च विन्दते ॥ ७१ ॥
तदेकवीरं तव चाहितं सदा त्वरस्व कर्ण सहसाभिमर्दितुम् ।
पुरा समर्थः समुपेति सूतजो भिन्धि त्वमेनं नमुचिं यथा हरिः ॥ ७२ ॥
ततस्तदेवेत्यभिपूज्य सत्वरं जनार्दनं कर्णमविध्यदर्जुनः ।
शरोत्तमैः सर्वकुरूत्तमस्त्वरंस्तथा यथा शम्बरहा पुरा बलिम् ॥ ७३ ॥
साश्वं तु कर्ण सरथं किरीटी समाचिनोद्भारत वत्सदन्तैः ।
प्रच्छादयामास दिशश्च बाणैः सर्वप्रयत्नात्तपनीयपुङ्खैः ॥ ७४ ॥
स वत्सदन्तैः पृथुपीनवक्षाः समाचितः सोऽधिरथिर्विभाति ।
सुपुष्पिताशोकपलाशशाल्मलिर्यथाचलश्चन्दनकाननायुतः ॥ ७५ ॥
शरैः शरीरे बहुभिः समर्पितैर्विभाति कर्णः समरे विशाम्पते ।

पर्वतमें शक्ति मारी थी। हे पृथ्वीनाथ! तब कर्णके हाथसे वह इन्द्रधनुष तुल्य धनुष गिर गया, मुट्ठी ढीली होगयी और रथमें मूर्च्छा आगयी ॥ ( ६६–६९ )

तब अर्जुनने महात्माओंके कर्मानुसार मूर्च्छित कर्णको मारनेकी इच्छा न की; तब श्रीकृष्णने कहा, हे अर्जुन! तुम यह क्या भूल करते हो? कोई पण्डित दुर्बल शत्रुओंको भी नहीं छोडता है। विशेष कर आपत्तिमें शत्रुओंको मारनेसे यश और धर्म प्राप्ति होती है जैसे पहले इन्द्रने नमुचिको मारा था, तैसे तुम अपने शत्रु महावीर कर्णको मारनेके लिये शीघ्रता करो, नहीं तो यह फिर समर्थ होकर तुम्हारी हानि करेगा ॥ ( ७०—७२ )

तब श्रीकृष्णके वचनको स्वीकार करके कुरुकुलश्रेष्ठ अर्जुनने कर्णके शरीरमें इस प्रकार बाण मारे जैसे पहले इन्द्रने बलिके शरीरमें मारे थे ॥ हे भारत! उस समय अर्जुनने सोनेके पङ्खवाले वत्सदन्त बाणोंसे दशों दिशा, कर्णका रथ और घोडे सब छिपा दिये। जैसे फूले हुए कचनार, ढाक और चन्दनके वृक्षोंसे युक्त पर्वत शोभित होता है, ऐसे ही ऊंचे हृदयवाले कर्ण अर्जुनके बाणोंसे शोभित हुए ॥ ( ७३-७५ )

हे पृथ्वीनाथ! अनेक बाण लगनेसे

तत्रावधीत्ततः क्रुद्धः शतशोऽथ सहस्रशः ।
तत्सैन्यं पाण्डवेयानां योधयामास सर्वतः ॥ ४९ ॥
तत्राद्भुतमपश्याम तव पुत्रस्य पौरुषम् ।
यदेकः सहितान्सर्वान्रणेऽयुध्यत पाण्डवान् ॥ ५० ॥
ततोऽपश्यन्महात्मा स स्वसैन्यं भृशदुःखितम् ।
ततोऽवस्थाप्य राजेन्द्र कृतबुद्धिस्तवात्मजः ॥ ५१ ॥
हर्षयन्निव तान्योधानिदं वचनमब्रवीत् ।
न तं देशं प्रपश्यामि यत्र याता भयार्दिताः ॥ ५२ ॥
गतानां यत्र वै मोक्षः पाण्डवात्किं गतेन वः ।
अल्पं च बलमेतेषां कृष्णौ च भृशविक्षतौ ॥ ५३ ॥
अद्य सर्वान्हनिष्यामि ध्रुवो हि विजयो भवेत् ।
विप्रयातांस्तु वो भिन्नान्पाण्डवाः कृतकिल्बिषान्॥५४॥
अनुसृत्य वधिष्यन्ति श्रेयान्नः समरे वधः ।
सुखं सांग्रामिको मृत्युः क्षत्रधर्मेण युध्यताम्॥ ५५ ॥
मृतो दुःखं न जानीते प्रेत्य चानन्त्यमश्नुते ।
शृणुध्वं क्षत्रियाः सर्वे यावन्तः स्थ समागताः ॥५६॥
यदा शूरं च भीरुं च मारयत्यन्तको यमः ।

ओर बाण वर्षाने लगे। दुर्योधनने पाण्डवोंकी सेनाके सैकडों वा सहस्रों मनुष्योंको मारडाला, हमने उस समय दुर्योधनका अद्भुत पराक्रम देखा, वे अकेले ही सब पाण्डवोंके सङ्ग युद्ध करते रहे। हे राजेन्द्र! तुम्हारे पुत्र महात्मा दुर्योधनने अपनी सेनाको व्याकुल देख कर सावधान किया, और अपनी सेनाको प्रसन्न करते हुए ऐसे वचन बोले, हम ऐसा देश कोई नहीं देखते जहां इससे भागकर तुम लोग बचोगे॥ (४८-५३)

इस समय पाण्डवोंकी सेना बहुत थोडी रह गई है तथा अर्जुन और कृष्ण घावोंसे बहुत व्याकुल होरहे हैं अब हम इन सबको मारकर निश्चय अपनी विजय करेंगे, यदि तुम भागोगे तो पाण्डव तुम्हें पीछे दौड कर मार डालेंगे, इससे युद्ध हीमें मरना क्षत्रियोंका धर्म है और इसीसे कल्याण होता है॥ हे क्षत्रियो! मरा हुआ मनुष्य दुःख देखनेको नहीं आता और युद्धमें मरनेसे अनन्तर सुख होता है।" (५३—५६)

जब शूर और कादर दोनोंहीको यमराज मारडालता है तो ऐसा कौन

घूर्णे रथे ब्राह्मणस्याभिशापाद्रामादुपात्ते त्वविभाति चास्त्रे ॥ ८४ ॥
छिन्ने शरे सर्पमुखे च घोरे पार्थेन तस्मिन्विषसाद कर्णः ।
अमृष्यमाणो व्यसनानि तानि हस्तौ विधुन्वन्स विगर्हमाणः ॥८५॥
धर्मप्रधानं किल पाति धर्म इत्यब्रुवन्धर्मविदः सदैव ।
वयं च धर्मे प्रयताम नित्यं चर्तुं यथाशक्ति यथाश्रुतं च ॥ ८६ ॥
स चापि निघ्नाति न पाति भक्तान्मन्ये न नित्यं परिपाति धर्मः ।
एवं ब्रुवन्प्रस्खलिताश्वसूतो विचाल्यमानोऽर्जुनबाणपातैः ॥
मर्माभिघाताच्छिथिलः क्रियासु पुनः पुनर्धर्ममसौ जगर्हे ॥ ८७ ॥
ततः शरैर्भीमतरैरविध्यत्त्रिभिराहवे ।
हस्ते कृष्णं तथा पार्थमभ्यविध्यच्च सप्तभिः ॥ ८८ ॥
ततोऽर्जुनः सप्तदश तिग्मवेगानजिह्मगान् ।
इन्द्राशनिसमान्घोरानसृजत्पावकोपमान् ॥ ८९ ॥
निर्भिद्य ते भीमवेगा ह्यपतन्पृथिवीतले ।
कम्पितात्मा ततः कर्णः शक्त्या चेष्टामदर्शयत् ॥९०॥
बलेनाथ स संस्तभ्य ब्रह्मास्त्रं समुदैरयत् ।

ब्राह्मणके शापसे पृथ्वीसे पकडे हुए रथपर परशुरामका शस्त्र भूलकर कर्ण इस प्रकार बैठे रह गये जैसे अत्यन्त पुष्पित ग्रामसूचक बडा चैत्य वृक्ष । जब अर्जुनने उस सांप मुखवाले घोर बाणको काट दिया और कर्ण शस्त्रको भूल गये, तब क्रोधमें भरकर और अपनेको धिक्कार देते हुए हाथ पटकने लगे । और कर्ण बोले, धर्म करनेवाले मनुष्य की धर्म अवश्य ही रक्षा करता है हम अपनी शक्ति और विद्याके अनुसार सदा ही धर्म करते रहे हैं परन्तु वह धर्म हमारी उस समय रक्षा नहीं करता, इससे जान पडता है कि पहले कहे पण्डितोंके वचन झूठ हैं, ऐसे कहते हुए कर्ण अर्जुनके बाणोंसे व्याकुल होकर कांपने लगे, तब मर्ममें बाण लगनेसे कर्ण कर्म करनेमें असमर्थ होकर बार बार धर्मकी निंदा करने लगे ॥ (८४–८७)

फिर साहस करके धनुष उठाया और श्रीकृष्णके हाथमें तीन और अर्जुनके शरीरमें सात घोर बाण मारे तब, अर्जुनने क्रोध करके वज्रके समान कठोर, आगके समान प्रकाशित, शीघ्र चलनेवाले सत्रह बाण कर्णके शरीर में मारे, वे उनके शरीरको बेधकर पृथ्वीमें चले गये, तब कर्ण बहुत कांपने लगे । परन्तु साहससे ऐसा यत्न किया, कि कोई

शरावभिन्नैः पतितैस्तुरङ्गमैः श्वसद्भिरार्तैः क्षतजं वमद्भिः ॥ ४ ॥
दीनं स्तनद्भिः परिवृत्तनेत्रैर्मही दशद्भिः कृपणं नदद्भिः।
तथापविद्धैर्गजवाजियोधैर्बलापविद्धैरथ वीरसङ्घैः ॥ ५ ॥
मन्दासुभिश्चैव गतासुभिश्च नराश्वनागैश्च रथैश्च मर्दितैः।
मन्दांशुभिश्चैव मही महाहवे नूनं यथा वैतरणीव भाति ॥ ६ ॥
गजैर्निकृत्तैर्वरहस्तगात्रैरुद्वेपमानैः पतितैः पृथिव्याम्।
विशीर्णदन्तैः क्षतजं वमद्भिः स्फुरद्भिरार्तैः करुणं नदद्भिः ॥ ७ ॥
निकृत्तचक्रेषुयुगैः सयोक्तृभिः प्रविद्धतूणीरपताककेतुभिः।
सुवर्णजालावततैर्भृशाहतैर्महारथौघैर्जलदैरिवावृता ॥ ८ ॥
यशस्विभिर्नागरथाश्वयोधिभिः पदातिभिश्चाभिमुखैर्हतैः परैः।
विशीर्णवर्माभरणाम्बरायुधैर्वृताप्रशान्तैरिव तावकैर्मही ॥ ९ ॥
शरप्रहाराभिहतैर्महाबलैरवेक्षमाणैः पतितैः सहस्रशः।
दिवश्च्युतैर्भूरतिदीप्तिमद्भिर्नक्तं ग्रहैर्द्योरमलप्रदीप्तैः ॥ १० ॥
प्रनष्टसंज्ञैः पुनरुच्छ्वसद्भिर्मही बभूवानुगतैरिवार्चिभिः।
कर्णार्जुनाभ्यां शरभिन्नगात्रैर्हतैः प्रवीरैः कुरुसृञ्जयानाम् ॥ ११ ॥

---

अधमरे तडफ रहे हैं। सोनेके जालोंके सहित रुधिरमें भीगे अधमरे घोडे छट पटाते हैं, ये दुःखसे धीरे धीरे बोलते पृथ्वीमें पडे और योधा चिल्ला रहें है। कोई मर गया है और कोई मरने चाहता है। इन सब हाथी, घोडोंसे यह सब पृथ्वी वैतरणीके समान दीख रही है॥ ये दुःखसे चिल्लाते हुए सूंड, पैर और दांत टूटे हाथी, घोडे, मरे पडे हैं, हाथियोंके शरीरसे रुधिर बह रहा है॥ (४–७)

यह पृथ्वी टूटे जुये, पहिये ध्वजा और पताका वाले, सोनेके जालोंसे युक्त कटे हुए रथोंसे ऐसी दीखती है जैसे मेघोंसे भरा आकाश॥ ये देखो ये बुझी हुई आगके समान कवच और अस्त्र रहित हाथी, घोडे और रथों पर चढे तथा अनेक यशस्वी पैदल मरे पडे हैं। जैसे रातका आकाश अत्यन्त प्रकाशवाले, गिरते हुए तारोंसे अत्यन्त शोभित होता है ऐसे ही बाणोंसे मरे महा पराक्रमी वीरोंसे यह पृथ्वी शोभित हो रही है॥ ८—१०)

ये कौरव और पाञ्चाल योद्धा अर्जुन और कर्णके बाणोंसे मर कर पृथ्वीमें पडे हैं, और अनेक मूर्छित होकर सांस ले रहे हैं। ये अर्जुन और कर्णके बाण हाथी घोडे और मनुष्योंको काटकर पाताल

शरैरवाकिरत्कर्णं दीप्यमानैरिवाहिभिः ॥ ९९ ॥
तस्य ज्याच्छेदनं कर्णो ज्यावधानं च संयुगे।
नान्वबुध्यत शीघ्रत्वात्तदद्भुतमिवाभवत् ॥ १०० ॥
अस्त्रैरस्त्राणि संवार्य प्रनिघ्नन्सव्यसाचिनः।
चक्रे चाप्यधिकं पार्थात्स्ववीर्यमतिदर्शयन् ॥ १०१ ॥
ततः कृष्णोऽर्जुनं दृष्ट्वा कर्णास्त्रेण च पीडितम्।
अभ्यसेत्यब्रवीत्पार्थमातिष्ठास्त्रं व्रजेति च ॥ १०२ ॥
ततोऽग्निसदृशं घोरं शरं सर्पविषोपमम्।
अश्मसारमयं दिव्यमभिमन्त्र्य परन्तप ॥ १०३ ॥
रौद्रमस्त्रं समाधाय क्षेप्तुकामः किरीटवान्।
ततोऽग्रसन्मही चक्रं राधेयस्य तदा नृप ॥ १०४ ॥
ततोऽवतीर्य राधेयो रथादाशु समुद्यतः।
चक्रं भुजाभ्यामालम्ब्य समुत्क्षेप्तुमियेष सः ॥ १०५ ॥
सप्तद्वीपा वसुमती सशैलवनकानना।
गीर्णचक्रा समुत्क्षिप्ता कर्णेन चतुरंगुलम् ॥ १०६ ॥
ग्रस्तचक्रस्तु राधेयः क्रोधादश्रूण्यवर्तयत्।
अर्जुनं वीक्ष्य संरब्धमिदं वचनमब्रवीत् ॥ १०७ ॥

धनुषपर चढाया, और विषीले सांपके समान अनेक वाण कर्णकी ओर चलाये। कर्णका रोदा काटना और अर्जुनका चढाना इस अद्भुत शीघ्रताको कोई न देख सका, उस समय भी अर्जुनके सब वाण काटकर कर्णने अपना पराक्रम उनसे अधिक दिखलाया॥ (९९-१०१)

तब श्रीकृष्णने अर्जुनको कर्णके वाणों से व्याकुल देखकर कहा तुम इस समय चुप मत बैठो शीघ्र शस्त्र चलाओ, तब शत्रुनाशन अर्जुनने लोहेका बना अग्नि, विष और सांपके समान भयानक एक दिव्य वाण निकालके उसपर मन्त्र पढा और रुद्रास्त्रसे युक्त करके चलानेकी इच्छा की, उसी समय पृथ्वीने कर्णके रथ का पहिया भी पकड लिया॥ तब राधा पुत्र कर्ण रथसे नीचे उतरे, और हाथके बलसे रथके पहिये को उठाने लगे॥ उस समय कर्णने द्वीप और नगरोंके सहित सब पृथ्वीको चार अङ्गुलतक उठा लिया॥ (१०२-१०६)

उस समय क्रोधसे भरे कर्णकी आंखसे आंसु बहने लगे। और अर्जुन-को वाण चढाये देख ऐसे वचन बोले, हे

आपीडकेयूरवराङ्गदानि ग्रैवेयनिष्काः ससुवर्णसूत्राः ॥ २० ॥
मण्युत्तमा वज्रसुवर्णमुक्ता रत्नानि चोच्चावचमङ्गलानि ।
गात्राणि चात्यन्तसुखोचितानि शिरांसि चेन्दुप्रतिमाननानि ॥२१ ॥
देहांश्च भोगांश्च परिच्छदांश्च त्यक्त्वा मनोज्ञानि सुखानि चैव ।
स्वधर्मनिष्ठां महतीमवाप्य व्याप्याशु लोकान्यशसा गतास्ते ॥२२ ॥
निवर्त दुर्योधन यान्तु सैनिका व्रजस्व राजञ्शिबिराय मानद ।
दिवाकरोऽप्येष विलम्बते प्रभो पुनस्त्वमेवात्र नरेन्द्र कारणम्॥ २३ ॥
इत्येवमुक्त्वा विरराम शल्यो दुर्योधनं शोकपरीतचेताः ।
हा कर्ण हा कर्ण इति ब्रुवाणमार्तं विसंज्ञं भृशमश्रुनेत्रम् ॥ २४ ॥
तं द्रोणपुत्रप्रमुखा नरेन्द्राः सर्वे समाश्वास्य मुहुः प्रयान्ति ।
निरीक्षमाणा मुहुरर्जुनस्य ध्वजं महान्तं यशसा ज्वलन्तत् ॥ २५ ॥
नराश्वमातङ्गशरीरजेन रक्तेन सिक्तां च तथैव भूमिम् ।
रक्ताम्बरस्रक्तपनीययोगान्नारीं प्रकाशामिव सर्वगम्याम् ॥ २६ ॥
प्रच्छन्नरूपां रुधिरेण राजन्रौद्रे मुहूर्तेऽतिविराजमाने ।
नैवावतस्थुः कुरवः समीक्ष्य प्रव्राजिता देवलोकाय सर्वे ॥ २७ ॥
वधेन कर्णस्य तु दुःखितास्ते हा कर्ण हा कर्ण इति ब्रुवाणाः ।

---

और विना टूटे हीरे और मोतियोंके हार, केयूर, बाजू गोभ, सोनेके सूतमें गुथे निष्क (मूहर) उत्तम मणि और सुवर्णमें जडे रत्न पडे है। ये सुख भोगने योग्य शरीर चन्द्रमाके समान सुन्दर मुखवाले, शिर पडे है ॥ ( १७-२१ )

ये सब क्षत्री शरीर, वस्त्र और जगत् के सुखोंको छोडकर यशको बढाकर सनातन स्वर्गको चले गये ॥ हे नरेन्द्र दुर्योधन! ये देखो सूर्य अस्ताचलको जाता है। इसलिये अब सब सेना अपने अपने डेरोंको जाय और तुम भी लौटकर अपने डेरेको जाओ, हाकर्ण ! हाकर्ण ! ऐसा कहकर रोते हुए मूर्खके समान खडे, आंसू बहाते दुर्योधनसे ऐसा कहकर राजा शल्य शोकसे व्याकुल होकर चुप होगये ॥ ( २२-२४ )

फिर अश्वत्थामा आदि सब वीर यशसे भरी ध्वजाको देखकर दुर्योधनके पास आये, और उन्हें समझाने लगे ॥ उस समय मनुष्य, हाथी और घोडोंके रुधिरसे भीगकर पृथ्वी लाल वस्त्रवाली वेश्याके समान दीखन लगी थी ॥ उस रौद्र मुहूर्त्तमें उस पृथ्वीको देखकर कोई कौरव खडा न रह सका, और सबने मरनेका निश्चय कर लिया ॥ २५--२७

त्वं हि क्षत्रियदायादो महाकुलविवर्धनः ॥
अतस्त्वां प्रब्रवीम्येष मुहूर्तं क्षम पाण्डव ॥ ११६ ॥ [४७२१]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां कर्णपर्वणि कर्णरथप्रसने नवतितमोऽध्याय ॥९०॥

सञ्जय उवाच— तमब्रवीद्वासुदेवो रथस्थो राधेय दिष्ट्या स्मरसीह धर्मं ।
प्रायेण नीचा व्यसनेषु मग्ना निन्दन्ति दैवं कुकृतं न तु स्वम् ॥ १ ॥
यद् द्रौपदीमेकवस्त्रां सभायामानाययेस्त्वं च सुयोधनश्च ।
दुःशासनः शकुनिः सौबलश्च न ते कर्ण प्रत्यभात्तत्र धर्मः ॥ २ ॥
यदा सभायां राजानमनक्षज्ञं युधिष्ठिरम् ।
अजैषीच्छकुनिर्ज्ञानात्क ते धर्मस्तदा गतः ॥ ३ ॥
वनवासे व्यतीते च कर्ण वर्षे त्रयोदशे ।
न प्रयच्छसि यद्राज्यं क ते धर्मस्तदा गतः ॥ ४ ॥
यद्भीमसेनं सर्पैश्च विषयुक्तैश्च भोजनैः ।
आचरत्त्वन्मते राजा क ते धर्मस्तदा गतः ॥ ५ ॥
यद्वारणावते पार्थान्सुप्राञ्जतुगृहे तदा ।
आदीपयस्त्वं राधेय क ते धर्मस्तदा गतः ॥ ६ ॥

कृष्णसे कुछ नहीं डरते हैं। परन्तु तुम क्षत्रियोंके उत्तम कुलमें उत्पन्न हुए हो इसलिये हम तुमसे कहते हैं, कि क्षणमात्र ठहर जाओ ॥ (११५-११६)[४७२१]

कर्णपर्वमें नव्वे अध्याय समाप्त ।

कर्णपर्वमें एकानव्वे अध्याय ।

सञ्जय बोले, हे राजन् ! तब श्रीकृष्णने रथमें बैठे बैठे कर्णसे कहा कि, हे राधापुत्र ! तुमने आज प्रारब्धसे धर्मका स्मरण किया । तुम्हारे समान नीच मनुष्य आपत्तिहीमें प्रारब्धकी निन्दा करते है परंतु अपने बुरे कर्मका स्मरण नहीं करते ॥ हे कर्ण ! जिस समय तुम, दुःशासन, दुर्योधन और सुबलपुत्र शकुनिने एक वस्त्रवाली द्रौपदीको सभामें बुलाया था, तब तुमने धर्म नहीं समझा था ? जब जुआ न जाननेवाले, महाराजको शकुनिने दुष्टतासे सभामें जीता था, तब तुम्हारा धर्म कहां गया था ? (१-३)

हे कर्ण ! जब तेरह वर्ष वनमें रहकर पाण्डव आये, तो भी तुमने उनको राज्य न दिया । तब तुम्हारा धर्म कहां रहा? जब तुम्हारी सम्मतिसे दुर्योधनने भीमसेनको सर्पोंसे कटवाकर और विष खिलाकर नदीमें डुवा दिया था, तब तुम्हारा धर्म कहां गया था ? हे राधापुत्र ! जब वारणावत नगरमें लाखके घरमें तुमने

नाभवद्विकृतिः काचिद्धतस्यापि महात्मनः ॥ ३६ ॥
चारुवेषधरं वीरं चारुमौलिशिरोधरम् ।
तन्मुखं सूतपुत्रस्य पूर्णचन्द्रसमद्युति ॥ ३७ ॥
नानाभरणवान्राजंस्तप्तजाम्बूनदाङ्गदः ।
हतो वैकर्तनः शेते पादपोऽङ्कुरवानिव ॥ ३८ ॥
कनकोत्तमसङ्काशो ज्वलन्निव विभावसुः ।
स शान्तः पुरुषव्याघ्रः पार्थसायकवारिणा ॥ ३९ ॥
यथा हि ज्वलनो दीप्तो जलमासाद्य शाम्यति ।
कर्णाग्निः समरे तद्वत्पार्थमेघेन शामितः ॥ ४० ॥
आहृत्य च यशो दीप्तं सुयुद्धेनात्मनो भुवि ।
विसृज्य शरवर्षाणि प्रताप्य च दिशो दश ॥ ४१ ॥
सपुत्रः समरे कर्णः स शान्तः पार्थतेजसा ।
प्रताप्य पाण्डवान्सर्वान्पञ्चालांश्चास्त्रतेजसा ॥ ४२ ॥
वर्षित्वा शरवर्षेण प्रताप्य रिपुवाहिनीम् ।
श्रीमानिव सहस्रांशुर्जगत्सर्वं प्रताप्य च ॥ ४३ ॥
हतो वैकर्तनः कर्णः सपुत्रः सहवाहनः ।
अर्थिनां पक्षिसङ्घस्य कल्पवृक्षो निपातितः ॥ ४४ ॥

कर्णसे पाण्डवोंके योद्धा डरने लगे॥ महात्मा पुरुषसिंह कर्ण मरे हुए भी जीते हुएके समान दिखलाई देते थे, उनका कोई स्वरूप नहीं विगडा था॥ सूतपुत्र कर्ण पूर्ण चन्द्रमाके समान मुख, उत्तम किरीट और भूषण धारण किये और सोनके बाजू सहित मरे हुए ऐसे दीखते थे जैसे टूटा हुआ वृक्ष॥ ३५-३८

अच्छे सुवर्णके समान कांति वाला प्रज्वलित अग्निके समान प्रकाशमान कर्ण अर्जुनके बाणरूपी जलसे शान्त हुआ। जैसे मेघ अग्निको बुझा देता है, ऐसे ही अर्जुनरूपी मेघने कर्णरूपी अग्निको ठण्डा कर दिया॥ अपने यशसे जगत्को पूरित करके और बाणोंसे सब दिशाओंको तपाकर तथा पाण्डव और पाञ्चालोंको व्याकुल करके पुत्र सहित कर्ण अर्जुनके तेजसे मर गये। (३९-४२)

जैसे सूर्य अपनी किरणसे जगत्को व्याकुल कर देता है, ऐसे ही अपने बाणोंसे पांचाल और पाण्डवोंकी सेनाको व्याकुल करके पुत्र सहित कर्ण मर गये। मानो भिक्षुक रूपी पक्षियोंका कल्पवृक्ष टूट गया॥ जो धार्मिक कर्ण सदा भिक्षु-

प्राप्तास्तथा पाण्डवा बाहुवीर्यात्सर्वैः समेताः परिघृत्तलोभाः ।
निहत्य शत्रून्समरे प्रवृद्धान्ससोमका राज्यमवाप्नुयुस्ते ॥ १४ ॥
तथा गता धार्तराष्ट्रा विनाशं धर्माभिगुप्तैः सततं नृसिंहैः ।
सञ्जय उवाच— एवमुक्तस्तदा कर्णो वासुदेवेन भारत ॥ १५ ॥
लज्जयावनतो भूत्वा नोत्तरं किञ्चिदुक्तवान् ।
क्रोधात्प्रस्फुरमाणौष्ठो धनुरुद्यम्य भारत ॥ १६ ॥
योधयामास वै पार्थं महावेगपराक्रमः ।
ततोऽब्रवीद्वासुदेवः फाल्गुनं पुरुषर्षभम् ॥ १७ ॥
दिव्यास्त्रेणैव निर्भिद्य पातयस्व महाबल ।
एवमुक्तस्तु देवेन क्रोधमागात्तदार्जुनः ॥ १८ ॥
मन्युमभ्याविशद्घोरं स्मृत्वा तत्तु धनञ्जयः ।
तस्य क्रुद्धस्य सर्वेभ्यः स्रोतोभ्यस्तेजसोऽर्चिषः॥ १९ ॥
प्रादुरासंस्तदा राजंस्तदद्भुतमिवाभवत् ।
तत्समीक्ष्य ततः कर्णो ब्रह्मास्त्रेण धनञ्जयम् ॥ २० ॥
अभ्यवर्षत्पुनर्यत्नमकरोद्रथसर्जने ।
ब्रह्मास्त्रेणैव तं पार्थो ववर्ष शरवृष्टिभिः ॥ २१ ॥
तदस्त्रमस्त्रेणावार्य प्रजहार च पाण्डवः ।

हुए थे ऐसेही पाञ्चालोंके सहित पाण्डव अपने बाहुबलसे शत्रुओंका नाश करके राजा हुए है। धार्मिक पाण्डवोंने धृतराष्ट्र के वंशका नाश कर दिया। (१३—१५)

सञ्जय बोले, हे राजन् ! श्रीकृष्णके ऐसे वचन सुन कर्णने लज्जासे अपना मुख नीचा कर लिया और कुछ उत्तर न दिया और क्रोधसे हाथ फटकाकर धनुष उठाकर वहींसे अर्जुनके सङ्ग घोर युद्ध करने लगा, तब श्रीकृष्णने अर्जुनसे कहा तुम इसी समय इसे दिव्य बाणसे मारो। (१५—१८)

कृष्णके वचन सुनते ही अर्जुनको महाक्रोध आगया। उन सब वचनोंको स्मरण करके अर्जुनको ऐसा क्रोध आया कि सब रोंओंसे ज्वाला निकलने लगीं, अर्जुनका ऐसा घोर रूप देखकर कर्णने ब्रह्मास्त्र चलाया और अनेक बाण मार कर धनुषको रथ पहियेको उठाने लगा। (१८—२१)

तब अर्जुनने ब्रह्मास्त्रसे ही उसके बाण काट कर उस शस्त्रको शांत कर दिया और फिर अग्नि बाण चलाया। उस प्रकाशमान बाणकी अग्निको कर्णने

हते तु कर्णे विदिशोऽपि जज्वलुस्तमोवृता द्यौर्विचचाल भूमिः।
पपात चोल्का ज्वलनप्रकाशा निशाचराश्चाप्यभवन्प्रहृष्टाः ॥ ५२ ॥
शशिप्रकाशाननमर्जुनो यदा क्षुरेण कर्णस्य शिरो न्यपातयत।
तदान्तरिक्षे सहसैव शब्दो बभूव हाहेति सुरैर्विमुक्तः ॥ ५३ ॥
स देवगन्धर्वमनुष्यपूजितं निहत्य कर्णं रिपुमाहवेऽर्जुनः।
रराज राजन्परमेण वर्चसा यथा पुरा वृत्रवधे शतक्रतुः ॥ ५४ ॥
ततो रथेनाम्बुदवृन्दनादिना शरन्नभोमध्यदिवाकरार्चिषा।
पताकिना भीमनिनादकेतुना हिमेन्दुशङ्खस्फटिकावभासिना ॥ ५५ ॥
महेन्द्रवाहप्रतिमेन तावुभौ महेन्द्रवीर्यप्रतिमानपौरुषौ।
सुवर्णमुक्तामणिवज्रविद्रुमैरलंकृतावप्रतिमेन रंहसा ॥ ५६ ॥
नरोत्तमौ केशवपाण्डुनन्दनौ तदा हि तावग्निदिवाकराविव।
रणाजिरे वीतभयौ विरेजतुः समानयानाविव विष्णुवासवौ ॥ ५७ ॥
ततो धनुर्ज्यातलबाणनिःस्वनैः प्रसह्य कृत्वा च रिपून्हतप्रभान्।
सञ्छादयित्वा तु कुरूञ्शरोत्तमैः कपिध्वजः पक्षिवरध्वजश्च ॥ ५८ ॥
हृष्टौ ततस्तावमितप्रभावौ मनांस्यरीणामवदारयन्तौ।
सुवर्णजालावततौ महास्वनौ हिमावदातौ परिगृह्य पाणिभिः।

---

कर्णके मरनेके पश्चात् सब दिशा और कोने जलने लगे। आकाशमें अन्धकार छागया। पृथ्वी हिलने लगी, आकाशसे अग्निके समान बिजली गिरी और राक्षस प्रसन्न होगये॥ जब अर्जुनने अपने तेज बाणसे पूर्ण चन्द्रमाके समान मुखवाला कर्णका शिर काटा तब आकाशमें सब देवता हाहाकार करने लगे॥(५२-५३)

हे राजन्! जैसे वृत्रासुरको मारकर महातेजस्वी इन्द्र शोभित हुए थे, ऐसे ही देवता गन्धर्व और मनुष्योंसे पूजित कर्णको मारकर अर्जुन प्रसन्न हुए॥ तब बरफ, चन्द्रमा और स्फटिकके समान सफेद ध्वजा युक्त, अनेक मेघोंके समान शब्दवाले, आकाशमें घूमते हुए सूर्यके समान तेज भरे इन्द्रके रथके समान सुंदर रथपर बैठकर इन्द्रके समान पराक्रमी मणि और मोतीयुक्त अनेक भूषण पहने असाधारण तेजस्वी, अग्नि और सूर्यके समान तेजस्वी श्रीकृष्ण और अर्जुन बेडर होकर युद्धमें ऐसे शोभित हुए जैसे एक रथपर बैठे विष्णु और इन्द्र॥ (५४—५७)

अपने धनुष और तालके शब्द तथा बाणोंसे सब शत्रुओंका नाश करके और अपने बाणोंसे कौरवोंका हृदय चीरनेके

तदन्तरं प्राप्य वृषो महारथो रथाङ्गमुर्वीगतमुज्जिहीर्षुः ॥ ३१ ॥
रथादवप्लुत्य निगृह्य दोर्भ्यां शशाक दैवान्न महाबलोऽपि ।
ततः किरीटी प्रतिलभ्य संज्ञां जग्राह बाणं यमदण्डकल्पम् ॥ ३२ ॥
ततोऽर्जुनः प्राञ्जलिकं महात्मा ततोऽब्रवीद्वासुदेवोऽपि पार्थम् ।
छिन्ध्यस्य मूर्धानमरेः शरेण न यावदारोहति वै रथं वृषः ॥ ३३ ॥
तथैव सम्पूज्य स तद्वचः प्रभोस्ततः शरं प्रज्वलितं प्रगृह्य ।
जघान कक्षाममलार्कवर्णां महारथे रथचक्रे विमग्ने ॥ ३४ ॥
तं हस्तिकक्षाप्रवरं च केतुं सुवर्णमुक्तामणिवज्रपृष्ठम् ।
ज्ञानप्रकर्षोत्तमशिल्पियुक्तैः कृतं सुरूपं तपनीयचित्रम् ॥ ३५ ॥
जयास्पदं तव सैन्यस्य नित्यममित्रवित्रासनमीड्यरूपम् ।
विख्यातमादित्यसमं स्म लोके त्विषा समं पावकभानुचन्द्रैः ॥ ३६ ॥
ततः क्षुरप्रेण सुसंशितेन सुवर्णपुङ्खेन हुताग्निवर्चसा ।
श्रिया ज्वलन्तं ध्वजमुन्ममाथ महारथस्याधिरथेः किरीटी ॥ ३७ ॥
यशश्च दर्पश्च तथा प्रियाणि सर्वाणि कार्याणि च तेन केतुना ।
साकं कुरूणां हृदयानि चापतन्बभूव हाहेति च निःस्वनो महान् ॥३८॥

---

कांपने लगे, इतना समय पाकर महारथ कर्ण पृथ्वीसे पहिया उठाने लगा, तब कर्णने बहुत बलसे पहिया निकालनेका यत्न किया पर निकल न सका ॥ ( २९–३२ )

इतनेही समयमें अर्जुनने चैतन्य हो कर यम दण्डके समान घोर बाण चढाया। तब श्रीकृष्णने अर्जुनसे कहा कि, जब तक यह रथपर न चढे तभी तक इस दुष्टका शिर काट लो ॥ श्रीकृष्णके वचनोंको स्वीकार करके अर्जुनने कर्णके महारथकी पहिया भूमिमें मग्न थी उसी अवसरमें एक प्रज्वालित बाणसे कर्णके रथ की कक्षा और ध्वजा काट दी। वह ध्वजा हाथीके चिन्हसे युक्त, सोने मोती और हीरे आदि मणियोंसे बनी हुई, बहुत युक्तिसे शिल्पकारोंकी बनाई हुई, तुम्हारी सेनाके विजयका स्थान, शत्रुओंको डराने वाली स्तुति करने योग्य, जगत् प्रसिद्ध, सूर्यके समान तेजस्वी, चन्द्रमा और अग्निके समान कांतिमान थी, उस ध्वजाको कर्णके महारथसे, महारथ अर्जुनने अग्नि और सूर्यके समान प्रकाशित सोनेके पङ्खवाले एक बाणसे गिरा दिया !! ३३–३७

कौरवोंके यश, प्रताप, बल और सुख सबके सब उस ध्वजाके सङ्ग ही गिर गये। सबके हृदय फटने लगे, और सेनामें हाहाकार शब्द होने लगा। हे

जयाभिवृद्ध्या परयाभिपूजितौ हते तु कर्णे परमाहवे तदा ॥ ६७ ॥
यथानुरूपं प्रतिपूजितावुभौ प्रशस्यमानौ स्वकृतैर्गुणौघैः ।
ननन्दतुस्तौ ससुहृद्गणौ तदा बलं नियम्यैव सुरेशकेशवौ ॥६८॥[४९३१]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां कर्णपर्वणि रणभूमिवर्णनं नामचतुर्नवतितमोऽध्यायः ॥९४

सञ्जय उवाच— हते वैकर्तने राजन्कुरवो भयपीडिताः ।
वीक्षमाणा दिशः सर्वाः पर्यापेतुः सहस्रशः ॥ १ ॥
कर्णं तु निहतं दृष्ट्वा शत्रुभिः परमाहवे ।
भीता दिशो व्यकीर्यन्त तावकाः क्षतविक्षताः ॥ २ ॥
ततोऽवहारं चक्रुस्ते योधाः सर्वे समन्ततः ।
निवार्यमाणाश्चोद्विग्नास्तावका भृशदुःखिताः ॥ ३ ॥
तेषां तन्मतमाज्ञाय पुत्रो दुर्योधनस्तव ।
अवहारं ततश्चक्रे शल्यस्यानुमते नृप ॥ ४ ॥
कृतवर्मा रथैस्तूर्णं वृतो भारत तावकैः ।
नारायणावशेषैश्च शिबिरायैव दुद्रुवे ॥ ५ ॥
गान्धाराणां सहस्रेण शकुनिः परिवारितः ।
हतमाधिरथिं दृष्ट्वा शिबिरायैव दुद्रुवे ॥ ६ ॥

---

महायुद्धमें कर्णके मरनेके पश्चात् उन दोनोंको देवता, गन्धर्व, मनुष्य, चारण, महाऋषि, यक्ष और सांप जयका आशीर्वाद देने लगे ॥ इस प्रकार अपनी कीर्त्ति और गुणोंको सुनते हुए अपनी सेनाको इस प्रकार सावधान करने लगे, जैसे देवतोंको इन्द्र और विष्णु ॥ ६७ ६८

कर्णपर्वमें चौरानब्बे अध्याय समाप्त । [४९३१]

कर्णपर्वमें पचानब्बे अध्याय ।

सञ्जय बोले, हे राजन् ! जिस समय विकर्त्तन पुत्र कर्ण मर गये तब कौरव भयसे व्याकुल होकर सब दिशाओंको देखते हुए इधर उधरको भागने लगे ॥ उस बडे युद्धमें शत्रुओंके हाथसे कर्णको मरा हुआ देख क्षत विक्षत शरीरवाले तेरी सेनाके योद्धा लोग भयभीत होकर सब दिशाओंमें भागने लगे ॥ तुम्हारे पुत्रोंने व्याकुल और युद्धमे असमर्थ होकर अपनी सेनाको चारों ओरसे शल्यकी सम्मतिके अनुसार रणभूमिसे लौटाया ॥ (१--४)

हे महाराज ! बची हुई नारायणी सेना और थोडे रथोंके सहित कृतवर्मा अपने डेरोंको चले ॥ बचे हुए गन्धार देशके वीरोंके सहित शकुनी भी अपने डेरोंको गये ॥ हे भारत इसी प्रकार सेनोंके

रराज कर्णस्य शिरो निकृत्तमस्तङ्गतं भास्करस्येव बिम्बम्॥ ६० ॥
शरैराचितसर्वाङ्गः शोणितौघपरिप्लुतः ।
विभाति देहः कर्णस्य स्वरश्मिभिरिवांशुमान् ॥ ६१ ॥
प्रताप्य सेनामामित्रीं दीप्तैः शरगभस्तिभिः ।
बलिनार्जुनकालेन नीतोऽस्तं कर्णभास्करः ॥ ६२ ॥
अस्तं गच्छन्यथादित्यः प्रभामादाय गच्छति ।
तथा जीवितमादाय कर्णस्येषुर्जगाम सः ।
अपराह्णेऽपराह्णोऽस्य सूतपुत्रस्य मारिष ॥ ६३ ॥
छिन्नमञ्जलिकेनाजौ सोत्सेधमपतच्छिरः ।
उपर्युपरि सैन्यानामस्य शत्रोस्तदञ्जसा ।
शिरः कर्णस्य सोत्सेधमिषुः सोऽप्यहरद् द्रुतम् ॥६४॥
कर्णं तु शूरं पतितं पृथिव्यां शराचितं शोणितदिग्धगात्रम् ।
दृष्ट्वा शयानं भुवि मद्रराजश्छिन्नध्वजेनाथ ययौ रथेन ॥ ६५ ॥
हते कर्णे कुरवः प्राद्रवन्त भयार्दिता गाढविद्धाश्च सङ्ख्ये
अवेक्ष्यमाणा मुहुरर्जुनस्य ध्वजं महान्तं वपुषा ज्वलन्तम् ॥ ६६ ॥
सहस्रनेत्रप्रतिमानकर्मणः सहस्रपत्रप्रतिमाननं शुभम् ।

हुआ सूर्यका मण्डल दीखता है ऐसे ही मरे हुए कर्णका शिर दीखने लगा ॥ ( ५८—६० )

जैसे किरणों सहित अस्त होनेके समय सूर्य दीखते हैं, ऐसे ही मरे हुए कर्णका शरीर बाण युक्त दीखने लगा ॥ अपने बाणरूपी किरणोंसे शत्रुकी सेनाको तपा कर अर्जुनरूपी कालके वशमें होकर कर्णरूपी सूर्य अस्त होगये ॥ जैसे सूर्य अपने किरणोंके सहित अस्त होजाता है ऐसे ही वह बाण कर्णका प्राण लेकर शीघ्र शांत होगया ॥ हे महाराज! दिनके चौथे भागमें अर्जुनने अञ्जलिक बाणसे शीघ्रता सहित कर्णका शिर काट कर सेनाके आगे युद्ध भूमिमें गिरा दिया ॥ ( ६१-६४ )

महा पराक्रमी वीर कर्णको बाणोंसे कटा और पृथ्वीमें पडा छोड मद्रराज शल्य ध्वजा रहित रथको लेकर डेरोंको चले गये ॥ कर्णके मरनेके पश्चात् घावोंसे व्याकुल अर्जुनकी ध्वजासे डरते हुए तुम्हारी सेनाके वीर युद्ध छोडकर भागे । इन्द्रके समान कर्म करनेवाले कर्णका सहस्र पत्रवाले कमलके समान मुखयुक्त शिर इस प्रकार कट कर पृथ्वीमें गिर पडा जैसे सहस्र किरणवाला

हते कर्णे महाराज निराशाः कुरवोऽभवन् ।
जीवितेष्वपि राज्येषु दारेषु च धनेषु च ॥ १६ ॥
तान्समानीय पुत्रस्ते यत्नेन महता विभुः ।
निवेशाय मनो दध्रे दुःखशोकसमन्वितः ॥ १७ ॥
तस्याज्ञां शिरसा योधाः परिगृह्य विशाम्पते ।
विवर्णवदना राजन्न्यविशन्त महारथाः ॥ १८ ॥ [४९४९]

इति श्रीमहाभारते शतसाहस्र्या संहितायां वैयासिक्यां कर्णपर्वणि शिविरप्रयाणे पञ्चनवतितमोऽध्यायः ॥९५॥

सञ्जय उवाच— तथा निपातिते कर्णे परसैन्ये च विद्रुते ।
आश्लिष्य पार्थं दाशार्हो हर्षाद्वचनमब्रवीत् ॥ १ ॥
हतो वज्रभृता वृत्रस्त्वया कर्णो धनञ्जय ।
वृत्रकर्णवधं घोरं कथयिष्यन्ति मानवाः ॥ २ ॥
वज्रेण निहतो वृत्रः संयुगे भूरितेजसा ।
त्वया तु निहतः कर्णो धनुषा निशितैः शरैः ॥ ३ ॥
तमिमं विक्रमं लोके प्रथितं ते यशस्करम् ।
निवेदयावः कौन्तेय कुरुराजस्य धीमतः ॥ ४ ॥
वधं कर्णस्य संग्रामे दीर्घकालचिकीर्षितम् ।

---

लिये इच्छा करे ॥ ( १३—१५ )

जब कर्ण मरे उस समय सब कौरव धन, स्त्री, राज्य और जीवनसे भी निराश होगये ॥ उन सबको बहुत यत्नसे बुलाकर शोक और दुःखसे भरे, दुर्योधनने विश्राम करनेकी आज्ञा दी ॥ हे महाराज ! दुर्योधनकी आज्ञा शिरपर रखकर दुःखसे व्याकुल सब वीर अपने अपने डेरोंको गये ॥ ( १५–१८ ) [४९४९]

कर्णपर्वमें पचानव्वे अध्याय समाप्त।

कर्णपर्वमें छानव्वे अध्याय।

सञ्जय बोले, हे राजन् ! कर्णके मरनेके और तुम्हारी सेना भागनेके पश्चात श्रीकृष्ण प्रसन्न होकर और अर्जुनको आलिंगन देकर ऐसे वचन बोले, जैसे इन्द्रने वृत्रासुरको मारा था, ऐसे ही तुमने कर्णको मारा। इन दोनों कथाओंको मनुष्य मनुष्योंको बहुत दिनतक कहेंगे। तेजस्वी इन्द्रने वज्रसे वृत्रासुरको मारा था और तुमने केवल धनुष और बाणही से कर्ण को मार डाला ॥ ( १—३ )

अब यह तुम्हारा यश और बल सदाके लिये प्रसिद्ध रहेगा, अब चलो ये सब समाचार महाराजाधिराजसे निवेदन करें। महाराज धर्मराज बहुत दिनसे

तथैव राजन्सोमकाः सृञ्जयाश्च शङ्खान्दध्मुः सस्वजुश्चापि सर्वे ।
परस्परं क्षत्रिया हृष्टरूपाः सूतात्मजे वै निहते तदानीम् ॥ ७ ॥
कृत्वा विमर्दं महदर्जुनेन कर्णो हतः केसरिणेव नागः ।
तीर्णा प्रतिज्ञा पुरुषर्षभेण वैरस्यान्तं गतवांश्चापि पार्थः ॥ ८ ॥
मद्राधिपश्चापि विमूढचेतास्तूर्णं रथेनापकृतध्वजेन ।
दुर्योधनस्यान्तिकमेत्य राजन्सबाष्पदुःखाद्वचनं बभाषे ॥ ९ ॥
विशीर्णनागाश्वरथप्रवीरं बलं त्वदीयं यमराष्ट्रकल्पम् ।
अन्योन्यमासाद्य हतं महद्भिर्नराश्वनागैर्गिरिकूटकल्पैः ॥ १० ॥
नैतादृशं भारत युद्धमासीद्यथा तु कर्णार्जुनयोर्बभूव ।
ग्रस्तौ हि कर्णेन समेत्य कृष्णावन्ये च सर्वे तव शत्रवो ये ॥ ११ ॥
दैवं ध्रुवं पार्थवशात्प्रवृत्तं यत्पाण्डवान्पाति हिनस्ति चास्मान् ।
तवार्थसिद्ध्यर्थकरास्तु सर्वे प्रसह्य वीरा निहता द्विषद्भिः ॥ १२ ॥
कुबेरवैवस्वतवासवानां तुल्यप्रभावा नृपते सुवीराः ।
वीर्येण शौर्येण बलेन तेजसा तैस्तैस्तु युक्ता विविधैर्गुणौघैः ॥ १३ ॥
अवध्यकल्पा निहता नरेन्द्रास्तवार्थकामा युधि पाण्डवेयैः ।
तान्मा शुचो भारत दिष्टमेतत्पर्याश्वस त्वं न सदास्ति सिद्धिः ॥ १४ ॥

प्रकार पाञ्चाल और सृञ्जय वंशी क्षत्री परस्पर मिलकर प्रसन्न होकर शङ्ख बजाने और परस्पर आलिंगन देने लगे, वीर अर्जुनने कर्णको इस प्रकार मारा जैसे सिंह हाथीको मारता है, इसके मरनेसे अर्जुनकी प्रतिज्ञा पूरी होगयी और वैर समाप्त होगया ॥ (६-८)

राजा शल्य भी मूर्खके समान ध्वजा रहित रथको दौडाते हुए दुर्योधनके डेरे पर जाकर दुःखसे भरे ऐसे वचन बोले, ये देखो तुम्हारी सब सेना हाथी और घोडे रथोंसे रहित होकर इधर उधरको भाग गयी, पाण्डवोंने पत्थरोंके समान बाणोंसे इसका नाश कर दिया, हे भारत! जैसा ये युद्ध हुआ वैसा कभी नहीं हुआ। कर्णने अपने बाणोंसे कृष्ण आदि तुम्हारे सब शत्रुओंको ग्रस्त कर दिया था ॥ ( ९-११ )

क्या करें, प्रारब्ध बडी बलवान् है, वह सदा पाण्डवोंकी रक्षा और हमारा नाश करती है, उसीके वशमें होकर पाण्डवोंके हाथमें तुम्हारे सब योद्धा मारे गये ॥ तुम्हारी ओरके वीर इन्द्र, कुबेर और यमराजके समान गुणोंसे भरे थे और इनको कोई नहीं मार सकता था परन्तु पाण्डवोंने मार डाला [illegible]

अगृह्णीतां च मुदितौ चरणौ पार्थिवस्य तौ ॥ १३ ॥
तयोः प्रहर्षमालक्ष्य हर्षादश्रूण्यवर्तयत्।
राधेयं निहतं मत्वा समुत्तस्थौ युधिष्ठिरः ॥ १४ ॥
उवाच च महाबाहुः पुनः पुनररिन्दमः।
वासुदेवार्जुनौ प्रेम्णा तावुभौ परिषस्वजे ॥ १५ ॥
तत्तस्मै तद्यथावृत्तं वासुदेवः सहार्जुनः।
कथयामास कर्णस्य निधनं यदुपुङ्गवः ॥ १६ ॥
ईषदुत्स्मयमानस्तु कृष्णो राजानमब्रवीत्।
युधिष्ठिरं हतामित्रं कृताञ्जलिरथाच्युतः ॥ १७ ॥
दिष्ट्या गाण्डीवधन्वा च पाण्डवश्च वृकोदरः।
त्वं चापि कुशली राजन्माद्रीपुत्रौ च पाण्डवौ ॥ १८ ॥
मुक्ता वीरक्षयादस्मात्संग्रामाल्लोमहर्षणात्।
क्षिप्रमुत्तरकालानि कुरु कार्याणि पाण्डव ॥ १९ ॥
हतो वैकर्तनो राजन्सूतपुत्रो महारथः।
दिष्ट्या जयसि राजेन्द्र दिष्ट्या वर्धसि भारत ॥ २० ॥
यस्तु द्यूतजितां कृष्णां प्राहसत्पुरुषाधमः।
तस्याद्य सूतपुत्रस्य भूमिः पिबति शोणितम् ॥ २१ ॥
शेतेऽसौ शरपूर्णाङ्गः शत्रुस्ते कुरुपुङ्गव।

---

पैरोंमें गिर पडे ॥ (१२-१३)

महाराजने उन्हें प्रसन्न देखकर जान लिया, कि कर्ण मारा गया और प्रसन्न होकर उन दोनोंको छातीसे लगाकर प्रेम सहित ऐसे वचन कहे, हम प्रारब्धसे तुम दोनों को देखते हैं। तब इन दोनों ने कर्णके युद्ध और मरनेका सब समाचार उनसे कह दिया, कृष्णने हंसकर और हाथ जोडकर महाराज से सब निवेदन कर दिया ॥ (१३-१६)

कृष्णने कहा, हे महाराज! प्रारब्धसे आप, भीमसेन, अर्जुन, नकुल और सहदेव कुशलमे हैं ॥ हे पाण्डव! इस प्रलय कालरूपी घोर युद्धसे आप सब बच गये अब आगे जो कुछ करने योग्य काम हो सो कीजिये ॥ हे राजेन्द्र! हे भारत! प्रारब्धसे सूतपुत्र कर्ण मारा गया, और आपकी उन्नति हुई॥ (१७-२०)

जो मूर्ख द्यूतमें जित द्रौपदीको सभामें आई देख हसा था, उस सूतपुत्र कर्णका रुधिर आज भूमि पी रही है। हे कुरुकुलश्रेष्ठ! अब तुम्हारा शत्रु

भग्नशृङ्गा वृषा यद्वद्भग्नदंष्ट्रा इवोरगाः ।
प्रत्यपायाम सायाह्ने निर्जिताः सव्यसाचिना ॥ ७ ॥
हतप्रवीरा विध्वस्ता निकृत्ता निशितैः शरैः ।
सूतपुत्रे हते राजन्पुत्रास्ते दुद्रुवुर्भयात् ॥ ८ ॥
विस्रस्तयन्त्रकवचाः कान्दिग्भूता विचेतसः ।
अन्योन्यमवमृद्नन्तो वीक्ष्यमाणा भयार्दिताः ॥ ९ ॥
मामेव नूनं बीभत्सुर्मामेव च वृकोदरः ।
अभियातीति मन्वानाः पेतुर्मम्लुश्च सम्भ्रमात् ॥ १० ॥
हयानन्ये गजानन्ये रथानन्ये महारथाः ।
आरुह्य जवसम्पन्नाः पदातीन्प्रजहुर्भयात् ॥ ११ ॥
कुञ्जरैः स्यन्दनाः क्षुण्णाः सादिनश्च महारथैः ।
पदातिसङ्घाश्चाश्वौघैः पलायद्भिर्भयार्दितैः ॥ १२ ॥
व्यालतस्करसङ्कीर्णे सार्थहीना यथा वने ।
सूतपुत्रे हते राजंस्तव योधास्तथाभवन् ॥ १३ ॥
हतारोहा यथा नागाश्छिन्नहस्ता यथा नराः ।

---

मरनेपर घावोंसे व्याकुल तुम्हारी सेना इधर उधरको भागने लगी और रक्षा करनेवालेको ढूंढने लगी। जैसे सींग टूटनेसे बैल और दांत टूटनेसे सांप दुर्बल हो जाता है, ऐसे ही सन्ध्याके समय अर्जुनसे डरी हुई तुम्हारी सेना इधर उधरको भागने लगी ॥ (५-७)

हे राजन् ! कर्णके मरनेके पश्चात् और प्रधान वीरोंके नाश होनेपर तुम्हारे पुत्र शस्त्रोंसे और डरसे व्याकुल होकर इधर उधर भाग गये॥ यन्त्र और कवचोंसे रहित घबराये हुए डरसे व्याकुल चारों ओर देखते हुए एक दूसरेको मारते हुए और हमारी ही ओर अर्जुन और भीमसेन चले आते हैं, यह विचारते हुए भयसे गिरने और बहुत म्लान होने लगे ॥ ( ८-१० )

कोई अनेक महारथ हाथी, घोडे और रथोंपर चढकर पदातियोंको छोडकर वेगसे भागे। जब सब वीर भयसे भागने लगे, तब हाथियोंसे रथ, रथोंसे घुडसवार और भागनेवाले घोडोंसे पैदल वीर भग्न होने लगे॥ जैसे हिंस्रपशु और चोरोंसे भरे हुए वनमें बटोही घबराते हैं, ऐसे ही सूतपुत्रके मरनेसे तुम्हारी सेना घबराई। ऊपर बैठने वालेसे रहित हाथी तथा छिन्नहस्त योधाके समान दुर्योधनके जब वीर भयसे पीडित होकर

जयश्चैव ध्रुवोऽस्माकं न त्वस्माकं पराजयः ।
यदा त्वं युधि पार्थस्य सारथ्यमुपजग्मिवान् ॥ ३१ ॥
भीष्मो द्रोणश्च कर्णश्च महात्मा गौतमः कृपः ।
अन्ये च बहवः शूरा ये च तेषां पदानुगाः ॥ ३२ ॥
त्वद्बुद्ध्या निहते कर्णे हता गोविन्द सर्वथा ।
इत्युक्त्वा धर्मराजस्तु रथं हेमविभूषितम् ॥ ३३ ॥
श्वेतवर्णैर्हयैर्युक्तं कालवालैर्मनोजवैः ।
आस्थाय पुरुषव्याघ्रः स्वबलेनाभिसंवृतः ॥ ३४ ॥
प्रययौ स महाबाहुर्दष्टुमायोधनं तदा ।
कृष्णार्जुनाभ्यां वीराभ्यामनुमन्त्र्य ततः प्रियम्॥३५॥
अभाषमाणस्तौ वीरावुभौ माधवफाल्गुनौ ।
स ददर्श रणे कर्णं शयानं पुरुषर्षभम् ॥ ३६ ॥
यथा कदम्बकुसुमं केसरैः सर्वतो वृतम् ।
चितं शरशतैः कर्णं धर्मराजो ददर्श सः ॥ ३७ ॥
गन्धतैलावसिक्ताभिः काञ्चनीभिः सहस्रशः ।
दीपिकाभिः कृतोद्योतं पश्यन्ते वै वृषं तदा ॥ ३८ ॥
संछिन्नभिन्नकवचं बाणैश्च विदलीकृतम् ।
सपुत्रं निहतं दृष्ट्वा कर्णं राजा युधिष्ठिरः ॥ ३९ ॥

करते हैं और कभी युद्धमे विमुख नहीं होते है। जिस समय तुम अर्जुनके सारथी बने थे, तभी हमने जान लिया था, कि हमारी विजय होगी; पराजय कदापि नहीं होगा॥ भीष्म, द्रोण, कर्ण और कृपाचार्य आदि जो दुर्योधनके सङ्गी थे, और है सो सब तेरी बुद्धिसे कर्णके मरनेमे नष्ट होगये॥ ( ३०—३२ )

श्रीकृष्णसे ऐसा कहकर सफेद घोडे वाले, सोनेके रथमें बैठकर और अपनी निज सेनाके सहित वीर कृष्ण और अर्जुनसे बात करते हुए युद्धभूमि देखनेको चले॥ इस प्रकार उन दोनोंकी बातें सुनते हुए महाराज वहां पहुंचे और पृथ्वीमें सोते हुए कर्णको देखा। जैसे कदम्बका फूल चारों ओर पखरियोंसे भरा रहता है, ऐसे ही बाणोंमे पूरित कर्णको महाराजने देखा॥(३३-३७)

तब महाराजने सुगन्धित तेलोंमे भरे, सोनेके अनेक दीपक जलवाकर कर्णके सब शरीर देखे, बाणोंमे छिन्न भिन्न पुत्र सहित कर्णको पृथ्वीमें पडा

ते सर्वे तावकान्प्रेक्ष्य द्रवतोऽपि पराङ्मुखान् ॥ ४० ॥
अभ्यवर्तन्त संरब्धान्वृषाञ्जित्वा यथा वृषाः ।
सेनावशेषं तं दृष्ट्वा तव सैन्यस्य पाण्डवः ॥ ४१ ॥
व्यवस्थितः सव्यसाची चुक्रोध बलवान्नृप ।
धनञ्जयो रथानीकमभ्यवर्तत वीर्यवान् ॥ ४२ ॥
विश्रुतं त्रिषु लोकेषु व्याक्षिपद्गाण्डिवं धनुः ।
तत एनाञ्शरव्रातैः सहसा समवाकिरत् ॥ ४३ ॥
तमसा संवृते नाथ न स्म किञ्चिद्व्यदृश्यत ।
अन्धकारीकृते लोके रजोभूते महीतले ॥ ४४ ॥
योधाः सर्वे महाराज तावकाः प्राद्रवन्भयात् ।
सम्भज्यमाने सैन्ये तु कुरुराजो विशाम्पते ॥ ४५ ॥
परानभिमुखांश्चैव सुतस्ते समुपाद्रवत् ।
ततो दुर्योधनः सर्वानाजुहावाथ पाण्डवान् ॥ ४६ ॥
युद्धाय भरतश्रेष्ठ देवानिव पुरा बलिः ।
त एनमभिगर्जन्तः सहिताः समुपाद्रवन् ॥ ४७ ॥
नानाशस्त्रभृतः क्रुद्धा भर्त्सयन्तो मुहुर्मुहुः ।
दुर्योधनोऽप्यसम्भ्रान्तस्तान्रणे निशितैः शरैः ॥४८ ॥

उन सबने तुम्हारी सेनाका नाश करके अपने शङ्ख बजाये, तब तुम्हारी सेना भाग चली। तुम्हारी बची हुई सेनाको खडे देख बलवान् अर्जुनको बहुत क्रोध हुआ और इस प्रकार दौडे जैसे हारे हुए बैलपर बलवान् बैल दौडता है ॥ ( ३८-४२ )

जगत् प्रसिद्ध गाण्डीव धनुषको घुमाकर अर्जुनने अनेक बाण चलाये, उस समय भूमिसे ऐसी धूल उठी, कि सब लोकमें अन्धकार होगया और कुछ न दीखने लगा। हे पृथ्वीनाथ ! हे महाराज ! फिर तुम्हारी सेनाके योद्धा इधर उधरको भागने लगे ॥ (४३ ४५)

अपनी सेनाको भागते देख और पाण्डवोंको एकले बढते देख दुर्योधनने पाण्डवोंके सब वीरोंको अपनी ओर पुकारा और आप ही उनसे लडनेको चला, तब सब योद्धा दुर्योधनकी ओर इकट्ठे होकर ऐसे दौडे जैसे देवताओंके ऊपर बली दौडे थे ॥ वे सब क्रोध करके अनेक प्रकारके बाण वर्षाते हुए और दुर्योधनको डपटते हुए दौडे । ४५-४८

दुर्योधन भी निडर होकर इन सबकी

नकुलः सहदेवश्च पाण्डवश्च वृकोदरः ।
सात्यकिश्च महाराज वृष्णीनां प्रवरो रथः ॥ ४९ ॥
धृष्टद्युम्नः शिखण्डी च पाण्डुपञ्चालसृञ्जयाः ।
पूजयन्ति स्म कौन्तेयं निहते सूतनन्दने ॥ ५० ॥
ते वर्धयित्वा नृपतिं धर्मात्मानं युधिष्ठिरम् ।
जितकाशिनो लब्धलक्ष्या युद्धशौण्डाः प्रहारिणः ॥५१॥
स्तुवन्तः स्तवयुक्ताभिर्वाग्भिः कृष्णौ परन्तपौ ।
जग्मुः स्वशिबिरायैव मुदा युक्ता महारथाः ॥ ५२ ॥
एवमेष क्षयो वृत्तः सुमहाँल्लोमहर्षणः ।
तव दुर्मन्त्रिते राजन्किमर्थमनुशोचसि ॥ ५३ ॥
वैशम्पायन उवाच-श्रुत्वैतदप्रियं राजा धृतराष्ट्रोऽम्बिकासुतः ।
पपात भूमौ निश्चेष्टश्छिन्नमूल इव द्रुमः ॥ ५४ ॥
तथा सा पतिता देवी गान्धारी दीर्घदर्शिनी ।
शुशोच बहुलालापैः कर्णस्य निधनं युधि ॥ ५५ ॥
तां पर्यगृह्णाद्विदुरो नृपतिं सञ्जयस्तथा ।
पर्याश्वासयतां चैव तावुभावेव भूमिपम् ॥ ५६ ॥
तथैवोत्थापयामासुर्गान्धारीं कुरुयोषितः ।

---

महारथ आकर महाराज युधिष्ठिरकी जै जै करने लगे ॥ तब नकुल, सहदेव, भीमसेन, यदुकुल श्रेष्ठ महारथ सात्यकी, धृष्टद्युम्न और शिखण्डी आदि सब पाञ्चाल योद्धा और सृञ्जयवंशी वीर कर्णके मरनेसे महाराजकी प्रशंसा करने लगे ॥ (४९—५०)

वे सब महा शस्त्र चलानेवाले, महावीर विजय करके और महाराजको धन्यवाद देकर कृष्ण और अर्जुनकी प्रशंसा करके प्रसन्नता सहित अपने डेरोंको चले गये ॥ हे राजन ! यह मनुष्योंका नाश केवल आपकी दुर्बुद्धिसे हुआ अब शोच करनेसे क्या होगा ? (५१-५३)

श्रीवैशम्पायन बोले, सञ्जयके ऐसे कठोर वचन सुनकर आम्बिकापुत्र महाराज धृतराष्ट्र जड कटे वृक्षके समान पृथ्वीमें गिर गये, इसी प्रकार पतिव्रता गान्धारी भी रोती हुई और कर्णके शोच करती हुई पृथ्वीमें गिर पडी तब विदुर और सञ्जय महाराजको उठाकर समझाने लगे, इसी प्रकार कुरुकुलकी स्त्रियोंने गान्धारीको उठाकर ठीक प्रकार समझाया। ( ५४-५७ )

को न मूढो न युध्येत मादृशः क्षत्रियव्रतः ॥ ५७ ॥
द्विषतो भीमसेनस्य क्रुद्धस्य वशमेष्यथ ।
पितामहैराचरितं न धर्मं हातुमर्हथ ॥ ५८ ॥
नह्यधर्मोऽस्ति पापीयान्क्षत्रियस्य पलायनात् ।
न युद्धधर्माच्छ्रेयो हि पन्थाः स्वर्गस्य कौरवाः ॥
अचिरेण हता लोकान्सद्यो योधाः समश्नुत ॥ ५९ ॥

सञ्जय उवाच— एवं ब्रुवति पुत्रे ते सैनिका भृशविक्षताः ।
अनवेक्ष्यैव तद्वाक्यं प्राद्रवन्सर्वतोदिशः ॥ ६० ॥ [ ४८६३ ]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां कर्णपर्वणि कौरवसैन्यपलायने त्रिनवतितमोऽध्यायः ॥ ९३

सञ्जय उवाच— दृष्ट्वा तु सैन्यं परिवृत्यमानं पुत्रेण ते मद्रपतिस्तदानीम् ।
सन्त्रस्तरूपः परिमूढचेता दुर्योधनं वाक्यमिदं बभाषे ॥ १ ॥

शल्य उवाच-- पश्येदमुग्रं नरवाजिनागैरायोधनं वीरशतैः सुपूर्णम् ।
महीधराभैः पतितैश्च नागैः सकृत्प्रभिन्नैः शरभिन्नदेहैः ॥ २ ॥
स विह्वलद्भिश्च गतासुभिश्च प्रध्वस्तवर्मायुधचर्मखड्गैः ।
वज्रापविद्धैरिव चाचलोत्तमैर्विभिन्नपाषाणमहाद्रुमौषधैः ॥ ३ ॥
प्रविद्धघण्टाङ्कुशतोमरध्वजैः सहेमजालै रुधिरौघसम्प्लुतैः ।

---

मूर्ख क्षत्री होगा जो हमारे समान युद्ध न करे ? भागते हुए तुमको भी भीमसेन मार ही डालेंगे, तब अपने पुरुषोंके धर्मको क्यों छोडते हो ? हे वीर ! क्षत्रियोंको युद्धसे भागना इसके समान कोई पाप नहीं और युद्ध करनेके समान धर्म नहीं, तुम सब युद्धमें मरकर बहुत दिनतक स्वर्ग सुख भोगो ॥ ५७—५९

सञ्जय बोले, तुम्हारे पुत्रके ऐसे वचन सुनकर भी घावोंसे व्याकुल महा योद्धा युद्ध करनेको न लौटे किंतु चारों ओर भागे ॥ ( ६० ) [ ४८६३ ]

कर्णपर्वमें तिरानव्वे अध्याय समाप्त ।

कर्णपर्वमें चौरानव्वे अध्याय ।

सञ्जय बोले, हे राजन् ! दुर्योधनको सेना लौटाते देख मद्रराज शल्य भयसे व्याकुल होकर ऐसे वचन बोले ॥ (१)

शल्य बोले, ये अनेक हाथी घोडे और मनुष्योंसे तथा सैकडों वीरोंसे भरी हुई रणभूमि बाणोंसे विद्ध होनेसे मरे हुए पर्वतोंके समान मत वाले हाथियोंसे पूरित होरही है । अनेक कटे ढाल खड्ग कवच अनेक आयुध लिये, वीर पृथ्वीमें पडे हैं । मरे हुए हाथी ऐसे दीखते हैं जैसे वज्रसे कटे वृक्ष और लता रहित पर्वत । अनेक हाथी कवच रहित होकर

कपिलानां सवत्सानां सर्वमेकं निरन्तरम्।
यो दद्यात्सुकृतं तद्धि श्रवणात्कर्णपर्वणः ॥ ६५ ॥ [५०१४]

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां कर्णपर्वणि युधिष्ठिरहर्षे पण्णवतितमोऽध्यायः ॥ ९६ ॥

कर्णपर्व समाप्तम् ॥

अतः परं शल्यपर्व भविष्यति तस्यायमाद्यः श्लोकः—

जनमेजय उवाच—एवं निपातिते कर्णे समरे सव्यसाचिना।
अल्पावशिष्टाः कुरवः किमकुर्वत वै द्विज ॥ १ ॥

कहा है। इससे इसके सुननेवाले, मनुष्य सुखी होते हैं। और धन धान्यको पाते हैं ॥ जो एक वर्षतक प्रतिदिन बछडे सहित कपिला गौ दान देनेका फल पाते हैं। वही फल कर्णपर्वके सुननेसे होगा ॥ ( ६३-६५ ) [५०१४]

कर्णपर्वमें छानब्वे अध्याय समाप्त।

आदितः श्लोकसंख्या—

१ आदिपर्व— ८७०९
२ सभापर्व— २७६२
३ वनपर्व — ११८९२
४ विराटपर्व— २२६२
५ उद्योगपर्व—६५९०
६ भीष्मपर्व—५८७०
७ द्रोणपर्व —९६४२
८ कर्णपर्व —५०१४

सर्वयोगः—५२७४१

कर्णपर्व समाप्तम्

